# शास्त्रदीपिका



न्यायाभासतमश्छन्नशास्त्रतत्त्वार्थदर्शिकाम् ।
कुमारिलमतेनाहं करिष्ये शास्त्रदीपिकाम् ।।



इति

पार्थसारथिमिश्रः

MIMAMSA DHARMA SHASTRA Text Book Series No.-9

# SHĀSTRADĪPIKĀ

*by*

PARTHASARATHI MISHRA

( ADHYAYAS 6-12 )

*Third Volume*

**Edited critically with Introduction and Patha Bheda**

*by*

**Mimamsa Rathnam Pt. A. SUBRAHMANYA SASTRI**
**Rtd. Professor and Head of the Deparment of**
**Mimamsa Darshana and Dharma Shastra**
**Banaras Hindu University**
**Varanasi-5**

**Samvat 2034** 14-1-78

मीमांसादर्शन-धर्मशास्त्रग्रन्थमालाया नवमं पुष्पम्

# शास्त्रदीपिका

[ सर्वतन्त्रस्वतन्त्रश्रीमत्पार्थसारथिमिश्रप्रणीता ]

तस्यास्तृतीयो भागः

[ षष्टाध्यायमारभ्य द्वादशाध्यायपर्यन्तः ]

मीमांसारत्नेन पं० अ० सुब्रह्मण्यशास्त्रिणा
साधुबेलासंस्कृतमहाविद्यालये संमानितदर्शन-
प्राध्यापकपदमलङ्कुर्वाणेन प्राचीनानेक-
कोशानुसारेण यथामति संशोध्य-
विशिष्टभूमिका पाठभेदादिभिः
संयोज्य प्रकाशं नीता

मकरसंक्रान्तिः
१४-१-७८

वाराणसी

## प्रबन्धान्तर्गतानां विषयाणामनुक्रमणिका







॥ महाप्रभुश्रीमद्वल्लभाचार्यवंशावतंसः गोस्वामी श्रीदीक्षितजीमहाराजः ॥

शास्त्रारण्यविहारिपंचवदनः श्रीवाल्लभीनां गिरां

भावोद्भेदनशेमुषीमणिकषो दुर्वादिगर्वान्ध्यभिद् ।

श्रीमद्विठ्ठलहुताशनान्वयमहारत्नाब्धिज्योत्स्नाकरः

संख्यातीतगुणाश्रयः सहृदयो जेजीयतां दीक्षितः ॥

वेदान्ते शाङ्करी वाक् फणिपतिभणितिर्मारुती पावकी गी-

र्हद्बुद्धादिवाचः यतुरसि नियतं लब्धवासा विभान्ति ।

मीमांसायां च काव्ये नृपतिवरनये चेतिहासागमादौ

भाषायां पारसिक्यां निपुणतममतिर्दीक्षिताख्योऽभिजीयात् ।

# भूमिका

अथेदानीं शास्त्रदीपिकायाः तृतीयो भागः ( अवशिष्टः ) प्रकाश्यते। अयं च महानिबन्धः यज्ञेश्वरसूनुना सर्वतन्त्रस्वतन्त्रेण पार्थसारथिमिश्रेण प्रणीतः। अयं च ग्रन्थः सौरालोक इव प्राभाकरैः आनीतं नवनीतं शास्त्रीयं आवरणं समूलं उन्मूलयन् अन्वर्थनामा विराजते। अधिकरणस्वरूपमात्र-निरूपणस्य इदंप्रथमः प्रारम्भः। भाष्यं, वार्तिकञ्च विहाय अधिकरणज्ञान-सम्पादनाय प्राथमिकोऽयं ग्रन्थः इति नात्युक्तिकोटिमाटीकते। यतो हि न्यायोपबृंहितं अतिगम्भीरं शास्त्रमिदं गीर्वाणगुरुरपि इदमित्थमिति न परिच्छेत्तुं शक्नोति। प्राभाकरमतावलम्बिभिः स्वधिषणावैभवेन अन्यथा अन्यथोन्नीयमानेषु न्यायेषु प्रवृत्ते च अन्धगोलाङ्गूलन्यायेन प्रवृत्ते लोके अयं ग्रन्थः पार्थिसारथिमिश्रेण अवातारि। सुविदितमेवैतत् समेषां-विपश्चिदपश्चिमानां अयमेक एव ग्रन्थः आच हिमवतः आच कुमारिकायाः-अध्ययनाध्यापनेषु निर्विवादं सर्वैरपि विद्वद्धौरेयैः सबहुमानं आद्रियमाणः। किं बहुना अस्य निबन्धराजस्य साधिकं चत्वारिंशत् व्याख्यानानि विद्वद्भिः प्रणीतानीति ग्रन्थसूचीतः सम्प्रतीयते। अत एव एतदुपज्ञमेव अधिकरण-प्रस्थानं परिष्कृतावस्थमिति मीमांसानिष्णातानां समुद्घोषः। तत्रायं शास्त्र-अध्याय-पादाऽधिकरणार्थसंग्रहेण अस्मान् अत्यन्तमुपाकार्षीत्। अतः समस्त-मेव मीमांसककुलं अस्य अधमर्णमिति नातिशयोक्तिलेशोऽपि। प्राभाकर-सिद्धान्तानां भाट्टग्रन्थेषु पूर्वपक्षतया दृष्टान्ततया वा अनुवादो दृश्यते। यद्यपि भवदेवभट्टेन बालवलभीत्युपनामकेन प्रत्यधिकरणं प्राभाकर-मतेन पूर्वोत्तरपक्षौ प्रदर्शितौ।

अयञ्च पञ्चमपादविधुरस्तृतीयाध्यायतो विश्राम्यति। अतस्सोऽपि द्वादशाध्यायगतानां प्राभाकरसिद्धान्तानां परिज्ञानाय न पर्याप्नोति, परन्तु प्राभाकरसिद्धान्तानां प्राधान्येन प्रतिपादकाः कौमारिलग्रन्थापेक्षया अत्यन्तं विरला एव। परमिदं प्रमोदस्थानं भवनाथप्रणीतः नयविवेको-दीपिकासहितः प्रकाशनायोपक्रान्त इति परमं प्रमोदस्थानं, सोऽपि अपरिपूर्ण एव।

## प्रकृतग्रन्थप्रवृत्तेरुद्देश्यम्

तत्र सति प्रसङ्गे प्राभाकरमतनिरासार्थमेव शास्त्रदीपिकायाः प्रवृत्तिरिति ग्रन्थकर्तृवचनेनैव अवगम्यते—'न्यायाभासतमश्छन्नेत्यादिना'। अस्य भाट्टमीमांसकमते भूयानभिनिवेशः प्राभाकरमतोपरोधात् भाट्टप्रस्थानसंरक्षणगौरवं पार्थसारथिमिश्रस्यैव, नान्यस्य कस्यचित् ग्रन्थकृतः। यतो हि अयं साग्रहं सधिक्कारञ्च यं कञ्चन प्रसङ्गमापाद्य प्राभाकरसिद्धान्तमनूद्य निरस्यति। 'यत्तूक्तं, तदपि अबुद्धिपूर्वकं। वार्तमेतत्, तदप्यपेशलं, तदप्यतिमन्दं, तदपि बुद्धिमान्द्यं, तदिदमसारं, तदपि यत्किञ्चिदेतत्। एतत्तु लज्जाशून्यानां वैयात्यभाषितं' इत्यादि। यद्यपि माधवाचार्यः स्वप्रणीतेऽधिकरणमालाविस्तरे शास्त्रदीपिकागतानां श्लोकानां उदाहरणात् शास्त्रदीपिकासरणिमेवानुसरतीति नापरोक्षमिदं विदुषां। हलायुधपण्डितेन विरचिते मीमांसाशास्त्रसर्वस्वे शास्त्रदीपिकाश्लोकानां बहुश उल्लेखो दृश्यते। भारतवर्षे सर्वत्र उच्चकक्षासु पाठ्यत्वेन स्वीकृतोप्ययस्ति अयं महानिबन्धः। अनन्तरकालिकानां भाट्टदीपिका, प्रभावल्यादीनां मूलं शास्त्रदीपिकातन्त्ररत्नञ्चेति मीमांसाशास्त्रकुशलानां पुरस्तात् न किञ्चिद् वक्तव्यमवशिष्यते। अत एवाऽस्मत्पूज्यपादानां स्वर्गीय चिन्नस्वामिशास्त्रिचरणानां, अन्येषां च महामीमांसकानां भाट्टदीपिकाया अध्यापनावसरे अनयोर्ग्रन्थयोः योजनया सहाऽध्यापनं कर्तव्यमित्यत्रैकमत्यमासीत् न्यूनतापरिहारायेति।

## शास्त्रदीपिकायास्सम्प्रदायानुसारित्वं

तत्रापि अयं ग्रन्थकारः सूत्राणि भाष्यं, वार्तिकञ्च यथावदुपपाद्य भाष्यमतं क्वचित् अपवदन्नपि भाष्यकारं बहुमानदृष्ट्यैव पूजयतिस्म। स्वोक्ते अर्थे भाष्यसम्मतिं, सूत्रकारसम्मतिं च तत्र तत्र वर्णयामास। परन्तु आदरदृष्टिस्तु भाष्यकारे अस्य अनन्यसाधारणी आसीत्। आचार्यखण्डदेवप्रभृतयः-तन्त्ररत्नदृष्ट्या शास्त्रदीपिकां खण्डयन्ति, कदाचित् शास्त्रदीपिकया तन्त्र रत्नं खण्डयंति, भाष्यमतेन वार्तिकं, वार्तिकमतेन भाष्यम्, प्रकाशञ्च,उभयखण्डनेन स्ववैशिष्ट्यस्य च प्रतिपादने अत्यन्तं जागरुका दृश्यन्ते। इदं च वैशिष्ट्यं अर्वाचीनेषु बहुलमुपलभ्यते किं बहुना। सूत्राणि भाष्यं वार्तिकञ्च अविरोधेन व्याख्याय सम्मानपूर्वकमेव अधिकरणस्वरूपं, वाक्यार्थं, न्यायनिर्णयञ्च करोतीति, अयं ग्रन्थकारः सर्वान् अतिशेते। समेषां ग्रन्थकाराणामादर्शभूतोऽनुकरणीयश्च। भाष्योक्तानि वर्णकानि अन्तर्गर्भिण्यधिकरणव्याख्यानानि च यथाभाष्यमेवोपपादयति। वार्तिकमतेन भाष्यं खण्डयन्नपि भाष्यकारेऽस्य-

ग्रन्थकारस्य महती श्रद्धा विद्यते इति अत्र ग्रन्थे पदे पदे दरीदृश्यते । तानि च संक्षिप्याऽधस्तात् प्रदर्शयामः ।

## शास्त्रदीपिकायाः शावरभाष्यानुसारित्वम्

१—साम्प्रतमुपलभ्यमानेषु मीमांसाग्रन्थेषु प्रथमं स्थानमलंकरोति महर्षिजैमिनिप्रणीतं सूत्रजातम् । तदुपरि उपलभ्यमानं शबरस्वामिना प्रणीतं द्वादशसहस्रग्रन्थपरिमितं प्रसन्नपदगम्भीरं भाष्यम् । तस्मिन् भाष्ये बहुष्वधिकरणेषु अन्तरार्गभिणीत्वेन कानिचिदधिकरणानि उपर्वाणतानि । तानि यथा—तत्र तृतीयाऽध्यायस्य द्वितीयपादगतैकादशेऽधिकरणे एवं स्थितं तावदपर्यवसितं, तत एवं सति चिन्तान्तरं वर्तिष्यते (पृ० ७८८) इत्युक्त्वा द्वादशादि षोडशान्तेषु पञ्चसु अधिकरणेषु 'छन्दः प्रतिषेधस्तु सर्वगामित्वात्' ३।२।३६ इति सूत्रे स्थितादुत्तरमुच्यते ( पृ० सं० ७६८ ) इति

२—पञ्चमाध्यायस्य चतुर्थपादीयचतुर्थाधिकरणे स्थितं तावदपर्वसितमधिकरणम् । अन्तरा चिन्तान्तरं वक्ष्यते । स्थितादुत्तराम् शा. भा. पृ. १३४१ । अपर्यवसितस्य चतुर्थाधिकरणस्य पुनरारम्भः 'पौर्णमास्यूर्ध्वमि' ५–४–१७ ति ।

३—नवमाध्याये 'प्रणीतादि तथेति चेदि'ति अन्तरार्गभिणीत्वेन वाग्यमाधिकरणं पूर्वोत्तरपक्षाभ्यां निरूप्य, स्थितादुत्तरमित्यादिना उपांशुत्वस्य पदार्थधर्मत्वमुपपादितम् ( पृ० १६६६ )

४—नवमाध्यायतृतीयपादीयद्वितीयाऽधिकरणे स्थितं तावदपर्यवसितमेव । अन्तरा चिन्तान्तरं वर्तिष्यते इति । मौद्गे चरौ हरितपदस्थाने रक्तपदस्य ऊहः उक्तः, तत एव अन्तरार्गभिणीन्यायो भवतीति अन्यथा सूत्रं वर्ण्यते इत्युक्तम् ( पृ० १७४४–४५ )

५—दशमाध्यायस्य द्वितीयपादीयचतुर्दशेऽधिकरणे एवं स्थितं तावदपर्यवसितं, अन्तरा चिन्तान्तरस्य सूत्रं तावद् वर्णयिष्यामः । स्थितादुत्तरं ( पृ० १८४२ )

६—दशमाऽध्यायस्य तृतीयपादस्य षोडशेऽधिकरणे इदं तावदपर्यवसितं तिष्ठतु, अथाधिकरणान्तरं प्रस्तूयते इति । त्रैवार्षिकेण पुंगवेन प्राकृतसर्वक्रयद्रव्यबाधाधिकरणं परिसमाप्य तत्रैव अन्तरार्गभिणीन्यायो भवतीति, अन्यथा सूत्रं वर्ण्यते । स्थितादुत्तरम् ( पृ० १८९६–९७ )

७—दशमाध्यायस्य पञ्चमपादीयैकादशाधिकरणे 'तस्याग्रयणाद्ग्रहणमि'ति 'उक्थ्याच्च वचनादि'ति द्वाभ्यां सूत्राभ्यां उक्थ्याग्रयणाभ्यां षोडशीग्रहीतव्यः, इत्युक्त्वा तदेतदपर्यवसितं तिष्ठतु तावत्। अथेदानीमेतच्चिन्त्यते इत्यारभ्य स्थितादुत्तरमुच्यते इत्युक्तम् ( शा० भा० पृ० १६६१–६२ )

८—एकादशाध्यायस्य द्वितीयपादीयप्रथमाधिकरणे एवं स्थितमपर्यवसितं भवति, अतोऽन्तरा चिन्तान्तरं प्रक्रियते। किं पुनः कारणं एतस्मिन्नपर्यवसिते चिन्तान्तरं आरभ्यते इति। स्थितादुत्तरम् ( पृ० २०३६-३७ )

९—एवं स्थितं अपर्यवसितं, अन्तरा चिन्तान्तरं क्रियते इत्यारभ्य स्थितादुत्तरम् ( पृ० २१८४ )

नेदमधिकरणान्तरम्, पूर्वाधिकरणस्य प्रयोजनसूत्राणि त्वेतानि।

'अप्रयोजकत्वादेकस्मात् क्रियेरन् शेषस्य गुणभूतत्वात्, संस्कृतत्वाच्च' इति सूत्रद्वयं पूर्वपक्षप्रयोजनपरम्।

'सर्वेभ्यो वा कारणाविशेषात् संस्कारस्य तदर्थत्वात्। लिंगदर्शनाच्चे'ति चापरं सूत्रद्वयं सिद्धान्तप्रयोजनपरम्। शा. दी. पृ. २१५ इति।

'वचनादनुज्ञातभक्षणं' ३-५-४० उत्तरचिन्तार्थं चैतत्सूत्रम्।

'तदुपहूत उपह्वयस्वेत्यनेनाज्ञापयेल्लिंगात्' ३-५-४१ इदमपि प्राप्तिसूत्रमेव'।

'बर्हिस्तद्धर्माणां प्रधानार्थत्वं पूर्वमुक्तमुत्तरविवक्षया' प्राप्यते 'द्रव्यसंस्कारा प्रकरणाविशेषात् सर्वकर्मणाम्'।

तदेतत् वृत्तवर्तिष्यमाणविवेककथनमात्रार्थं सूत्रं, 'अर्थे समवैषम्यमतो द्रव्यकर्मणां ४-१-८।

'शाखायां तत्प्रधानत्वात्' इदं न पृथक् सूत्रं, किन्त्वग्रिमसूत्रावयवः ८—एवाधिकरणान्तरत्वेन भाष्ये व्याख्यातं ४-२-७।

९—'अंगहीनश्च तद्धर्मा' ६-१-४१ सिद्धमेवाधिकारमुत्तरविवक्षयानुवदति।

१०—'एककपालैन्द्राग्नौ तद्वत्' ७-१-२२ इत्युत्तरविवक्षया प्राप्यते।

११—'सामानि मन्त्रमेके स्मृत्युपदेशाभ्यां' ९-२१ सप्तमे यदुक्तं तदेवोत्तरविवक्षया स्मार्यते।

१२—'अर्थैकत्वात् विकल्पस्स्यात् ९-२-२९ स्पष्टीकाराय दर्शितः शा० दी० पृ० १४६।

१३—'अध्रिगुस्सवनीयेषु तद्वत् समानविधानश्चेत्' ९-२-३-२२ पूर्वाधिकरण-सिद्धमनेन सूत्रेण कथ्यते शा० दी० पृ० १६१।

१४—'तस्मिन्नर्थं लोपात् स्यात् व्युद्धृत्यासदनमि'त्यादिभिस्सूत्रैः प्रयोजनमुच्यते। १०-१-४६-५६।

१५—'नैमित्तिके तु कार्यत्वात् प्रकृतेस्स्यात् तदापत्तेः '१०-८-६९, न तत्राजस्य बाधनमि'ति प्रत्युदाहरणमेतत् शा० दी० पृ० २०७।

१६—'वासो वत्सञ्च सामान्यात्' १०-३-३४ अन्वाहार्यस्य निवर्तकमित्युत्तर-विवक्षायै प्राप्यते २१५।

१७—'अर्थापत्तेस्तद्धर्मा स्यान्निमित्ताख्याभिसंबन्धात्' १०-३-३५ इत्येतदपि प्राप्तिसूत्रमेतत् २१६।

१८—'ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्म अविकारस्स्यात्' १०-४-४९ तस्मादविकार इति द्वितीयसिद्धस्यैव प्रयोजनकथनमेतत् २४३।

१९—'वाससि मानोपाहरणे प्रकृतौ सोमस्य वचनात्' १०६-७७ इत्युत्तर-विवक्षया प्राप्तिः क्रियते २७८।

२०—'वसाहोमस्तन्त्रमेकदेवेत्येषु स्यात् प्रदानस्यैककालत्वात्' ११-२-२३ सकृत् कर्तव्य इति स्पष्टमेव शिष्यहितार्थमुक्तवान् ३२८।

२१—'अंगानां मुख्यकालत्वात् वचनादन्यकालत्वं' ११-३-१ तथा भवतीति सुहृत्भूत्वोक्तवान्, नात्र निराकार्यमस्ति ३३६।

२२—'शेषभक्षास्तथेति चेन्नान्यार्थत्वात्' १२-८-३१ तदिदं षष्ठे साधितं, तस्य त्विदं प्रयोजनं प्रसंगात्मकत्वादिहोक्तम्।

२३—'शेषभक्षास्तथेति चेत्; न कर्मसंयोगात्' १२-१-३३-३४, आनत्यर्थत्वं भक्षाणां निराकृतं, तस्येदं प्रयोजनं प्रसंगात्मकत्वेनेहोक्तम् ३७०।

२४—'हविष्कृत् सवनीयेषु न स्यात्' १२-२०-१७ न पृथगाह्वानस्येति सिद्ध-मेवोत्तरविवक्षया प्राप्यते ३७५।

२५—'परिधिर्द्वयार्थत्वात् उभयधर्मा स्यात्' १२-२-२६ परिधिः परिव्याणादीन् लभेतेति प्राप्तिसूत्रमेतत् ३८०।

२६—'समुच्चयस्त्वदोषनिर्घातार्थेषु' १२-३-१७ समुच्चय इति प्रत्युदाहरण-सूत्रमेतत् ३८७।

२७—व्रीहियवन्यायेन विकल्प इति प्राप्तिसूत्रमेतदपवादार्थं 'मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पस्स्यात्' १२-३-२९।

२८—'संस्कारे च तत्प्रधानत्वात्' १२-४-२ उत्पत्तौ येन संयुक्तमित्येव सिद्धस्य प्रतिपत्तित्वस्य प्रयोजनकथनमेतत् ३९२ ।

'परार्थान्येको यजमानगणे' १२-४-३२ तान्येकेनैव कर्तव्यानि, न सर्वैः, प्रयोजनाभावादिति प्राप्तिसूत्रमेतत् ३९६ ।

'अनियमोऽविशेषात्' १२-४-३३ प्रसंगोपजीवनादिदमपि प्राप्तिसूत्रमेव सत्रेष्वपवादं वक्तुम् ३९७ ।

उक्तेषु स्थलेषु स्वाभिप्रायमपि वर्णभास ।

## स्वोक्तिदार्ढ्याय भाष्यनिर्देशस्थलानि—

अयञ्च ग्रन्थकारः स्वोक्तिद्रढिम्ने भाष्यं पदे पदे प्रमाणतयोपन्यस्यति ।

सोऽयं भाष्यकारेण पादार्थोऽनुक्रान्तः ।

भाष्ये च श्येनादिग्रहणं तत्साध्यहिंसादिलक्षणार्थम् ।

इदानीमनुमानादेरव्यभिचारसिद्धयर्थं लक्षणमाह–अनुमानञ्च······ बुद्धिरिति ।

तथा च भाष्यकारः यत्कर्म, तत् फलवत् ।

तदुक्तं भाष्यकारेण को धर्मः·········प्रमाणलक्षणमाचक्षते–इति ।

अयमभिप्रायो भाष्यकारस्य ।

भाष्यानुसारिणस्तु ७-१-१ ।

सामान्यविषयत्वं भाष्य एव समर्थितम् ७ ३ ।

लिंगानि भाष्य एव दर्शितानि ७-३ ।

भाष्येण वर्णकान्तरम ९-१-७

भाष्येऽपि ऋष्याद्युदाहरणमनादर्तव्यं भा. ३, शा. दी. पृ. ४ ।

भाष्यकारेण ।

मन्त्रलिंगत्वविशिष्टमिति दर्शितं भाष्ये ७-३-२ ।

तदाह भाष्यकारः भिन्ने हि वाक्ये एकहायनीसाधनक एकः क्रयोऽवबद्धो भवति, अरुणसाधनकमपि क्रियान्तरमिति ।

भाष्यकरीयमधिकरणव्याख्यानं १०-५-२५ ।

'अंगत्वनिराकरणं भाष्येऽतिशयोक्तमिति, नातीवादर्तव्यम्' शा. दी. पृ. २७३ ।

यत्तु भाष्यकारेण ११-१-१।

भाष्यकारेण व्याख्यातमिति प्रतिभाति

भाष्यकारेण सिद्धान्तितम्

पक्षान्तरमेवाधिकरणान्तरमिव भाष्ये दर्शितम् ११-१-२

एवं तर्हि कृत्वाचिन्तेयं। मन्त्रोपदेश इति कृत्वाचिन्त्यते। अथवा-उदाहरणान्तरं द्रष्टव्यम् १२-३-१५ पृ २२६८

सूत्रव्याख्यानस्थलानि

धर्मग्रहणमधर्मस्याप्युपलक्षणार्थम्, अधर्मस्यापि हानाय जिज्ञास्यत्वात्, अकारप्रश्लेषेण वा सूत्रमधर्मजिज्ञासायामपि व्याख्येयमिति निरवद्यम्।

'उक्तन्तु शब्दपूर्वत्वं, आख्याप्रवचनादि' १-८-२९-३० ति सिद्धान्तसूत्रद्वयं पृथक् पठित्वा व्याख्यातम्। शास्त्रदीपिकाकारेण परिहारसौकर्यायसूत्रद्वयमेकीकृत्य पठितं व्याख्यातञ्च।

भाष्ये पूर्वाधिकरणगुणसूत्रत्वेन व्याख्याय, अस्यैव सूत्रस्याधिकरणान्तरत्वेन व्याख्यानस्थलान्यधस्तान्निर्दिश्यन्ते।

क—तथाहि—'हेतुदर्शनादि' १-३-४ ति सूत्रं विरोधाधिकरणेऽन्वाचयहेतुत्वपरत्वेन व्याख्याय, अधिकरणान्तरपरत्वेन व्याचख्यौ भाष्यकारः—अधिकरणान्तरं वेति-पृ०

ख—'अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेते' २-२-२४ ति सूत्रं गुणाधिकरणशेषत्वेन व्याख्याय, अधिकरणान्तरपरत्वेन व्याचख्यौ—अथवा अधिकरणान्तरमिति—भा० पृ० ५३६

ग—'विधिर्वा स्यादपूर्वत्वादित्यादि'त्यधिकरणचतुष्टयपरत्वेन व्याख्यातृणां मतरीत्या सिद्धान्तपरतया व्याख्यय वार्तिककार: एवं वा इत्यादिना त्र्यधिकरणवादिनां मतेन व्याख्यातवान्। एतस्मिन् व्याख्याने स्थितं तावदपर्यवसितमित्येवमुत्तरमधिकरणमारब्धव्यमिति अधिकरणार्थमुपवर्ण्य स्थितादप्येतदेवोत्तरमि १९६, २९७ ति। तदेव शब्दतोऽर्थतश्चान्यूनानतिरेकमभिधत्ते शास्त्रदीपिकाकारः,

घ—अधिकरणान्तरपरतया व्याख्यास्थलानि यथाचिकीर्षया च संयोगात् ३-७-७ इत्यधिकरणे तस्मादाधानार्था वेदिः। स्थितं तावदपर्यवसितं। स्थितादुत्तरं भा० पृ० १०७५

चतुर्थस्य प्रथमपादे पञ्चमाधिकरणगुणसूत्रत्वेन (अधिकरणशेषत्वेन) व्याख्याय, अधिकरणान्तरं वेति षष्ठाधिकरणत्वेन व्याख्यातम् शा० भा० पृ० १२४६ 'उत्पत्तौ येन संयुक्तमि'ति पूर्वपक्षपरतया व्याख्याय, अथवा अधिकरणान्तरमिति कृष्णविषाणाप्रासनस्य प्रतिपत्तिकर्मपरत्वमिति वर्ण-यामास पृ० १२३८

## सूत्रकारस्य प्रशंसा

अयं च ग्रंथकारः भाष्यवार्तिकादिकमनुसरन् तत्र तत्र युक्तियुक्तं परिगृह्णानः युक्त्यपेतमर्थं परित्यजन् सर्वान् ग्रन्थकारानतिशेते इति प्रागवोचाम। एवं क्वचित् सूत्रकारोक्तमप्यर्थं सबहुमानं परिगृह्णाति, सूत्रकार-मुक्तकण्ठं प्रशसंति। यथा–'स तृतीयसवने वचनात् स्यात्' १०५।४४ इत्यत्र। तस्मात् विचित्रगतिस्सूत्रकारः—चिन्तान्तरमध्ये प्रसंगात् चिन्तान्तरं कृतवान्-इत्येव वक्तव्यम् शा० दी० पृ० २५३ इति।

एवमधिकारलक्षणे–'उपांशुयाजेऽवचनात् यथाप्रकृति। ६।५।१० इति। अत्र वाचनिको हि तस्य पौर्णमासीकालः 'उपांशु पौर्णमास्यां यजन्' इति कालविधिपरं हि इदं वचनमिति सूत्रकारस्थितिः। उपवर्षस्तु वृत्तिकारः बह्वृचब्राह्मणे अमावास्यायामपि उपांशुयाजो विहित इति तदभिप्रायेणेयं चिन्तेत्याह—तस्मात् कृत्वा चिन्तैवमिति।

किञ्चैकादशस्य तन्त्रलक्षणस्य ३ पादे द्वादशा धिकरणसूत्रं 'लौकिकेषु यथाकामी संस्कारानर्थलोपात्' ११-३-३४ इत्येकमेव सूत्रं देशस्य 'ऋत्विजाञ्चानियमप्रतिपादकं भवति, पात्रेषु न तथा, किन्तु पूर्वपक्षपरमेव। यज्ञायुधानि धार्येरन् प्रतिपत्तिविधानात् ऋजीषवत् ११-३-३५ तन्नियम-सिद्धान्तकरणात्। तस्मादेकमेव सूत्रमंशे ( देशे ऋत्विक्षु ) सिद्धान्तपरम्, अंशे च[पात्रेषु]पूर्वपक्षपरमिति ज्ञेयम्। विचित्रगतित्वात् सूत्रकारस्य,स्वतन्त्रेच्छस्य महर्षेः नियोगपर्यनुयोगानर्हत्वादिति। सूत्रकारे पूज्यत्वबुद्धिः,तदुक्तमर्थमभ्युपगच्छति। प्रासंगिकी सूत्रकारस्य प्रशंसा, प्रकृतमेव वर्तयामः।

ङ—ऐकाधिकरण्यं त्वेके मन्यन्ते इति भाष्ये वृत्यन्तरकारैः सूत्रद्वयमिदं 'विप्रतिषिद्धधर्माणामि'ति सूत्रं पूर्वपक्षसूत्रम्। 'मुख्यं वे'ति सूत्रं वाशब्द-श्रवणात् सिद्धान्तसूत्रमिति प्रतीयते। तथा चैकाधिकरण्यमेव वक्तुं युक्तम्। तथापि सूत्रद्वयं उत्सूत्रं पूर्वपक्षद्वयं निराकर्तुं सूत्रद्वयेनाधिकरण-द्वयमेव स्वीकार्यं। अत्र वाशब्दश्च धर्मविप्रतिषेधे भूयसां वा मुख्यस्य वा-

धर्मः इति विकल्पार्थः, न तु पक्षव्यावृत्त्यर्थः। स च विकल्पोऽल्प-भूयोविरोधे भूयसां, तुल्यसंख्यविरोधे मुख्यस्येति व्यवस्थया बोध्यः। तस्मात् द्वे एवाधिकरणे, ऐकाधिकरण्यं तु एकीयमतत्वेनोपन्यासात् परमतमेवेत्यादि वदन् भाष्योक्तमंगीकरोति। अत एव द्वादशतृतीयपादस्याद्याधिकरणे ऐकाधिकरण्यवादिमते तु सूत्रान्यथाकरणं भाष्यकारेण दर्शितम्। एवं चाधिकरणभेदमेवात्रापि ग्रन्थकारः द्रढयति स्थूणानिखननन्यायेनेति।

किञ्च तदुपरितनेऽधिकरणेऽपि विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् साधर्म्यम्। मुख्यस्वाधर्म्यं तु समसंख्याविषयमित्यधिकरणभेद एव स्पष्टीभवति, नैकाधिकरण्यमिति। ऐकाधिकरण्यवादिनो वृत्तिकारस्य मतसमर्थने व्यग्रस्य प्रभाकरस्य मते सर्वेषु तंत्रिषु विप्रतिषिद्धविषये मुख्यस्यैव स्वाधर्म्यं, न भूयसामिति ऐकाधिकरण्यपक्षे प्रसंगिभ्यः अनुनिर्वाप्येभ्यः मुख्यबलीयस्त्वं विस्पष्टमिति, अधिकरणमिदमनर्थकं स्यात्, इति। तस्माद् द्वे एवाधिकरणे शा० दी० पृ० ३८३—२८४ इति।

च—शाखायां तत्प्रधानत्वादिति न पृथक् सूत्रम्, किन्त्वग्रिमसूत्रावयवः एवाधिकरणान्तरत्वेन भाष्यकृता व्याख्यातम्—३६७६। तत्र सर्वेऽविशेषात्, 'योगसिद्धिर्वाऽर्थस्योत्पत्त्यसंयोगित्वात्' ४—३—२७—२८ इति सूत्रद्वयं यौगपद्यायौगपद्यपरतया व्याख्याय, एवं वेत्यादिनैहिकामुष्मिकपरतयाऽधिकरणान्तरपरतया व्याख्यातम्—पृ० भा० १२६१।

छ—तत्र सर्वत्र वर्णकान्तरोपक्रमे एवं वा 'इत्येव ग्रन्थकारेण लिख्यते, इह तु वैचित्र्यात् 'योगसिद्धिर्वे'ति सिद्धान्तसूत्रमेव लिखितमित्यवधेयम् शा० पृ० ३८७।

ज—न त्विदमेवाधिकरणम्। पूर्वपक्षस्यातिमन्दत्वात्। तस्मात् यत्पूर्वं शाक्यादिस्मृतीनामाभासत्वमुक्तं। तत्रैव चोद्योत्तरत्वेनशिष्टाकोपे अविरुद्धमिति चेत्; न शास्त्रपरिमाणत्वादित्याद्यं सूत्रद्वयं व्याख्येयम्।

'अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्नि'ति तृतीयं सूत्रं सदाचारप्रामाण्यप्रतिपादनार्थमधिकरणान्तरं व्याख्येयम्।

व्यवहारविशेषौचित्यप्रतिपादनार्थं सूत्रं 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमि' १—३—४ ति। श्रुतिस्मृत्योर्विरोधे यत् प्रमाणान्तरानपेक्ष श्रुतिवाक्यन्, तदेव ग्राह्यम्। असति ह्यात्मप्रत्यये परप्रत्ययानुमानक्लेशाश्रयणमिति।

## प्रत्युदाहरणप्राप्तिसूत्रनिर्देशस्थलानि

१—'अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेते' २-२-२४ ति प्रत्युदाहरण-सूत्रम्।

'सन्निधौ त्वविभागात् फलार्थेन पुनश्श्रुतिः, २-३-२६ प्रत्युदाहरणार्थ-मिदं मारभ्यते,

'पौष्णं पेषणं विकृतौ प्रतीयेत चोदनात् प्रकृतौ' इति पेषणं ३-३-३४ यत्र पूषा, तत्र वाक्यादुत्कृष्यते इति प्राप्तिसूत्रमेत्। शा० दी० पृ० १९६।

उत्सूत्रं प्रवृत्तयोः पूर्वपक्षयोर्निरासेन 'उक्तं समाम्नायैदमर्थ्यं तस्मात्-सर्वं तदर्थं स्यात् 'अपि वा नामधेयं स्यात् यदुत्पत्तावविधायकत्वादि'ति सूत्र-द्वयेनसिद्धान्तवर्णनेनाधिकरणद्वयप्रतिपादनं।

'दीक्षा परिमाणे याथाकाम्यमविशेषात्, द्वादशाहस्तु लिंगात् स्यात्'—( ६. ५. २८. २९ ) सूत्रद्वयमेकीकृत्यैकमधिकरणं भाष्ये व्याख्यातम्, उत्सू-त्रपूर्वपक्षद्वयेनैतत् सूत्रद्वयेनाधिकरणद्वयं दर्शितम्।

'प्रकरणान्तरे प्रयोजनान्यत्वं' २-३-२४ इति। किमिदं प्रमाणान्तर-मिति ? अप्रकृताभिधानमित्यर्थः।

'गुणानाञ्च परार्थत्वादसंबन्धस्समत्वात् स्यात्' ३-१-२२ इति सूत्र-मुपवीताधिकरण एव शंकोत्तरत्वेन व्याख्येयम्। शंका-समाधाने ग्रन्थशरीर-एव स्पष्टे।

'उपवीतं लिंगदर्शनात् सर्वधर्मस्स्यादि' ३-४-१० इत्यादीनि षट् सूत्राणि भाष्यकारेणाव्याख्यातान्यपि वृत्यन्तरे दर्शनात् वार्तिककारैस्त्र्य-धिकरणपरतया, चतुरधिकरणपरतया व्याख्यातानि।

'अचोदितञ्च कर्मभेदात् सा लिंगादार्त्विजे स्यात्' ३-४-३६-३७ इति सूत्रद्वयं पूर्वाधिकरण एव शंकापरिहारपरत्वेन व्याख्येयम्।

'द्रव्यसंस्काराः प्रकरणाविशेषात् सर्वकर्मणामि' ३-८-३०ति पूर्वपक्ष-सूत्रं, निर्देशात्तु विकृतावपूर्वस्यानधिकारः ३१ इति सिद्धान्तसूत्रम्। तदर्थस्तु ग्रन्थ एव विशदः।

'यजतिचोदना द्रव्यदेवताक्रियं समुदाये कृतार्थत्वात्, तदुक्तेः श्रावणाज्जुहोतिरासेचनाधिकः स्यात्' ४-२-२७-२८ इति सूत्रद्वयेन यागाद्यनुष्ठानप्रकारकथनम् ।

'योगसिद्धिर्वाऽर्थस्योत्पत्त्ययोगित्वादि'—४. ३. २८ ति सिद्धान्तसूत्रं वैचित्र्यात् विलिख्य, अर्थं वर्णयामास ।

'सर्वशक्तौ प्रवृत्तिस्स्यात् तथाभूतोपदेशादि'ति सूत्रस्य व्याख्यानषट्कं तन्त्ररत्न एव द्रष्टव्यम् ।

'प्रवृत्तेऽपीति चेत्; नानर्थकत्वादि'ति–६. ३. ३६. ३७ सूत्रद्वयमेकाधिकरणं 'प्रवृत्तेऽपि प्रधाने मुख्यस्योपादानं स्यादिति चेन्न; अनर्थकत्वादिति ।

'यदि तु ब्रह्मणस्तदूनं तद्विकारस्स्यात्, सर्वं वा पुरुषापनयनात्, तासां ऋतुप्रधानत्वादि'–( १०-३-७२-७३ ) ति सूत्रत्रयमिदं पुनरन्यथा व्याख्यातम् ।

'अग्नियोगस्सोमक ले तदर्थत्वात् संस्कृतकर्मणः परेषु सांगस्य तस्मात् सर्वापवर्गे विमोकस्स्यात्, प्रधानापवर्गे वा तदर्थत्वात । अवभृते च तद्वत्प्रधानार्थस्य प्रतिषेधोऽपवृक्तार्थत्वात् अहर्गणे च प्रत्यह स्यात्तदर्थत्वात्'–११–३–१७–२०,

वार्तिककारपक्षे सिद्धान्तोपक्रममधिकरणम् । ततश्च प्रथमसूत्रे सर्वार्थत्वसिद्धान्तेनोपक्रमः, द्वितीयसूत्रं केवलप्रधानार्थत्वपूर्वपक्षप्रतिपादनार्थम् । तृतीयसूत्रं पूर्वपक्षे लिङ्गप्रदर्शनार्थम् । चतुर्थं सूत्रं तु शब्दार्थकेन च शब्देन पक्षं व्यावर्त्य ब्रूते । केवल प्रधानार्थत्वे न्यायादेव प्रत्यहं प्राप्तेः अहरहर्युनक्ति अहरहर्विमुञ्चतीति न वक्तव्यं स्यात्, उक्तञ्च तत् । तस्मात् सांगप्रधानार्थं तत्, इत्येवं तत्रैव सिद्धान्तप्रतिपादनार्थमिति, ग्रन्थकृता तन्त्ररत्नेऽपि इत्थमेव व्याख्यातानि । विस्तरस्तु तत्रैव द्रष्टव्यः ।

'विप्रतिषिद्धसमवाये भूयसां स्यात् सधर्मत्वम्, मुख्यं वा पूर्वचोदनाल्लोकवत्', (१२-२-२२-२३) 'इत्येतयोराद्यं पूर्वपक्षसूत्रं', मुख्यं वेति सिद्धान्तसूत्रं वाशब्दश्रवणात् । ततश्चैकाधिकरण्यमेव वक्तुं युक्तम् ।

एवञ्च भूयस्त्वस्थले, समसंख्यस्थले च सर्वत्रापि मुख्यधर्मानुग्रह एव युक्त इति; एकाधिकरण्यवादिनः । द्वे एवाधिकरणे ग्रन्थकारस्याभिमते । अधिकरणद्वयपक्षे वाशब्दो धर्मविप्रतिषेधे भूयसो, वा मुख्यस्य वा धर्म इति कल्पार्थः, न तु पक्षव्यावृत्त्यर्थः ।

स च विकल्पः अल्पभूयोविरोधे भूयसां, तुल्यसंख्याविरोधे मुख्यस्येति व्यवस्थया बोध्यः।

भाष्ये वर्णितस्याधिकरणान्तरस्य अनभ्युपगमस्थलानि

निर्दिश्यन्ते, तानि यथा—

( क ) अगुणे तु कर्म शब्दे गुणस्तत्र प्रतीयेत ( २, २, २४ ) अथवाऽधिकरणान्तरमिति भाष्यकारीयं द्वितीयं व्याख्यानम्। इदमधिकरणमनर्थकम्, आधाराग्निहोत्राधिकरणगुणसूत्रेण गतार्थत्वादिति ग्रन्थकारस्याशयः। तथाहि—अगुणकर्मसन्निधौ सगुणश्रुतिर्गुणविधानार्था भवति।

किञ्च 'दध्ना जुहोती'त्यादीनां सगुणवाक्यानां बहुत्वात्, सर्वेषामेककर्मान्वये विकल्प आपद्येत, तद्वारणाय कर्मान्तरत्वशेषया निर्गुणसन्निधौ श्रुतानां बहूनां सगुणवाक्यानां गुणमात्रविधायकत्वं स्वीकर्तव्यम्।

इतरथा 'आघारमाघारयति, अग्निहोत्रं जुहोती'ति वाक्ययोस्समुदायानुवादपूर्वपक्षस्य निरसितुमशक्यत्वात्, अतः पूर्वव्याख्यानमेव युक्तमिति।

( ख ) 'तत्संयोगात् कर्मणो व्यवस्था स्यात् संयोगस्यार्थवत्वात्' ( ३, ७, ४० ) इति सूत्रं समाख्या विनियोगस्यैवातिप्रसंगनिवारणेन शेषभूतं सूत्रम्, नाधिकरणान्तरम्। अत एव तस्यैव लिङ्गं पश्चादुच्यते प्रातरनुवाके होतृदर्शनादिकं।

तस्मात् प्रकरणात् पूषाद्यनुमन्त्रणमन्त्रवदुत्कृष्टानि पात्राणि सर्वार्थानीति नार्थोऽधिकरणेन 'गुणानाञ्च परार्थत्वादसंबन्धस्समत्वात् स्यादि' (३, १, २२) ति सूत्रं पूर्वाधिकरण एव शंका–परिहारत्वेन व्याख्येयम्। उक्तार्थमेतत्। व्याख्यानञ्च ग्रन्थशरीरे एव स्पष्टमिति, नात्र लेखनी व्यापार्यते।

( घ ) 'ऐन्द्रावायवे तु वचनात् प्रतिकर्म भक्षस्स्यात्'–( ३-५-१८ ) सति वचने पूर्वपक्षासंभवात् पूर्वाधिकरण एव ऐन्द्रवायवदृष्टान्तमुपेत्य या शंका कृता, तत्परिहारार्थं सूत्रम्, नाधिकरणान्तरमिति ; शंका–परिहारौ पूर्वाधिकरणपूर्वोत्तरपक्षग्रन्थयोः स्पष्टौ।

(ङ) 'सोमेऽवचनात् भक्षो न विद्यते' इत्यारभ्य होमाभिषवाभ्याञ्चे' ( ३, ५, २५ ) त्यन्तमेकमधिकरणम्, भाष्ये चमसेषु समाख्यानादित्यादिषु संशयाद्युपन्यासः समाख्यादिकारणेषु शिष्यबुद्धिवैशद्यार्थत्वेनाप्युपपन्न इति, न तावता अधिकरणान्तरशंकावकाशः।

( च ) 'उत्पत्तौ येन संयुक्तं तदर्थं श्रुतिहेतुत्वात तस्यार्थान्तरगमने शेषत्वात् प्रतिपत्तिस्स्यात्' ( ४, २, १६ ) इति सूत्रं पूर्वाधिकरणे दण्डप्रदानं कृष्णविषाणाप्रासनवत् प्रतिपत्तिस्स्यादिति पूर्वपक्षे दृष्टान्तीकृतप्रासन-वैषम्यपरतया व्याख्याय, ऋत्वन्तःपातिसकलकण्डूयनस्य विषाणाकार्यतया प्रासनानन्तरमपि कण्डूयनससम्भवेन कृतार्थत्वाभावात् न प्रतिपत्तिरिति-पूर्वपक्षयित्वा, द्वितीयासंयोगात प्रतिपत्तिरित्यधिकरणान्तरत्वेऽपि भाष्यकारेण व्याख्यातम्, वार्तिककारस्तु—इडा-प्राशित्र-चतुर्धाकरण-शंयुवाककाल-भक्षरूपविशेषकार्याणां 'उत्पत्तौ येन संयुक्तमित्यनेन प्रतिपत्तित्वस्य स्थितत्वात् इति वदन इदमधिकरणं सर्वविषयमिति, नाधिकरणान्तरमिति मन्यते ।

(छ) 'कारणादभ्यावृत्तिरि'ति सूत्रे (५, २, २) भाष्ये बहुषु पुरोडाशेषु यथा काण्डानुसमयः, तथेहापीति पूर्वपक्षोक्तदृष्टान्तवैषम्यकथनपरतया व्याख्याय, बहुषु पुरोडाशेष्वप्युक्तन्यायेन पदार्थानुसमयं प्रापय्य, प्रधानलोप-प्रसंगात् काण्डनुसमयः इत्यधिकरणान्तरपरतया व्याख्यातं भाष्यकारेण । तदुभयं संगृह्णानश्शास्त्रदीपिकाकारः प्रथमाधिकरण एवान्तर्भावयामास, नाधिकरणान्तरत्वं स्वीचकार—इति ।

(ज) 'प्रवृत्तेऽपीति चेत्' (६-३-३६) 'नानर्थकत्वादि'ति सूत्रद्वस्वारस्य-मनुरुध्यैकमेवाधिकरणं, नाधिकरणान्तरम् । उक्तपूर्वमेतत् ।

'न्यायमालायां 'स लौकिकस्स्यात्' ( ८, ४, २ ) दृष्टप्रवृत्तित्वादि'ति द्वितीयमधिकरणं वर्णितम्, शास्त्रदीपिकाकारस्तु पूर्वस्मिन् विषये विशेष-विचाररूपत्वादुत्तरविचारस्य सूत्रमलिखित्वैवाधिकरणान्तरं स्थिते इति चारभते । अतोऽस्यापि प्रथमाधिकरण एवान्तर्भावं मेने, नाधिकरणा-न्तरमिति ।

(झ) 'अन्ते तूत्तरयोर्दर्शनादि'-(५, ३; १३) त्यधिकरणे त्रीणि यज्ञस्यो-दारणि गायत्री बृहत्यनुष्टुप् च 'अत्र ह्येववपन्ति, अत एवोद्वपन्ति' इति-वर्तमानापदेशेनाविधिरूपत्वमुक्तम् । दशमे 'पवमाने स्यात् तस्मिन्नावापो-द्वापदर्शनादि' ( १०, ५, २१ ) त्यधिकरणेऽस्य वाक्यस्य विधायकत्वं ग्रन्थ-कारेण साधितं कथं संगच्छत इति नाशंकनीयम् । भाष्यादौ अत्रैव विधायकत्वसाधनेन, अत्र सिद्धस्यैव तत्र व्यवहारात् ।

अत एव तत्रास्वारस्यात् पूर्वोक्तपवमानप्रत्युदाहरणमात्रं, नाधिक-रणान्तरमित्युक्तम् । यथोक्तं ग्रन्थकारेण, 'अथवा नैवात्र विचारः, पूर्वोक्त-पवमानग्रहणं प्रत्युदाहरणमात्रमिति । अयमर्थः—दशमे हि पवमाने स्यात्—

तस्मिन्नावपोद्वापदर्शनादि'त्यधिकरणेऽस्य वचनस्य विधित्वं स्थापयिष्यते—इतिः ( पृ० ३४६ ) ।

( ञ ) 'अथान्येनेति संस्थानां सन्निधानात्' (५, ३, ३६) इति सूत्रेण, उत्सूत्रं भाष्येऽधिकरणान्तरं वर्णितम्, तत्सिद्धमर्थं वर्णयन् 'इति सर्वेषां तेषां ज्योतिष्टोमपश्चादभावसोगमनेन वाक्येन विधीयते' (शा० ३५२) इति नांगीचकाराधिकरणान्तरम् ।

(ट) 'प्रातस्तु षोडशिनि'–( ६, ५, ४४) इति सूत्रान्तरकरणात् भाष्ये पृथगेव षोडशिनि विचारः कृतः । तथापि न्यायस्यैकत्वादुदाहरणभेदात्–फलभेदमात्रे एव सूत्रभाष्ययोस्तात्पर्यं, नाधिकरणान्तरम् ।

(ठ)'सौमिकं प्रणयनमवाच्यम् हीतरत्, उत्तरवेदिप्रतिषेधश्च तद्वत्, प्राकृतं वाऽनामत्वात्, परिसंख्यार्थं श्रवणम्, गुणार्थमर्थवादो वा, प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात्, मध्यमयोर्वा गत्यर्थवादात्, औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः' ( ७, ३, १६–२५ ) एतैस्सप्तभिस्सूत्रैरधिकरणद्वयं भाष्यकारो वर्णयांबभूव ।

तत्राद्यं चतुर्भिस्सूत्रैः, द्वितीयं त्रिभिरिति विवेकः । एकमेवाधिकरणं सप्तसूत्रम् । भाष्यकारीयः पूर्वपक्षः प्रथमः पक्षः । भाष्यकारीयः सिद्धान्तः—ग्रन्थकारमते द्वितीयः, अपूर्वमिति तृतीय इत्येकमेवाधिकरणम् ।

(ड) 'उभयोरविशेषात्, यदभीज्या वा तद्विषयावि'ति सूत्रद्वयं (९, २, ५७–५८ ) पूर्वाधिकरणशेषतया व्याख्याय, अधिकरणान्तरपरत्वेनापि भाष्यकृता व्याख्यातम् । शास्त्रदीपिकाकारस्तु कालाभीज्यापक्षे उभयोरपि पर्वणोरुभावपि होमौ स्याताम्, आराद्रुपकारकत्वेन लिङ्गेन विशेषासिद्धे'रित्युभयोरविशेषादि'ति सूत्रं पूर्वाधिकरणपूर्वपक्षप्रयोजनप्रतिपादनपरम् । 'यदपीज्या च तद्विषयौ' इति सूत्रञ्च यस्य समुदायस्य यत्र संस्कार्यत्वसंभवः, तद्विषयो होमस्तत्रेति संस्कार्यवशात् व्यवस्थेति सिद्धान्तप्रयोजनपरम्, न त्वधिकरणान्तरमिति वर्णयाञ्चकार ।

( ढ ) 'अङ्गानान्तु शब्दभेदादङ्गानां चित्रादिक्रतुनामिव भेदेन फलसंम्बन्धःस्यादि'त्येवं प्रथमसूत्रेण प्रथमपक्षे उपन्यस्ते, 'अर्थभेदादि'त्यादिभिः पञ्चभिसूत्रैस्संहत्यकारित्वप्रतिपादनेन प्रथमपक्षे प्रतिक्षिप्ते संहत्यकारित्वेन प्रवृत्तो 'द्वितीयः पक्षः' 'एकेनापि समाप्येते'ति सूत्रेणोपक्षिप्यते । पक्षान्तरमेवाधिकरणान्तरमिति भाष्ये दर्शितम्, तथा च भाष्यकारस्यैकाधिकरण्य एव तात्पर्यम् । अतस्तदनुगुण एव कृत्स्नो भाष्यसन्दर्भः । तस्मान्नाधिकरणा-

न्तरमिति ग्रन्थकृन्मतं। प्राभाकरसम्मतमधिकरणद्वयं प्राभाकरमतनिरूपणावसरे प्रदर्शयिष्यते ।

ण—'धर्ममात्रे त्वदर्शनाच्छब्दोऽर्थेनापवर्गः स्यादि' ११. १. २८ इति सूत्रं सर्वौषधावहन्तेरदृष्टार्थत्वसिद्धयर्थं अधिकरणान्तरत्वेन भाष्ये व्याख्यातम्,न तत्तथा। पूर्वपक्षाभावात्। किन्तु प्रत्युदाहरणमात्रम्। ततश्चैकाधिकरण्यमेवेत्यभिप्रायेणात्रैवाधिकरणे सर्वौषधावघातवैषम्यपरत्वेनव्याख्यातं। अतो नाधिकरणान्तरम्।

त—'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम्,। मुख्यं वा पूर्वचोदनाल्लोकवत्' १२।२।२२+२३ विस्तरभिया दिङ्मात्रमुदाहृतम्।

## अध्यायार्थवर्णनेऽपि भाष्य—वार्तिकानुसारित्वं।

एवमध्यायार्थवर्णनेऽपि भाष्यवार्तिकाद्यनुसारित्वं शास्त्रदीपिकायामेव दृश्यते, न तु भाट्टदीपिकादावित्यधस्तान्निर्दिश्यते। तथाहि—प्रथमेऽध्याये प्रमाणलक्षणं वृत्तं, द्वितीये नानाकर्मलक्षणं वृत्तम्,

तृतीयेऽध्याये श्रुतिलिंग-वाक्य-प्रकरणस्थान—समाख्याभिर्नैश्शेषविनियोगलक्षणंमुक्तं। इदानीं क्रत्वर्थ—पुरुषार्थौ जिज्ञास्येते, भा० भाग ४.

चतुर्थेऽध्याये प्रयोजकाप्रयोजकलक्षणं वृत्तम्। तन्न प्रस्मर्तव्यं, इदानीं क्रमनियमलक्षणमुच्यते, १२ गु० ७

अथ वृत्तात् सामान्यातिदेशादनन्तरं विशेषलक्षणं वक्ष्यामः १५४८,

अष्टमेऽध्याये विशेषातिदेशलक्षणं वृत्तम्। इदानीमूहलक्षणं वर्तयिष्यामः १६३५,

ऊहो वृत्तः। बाधाभ्युच्चयमिदानीं वर्तयिष्यामः

दशमेऽध्याये बाधाभ्युच्चयलक्षणं वृत्तम्, इदानीमेकादशे तन्त्रावापलक्षणं निर्वर्तयिष्यामः २० . ६, भा. पृ.।

एकादशे तन्त्रावापलक्षणं व्याख्यातं, अधुना प्रसंगलक्षणं व्याख्यायते, इत्यादिभाष्यवार्तिकाद्यानुगुण्यात् शास्त्रदीपिकोक्तमेव साधीयः। तदनन्तरकालिकैरप्पय्यदीक्षितेन्द्र-राजचूडामणि-सोमनाथ-भट्टसोमेश्वर-शंकरभट्टगाभट्टापेदेवानन्तदेवलौगाक्षिभास्करादिभिरादृतत्वात् शास्त्रदीपिकायाः-अप्रतिहतप्रचार आसीदिदित्यवगम्यते। किञ्च दक्षिणभारते खण्डदेवग्रन्थानां प्रचारेऽपि शास्त्रदीपिकायास्समादरो मीमांसकेषु वरीवर्ति। उत्तरभारते तु सर्वत्र शास्त्रदीपिकायाः समादरः प्रचारश्च भूयानासीदित्यत्र नास्ति सन्देह

लेशोऽपि । अधिकरणमाला—न्यायप्रकाश-बालप्रकाशादीनां, स्मृतिचन्द्रिका—मयूख-निर्णयसिन्धु-वीरमित्रोदय-बालम्भट्टीयानां महानिबन्धानां धर्मशास्त्रीयाणां च शास्त्रदीपिकैव मूलमिति, नापरोक्षमेतद्ग्रन्थपरिशीलनजुषामिति, आचार्यखण्डदेवमते दूषणजातं वक्ष्यते ।

## श्रौतप्रमेयनिरूपणम्

आस्तामियं कथा, श्रौतप्रमेयविषये किञ्चिद्ब्रूमः। वेदे पूर्वकाण्डं कर्मकाण्डमिति प्रसिद्धं 'वेदा हि यज्ञार्थमभिप्रवृत्ताः' इत्यभियुक्तवचनेन, 'यजुर्यजतेरि'ति निरुक्ताच्च। यागादिकर्मणां निरूपणमेव वेदानां मुख्यमुद्देश्यम् । तच्च कर्म चतुर्विधं – होमः, इष्टिः, पशुः सोमश्चेति ।

तत्र प्रतिदिनं सायं प्रातर्विहितदध्यादिभिर्द्रव्यैरनुष्ठीयमानोऽग्निहोत्रसंज्ञको होमः । एतादृशाश्चान्ये होमादर्विहोमशब्देनाभिधीयन्तेऽभियुक्तैः ।

'यदेकया जुहुयात् दर्विहोमेन जुहुयादि' (तै०सं०३-४-१०)ति वास्तोष्पतिहोमवाक्यशेषे श्रूयते, दर्विहोमशब्दस्य गुणविधित्वमाशंक्य, नामधेयत्वं व्यवस्थापितमष्टमस्य चतुर्थे पादे ।

यद्यपि 'यज्ञः पञ्चविधः—आधानमग्निहोत्रमि'त्यादौ यज्ञशब्दस्य प्रयोगो होमादौ दृश्यते, तथापि ते होमशब्देनैव व्यपदेशमर्हन्ति, नेष्टिशब्देन, न वा यागशब्देनेति मन्तव्यम् ।

एवं प्रतिदर्शं प्रतिपौर्णमासं पुरोडाशादिभिर्विहितैर्द्रव्यविशेषैरनुष्ठीयमाना यागविशेषा इष्टिशब्देन व्यपदिश्यन्ते, एते यागशब्देनापि व्यवह्रियन्ते, उभयथापि व्यवहारदर्शनात् ।

एवं तत्तत्फलोद्देश्येन प्रतिवर्षंतु, अन्यस्मिन् काले वा पशोर्हृदयादिभिरङ्गैः क्रियमाणाः यागाः पशुयागा इति कथ्यन्ते ।

एवं प्रतिवसन्तं अन्यस्मिन् काले वा तत्तत्फलसिद्धये सोमलतां क्रीत्वा तामभिषुत्य ग्रह-चमसादिपात्रेषु तं रसं पूरयित्वा स्तोत्र-शस्त्रादिकं पठित्वा तत्तद्देवताभ्यो दानं सोमयाग इत्युच्यते, अत्र त्रिवृदादीनां स्तोमानां सत्त्वेन अस्यैव ज्योतिष्टोम इति याज्ञिकानां व्यवहारः ।

इमे सर्वेऽपि होमा यागाश्च सपत्नीकेनाऽऽहिताग्निना कर्तव्याः, 'सहत्वं कर्मसु तथा पुण्यफलेषु' इत्यादिना दंपत्योस्सहाधिकारात् । अतः तदर्थं गार्हपत्याहवनीयदक्षिणाग्नयस्त्रयः आधानेन संपादनीयाः । तदेवाग्न्याधानाख्यं इत्यपि अभिधीयते, तच्च प्रागुक्तचतुर्विधेभ्यः कर्मभ्यो आधीयते ।

तेन संपादिता अग्नयो यागादिकर्मसूपयुज्यन्ते, तत्राप्ययं विशेषः— येन पुंसा आधानं कृतम्, तस्यैव तेऽग्नयः, नान्यस्येति ।

तत्राधानमारभ्य यावज्जीवं गार्हपत्यो धारयितव्यः, दक्षिणाग्न्याहवनीयौ तु तत्तत्कर्मानुष्ठानकाले गार्हपत्यादुदधृत्य तत्तदायतने संस्थाप्य तत्तत्कर्मणि समनुष्ठिते तत्र स्थान एव शम्यतः, 'अपवृक्ते कर्मणि लौकिकः संपद्यते' इति न्यायात् ।

यद्यपि कल्पसूत्रग्रन्थेषु सभ्यावसथ्ययोरपि आधानसंपाद्यत्वं स्मर्यते, सभाया योग्यः सभ्यः, आवसथं—गृहमर्हतीति आवसथ्य इति तयोर्व्युत्पत्तिः । तथापि न तयोर्यज्ञादिकर्मसु उपयोगः श्रूयते ।

तस्मात् अग्नित्रयसाध्यत्वमेव यज्ञादिकर्मणाम्, तत्रापि यावज्जीवं धारणं गार्हपत्यस्येति याज्ञिकमीमांसकानां सिद्धान्तः ।

एवं धार्यमाणस्य गार्हपत्यस्य केनापि निमित्तेन नाशे सति, तदा अग्न्यनुगतप्रायश्चितं विधाय, पुनर्गार्हपत्य उत्पादयितव्यः । बहुकालं विच्छिन्नेऽग्नौ पुनराधानविधिना स उत्पादयितव्य इत्यादिविशेषो श्रौतसूत्रादितोऽवगन्तव्यः ।

प्रकृतमनुसरामः—एतानि चतुर्विधानि कर्माणि निरूपितानि वेदे-एतेषामेव विकृतयो बहवो यागा निरूपिता उच्चावचफलावाप्तये ।

## प्रकृतिविकृतिभावविचारः

'यत्र प्रकर्षेणांगोपदेशः क्रियते इति व्युत्पत्त्या प्रकृतिशब्दो निष्पन्नः । अंगोपदेशे प्रकर्षश्च कृत्स्नांगविषयत्वमि'ति तै. सं. भा. भू. पृ. ७ सा प्रकृतिरिति वेदभाष्ये माधवाचार्यः ।

एवञ्च यत्र समग्राणां प्राच्योदीच्यानामंगानां कात्स्र्न्येन विधानमस्ति, सा प्रकृतिरिति, यथा— दर्शपूर्णमासादिः, तत्रापेक्षितानां पूर्वेषामुत्तरेषाञ्चांगानां विधानमस्ति । अत एव यत्र समग्रांगोपदेशः, सा प्रकृतिः, यत्र न समग्रांगोपदेशः विकृतिषु विशेषांगमात्रस्योपदेशः क्रियते । सा विकृतिरिति । अर्थात् यस्य कर्मणस्सन्निधौ दैशिकाण्यङ्गानि विहितानि, साधारणाङ्गानि सादृश्यादिना प्रकृतिं निश्चित्य, तत एवानेतव्यानि भवन्ति । तानि कर्माणि विकृतिशब्देनाभिधीयन्ते इति, प्रकृति-विकृति-स्वरूपं विवेचयन्ति मीमांसानयकोविदाः । तत्रेष्टीनां प्रकृतिर्दर्शपूर्णमासौ, 'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिस्स्यात्' ( ८-१-११ ) इति सूत्रात् ।

एवञ्च चित्राद्या इष्टयः दर्शपूर्णमासयोर्विकृतय इति। पशुयागाः अग्निषोमीयस्य पशोः विकृतयः, 'दैक्षस्य चेतरेषु' (८-१-१३) इति सूत्रात। दैक्षः—अग्निषोमीयः पशुः 'यो दीक्षितो यदग्निषोमीयं पशुमालभते' ( तै० सं० ६-१-११ ) श्रुतेः।

सादृश्यञ्च क्वचित् द्रव्यघटितत्वेन, क्वचिद् देवताघटितत्वेन, क्वचिच्च देवतावाचिपदनिष्ठाक्षरादिनेत्यादिविशेषो ग्रन्थशरीर एव विवेचितः।

तत्रायं विशेषो बोध्यः—इष्टीनां अन्येष्टचङ्गत्वं पशुयागांगत्वं च संप्रतिपन्नम्। तत्र पशुयागानां सोमयागांगत्वमेव इष्टचङ्गत्वं पशुयागान्तराङ्गत्वं वा नोचितम्। सोमयागोऽपि अन्येषां सोमयागानामङ्गानि भवन्ति, इष्टयंगत्वं, पशुयागां त्वं वा सोमयागानां नाङ्गीक्रियत इति।

## अग्निहोत्रादिविषये विशेषकथनम्

तत्राग्निहोत्रं यजुर्वेदे विहितम्। अतस्तत् यजुर्वेदविहितांगजातविशिष्टं सदनुष्ठोयते। तत्र ऋग्वेद-सामवेदयोः नास्ति उपयोगः। अत एव 'अथातो यज्ञं व्याख्यास्यामः'इत्युपक्रम्य भगवता आपस्तम्बमहर्षिणा,'यजुर्वेदेनाग्निहोत्रमि'ति सूत्र्यते स्म। दर्शपूर्णमासाद्या इष्टयः, पशुयागाश्च ऋग्वेद-यजुर्वेदाभ्यामनुष्ठीयन्ते। तत्र ऋग्वेदेन याज्या-पुरोनुवाक्या-सामिधेनी-प्रैषादिमन्त्राः समर्प्यन्ते। यद्यपि यजुर्वेदेऽपि याज्यादयः समाम्नाताः। तथापि तदनुरोधेन दाक्षिणात्याः केचन याज्ञिका पशुयागपर्यन्तं याजुर्वैदिकमेव हौत्रमातिष्ठन्ते।

सोमयागादारभ्यैवार्चिकं हौत्रं कुर्वते। परन्तु आश्वलायनमहर्षिः स्वकीये श्रौतसूत्रेऽर्चिकमेव हौत्रं कर्तव्यत्वेन विधत्ते कृत्स्नत्वात्। याजुषस्य हौत्रस्याकृत्स्नत्वेन तन्निषेधति। तथा च सूत्रम् 'ये केचन छान्दोग्ये,आध्वर्यवे,-औद्गात्रे वा हौत्रावमर्शाः समाम्नाताः, न तान् कुर्यात्, अकृत्स्नत्वाद्धौत्रस्य, आ० ( ६-१३ ) इत्यादि। अयमर्थोऽथर्ववेदसंहिताभाष्यभूमिकायां १२० पृ० विशदः, अत आर्चिकमेव हौत्रं कर्तव्यमिति निष्कर्षः। अन्यान्यंगानि शाखाच्छेदनादि पत्नीसंज्ञयाजादीनि यजुर्वेदेन क्रियन्ते। पशुयागेऽपि यूपच्छेदनोपाकरणादिक्रियाजातं यजुर्वेदेन, सोमयागस्तु ऋक्-साम-यजुर्वेदै त्रिभिर्वेदैः विधीयते 'सर्वैरग्निष्टोमः' आ, परि सू. इति।

## जिज्ञासूनामुपकाराय यागानुष्ठानप्रकारकथनम्

अत्र प्रसंगात् यागानुष्ठानप्रकारः संक्षेपेण निर्दिश्यते, तथाहि—

विधिवाक्यगतां तत्तद्देवतामुद्दिश्य तत्तद्धविषां त्याग एव यागः इत्युच्यते। तादृशहविस्त्यागप्रकारश्चेत्थं वेदितव्यः।

अध्वर्युर्नाम ऋत्विग् जह्वादिपात्रे हविर्गृहीत्वा होतारं दृष्ट्वा तमाज्ञापयति। 'अग्नयेऽनुब्रूहि' इति। तदर्थश्चाग्निदेवताकां अनुवाक्यां पठ—इति। अनुवाक्या ऋक प्रैषमनु वचनात् अनुवाक्येति अन्वर्थनामकोऽयं शब्दः। तेन होत्रा तद्देवतायां ऋचि पठितायां, ततः आग्निध्रनामकम् ऋत्विजं ब्रूते आश्रावय इति।

अस्यायमर्थः—मयेदानीं हविः प्रदातुमिष्यते, तत् अग्नये श्रावय—इति, एतच्छ्रुत्वा, सः प्रतिब्रूयात् 'अस्तु श्रौषट्' इति। अस्तु इत्यंगीकारे श्रावयामीति तदर्थः। श्रौषट्—श्रावणप्रकारः।

तत्र प्रकारचतुष्टयमापस्तम्बमहर्षिणोक्तम्। तत् तदीयसूत्रे द्रष्टव्यम्। तदनन्तरमध्वर्युः यजेति होतारं प्रति वदेत् —'हे होतः प्रकृतदेवताकां याज्यां पठ' इति तदर्थः। ततो होता ताम् ऋचं पठित्वा तदन्ते वौषडिति शब्दमुच्चारयेत्। ततोऽध्वर्युस्स्वहस्तस्थितं पुरोडाशादिकं हविराहवनीयाग्नौ प्रक्षिपेत्। तत्समकालमेव यजमानः तत्तदेवतोद्देशत्यागप्रतिपादकं वाक्यमुच्चारयेत्, स्वस्वत्वनिवृत्तिबोधकञ्चेति संप्रदायः। अग्नय इदं, न ममेति। इदमग्नये, न ममेति कात्यायनीयाः। तदर्थश्चाग्नौ प्रक्षिप्यमाणमिदं हविः अग्नये भवतु, न मम—मदीयस्संबन्धो योऽत्रासीत्, स इतः परं नास्तीत्यर्थः। अयमेव प्रकार इष्टिषु औत्सर्गिकः। पशुयागेषु परमयं विशेषः पशौ मैत्रावरुणष्षष्ठः ऋत्विक होतुरनन्तरं पुरोनुवाक्यां पठेत्।

अनन्तरञ्च होता याज्यां पठेदिति। अयं प्रकारस्तैत्तिरीयसंहितायां प्रथमकाण्डषष्ठप्रपाठकैकादशानुवाके सुविशदः।

## कर्मणां नित्य-नैमित्तिक-काम्यादिभेदेन चातुर्विध्यम्

भगवान् सर्वज्ञकल्पो वेदः काण्डद्वयात्मक इति स्थितिः। तत्र पूर्वस्मिन् काण्डे [कर्मकाण्डे] नित्य—नैमित्तिक-काम्य-निषिद्धरूपं चतुर्विधं कर्म प्रतिपाद्यम्। तत्र 'यावज्जीवमग्निहोत्रं जुहोति, यावज्जीवं, दर्शपूर्णमासाभ्यां यजेते'त्यादिना यावज्जीवं कर्तव्यत्वेन विहितमग्निहोत्रादिकं, अकरणे प्रत्यवायजनकञ्च। वीप्साश्रवणेनापि नित्यत्वं 'वसन्ते वसन्ते ज्योतिषा यजेत' इत्यादौ।

अर्थसंग्रहे तु 'अहरहस्सन्ध्यामुपासीते'ति नित्यस्योदाहरणं दृश्यते, सन्ध्यावन्दनं स्मार्तं न श्रौतमिति विवेक्तव्यम् धीमद्भिः। गृहदाहे क्षामवतीष्टिः, पुत्रजनने निमित्ते वैश्वानरेष्टिरित्यादि नैमित्तिकम्। काम्यञ्च 'चित्रया यजेत पशुकामः' इत्यादिना विहितम्। निषिद्धञ्च 'मलवद्वाससा

न संवदेत, न सहासीत' इत्यादिना निषिद्धम्। निषिद्धमपि ज्ञातव्यं परिहाराय, विहितन्तु ज्ञातव्यमनुष्ठानाय, 'अधर्मोऽपि जिज्ञास्यः परिहाराये'ति जिज्ञासाधिकरणोपसंहारे ग्रन्थकारः प्राह। तत्र काम्यानां कर्मणां निरूपणं प्रासङ्गिकं गुडजिह्विकान्यायेन, नित्यनैमित्तिके अवश्यं कर्तव्ये प्रत्यवाय-परिहाराय। ज्ञानकर्मसमुच्चयो मीमांसकानां सिद्धान्तः। अस्य विवेचनं तर्कपादभूमिकायां द्रष्टव्यम् इति।

## वेदानामुद्देशः, तत्प्रामाण्यञ्च

नित्यादिभेदेन भिन्नानाम् उच्चावचानां याग-होम-दानादिकर्मणां विधानमेव वेदानां परममुद्देश्यं ( वेदा हि यज्ञार्थमभिप्रवृत्ताः, ) इत्यभियुक्तोक्तिः। तदर्थमेव तत्प्रवृत्तिः। तेनैव तेषां प्रामाण्यमज्ञातार्थज्ञापकत्वरूपं, औत्पत्तिकसूत्रे व्याख्याने प्रमाणान्तरानधिगताबाधितासन्दिग्धार्थबोधकत्व-लक्षणं प्रामाण्यमिति निरूपितं भट्टपादैः।

न्यायकणिकायां विधिविवेकव्याख्यायां 'प्रमाणत्वादि'त्यादिद्वितीय-कारिकाव्याख्यानावसरे इदमेव प्रमाणलक्षणमुक्तम्। पार्थसारथिमिश्रस्तु तर्कचरणे ब्रवीति 'अव्यतिरेकश्चार्थेऽनुपलब्धे इति विशेषणत्रयमुपाददानेन सूत्रकारेण प्रमाणलक्षणं सूचितं भवती' ( शा० दी० पृ० ४५ ) ति।

यथार्थानुभवः प्रमेति तार्किकोक्तलक्षणस्यात्रैव पर्यवसानमिति मधुसूदनसरस्वतीप्रभृतिभिर्विद्वद्धौरेयैर्गूढार्थदीपिकादौ प्रतिपादितम्।

अत एव सर्वज्ञकल्पस्य भगवत आम्नायस्य तत्रैव प्रामाण्यम्, नान्यस्य सकलप्रमाणशिरोमणीभूतस्य प्रत्यक्षादेः। अन्यथा लौकिकप्रमाणसिद्धवस्तु-परत्वे, भौतिकपदार्थविज्ञानप्रतिपादनैदंपर्ये वा आख्यायिकामात्रपरत्वे वा मूर्धाभिषिक्तमप्रामाण्यमानर्थक्यं वाऽऽपद्येत। यथोक्तं सूत्रकारेण —

'आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां तस्मादनित्यमुच्यते' इति। ऋषिवंशप्रसूतैरस्मत्पूर्वजैः त्रयीमर्मज्ञैः ज्ञानशक्त्यवतारभूतैः प्रमाणपदवी-प्रथमस्थानेऽभिषिच्यन्ते स्म इमे भगवन्तो वेदाः।

चतुर्वेदो भाष्यकारः माधवाचार्यो ऋक्संहिताभाष्योपोद्घाते आह— 'अत एव संप्रदायविदः ( अध्वरमीमांसाभाष्यकाराः शबरस्वामिनः ) वेदस्य अकुण्ठितां शक्तिं दर्शयन्ति। 'चोदना हि भूतं भवन्तं भविष्यन्तं सूक्ष्मं व्यवहितं विप्रकृष्टमित्येवञ्जातीयकमर्थं शक्नोत्यवगमयितुं नान्यत। किञ्च-नेन्द्रियमि' ( शा० भा० पृ० १३ ) ति।

सति चैवं आधुनिका वैदेशिकशिक्षादीक्षिताः विमर्शकपदवीमधिरूढाः भारतीया अपि विद्वांसः स्वमनीषया कञ्चिदर्थं कल्पयन्तस्तदुपरि स्वाभिलषितान् अर्थान् साधयितुं, प्राचीनसिद्धान्तमपलपितुं च प्रयतन्ते अहो मोहस्य माहात्म्यम्, अथवा करालस्य कलिहतकस्य प्रभावो वा। न्यायाचार्यवचनेनैव तान् सान्त्वयामः'काले कारुणिक त्वयैव कृपया ते तारणीया नराः'इति।

तत्राध्वरमीमांसकानां पक्षो न तथा दुर्बलः, यथा पक्षान्तरेण सह तुल्यकोटिमपि नार्हं वक्तुमिति ममाभिसन्धिर्द्रढीयसीति ।

अपि च तादृशातिकर्कशे मार्गे विविधानवद्यविद्यामर्मसर्वस्वकांक्षिणि पदप्रक्षेपेणात्मानं क्लेशयितुमनिच्छन्तोऽनीशाना वा तृणाग्रचर्विणां पल्लवग्राहिपाण्डित्यानां 'वा केषाञ्चिल्लौकिकानां शासनसत्तारूढानां मनस्तुष्टिसंपादनमेवात्मविद्यापरिपोषणं मन्यमानाः तदुपौयिकं पन्थानमन्विष्यन्तः वेदेषु भूतभौतिकविज्ञानादीन् वादान् शासनौपयिकञ्च नयकलापमाविर्भावयन्तः, तेनैवात्मानं धन्यधन्यं कृतकृत्यञ्च मन्यमानाः, आत्मविद्यां चरितार्थयन्ति । प्राचीनभारतीयमहर्षिसंघजुष्टमार्गानुगामिनश्च विचारचातुरीविहीनान् बुद्धिपौरुषहीनान् लोकान् चिन्तासागरे निमज्जयन्तीति । नैतच्चित्रं सांप्रतिके निर्गलस्वच्छन्दप्रवृत्तिमति कलिहतकदूषिते कराले काले । तान् वयं शोचामः । प्रकृतमनुसरामः, प्रसंगानुप्रसंगविचारणया बहु दूरं नीता वयम् ।

एवमधिकरणस्वरूपनिरूपणेन स्थूलया दृष्टयाऽधिकरणार्थमाकलयितुं प्रवोभवीति । तत्र मीमांसाशास्त्रस्यादिमं सूत्रं 'अथातो धर्मजिज्ञासा' इति ।

अथ सांगवेदाध्ययनानन्तरं अतः वेदाध्ययनस्य वृत्तत्वाद्धेतोः, धर्माधर्मयोर्ज्ञानाय सन्दिग्धानां वेदवाक्यानां विचारः कर्तव्य इति । विचारश्च धर्मस्वरूप-प्रमाण-साधनफलैस्साभासैः कर्तव्यः । प्रथमपादप्रतिपाद्या दार्शनिकसम्मतप्रमाण—प्रमेयरूपा जल्पन्यायेन विस्तरेण निरूपयिष्यन्ते—तर्कचरणे। 'लक्षणप्रमाणाभ्यां वस्तुसिद्धिरि'ति न्यायेन को धर्मः, कथंलक्षणकः इत्यंशद्वयविचारेण समग्रोऽपि प्रथमोऽध्यायः प्रमाणाध्याय इति गीयते ।

कथंलक्षण इति भाष्ये किंशब्दस्य स्वातन्त्र्येण लक्षणशब्देन संबन्धोऽभिमितः,नतु थमुप्रत्ययार्थप्रकारविशेषणत्वं । अत एवाऽऽहपार्थसारथिमिश्रः 'किंलक्षणो धर्म इति, प्रमाणजिज्ञासाधिकारादि'ति ।

एवञ्च विधिना विहितम्, अर्थवादेन प्ररोचितम्, मन्त्रेण प्रयोगकाले स्मृतमसदनुष्ठितञ्चाभ्युदयकारिभवतीति सम्पिण्डितोऽर्थः ।

तत्राद्ये पादे चोदनायाः प्रामाण्यं साधितम् । त्रिपाद्यां तु अर्थवादमन्त्राणां विध्येकवाक्यतया स्मृत्याचारयोर्वेदमूलकतया, वाक्यशेषसामर्थ्ययोः सन्दिग्धार्थनिर्णये प्रामाण्यञ्च प्रतिपादितम् । एवं समस्तेनाध्यायेन धर्मप्रमाणनिरूपणादेव तत्प्रमेयस्य ज्योतिष्टोमाष्टकादेः धर्मत्वावधारणात् धर्मस्वरूपमपि निरूपितं भवति । वेदादिप्रमेयो धर्म इत्यवगतेऽपि न कात्स्न्येन तत्स्वरूपमगवतं भवति । भेदलक्षणेन इयन्ति स्वरूपाणि इत्यवधारणान्निरवशेषस्वरूपावगतिसिद्धिः । अत इदानीं भेदाध्यायो द्वितीयः प्रवर्तते, सर्वञ्च भेदाभेदशेषशेषिभावादि प्रमाणबलेन निरूपणीयमिति प्रमाणलक्षणात् पश्चादारम्भः—इति ।

एवं सिद्धे भेदे शेषशेषिभावचिन्तनाय तृतीयोऽध्यायः प्रवर्तते, अत एवोक्तं शास्त्रदीपिकायां 'एवं सिद्धे भेदे शेषशेषित्वमिदानीं चिन्त्यते । भिन्नानां हि तत् संभवति, नाभिन्नानामिति, भेदलक्षणस्य हेतुत्वमि-
शा. दी. पृ. १३३ ति ।

अत्रेदानीमित्यनेन भेदाधीनत्वाविशेषेऽपि प्रयुक्त्यादिनिरूपणस्य नायं समयः; तेषां शेषशेषिभावापेक्षत्वात् । किन्तु शेषशेषिभावस्यैवेति दर्शयति, इति ।

शेषत्वनिरूपणमध्यायार्थं इति शङ्का-निरसनेन ।
शेषशेषित्वमेवाध्यायार्थं इति निरूपणम् ॥

नन्वथातश्शेषलक्षणम्, शेषः परार्थत्वात्, कः शेषः ? केन हेतुना शेषः इत्यादिसूत्रभाष्यपर्यालोचनया शेषत्वमेवाध्यायार्थं इति प्रतीयते । शास्त्रदीपिकाकारस्य तु शेषशेषित्वं चिन्त्यत इत्युक्तिः कथं संगच्छत इति शंका समुन्मिषति । तदिदमविचारितरमणीयम् । तथाहि—अस्मिन्नध्याये यथा शेषत्वनिरूपणमावश्यकं, तथा शेषित्वनिरूपणमप्यावश्यकमपेक्षितञ्च । तथा चोभयोरवश्यविज्ञेयतया शेषशेषिभावस्यैवाध्यायार्थत्वमुचितम् ।

सूत्रकारेण एकस्य ज्ञाने सति इतरसिद्धेर्नान्तरीयकत्वात्, एकमेव सूत्रितं । तत्रापि शेषोऽस्यास्तीति शेषीति मतुबर्थस्य शेषज्ञानं विनाऽवबोद्धुमशक्यत्वात् शेषत्वमेव सूत्रितम् । नतु तावन्मात्रमध्यायार्थः । अपि तु शेषशेषित्वमेव । सम्यगेवोक्तं शास्त्रदीपिकाकारेण शेषशेषित्वमिदानीं चिन्त्यत-इति । एतेन शेषत्वमेव तृतीयाध्यायार्थं इति खण्डदेवोक्तं निराकृतम् ।

तत्र शेषशेषिभावचिन्तनं बहुप्रकारं भवति । कश्शेषः ? इति शेषस्य स्वरूपं, केन हेतुना शेष इति शेषपदप्रवृत्तिनिमित्तं, श्रुति-लिंग-वाक्य-प्रकरण-

स्थान-समाख्यारूपाणि, विनियोगे-शेषस्य शेषिणा सहान्वयबोधने कारणानि-प्रमाणानि, तेषां विरोधे बलाबलं, विरोधश्च क्वास्ति, क्व नास्ति इति बहुधा चिन्तनम्। अन्यदपि प्रासंगिकम्।

तत्र शेषस्वरूपं शेषपदं प्रवृत्तिनिमित्तं श्रुत्यादिप्रमाणषट्कमध्ये श्रुतिश्चैते प्रथमपादस्य विषया बोध्याः। गौणमुख्यसाधारण्येन लिंगरूपं प्रमाणं द्वितीयपादस्य विषयः। तृतीयपादे वाक्य–प्रकरण स्थान–समाख्यारूपाणि चत्वारि प्रमाणानि, तेषां विरोधे बलाबलं निरूप्य, कुत्र विरोधोऽस्ति, कुत्र नास्तीति विरोधसदसद्भावविचारः प्रारब्धः। अयमेव विचारो यावदध्यायसमाप्ति अनुवर्तते।

तत्र तृतीयपञ्चमाधिकरणमारभ्य षष्ठपादस्य षष्ठाधिकरणपर्यन्तं प्रकरणस्य तत्पूर्वैः प्रमाणैस्सह विरोधाविरोधचिन्तनम्। यथोक्तं शास्त्रदीपिकायां तुल्यस्सर्वेषामित्यधिकरणारम्भे–एवं प्रकरणस्य पूर्वैस्सहविरोधाविरोधविचारं प्रासङ्गिकं समाप्य, अधुना स्थानस्य पूर्वैस्सह विरोधाविरोधौ विचार्येते इति। तदनन्तरं स्थानस्य तत्पूर्वप्रमाणैस्साकं चतुर्भिरधिकरणैर्विरोधचिन्तनम्। ततः प्रासंगिकी प्रकरणवाक्यविरोधाविरोधचिन्ता सप्तमपादीयसप्तमाधिकरणपर्यन्तम्। अष्टमे समाख्यायाः पूर्वैः प्रमाणैर्विरोधाविरोधचिन्तनमध्यायशेषेण।

अत्रेदमवधेयम्–कतिपयविचाराणामनेकपादव्यापित्वेऽपि श्रुत्यादिप्रमाणषट्कं प्रबलप्रमाणाबाधितप्रकरणादिविनियोगः। प्रतिपत्तिविचारः, अनारभ्याधीतानां पर्णतादीनां प्रकृतिगामित्वं, तदपवादः। अनेकोपकारकतयोपदिष्टाः पदार्थाः। बह्वर्थाः, यजमानधर्मा इति तृतीये अष्टौ पदार्था उपवर्णिता इति।

## प्रयुक्तिविचारः

तृतीयेऽध्याये पदार्थानां शेषशेषिभावे सिद्धे सति हेतुहेतुमद्भावसंगत्याऽयं पदार्थोऽनेनानुष्ठाप्यते, अयमनेनेत्येवं प्रकारेणास्मिन्नध्यायेऽनुष्ठापनापरपर्याया प्रयुक्तिर्विचार्यते। तत्र प्रधानं फलं यागस्य प्रयोजकं यागसाधने-यागः, तत्साधने साधनमित्युत्सर्गः। विधिरेव सर्वत्र प्रयोजकः कस्मै प्रयोजनाय किमनुष्ठापयति कस्मै न, यदर्थञ्चानुष्ठापयति, तत्प्रयोजकमित्युच्यते, तत्त्वञ्च यन्निष्ठकृतिव्याप्यतानिरूपितोद्देश्यताशालि यत्, तत् तस्य प्रयोजकम्। यदुद्देशप्रवृत्तपुरुषकृतिव्याप्यत्वं यस्य, तत् तस्य प्रयोज्यम्। क्रमेणोदाहरणे, दर्शपूर्णमासामिक्षादि, दध्यानयन-प्रयाजादि। प्रधानार्थ-

मङ्गान्यनुष्ठीयन्ते, नाङ्गार्थं प्रधानमिति । एतादृशप्रयोज्यप्रयोजकत्वावधारणार्थमङ्गाङ्गिभावादिकं विचार्यंते ।

अत एव 'अर्थे समवैषम्यमतो द्रव्यकर्मणामि'त्यधिकरणे ह्युक्तम्, एवं तावत् फलभूतं प्रयोजकाप्रयोजकत्वमाश्रित्य शेषशेषित्वमेव साक्षाच्चिन्तितम् । 'अतः परमेतदेव साक्षाच्चिन्त्यते' शा. दी. २७१ इति ।

'यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्सार्थलक्षणाऽविभक्तत्वादि'ति सूत्रेण पुरुषार्थलक्षणमभिधीयत इति प्रतीयते, परं शास्त्रदीपिकाकारः क्रत्वर्थलक्षणमभिधाय, तदनन्तरं पुरुषार्थं लक्षयति 'तद्भिन्नं करण-फलवृत्ति पुरुषार्थमि'ति । तस्यायमाशयः । तथाहि—यस्मिन् कृते पुरुषस्य प्रीतिरुत्पद्यते, स पुरुषार्थ इति सूत्रोक्तं लक्षणमनुपपन्नम् । तत्र प्रीतिशब्देनेच्छाविषयत्वमात्रोक्तौ क्रत्वर्थेऽतिव्याप्तिस्स्यात्। यदि तद् वारणाय स्वारसिकेच्छाविषयत्वं विवक्ष्यते, तर्हि पश्वादिफलककर्मणि चोद्भिच्चित्रादावव्याप्तिस्स्यात् । तद्वारणाय क्रत्वर्थभेदघटितं पुरुषार्थलक्षणं वक्तव्यमित्याशयेनादौ क्रत्वर्थलक्षणमभिधाय, तदनन्तरं पुरुषार्थलक्षणं वर्णयामास । 'यत् भावनाकथंभावांशपूरणम्, तत् क्रत्वर्थमि'ति शास्त्रदीपिकावाक्यम् । अस्यायमर्थः—भावनायामितिकर्तव्यतात्वेनान्वितत्वं क्रत्वर्थत्वमिति । प्रयाजादिषु लक्षणसमन्वयस्सुगमः । गोदोहनादेर्वस्तुतः क्रतूवकारकत्वेऽपि, क्रत्वपूर्वभावनाद्देशेन विधानाभावान्नातिव्याप्तिः । एवमाधानस्याग्न्यर्थत्वेन, स्वाध्यायाध्ययनस्यार्थज्ञानार्थत्वेन विधानात् भावनाकथंभावप्रपूरणार्थत्वाभावात् न क्रत्वर्थमिति । तथा च भावनायामितिकर्तव्यतात्वेनान्वितत्वं क्रत्वर्थस्य लक्षणमिति ।

## अस्मिन् लक्षणे खण्डदेवाचार्योक्तदूषणं

खण्डदेवाचार्येण यदपि शास्त्रदीपिकायां इत्यादिना······क्रत्वर्थेऽव्याप्तिः, तेषामितिकर्तव्यतात्वाभावात् । आधानाध्ययनयोरुभयभिन्नत्वेन तत्र पुरुषार्थलक्षणस्यातिव्याप्तिश्च स्यादिति दूषितम् ।

## तत्परिहारश्च

आचार्योक्तं दूषणमलग्नकम्, भवदुक्त्या व्याहतञ्चेति ब्रूमः । तथाहि—पुरुषार्थस्यैवं लक्षणं क्रियते तत्तच्छास्त्रानपेक्षेच्छाविषयभाव्यकभावनांशत्वे सति क्रत्वर्थभिन्नत्वं पुरुषार्थत्वमिति, यागफलयोरिदं लक्षणं घटते ।

आधानस्याग्निभाव्यकभावनाकरणत्वेन, ( आधानेनाग्नीन् भावयेदिति ) अग्नेः 'आहवनीये जुहोती'ति शास्त्राधीनेच्छाविषयत्वेन, तदनपेक्षेच्छाविषयत्वाभावेन, तत्तच्छास्त्रानपेक्षेच्छाविषयभाव्यकभावनांशरूपत्वान्नातिव्याप्तिः ।

एवमध्ययनस्यार्थज्ञानभाव्यकभावनाकरणत्वेऽपि 'स्वाध्यायोऽध्येतव्यः' इति शास्त्राधीनेच्छाविषयत्वेन शास्त्रानधीनेच्छाविषयत्वाभावेन तादृक् भाव्यकभावनांशत्वाभावान्नातिव्याप्तिः । अवशिष्यते क्रत्वर्थनिषेधेषु अक्रियारूपेष्वव्याप्तिः । तत्परिहारश्चेत्थं निषेधेषु पुरुषार्थलक्षणस्योक्त विधप्रयोज्यप्रयोजकभावविचारानुपयुक्तत्वेन, अस्मिन्नध्यायेऽनुष्ठेयक्रियागततल्लक्षणस्य निषेध्यसाधारणस्य वक्तुमशक्यत्वात् ।

निषेधेष्वव्याप्तिकथनस्य यद्येकरूपत्वासंभव एव, तर्हि त्वन्मतेऽप्ययं-दोषः प्रसजत्येव ।

यदि एकरूपं स्वीकृत्य तदोभयधर्मवत्सु सांकार्यमापाद्य सामान्यलक्षणस्याव्याप्तिरूद्भाव्यते, तर्हि गलेपादुकान्यायेनाऽऽपतेदेवाव्याप्तिस्त्वन्मतेपि ।

अत एव निरूपकभेदेन भिन्नस्यैव तस्य यत्तत्पदघटितमेव विशेषलक्षणं कृतं, यत्तत्पदघटितं व्यक्तिविषयकं न दोषमावहतीति प्राचां मतम् ।

अननुगमो महान् दोष इति गौरवपाठमध्यापयता यदुद्देश्यकृतिव्याप्यत्वं यस्य, तत् तस्य प्रयोज्यमिति व्यक्तिघटितं विशेषलक्षणं कथं त्वया कृतमिति विदांकुर्वन्तु विद्वद्वरेण्याः ।

इदमपि विचारणीयं तन्त्ररत्ने स्वयंप्रार्थितसाध्याधीनानुष्ठानं पुरुषार्थः, तदुपकारकं क्रत्वर्थ इत्युक्तम् । तदेव पुरुषार्थलक्षणं स्वयंप्रार्थितवृत्त्युद्देश्यतानिरूपितविधेयताकत्वमिति, पूर्वं तन्त्ररत्नोक्तलक्षणे फलेऽव्याप्तिदूषणं स्वयमुदभावि, स्वेन परिष्कृते लक्षणे प्रसक्तस्य तस्यैवाव्याप्ति दूषणस्य परिहाराय फलस्य पुरुषार्थत्वव्यवहार इति परिहारोक्तेः को विशेष इति विचारयन्तु विद्वासः-इति । तस्मात् तन्त्ररत्ने, शास्त्रदीपिकायाञ्च-उक्तं क्रत्वर्थपुरुषार्थत्वलक्षणं साधीयः इति । प्रयोज्यप्रयोजकभावः प्रयुक्तिः, इति भाष्य-वार्तिक-शास्त्रदीपिकादिग्रन्थस्वारस्यात्, न तु प्रयोज्यत्वम्। एतेन शेषिनिरूपितं शेषत्वमिव प्रयोजकनिरूपितं प्रयोज्यत्वं चतुर्थस्य विषय इति भाट्टदीपिकावाक्यं चिकित्सितमिति वेदितव्यम् । प्रयुक्तिशब्देन प्रयोज्यप्रयोजकभावो विवक्षितः । न प्रयोजक इति बोध्यम् ।

शास्त्रदीपिकाकारः एतत्सर्वमाक्षेपसमाधानाभ्यां प्रत्यपीपदत्। यथा- 'यदि प्रयोजकाप्रयोजकत्वाचिन्ता चतुर्थे; कथं तर्हि क्रत्वर्थत्व-पुरुषार्थत्व यज्ञागं त्वायज्ञांगत्वापूर्वसदसद्भाव- नियमविधिव्युत्पादन-फलविध्यर्थवादत्व-फलवत्त्व कालार्थत्वाङ्ग-प्रधानार्थत्व-समप्रधानत्व-गुणप्रधानत्वादीनि चिन्त्यन्ते ? प्रयोजकाप्रयोजकसिद्धयर्थमेव तत्। तथाहि इत्यादि'।

प्रधानस्य प्रयोक्तृत्वम्, अप्रधानप्रयोक्तृत्वं, फलचिन्ता, जघन्यांगचिन्ता- इति चतुर्णां पादानामर्थाः। अत्र पुरुषार्थपदेन प्रयोजकमुच्यते, तत्प्रतिपक्षवाचकेन क्रत्वर्थशब्देनाप्रयोजको लक्ष्यत इति सूत्रार्थः सोमनाथीये।

एतेन क्रत्वर्थपुरुषार्थत्वद्वारेण मुख्यं प्रयोज्यत्वमेव लक्षणया सूत्रकृतोक्तं इति 'अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासे'ति सूत्रव्याख्यानं निरस्तम्।

## पञ्चमस्य विषयः

अंगप्रधानसाधारण्येन अनुष्ठेयेषु प्रयोज्येषु विचारितेषु किं पूर्वं प्रयुज्यते, किमनन्तरमिति अनुष्ठेयगतस्य पौर्वापर्यरूपस्य प्रयोगाश्रितस्य क्रमस्य निरूपणं पञ्चमे क्रियते। तत्र षट् प्रमाणानि—श्रुतिः शक्तिलक्षणान्यतररूपया वृत्त्या क्रमपरवचनं। अर्थः-प्रयोजनम्। पाठक्रमः, विधायकवाक्यानाम्, अङ्गभूतमन्त्राणां च। स्थानं क्लृप्तक्रमकपूर्वपदार्थोपस्थितिः।

मुख्यक्रमः अंगानां क्रमे हेतुः। प्रवृत्तिक्रमश्चेति। एतानि क्रमप्रमाणानि निरूपितानि प्रथमे पादे। द्वितीये पादे श्रुत्यादिप्रमाणगम्यं क्रमं स्वीकुर्वन् प्रयोगविधिरनुष्ठेयस्वरूपन्यायोपबृंहणेन, अनुष्ठातृस्वरूपन्यायोपबृंहणेन क्रमेण क्वचित्पदार्थानुसमयेन, क्वचित् काण्डानुसमयेनेत्येवं रीत्या श्रुत्यादि प्रमाणगम्यस्य क्रमस्य विशेषपर्यवसानं क्रियते। काण्डं-पदार्थसमुदायः, इण् गताविति धातुनिष्पन्नत्वात्, अनुसमयः-पश्चात् संगतिः।

अयमाशयः—याज्ञिकानामनुष्ठाने प्रकारद्वयमुवलभ्यते। तत्राद्यः प्रकारः—अनेकेषु प्रधानेषु समानांगसमुदायवत्सु एकस्मिन् सर्वाण्यप्यङ्गान्यनुष्ठाय पुनस्तथैवान्यस्मिन् प्रधानेऽङ्गान्यनुष्ठीयन्ते, एवमनुष्ठानं याज्ञिकैः काण्डानुसमय इति व्यवह्रियते।

यथा– ब्राह्मणानां पूजने आसनदानं पादप्रक्षालनं गन्धपुष्पादिभिः पूजनम्। दक्षिणादानं नमस्कारः आशी·प्रार्थनञ्चेति, तथैव ब्राह्मणान्तरेऽपि। श्रौतोदाहरणन्तु अश्वप्रतिग्रहेष्टौ वारुणेषु चतुष्कपालेषु पुरोडाशेषु अधिवासनादि।

द्वितीयन्तु क्वचिदेकमेवांगमनेकेषु प्रधानेष्वनुष्ठाय तदनन्तरं द्वितीयमंगं प्रधानानां क्रियते। एवमनन्तराण्यप्यङ्गानि क्रियन्ते, सोऽयं पदार्थानुसमय- इति याज्ञिकमीमांसकानां व्यवहारः। एतयोः काण्डानुसमय-पदार्थानुसमयोः कः कुत्र भवतीत्ययं विषयः, तदन्तापकर्षः तदाद्युत्कर्षश्चेत्यादयो विषयाः- द्वितीयपादस्य विषयः। एवं बहूनां पदार्थानां क्रमविशेषश्चिन्तितः।

तृतीयपादे—अभ्यासाश्रितः क्रमश्चिन्त्यते, यतो हि नानापदार्था- श्रितक्रमापेक्षया आवृत्तिनिबन्धनक्रमस्य सूक्ष्मत्वात् किञ्चित् विविच्यते। आवृत्तिश्च द्वेधा दण्डकलितवदावृत्तिः, क्वचिच्च स्वस्थानविवृद्धिरित्यादि। एवञ्चैकस्यैव पदार्थस्यावृत्तावपेक्षितायां तत्पौर्वापर्यविचारस्तृतीयपाद- प्रतिपाद्य इति फलति। तुरीयपादे तु—क्रमबोधकानां प्रमाणानां परस्परं विरोधे बलाबलं परीक्षितमिति संक्षेपः।

## षष्ठस्य दिग्दर्शनम्

षष्ठेऽधिकारो विचारितः। पञ्चमे क्रमो निरूपित इति क्रमनिरूपणस्य अधिकारनिरूपणे को हेतुरिति शंका जायते; तन्निराकरणप्रकारश्चेत्थम्—प्रमाणलक्षणसापेक्षैर्भेदाभेदशेषशेषि-प्रयोजकाप्रयोजकैर्वक्रमनिरूपणपरैः द्वितीयादिभिरध्यायैरनुष्ठेयवर्गे कोऽधिक्रियत इत्यधिकारनिरूपणे हेतु- हेतुमद्भावसंगतिः, अवसरसंगतिश्चोक्ता भवति।

यथोक्तं शास्त्रदीपिकाकारेण—

भेदादिलक्षणैरेवमनुष्ठेये निरूपिते।
कोऽनेनाधिक्रियेतेति सांप्रतं संप्रधार्यते॥' (शा० दी० भा० ३ पृ० १)

अत्र यद्यपि श्लोके क्रमलक्षणनिरपेक्षत्वमेव प्रतीयते, तथापि अधिकारस्य शक्त्यपेक्षत्वात्। शक्तयपेक्षोऽधिकारः, अशक्तस्य तिर्यगादेरधिकारासंभवात्। शक्तिश्च विषयनिरूपणाधीननिरूपणा। विषयश्चाध्याय- चतुष्टयप्रतिपाद्यो प्रयोज्यवर्ग इति, प्रयोज्यवर्गनिरूपणपरस्याध्यायचतुष्टयस्य हेतुत्वं संभवत्येव। यथा चाधिकारो यथोपदिष्टकर्मानुष्ठानसामर्थ्येन कर्तुरवधार्यत इति क्रमनियमपर्यन्तोपदेशज्ञानोत्तरकालमारभ्यत इति युक्तम्। यथोक्तं वार्तिके 'अथातश्शेषलक्षणमि'ति सूत्रस्य द्वितीय- व्याख्यानावसरे।

'भारो यो येन बोढव्यः स प्रागातोलितो यदा।
तदा कस्तस्य कर्तेति शक्यं कर्तृनिरूपणमि॥' तं. वा. पृ. ६५१, ति।

लोकेऽपि अयमेतावत्पूर्वमूढवान्, इदानीमपि एतावद्वोढुं शक्नोतीत्येवं वोढृत्वं निश्चित्य, एतावद्वोढुं शक्त इति निश्चयश्च । वोढव्यस्यैतावत्त्वनिश्चय आयतते । अतो द्वितीयाद्यध्यायचतुष्टयस्यानुष्ठेयवर्गनिरूपणात्मकतया प्रयोज्यवर्गनिरूपणाधीनेऽधिकारनिरूपणे हेतुत्वात् द्वितीयाध्यायाचतुष्टयानन्तरमधिकारलक्षणारम्भो युज्यत इति । अपि चात्राधिकारसद्भावमात्रं प्रतिपाद्यं, तस्य प्रथमाधिकरणप्रतिपाद्यतयाऽध्यायार्थत्वानुपपत्तेः । अतः अधिकारविशेष एवाध्यायप्रतिपाद्यः । सच तिर्यगादिव्यतिरिक्तस्य त्रैवर्णिकस्याप्रतिसमाधेयांगवैकल्यरहितस्यैव । अत एवाधिकरणविदः—आचक्षते अर्थी समर्थो विद्वान् शास्त्रेणापर्युदस्तो यजेतेति । अत्र विधौ अर्थीति स्वार्गकामाधिकरणन्यायसिद्धं, सामर्थ्यञ्च तिर्यगधिकरणन्यायसिद्धम् । विद्वत्वं च 'ज्ञाते वाचनं नह्यत्राविद्वान् विहितोऽस्ति' इति सिद्धं । स्वाध्यायाध्ययनविधिना च सिद्धे शास्त्रेणापर्युदस्त इति चाध्ययनविधिप्रसादलभ्यमपशूद्राधिकरणन्यायसिद्धमिति अनेकाधिकरणनिर्वाह्यमिति परमगहनोऽयं मीमांसादर्शनसिद्धान्तसरणिः ।

## अधिकारशब्दार्थनिरूपणं

अधिकारो नाम फलस्वाम्यं, नतु योग्यता । फलस्वाम्यञ्च कर्मजन्यफलभोक्तृत्वमुपग्रहवशा [आत्मनेपदा] दवगम्यते । अवयवार्थस्तु अधिकार इत्यत्राधिशब्दउपर्यर्थकः । ततश्चाधिकारः उपरिभावेनावस्थितिः । उपरिभावेनावस्थितिश्च स्वाम्यापरपर्यायः । यो यस्य स्वामी, स तस्योपरि भवतीतिप्रसिद्धं लोके । एवञ्च 'कर्मभिः पुरुषोऽधिक्रियते इति शास्त्रदीपिका वाक्यस्यायमर्थः-कर्मभिस्स्वभूतैरुपरिभावेनावस्थाप्यते—स्वामीक्रियत इत्यर्थः । स्वामिभवनस्य स्वाधीनत्वात् । तथा च प्रामाणिकानां 'वचनं यत् यस्य स्वं, तत्—तमधिकारोति—स्वामिनं करोतीत्यर्थः । अपि चाधिकारी निरूप्यत इति पूर्वमभिधाय, अनन्तरमेवाधिकारोनामेत्युत्तरग्रन्थश्च विरुद्ध्यते, अधिकारीनिरूप्यत इत्यनेन । 'विशेषणप्राधान्यविवक्षया निरूपणीयस्याध्यायार्थस्य प्रतिज्ञा 'कृतेति' तट्टीका च कथं साधीयसीति परिशीलयन्तु विद्वांसः । भाष्यवार्तिक-शास्त्रदीपिकादिष्वाधिकारोनिरूप्यते, नत्वधिकारीति ।

तथा कर्मजन्यफलभोक्तृत्वं कर्तृत्वसमाधिकरणमिति फलितार्थकथनं । कर्तृत्वभोक्तृत्वयोस्सति संभवे एकार्थवृत्तित्वरूपं सामानाधिकरण्यमित्युत्सर्गः, श्राद्ध-जातेष्ट्यादेस्संग्रहाय फलोच्छा—फलान्यतरसमाधिकरणं भोक्तृमिति तन्त्ररत्नोक्तार्थनिष्कर्ष एवाचार्यखण्डदेवेनोक्त इति बोध्यम् ।

एतेनअधिकारोनामेत्यादि भाट्टदीपिकासन्दर्भः, तदेवत्वतिव्यात्त्यादि दूषण-परिहारेणस्वयंनिष्कर्षयतीति प्रभावली च निरवकाशितेतिध्येयम्। यजेतस्वर्ग काम इति विधिवशात् यागो मदिष्टसाधनं मत्कृतिसाध्यश्चेत्येवं यदाऽऽ-क्षिप्यते, तदा मत्कृतिसाध्ययागजन्यफलभोक्ताप्यहं भविष्यामीति तुल्यवित्ति-वेद्यतयायत् ज्ञातं, तदपि विधिवशादेवेति फलस्वाम्यबोधकाधिकारविधि-प्रमाणगम्य एवाधिकारः।

'निरूपितेष्टेनुष्ठेये शक्यं शक्तिनिरूपणम्।

तस्यां निरूपितायान्तु तदधीनाऽधिकारधीः॥ 'न्या.र. पृ. ९३ इति।

अस्मिन्नध्यायेऽष्टौ पादा सन्ति तत्र, प्रथमे पादेऽधिकारीतस्य विशे-षणानीत्यादयोऽर्थाः वर्णिताः।

## मीमांसायाविशिष्टं स्थानं

प्रकृतमनुसरामः पूजितविचारवचनो मीमांसाशब्दः। मीमांसा नाम वेदार्थविचारः, धर्मःविचारश्च धर्मनिर्णयार्थः। तस्य च फलं यथा सांगस्य प्रधानस्यानुष्ठानद्वारा ऐहिकामुष्मिकफलावाप्तिः। धर्मानुष्ठानार्थमपेक्षितं वेदवाक्यार्थज्ञानं मीमांसाशास्त्रपरिशीलनमन्तरा न संभवति, निगमनिरुक्त-व्याकरणेन वा न भवति।

यद्यपि विदितपदपदार्थसंगतीनां समधिगतशाब्दन्यायतत्त्वानां वेद-वाक्यश्रवणसमनन्तरमेव कश्चिदर्थः प्रतिभाति, स किं बाधितः अबाधितो वा, स किं विवक्षितः, अथवान्य इति संशयनिराकरणं मीमांसाशास्त्रमन्तराऽन्येन नैव भवितुमर्हति। अतो धर्मस्वरूपं विचार्य निर्धारणीयं भवति, ईदृशोऽप्यर्थो यदि विप्रतिपन्नप्रमाणकः, तर्हि न कार्याय कल्प्येतेति, तत्प्रमाणपरिशोधन-मपि अवश्यकर्तव्यमापतति, अतो धर्मानुष्ठानाय धर्मस्य प्रमाण-स्वरूप-साधनफलानि तदाभासनिरासपूर्वकं ध्रुवं प्राक् निश्चेतव्यानि।

अत्र साधनं शेषः, अंगमितिपर्यायः। तदिदमङ्गं यस्मिन् कर्मणि, तत्साध्यमङ्गि प्रधानस्योपकाराय अङ्गानुष्ठानमिति।

न च धर्ममीमांसापरिशीलनं विना न चैतानि दृष्टादृष्टसाम-वायिकारादुपकारहेतुभूतौपदेशिकातिदेशिकक्रमपर्यन्ताङ्गग्रामसहितपरस्पर -भिन्नकर्मस्वरूप-तदधिकारिभेदपरिज्ञानं विना तदङ्गमनुष्ठीयत इति सामान्य-नियमः सर्वसंप्रतिपन्नः।

क्वचित्पुनरङ्गिनां कर्मणामनुष्ठानेऽपि अङ्गानि नानुष्ठीयन्ते । यथा पशुयागांगभूते पुरोडाशयागे प्रयाजादेः ।

क्वचिदंगिनः अङ्गानुष्ठापकशक्तिर्नास्ति, वाजिनादर्दध्यानयना-दावित्युक्तं उत्तरत्र विवेचयिष्यते, तस्मादिदमवश्यमेव विज्ञेयमिदमस्य प्रयोज-कम्, इदन्नेति ज्ञातव्यमेव ।

तथा च संप्रतिपन्नप्रमाणबलात् अनुष्ठेयस्य धर्मस्य स्वरूपं ज्ञात्वा फलविशेषप्राप्तये कर्मविशेषेष्वनुष्ठीयमानेषु पूर्वं किं कर्तव्यम्, अनन्तरं किं कर्तव्यमिति पौर्वापर्यापरपर्यायः क्रमोऽप्यवश्यमेव निश्चेतव्यो भवति,

## अतिदेशविचारः उत्तरषट्कस्य

तत्र साधनानामपरो विशेषोऽस्तीति संप्रधारयितव्यः । फलविशेषार्थ-मनुष्ठातव्येषु वेदविहितेषु धर्मपदाभिधेयेषु कर्मविशेषु ··धर्मास्साकल्येन पठ्यन्ते, केषुचिन्न, अनुपदिष्टधर्माणामेतेषां कर्मणां फलविशेषायानुष्ठाने प्रसक्ते तत्रोपकारकाणि कानि साधनानीतित्यपेक्षायामन्यत्र पठितानि चात्रा-प्यानेतव्यानीति गम्यते । अयमेवातिदेशः, तद्वदिदं कर्तव्यमिति, प्रदेश इत्यादिशब्दैरभियुक्तैस्सूत्रकारादिभिर्व्यपदिश्यते । तत्र सामान्यतः 'अवगम्यते कस्मिन् कर्मणि कस्मात् कर्मणोऽङ्गानि आनीयन्त इति, विशेषतोऽवगन्तव्यम् ।

तथा च भाष्यम—'पूर्वेणाध्यायषट्केन प्रत्यक्षविहितधर्माणां दर्श-पूर्णमासादीनामितिकर्तव्यता चिन्तिता । उत्तरेणेदानीमविहितेतिकर्तव्य-ताकेष्वैन्द्राग्नादिषु चिन्ता पृ० १५२३ इति । तत्र सप्तमेनाध्यायेन विकृतीनां धर्मा भवन्तीति प्रतिपाद्यते प्रत्यक्ष वचन नाम·कल्पितवचनेन च । अष्टमेन च विशेषः ।

अत एवोक्तं भाष्यकृता 'अथ विशेषलक्षणमित्याद्यं सूत्रं सामान्याति-देशलक्षणानन्तरं विशेषलक्षणं वक्ष्यामः' इति ।

वार्तिककारस्तु विशेषशब्दस्यासाधारणर्थतामंगोकृत्य एकैवेति-कर्तव्यता प्रवर्तत इति द्वितीय सूत्रे व्याख्यातवान् । नवमेनोहोद्वारान्त-रसंबन्धोऽन्यथा भावः अतिदिष्टपदार्थविषयकोऽतिदेशप्रकार एव विचारितः । स च दशमव्यापारमनुमन्यमान एवात्मानं लभते । दशमे बाधाभ्युच्च-याननिष्पादिनी अंगानामियत्ता विचारिता ।

इयत्ताप्रसंगेनैकादशेऽध्याये प्रयोगेयत्ता विचारिता तन्त्रावापेने- दृश्यामियत्तायां प्राप्तायां तदपवादत्वेन द्वादशोऽध्यायः प्रवर्तते अन्यादृशी- यत्ता प्रसंगेन भवति। यद्यपि तन्त्रावापप्रसङ्गाः उपदिष्टातिदिष्टसाधारणाः- उपदेशे अतिदेशे चाविशिष्टाः। तथापि पूर्वषट्के नैतेषामवसरः। यावत् कर्मणां भेदो नावधारितः, तावच्चशेषशेषिभावो नास्ति, प्रयोज्यप्रयोजक- भावश्च शेषशेषिभावादृते नात्मानं लभते, एवं पाञ्चमिकः क्रमोऽपि प्रयोज्यप्रयोजकभावादृते न घटते। तदीदृशैःकोऽधिक्रियत इति अधिकार- निरूपणपरः षष्ठः आपतति। एवं सामान्येनादेशः, विशेषातिदेशः,ऊहः,बाध- इति। एवञ्च तन्त्रावापप्रसंगा पूर्वषट्के निरूपयितुं शक्यन्ते, तथैवोत्तर- षट्केऽपि इति पर्यनुयोगाविशेषात् यत्र क्वचन समारब्धयितव्ये उपदेशा- तिदेशसाधारण्येनान्ते एव निरूपणं संगच्छत इति।

अयमर्थः वार्तिककारैः 'अथातः शेषलक्षणमि'ति सूत्रस्य द्वितीयव्याख्या- नावसरे संक्षेपेणोपवर्णितः। तथाहि—

'तथाऽनाम्नातशेषाणां शेषिणां सप्तमादिभिः।
शेषसद्भावतद्रूपपरिमाणादिनिर्णयः ॥
सप्तमेनातिदेशेन शेषाः सन्तीति साधिते।
ततोऽष्टमे नये यस्य यतश्चेति निरूपणा ॥
नवमेऽर्थप्रधानत्वात्तदधीनाऽन्यरूपता ।
इयत्ता दशमे शेषबाधाभ्युच्चयचिन्तया ॥
प्रयोगपरिमाणञ्च तत्तन्त्रावापलक्षणम्।
एतदेव प्रसङ्गेन परार्थाङ्गोपजीवनात् ॥
अन्यार्थानुष्ठितैः शेषैरुपकारेऽल्पकल्पना।
प्रसङ्गे, तदभावे च स्याद्भूयिष्ठप्रकल्पना ॥
अथवाऽस्त्विदमेवैकं तृतीयं शेषलक्षणम्।
तदैव सूचितं वक्तुमथातः शेषलक्षणम् ॥
अन्यानि पृथगारम्भैर्लक्षणानि करिष्यति।
इदं सपरिवाराणां शेषाणामेव लक्षणम् ॥'

तं. वा. पृ. ६४८ इति।

तथा चैतावान् अर्थसंक्षेपः—

सामान्यातिदेशः, विशेषातिदेशः, ऊहः, बाध इत्यवश्यमेव ज्ञातव्याः।

अभिलषितार्थफलोत्पादकं कर्म क्वचिदेकम्, क्वचिदनेकञ्च। तस्यैवं-जातीयकस्यांगानि सकृत् कर्तव्यानि। अनेकेषां प्रधानानां कृते अंगानां सकृदनुष्ठानमेव तन्त्रशब्देनाभिधीयते, क्वचित् तन्त्रम्, क्वचिदावृत्तिरिति परमगहनोऽयं विषयेऽन्तरा विचारशास्त्रं नावगन्तुं शक्यते।

एवञ्चैते प्रमाणादिप्रसंगान्ता द्वादश विषयाः कर्मानुष्ठानपरैः विविच्य ज्ञातव्याः। तत्तदुपयोगिन्यायनिर्णयाय परमकारुणिको भगवान् जैमिन्यृषिः द्वादशलक्षण्यात्मकं धर्मविचारशास्त्रं प्रावीवृतत्।

अधिकरणमालाकारः श्लोकद्वयेन प्रमाणादिप्रसंगान्तान् समग्रहीत्। यथा—

'धर्मो द्वादशलक्षण्या व्युत्पाद्यस्तत्र लक्षणैः।
प्रमाण-भेद-शेषत्व-प्रयुक्ति-क्रम-संज्ञकाः ॥
अधिकारोऽतिदेशोऽथ सामान्येन विशेषतः।
ऊहो बाधश्च तन्त्रञ्च प्रसंगश्चोदिताः क्रमात् ॥' ( पृ० ५ ) इति।

## संगतिनिरूपणम्

'नासंगतं प्रयुञ्जीते'त्यभियुक्तोक्तया संगतिनिरूपणमत्यावश्यकमिति मीमांसकवरिष्ठा मन्यन्ते, सा च शास्त्र षट्कुद्धिकाध्याय-पादपेटिका पूर्वाधिकरणरूपप्रतियोगि [ संबन्धि ] भेदात् षोढा भिद्यते तु इति शिवार्कमणिदीपिकायां दीक्षितेन्द्राः प्रत्यपीपदन्। अधिकरणमालाया शास्त्राध्यायपादसंगतय इति माधवाचार्या निरूपयन्ति।

यथोक्तं तैः शास्त्रेऽध्याये तथा पादे न्यायसंगतयस्त्रिधा।

सुदर्शनाचार्यस्तु जन्मादिसूत्रश्रीभाष्यश्रुतप्रकाशिकायां काण्डस्यापि योजनेन सप्तधा संगतिं निर्दिशति २२२ पृ०। तत्तु अनुपपन्नं इति। अनपेक्षितं गौरवञ्चेत्यवधेयं सुधीभिः।

सम्प्रदायविदस्तु धर्ममीमांसाशास्त्रस्य पूर्व षट्कं, उत्तरषट्कञ्चेति द्विधा विभागमाचक्षते। तत्राद्यमुपदेशषट्कं, द्वितीयस्यातिदेशषट्कमिति च व्यपदिश्यते मीमांसकैः। तत्र द्वादशानामध्यायानां धर्मविचारात्मकत्वरूपो धर्मो एकशास्त्रत्वनियामकः, यथानेकेषां पदानामविशिष्टा कार्यप्रतिपादनेनैकवाक्यता।

तथा प्रकृतेऽष्टसु अप्यनुगतेन केनचिद्धर्मेण भवितव्यम् । स च धर्मः-पूर्वस्य उपदेशविचारात्मकत्वरूपः, उत्तरस्यातिदेशविचारात्मकत्वरूप इति ।

यथा चाह शास्त्रदीपिकाकारः—'उपदेशविचारे समाप्ते, अधुना तदधीनसिद्धिरतिदेशविचारः प्रस्तोष्यते,' (शा० दी० भा०३ पृ० ७८) इति । इममेव वाक्यसन्दर्भं व्याचक्षाणो निट्टिलोपनामकस्सर्वतोमुखसोमयाजी सोमनाथमखी ग्रन्थमिममवतारयति—वृत्तकथनपूर्वकं संगतिं दर्शयन् वर्तिष्यमाणं प्रतिजानीते 'उपदेशविचारे' इति । पूर्वषट्के उपदेशविचारं परिसमाप्य, इदानीमुत्तरषट्के अतिदेशविचारो हेतुहेतुमद्भावसंगत्या प्रस्तोष्यत-इत्यर्थः ।

इत्थमिदं कर्तव्यमित्युपदेशः, तद्वदिदं कर्तव्यमित्यतिदेश इत्युपदेशातिदेशयोस्स्वरूपम् । इत्थमिदं कर्तव्यमित्युपदेशपूर्वकत्वात्तद्वदिदं कर्तव्यमिति-अतिदेशस्य, तद्विचारयोरपि हेतुहेतुमद्भावरूपा संगतिरित्यभिप्रायः ।

## षट्कद्वयस्यार्थकथनं प्रायिकमिति वर्णनम् ।

इदञ्च षट्कद्वयस्यार्थकथनं प्रायेणेत्यभिप्रायकम् । तेन तृतीये-शेषलक्षणे सर्वपृष्ठेऽष्टौ स्विष्टकृतस्तन्त्रेणानुष्ठानं, आवापेन ( आवृत्त्या ) वेति तन्त्रावापविचारः तृतीये कथं संगच्छताम् । एवमन्यत्रापि दृष्टिर्विकीर्यतां । अष्टमे विशेषातिदेशनिरूपणपरे दर्विहोमशब्दो गुणविधिः, नामधेयं-वेति विचारः कथं घटताम् । एवं सर्वोपजीव्यस्य प्रमाणविचारस्योपदेशातिदेशप्रयुक्तिक्रमविचारसाधारणस्य पूर्वषट्के विचारः, तन्त्र-प्रसंगयोरूपदेशानिदेशसाधारणयोत्तरषट्के विचार इति सर्वोऽपि प्रायिकत्वमादायेव-समर्थनीयमिति द्वादशलक्षणीकाननसञ्चरिष्णूनां न किञ्चिद् वक्तव्यवशिष्यते ।

तत्र द्वादशानामध्यायानां द्वादश विषया इति पूर्वमेवाभ्यधायि, अध्यायाः-अपि अनेकपादघटितास्सन्ति, तत्रैकैकस्याध्यायस्य चत्वारः पादाः सन्ति । परन्तु तृतीय षष्ठ दशमेष्वध्यायेषु त्रिष्वपि अष्टौ पादाः सन्ति । मिलित्वा षष्ठिः पादाः सन्ति, पादानामपि विशिष्य विचारणीया अर्था इत्यधिकरणमालाविस्तरे प्रतिपादिताः तत्रत्याः पादार्थसंग्राहकश्लोका मीमांसाऽध्येतृणां कृते गायत्रीतुल्या इति ध्येयम् । एकैकः पादोऽप्यनेकाधिकरणैः घटितः एतेषां विशिष्य ज्ञानमत्रैव निविशितपट्टिकया स्फुटं भविष्यतीति पट्टिका निवेशिताऽस्ति ।

## तत्तदध्याय-पादस्थाधिकरणप्रदर्शकपट्टिका

| अध्यायाः | पादेष्वधिकरणानि | | | | | | | | अध्याये |
|---|---|---|---|---|---|---|---|---|---|
| | प्रथमे | द्वितीये | तृतीये | चतुर्थे | पञ्चमे | षष्ठे | सप्तमे | अष्टमे | समष्ट्यङ्काः |
| प्रथमे | ८ | ४ | १० | २० | | | | | ४२ |
| द्वितीये | १८ | १३ | १४ | २ | | | | | ४७ |
| तृतीये | १५ | १९ | २० | २१ | २० | १६ | २३ | २२ | १५६ |
| चतुर्थे | १७ | १३ | १८ | १२ | | | | | ६० |
| पञ्चमे | १८ | ११ | १५ | ८ | | | | | ५२ |
| षष्ठे | १३ | ११ | २१ | १४ | २१ | ७ | १३ | १० | ११० |
| सप्तमे | ५ | १ | १४ | २ | | | | | २२ |
| अष्टमे | १९ | ६ | ६ | २ | | | | | ३३ |
| नवमे | १७ | २० | १४ | १५ | | | | | ६६ |
| दशमे | १२ | ३४ | २१ | २६ | २६ | २२ | २० | १९ | १८० |
| एकादशे | ९ | १५ | १५ | २० | | | | | ५९ |
| द्वादशे | २१ | १५ | १६ | १६ | | | | | ६८ |
| समष्टयङ्काः | | | | | | | | | ८९५ |

नाटकान्तं कवित्वमितिवत् सहस्राधिकरणी मीमांसा इति लोकोक्तिः अवगन्तव्या । एवं सूत्रविषयेऽपि ।

## तत्तदध्यायपादगतसूत्रप्रदर्शकपट्टिका

| अध्यायाः | पादेषु सूत्राणि | | | | | | | | अध्याये |
|---|---|---|---|---|---|---|---|---|---|
| | प्रथमे | द्वितीये | तृतीये | चतुर्थे | पञ्चमे | षष्ठे | सप्तमे | अष्टमे | समष्ट्यङ्काः |
| प्रथमे | ३२ | ५३ | ३५ | ३० | | | | | १५० |
| द्वितीये | ४९ | २९ | २९ | ३२ | | | | | १३९ |
| तृतीये | २७ | ४३ | ४६ | ५७ | ५३ | ४७ | ५१ | ४४ | ३६९ |
| चतुर्थे | ४८ | ३० | ४ | ४१ | | | | | १६० |
| पञ्चमे | ३५ | २३ | ४४ | २६ | | | | | १२८ |
| षष्ठे | ५२ | ३१ | ४१ | ४७ | ५६ | ३९ | ४० | ४२ | ३४८ |
| सप्तमे | २३ | २१ | ३६ | २० | | | | | १०० |
| अष्टमे | ४३ | ३२ | २५ | २८ | | | | | १३९ |
| नवमे | ५८ | ६१ | ४३ | ६० | | | | | २२२ |
| दशमे | ५८ | ७४ | ७५ | ५९ | ८८ | ७९ | ७३ | ७० | ५७६ |
| एकादशे | ७० | ६६ | ५४ | ५७ | | | | | २४७ |
| द्वादशे | ४६ | ३७ | ३८ | ४७ | | | | | १६८ |
| समष्टयङ्काः | | | | | | | | | २७४५ |

## अधिकरणस्वरूपविवरणम् ।

अधिकरणशब्दो विषयपरतया वेदान्तेषु पञ्चस्वधिकरणेष्विव (शि० अ० १-३) त्यत्रोपलभ्यते, इदञ्च श्रीमद्भगवत्पादैर्व्याख्यातम्, पञ्चस्वधिकरणेषु,—आश्रयेषु ज्ञानविषयेष्वित्यर्थः। 'घटाधिकरणं भूतल-मि'त्यादौ अधिकरणादावस्य पतनप्रतिबन्धकस्य आधारो मुख्योऽर्थः। तथापि उपचारात् यमर्थमाश्रित्य विचारः प्रवर्तते; तत्राप्यधिकरणव्यवहार इति। अर्थात् आधारमन्तरा आधेयस्य स्थितिर्भवितुं नार्हतीति आधारोऽधि-करणम्। तथा विचारो न बोभवीतीति विषयोऽप्यधिकरणमित्यभिधीयते। एतत्सर्वं मनसि निधायैव डाक्टर गंगानाथझाशर्मणा स्वोपज्ञे श्लोकवार्तिकस्य इंग्लिशभाषानुवादे उक्तम्—'अधिकरणपदस्य विचारः—विमर्शः परीक्षेत्यर्थः—इति। एवं उपचारेण विषयमात्रस्य अधिकरणत्वे सति, लक्षणया विषयादिसमुदायेऽधिकरणत्वव्यवहारः प्रववृते इति विमर्शकाः मन्यन्ते।

वयन्तु मन्यामहे अधिकरणं वेदवत् षडङ्गमिति। अत एवाभियुक्ताः कथयन्ति—यत् विषय-संशय-पूर्वपक्ष-सिद्धान्त-प्रयोजन-संगतीनामाधारत्वमधि-करणत्वम्। इदमेव मनसि निधाय श्रीकण्ठशिवाचार्यश्शैवभाष्यकारः प्रयोज-नस्थाने निर्णययोजनेनोपर्युक्तमधिकरणत्वं बभाषे।

एतदर्थबोधकं प्राचीनमेकं श्लोकमुदाहरन्ति। यथा—

'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्।
सङ्गतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतं॥' इति।

अत्र केचित् प्रयोजनेन सहाधिकरणस्य पञ्चावयवानातिष्ठन्ते।

केचित्तु प्रयोजनमपोद्धृत्य संगत्या सह पञ्चावयवान् वर्णयन्ति।

अत्र पद्ये उत्तरशब्देन उत्तरपक्षो विवक्षितः। स च सिद्धान्त एव।

दीक्षितेन्द्रो (निर्णयश्चेति पाठे) निर्णयशब्दार्थं द्विधा वर्णयांबभूव। अनवधारणेनापि क्वचित् पूर्वपक्षस्संभवति, सिद्धान्तस्तु निर्णयावसान एवेति, सिद्धान्तः,-निर्णयः-इत्युक्तमिति प्रथमप्रकारं वर्णयामास।

अस्मिन् पक्षे उत्तरं-निर्णय इति सामानाधिकरण्येनैकार्थप्रतिपादन-परमित्यायाति, तथा सति पञ्चाङ्गत्वभंग इत्यस्वारस्यात् द्वितीयपक्षोप-न्यासो दीक्षितेन्द्राणाम्।

'तदुभयसंग्रहार्थं वा निर्णीयते—नितरां प्राप्यते इति व्युत्पत्त्या निर्णय-शब्देन प्रयोजनं विवक्षितमि' ( पृ० २१-२२ ) ति । एवं शास्त्रान्तरेष्वपि विषयविशेषानधिकृत्य प्रवर्तमाने विचारेऽधिकरणव्यपदेशः कृतो दृश्यते । यथा—वात्स्यायनभाष्ये—'शीलमिदं भगवतस्सूत्रकारस्य बहुष्वधिकरणेषु द्वौ पक्षौ न व्यवस्थापयती' (न्या० द० २-२-१८) ति । एवञ्च विषय-संशय-पूर्वपक्ष-सिद्धान्त-प्रयोजन-संगतीनामाधारत्वमधिकरणत्वमिति ।

कवितार्किककेसरी वेंकटनाथाचार्यस्तु ब्रवीति—केचिदाहुरधिकरणस्य दशाङ्गानि भवन्ति । तानि च यथा १. विषयः—२. तदर्थे संशयः। ३. संशयकारणम्, ४. संगतिः, ५. तदर्थविचारः। ६. फलफलिभावः। ७. पूर्वपक्षयुक्तिः। ८. सिद्धान्तयुक्तिः। ९. निर्णयः। १०. प्रयोजनमिति। यथोक्तं तेन मीमांसापादुकायाम्—

'आहुश्चान्ये दशांगान्यधिकरणगणे वेद्यमाद्यं तथाऽर्थं ।
संशीतिस्तन्निदानं विविधमपि तथा संगतेश्च प्रकारम् ॥
तादर्थ्यार्थं विचारं फलफलिभवनं पक्षयोर्न्याययुग्मं ।
निर्णीति तत्फलञ्चाप्ययमपि निपुणन्यायवित्संप्रदायः ॥' इति ।

ईदृशः प्रकारो मीमांसाग्रन्थेषु क्वापि न दृश्यते आम्रेडितं गौरवञ्च। एतमर्थं वदताऽऽचार्येण सेश्वरमीमांसायाम्, अन्येषु वा ग्रन्थेषु अस्य, अनुपपादनात् ।

सूत्रकारस्तु विषयादीन् षडवयवान् न सूत्रयति, अनेकत्र विषय-पूर्व-पक्ष-सिद्धान्तपक्षान् निर्दिशति, पूर्वपक्षसिद्धान्तयुक्तिप्रतिपादने तत्तत्कोटि-कस्याशयोऽप्यनूक्तिसिद्ध एवावगन्तुं शक्यत इति । सूचनात् सूत्रमित्यन्वर्थ-नामधेयैः सूत्रैर्नास्य प्रतिपादनस्यावश्यकता । अनेकेषु चाधिकरणेषु सिद्धान्त-सूत्रमेव दृश्यते, न पूर्वपक्षसूत्रं, प्रयोजनमपि क्वचित् क्वचित् सूत्रेणोच्यते, क्वचित्सिद्धान्तपक्षेणैवाधिकरणमारभ्यमाणं दरीदृश्यते ।

## संगतिनिरूपणम्

परं संगतिनिरूपणे मीमांसका बद्धपरिकरा विलोक्यन्ते अन्यथा असंबद्धप्रलापित्वदोषात् बिभ्यतः । सेयं शास्त्रसंगतिः, षट्कसंगतिः अध्याय-संगतिः, पादसंगतिः, पेटिकासंगतिः अनन्तर ( अधिकरण ) संगतिरिति प्रागवोचाम ।अपि च यथाऽध्यायस्य एकदेशः पाद इति व्यपदिश्यते, तथैव-

पादस्यैकमेव विषयमवलम्ब्य प्रवृत्तानां त्रिचतुराणां, पञ्चषाणां वाऽधिकरणानां समुहात्मा पेटिकेत्यभिधीयते, यथा प्रमाणाध्यायस्य तुरीयेनामधेयपादे तत्सिद्धिपेटिका, शेषलक्षणस्य द्वितीयपादे भक्षपेटिका, दशमे कृष्णलपेटिका, अस्थियज्ञपेटिका चेति ।

## संगतिविषये प्रभावलीकारमतम्

कविमण्डनश्शंभुभट्टस्तु चतुर्धा संगतीरर्थवादाधिकरणस्योपसंहारे वर्णयामास । तथाहि—अथ संगतिः शास्त्राध्यायपादाधिकरणैस्तावच्चतुर्विधा । तत्रापि–अधिकरणसंगतीराशीकृत्य षोढा, सप्तधा वा ।

अक्षेपदृष्टान्त–प्रत्युदाहरणप्रसंगातिदेशिकावसरापवादोपोद्घाताादि - सप्तविधा । षोढ़ा पक्षे प्रसंगसंगतावोपोद्घातादेरन्तर्भावो बोध्यः ।

तत्र पूर्वाधिकरणसिद्धान्ताक्षेपेणोत्तराधिकरणपूर्वपक्षप्रवृत्तावाक्षेपसंगतिः ।

यथा औत्पत्तिकसूत्रे शब्दार्थयोः संबन्धनित्यत्वे प्रतिपादिते, शब्दस्यानित्यत्वात् कुतः संबन्धनित्यतेत्याक्षेपेणैव शब्दाधिकरणस्य प्रवृत्तिः । पूर्वधिकरणे येन हेतुना सिद्धान्तः कृतः, तज्जातीयेन हेतुनोत्तराधिकरणपूर्वपक्षे दृष्टान्तसंगतिः, पूर्वाधिकरणसिद्धान्तविलक्षणहेतुना उत्तराधिकरणे पूर्वपक्षे प्रत्युदाहरणसंगतिः । पूर्वाधिकरणोत्तरमवश्यवक्तव्ये अवसरसंगतिः । पूर्वाधिकरणपूर्वोत्तरपक्षहेतुभ्यामेवोत्तराधिकरणे पूर्वपक्षसिद्धान्तकरणे आतिदेशिकी संगतिः । पूर्वाधिकरणसिद्धान्तादुपस्थितस्य उत्तराधिकरणे निरूपणे प्रसंगसंगतिः । प्रसंगसंगतिरगतिकगतिस्थलविषयेति शास्त्रादिसंगतयोऽपेक्षिता— इति संप्रदायः ।

पूर्वाधिकरणसिद्धान्तस्योत्तराधिकरणसिद्धान्तेऽपवदने आपवादिकी । यथा स्मृत्यधिकरणस्य विरोधाधिकरणेन । पादानाम्, अध्यायानाञ्च परस्परमुपजीव्योपजीवकभावरूपा प्रथमद्वितीययोः ।

यथोक्तं—'प्रमाणमुपजीव्यत्वात् प्रथमाध्याय ईरितम् ।
मानाधीनस्य धर्मस्य द्वितीये भेद उच्यते ॥' इति ।

अत एव शास्त्रदीपिकायामुक्तं—

'एवं समस्तेनाऽध्यायेन प्रमाणनिरूपणात् कथंलक्षणको धर्म इत्ययमंशो विचारितः । तद्विचारादेव तत्प्रमेयस्य ज्योतिष्टोमाष्टकादेर्धर्मत्वावधारणात् को धर्म इत्ययमंशोऽपि विचारितो भवति' (शा. दी. पृ. ६७) इति ।

'पूर्वमाक्षिप्यते यत्र तत्र साऽऽक्षेपिकी मता।
पूर्वन्यायात्ययो यत्र प्रत्युदाहरणात्तु सा॥
प्रसङ्गाच्चिन्त्यते यत्र तत्र प्रासङ्गिकी मता।
बुद्धिस्था चिन्त्यते यत्र बुद्धिस्थानास्मिका तु सा॥
कृत्वा यत्राधिकां शंकां पूर्वमेवाति दिश्यते।
तत्रातिदेशिकी प्रोक्ता संगतिर्न्यायवेदिभिः॥
चिन्तां प्रकृतसिद्ध्यर्थामुपोद्घातं प्रचक्षते॥' इति।

तदेवंविधं संगत्यादिकं प्रत्यधिकरणं सुधीभिः शक्यमेवोहितुमिति-विस्तरभिया न विशिष्य प्रदर्श्यते।

## आक्षेपादिसंगतौ प्रयोजनाकथनस्य भाष्यवचनेनोपपादनम्

आक्षेपसंगतिस्थले आक्षेपसंगत्या प्रवृत्तं आक्षेप्याधिकरणसिद्धान्त-फलेनैव फलवत् संपद्यते। यथा—'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' इति-पञ्चमाधिकरणे शब्दार्थसंबन्धस्य नित्यत्वेन वेदस्य निरपेक्षबोधकत्वरूपे-प्रामाण्ये समर्थिते, शब्दार्थसंबन्धस्य नित्यत्वमयुक्तं शब्दानामेवानित्यत्वात्-कुतस्संबन्धनित्यतेति तदाक्षेपसमाधानार्थं शब्दाधिकरणं प्रववृते।

एवमापवादिक्यां संगतौ। अपवादाधिकरणमपवादाधिकरणपूर्वपक्ष-फलेन फलवत्। यथा स्मृत्यधिकरणे ( मी० द० १–३–१–२ ) स्मृतीनां-वेदमूलत्वेन प्रामाण्ये समर्थिते प्रत्यक्षवेदविरुद्धस्मृतिषु वेदमूलत्वापवदनार्थं प्रवृत्तंविरोधाधिकरणम्।

एवं प्रातणवपि। प्राप्तिः—तदर्थचिन्ता, यदर्था सा चिन्ता, तत्फलेन फलवती। यथा दर्शपूर्णमासादिप्रकरणाम्नातान्यंगानि प्राकरणिकेष्वेव व्यव-तिष्ठन्ते, न तु सौर्यादिष्वपि पारिप्लवानि भवन्तीति सप्तमाद्यचिन्ता सौर्यादिषु प्रयाजादीनामतिदेशेन प्राप्तिरित्यग्रिमचिन्ताफलेन फलवती।

एवं लक्षणकर्मण्यपि। लोकप्रसिद्धपदार्थव्यवहारिण्यां मीमांसायां लक्षणकथनस्य किं प्रयोजनमिति शंकायामुच्यते—लक्षणकथनं लक्ष्यपरि-च्छेदेनार्थवत्। तथाचैतेषु नियतैकरूपफलविशेषावगतेः फलं न वक्तव्यम्। कृत्वाचिन्तायामन्यत्रैव फलमिति, तत्र फलव्यतिरेकनिश्चयात् न फलं-वक्तव्यमित्यर्थः।

यदाह—आचार्यशबरस्वामी—

'आक्षेपे चापवादे च प्राप्त्यां लक्षणकर्मणि ।
प्रयोजनं न वक्तव्यं यच्च कृत्वा प्रवर्तते ॥' इति ।

## अर्वाचीनग्रन्थानां शास्त्रदीपिकादिमूलकत्वं

अधिकरणव्यवस्थापकः सर्वतन्त्रस्वतन्त्रः पार्थसारथिमिश्रः सूत्राणि, भाष्यं, वार्तिकञ्च व्याचक्षाणः वार्तिकमतं समर्थयन्नपि सूत्रकार-भाष्यकारादिषु अस्य महती श्रद्धा वरीवर्तीति प्रागवोचाम। अनेन प्रणीतान् शास्त्रदीपिका-तन्त्ररत्नादीन् पुरस्कृत्यैव भाट्टदीपिकायाः, तद्-व्याख्यायाः प्रभावल्याः प्रवृत्तिः। तेन च अत्रत्य एव विषयः नव्यनैयायिक-भाषया परिष्कृत्य प्रादर्शि। तत्र अतिदेशलक्षणं व्यापारं पुरस्कृत्य भाष्या-दिषु शास्त्रदीपिकापर्यन्तेषु ग्रन्थेषु समुपावर्णि। तत्र उपकारस्यातिदेशं वर्णयन् पार्थसारथिमिश्रः तन्त्ररत्ने—'उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात् ततश्च कर्मभेदः स्यात्' ( पू. मी. द. ७।१।६ ) इति सिद्धान्त-सूत्रं व्याचक्षाणः उपकारस्य अतिदेशं ब्रुवाणः तावता अपरितुष्यन् पदार्थ-घटितं अतिदेशलक्षणं कथयामास। तथाहि—'य एव हि अन्यत्र श्रुतस्य उपकारस्य, पदार्थस्य वा तत्सम्बन्धाबाधेन तमतीत्य अन्यत्र देशः, स एवाति-देश इति अतिदेशलक्षणे पदार्थं निवेशयतिस्म। इदमेव मूलमङ्गीकृत्य खण्डदेवाचार्यः सप्तमाद्ये अतिदेशो नाम यः पदार्थः यादृशोपकारजनन-द्वारा यदङ्गत्वेनावधारितः, तस्य पदार्थस्य तत्सम्बन्धित्वेन रूपेण तादृशो-पकारद्वारैव अन्याङ्गताबोधकं प्रमाणमिति पदार्थघटितं अतिदेशलक्षणं वर्णयाम्बभूव। यद्यपि भाष्यकारेण परत्र विहिताः धर्माः, तमतीत्य अन्यत्र तेषां देशो येन भवति, स अतिदेश इति अवयवयोगेन अतिदेशपदार्थः न्यरूपि। तत्र प्राचां श्लोकोऽपि उदाहारि—

'प्राकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु ।
धर्मप्रदेशो येन स्यात् सोऽतिदेश इति स्थितिः ॥' इति ॥

तथा अन्यत्रापि उक्तं—

'अन्यत्र विहितायास्तु कृत्स्नाया धर्मसंहतेः ।
अन्यत्र कार्यतः प्राप्तिरतिदेशोऽभिधीयते ॥' इति ॥

परन्तु इदं अतिदेशलक्षणं अतिव्याप्तिदोषेण दूषयित्वा तन्त्ररत्न-कारोक्तं पदार्थातिदेशं प्रतिपादयाम्बभूव।

## प्रभाकरमते गौरवं-पार्थसारथिमिश्रमते लाघवञ्चेति कथनं ।

तत्र प्राभाकरमते अपेक्षा–सन्निधि, योग्यत्वैः उपकारातिदेशे प्रथमतः कल्पिते पश्चात् तज्जनकपदार्थापेक्षया पृथक् पदार्थातिदेशः कल्प्यते। पार्थसारथिमते तु पदार्थविशिष्टोपकाराणामेवातिदेशः । उभयमतेऽपि उपकाराणामङ्गत्वाभावात् पदार्थत्वाभावाच्च नोपकारातिदेशे लक्षणमिदं भवितुमर्हति। अतः पदार्थस्य अतिदेशः इत्यङ्गीकृत्य अतिव्याप्तिदूषणं पर्यहारि । दशमाद्येऽपि तत्त्वं तु 'प्रकृतियोग्यताजनकैः विकृतियोग्यतां प्रकृतिवत्कुर्यात्' इत्यादिना ग्रन्थेन पदार्थातिदेशः समर्थितः। अतः इदञ्च तन्त्ररत्नादेव गृहीतं, न तु स्वमनीषावैभवविलसितमिति ध्येयं विज्ञैः। पदार्थातिदेशे 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इत्यत्र वाचनिकब्राह्मणातिदेशे ब्राह्मणस्य अपदार्थत्वेऽपि तदीयब्राह्मणत्व बज्ञापनद्वारा तदीयधर्माणां ब्राह्मणार्थभूतानां उक्तरीत्यैव विकृत्यङ्गबोधकत्वम् । एवमग्निहोत्रादिनामातिदेशस्थलेपि बोध्यम् । अतः पदार्थातिदेश एव फलतीति । तस्मादनर्थकोऽयं पदार्थातिदेशः केवलमूहबाधविनाशायैव स्यादिति वज्रप्रहारः खण्डदेवाचार्यमते इति बोध्यम्। परन्तु अत्र अध्वरमीमांसाकौतुहलन्तु अतिदेशलक्षणे—ब्राह्मणमपि विनिवेश्य आत्मानं कृतार्थं मनुते' पूर्वोक्तरीत्या अतिप्रसङ्गस्य निवारणात्। तथा च तत्रत्यः वाक्यसन्दर्भः अतिदेशो नाम अन्यसम्बन्धिनो ब्राह्मणस्य, पदार्थस्य उपकारस्य वा तदतिक्रम्य अन्यत्र देशनं प्रापणं येन भवति, स उच्यते ( १०१८ पृ. ) इति। किमार्द्रकवणिजां वहित्रचिन्तया। एवं अपच्छेदाधिकरणे तन्त्ररत्नोक्तं वर्णयति। तथा च'- अयमत्र क्रमः परनिमित्तोपनिपाते तन्नैमित्तिकवाक्यार्थज्ञानं, पूर्वविज्ञानस्मरणञ्च। ततः परज्ञानस्य तेन सह विरोधज्ञानं,ततस्तेन अपेक्षाबुद्ध्यात्मकत्वेन विनश्यदवस्थेन चतुर्थक्षणे पूर्वज्ञानस्य भ्रान्तित्वकल्पना 'इत्यादि। अस्य सर्वस्यापि मूलं तु टीका-तन्त्ररत्ने। एवं स्तोमलक्षणविषयेऽपि। एवं सन्ति बहूनि स्थलानि, तत एव आदाय परिष्कृतं खण्डदेवाचार्येण। परन्तु स्वमनीषावैभवेन परिष्कृतं, न तु तन्त्ररत्नकारोपज्ञं इति न प्रकटयति ।

## सूत्रव्याख्यानविषये अस्य स्वातन्त्र्यम्

एवमेव अयमाचार्यः सूत्राणां विषये स्वतन्त्रां व्याख्यां प्रवर्तयति। तदत्र दिङ्मात्रं प्रदर्श्यते—

१. सूत्रधाणि च सुरीभिःऽस्मिन्नेवार्थे व्याख्येयानि, न तु स्वरूत्पत्तेः न प्रयोजकः, इति भाष्यकारोक्ते अर्थे ( मी. द. ४२१ पृ. )।

२. 'पञ्चसञ्चरेषु अर्थवादातिदेशः सन्निधानात्' इत्यधिकरणे ( पू. मी. ६।१।३ ) सूत्रकार-भाष्यकारयोर्मतभेदमभिधाय भाष्यमनादृत्य सूत्रमेवं व्याख्येयं इति उपक्रम्य अग्निमन्थनादिवाक्यानां औचित्येन अतिदेशविधिस्तुत्यर्थत्वात् । 'नेतरार्थत्वादि'ति सूत्रं विधायकातिरिक्तस्तावकत्वरूपप्रयोजनकथनार्थम् । तदेवं अतिदेशवाक्यस्य अङ्गविधिपरत्वे लिङ्गमितिलिङ्गदर्शनसूत्रस्यार्थः ( मी. द. ६१२ पृ. ) इति ।

३. वस्तुतस्तु यूपकार्ये खलेवालीत्वविधानात् यूपशब्दस्य न संस्कारशक्तत्वं । संस्कारातिदेशस्तु स्थानापत्त्या इति, सूत्रोक्तयूपदृष्टान्तोऽपि असङ्गत एव ( मी. द. ७३६ पृ. ) ।

सूत्राण्यपि अस्मिन्नर्थे योजनीयानि ( मी. द. १०।८।१० ) सूत्रभाष्ययोरपि स्वाहाकार-वषट्कारयोः व्यवस्थितविकल्प इत्यस्मिन्नर्थे योजना सुधीभिरिहोन्नेया ( मी. द. १११३ पृ. ) ।

एवमेव भाष्यस्य अष्टाविंशतिस्थलेषु, वार्तिकस्य द्वात्रिंशत्स्थलेषु च तन्मतमुपेक्ष्य स्वतन्त्रा व्याख्या अनेन आचार्येण प्रवर्तितेति, गौरवभियानेह प्रतन्यते । ईदृशमेव स्वातन्त्र्यं अर्वाचीनेषु वृत्तिग्रन्थेषु, प्रकरणेषु च प्रतिपदं दृश्यते । परन्तु शङ्करभगवत्पादप्रभृतिभिः सर्वतन्त्रस्वतन्त्रैः शङ्करावतारैः श्रीमान् भाष्यकारः शबरस्वामी महता समादरेण गौरवेण च शास्त्रतात्पर्यविदः, एवमाहुः 'यदपि शास्त्रतात्पर्यविदामनुक्रमणं' इत्यादि प्रयुञ्जानैः पूज्यत्वदृष्टिः तेषु आसीदिति सुविशदमेवावगम्यते ।

## षट्कद्वयेन उपदेशातिदेशविचारयोरौचित्यपरीक्षणम्

पूर्वषट्के प्रकृति-विकृतिसाधारण्येन उपदेशमात्रं विचार्यते । उत्तर षट्के तु तत्साधारण्येन अतिदेशचिन्ता करिष्यते । सर्वपृष्ठादिषु आनुमानिकेन बचनेन उद्दिष्टानां स्विष्टकृदादीनां उपदेश एव चिन्त्यते किं 'उत्तरार्धात् स्विष्टकृते समवद्यति' इति वचनं प्रधानावदानदेशस्य उत्तरार्धात् अवदानं विधत्ते, अथवा कृतकार्यस्य द्रव्यस्य उत्तरार्धादिति । यद्यपि अयं उपदेशार्थविचारः प्रकृतावपि सम्भवति । तथापि उभयथाऽपि विकृतौ अनुष्ठानसाम्यात् तत्र अनुपयुक्त इति सर्वपृष्ठायां विकृतौ कृतः । एवमुत्तरषट्केऽपि प्रकृतिविषयविचारः अतिदेशतत्प्रसङ्गागत एव इति प्राधान्येन व्यपदेशा भवन्ति, इति न्यायेन पूर्वषट्के उपदेशविचारः, उत्तरषट्के अतिदेशविचार इति न प्रस्मर्तव्यं ।

## प्रथमादिद्वादशान्तानामध्यायानां सिंहावलोकन्यायेन पौर्वापर्यविचारः

एवं सर्वेषामेवाध्यायानां प्रमाणलक्षणाधीनत्वात् प्रथमतः प्रमाणलक्षणं वृत्तं। विनियोग-प्रयोगविधिव्यापारनिरूपणपरयोः तृतीय-चतुर्थयोः-अध्याययोः उत्पत्तिविधिमूलत्वात उत्पत्तिविधिव्यापारनिरूपणार्थं भेदलक्षणं कृतं। तदनु विनियोगविधिव्यापारनिरूपणपरस्य शेषलक्षणस्य, तदनन्तरं शेषशेषिगोचरप्रयोगविधिव्यापारनिरूपणस्य प्रयुक्तिलक्षणस्यारम्भः। तदनन्तरं प्रयोगविशेषनिरूपणात्मकस्य क्रमलक्षणस्य प्रवृत्तिः। ततः ईदृशैः प्रमाणभेदशेषशेषिप्रयोजकाप्रयोजकैवंक्रमयुक्तैः कर्मभिः कोऽधिक्रियते इति षष्ठे अधिकारनिरूपणं कृतं। अतः हेतुहेतुमद्भावसङ्गत्या-उपदेशनिरूपणानन्तरं अतिदेश निरूपणं आरभ्यते। अथवा अवसरसङ्गत्या-अतिदेशनिरूपणम्।

अत एवोक्तं शास्त्रदीपिकायां 'उपदेशविचारे समाप्ते अधुना तदधीनसिद्धिः अतिदेशविचारः आरभ्यत इति। अनेन अवसरसङ्गतिः-अधुना तदधीनसिद्धिः इति पदद्वयेन दर्शिता। अष्टमादिषु अध्यायेषु करिष्यमाणस्य विशेषविचारस्य अतिदेशसमान्यसिद्ध्यधीनत्वात् अतिदेशसामान्यं-सप्तमेन निरूप्यते। एवञ्च सप्तमेनाध्यायेन विकृतीनां धर्माः सन्तीति सामान्यतः प्रतिपाद्यते। ततश्च अष्टमेन यो यस्य यतश्चेति विशेषातिदेशः, इत्थं प्रयोक्तव्या इति नवमेन निरूप्यते, दशमेन च आतिदेशिकानामङ्गानां बाधाभ्युच्चयानुनिष्पादिनी इयत्ता निरूप्यते। इयत्ताप्रसङ्गेनैव एकादशेन प्रयोगेयत्ता ( प्रयोगपरिमाणं ) विचार्यते। तस्यामेव सर्वत्र प्राप्तायां तदपवादत्वेन अन्यादृशी इयत्ता प्रसङ्गादपि भवतीति प्रयोगपरिमाणं अन्यादृशं-द्वादशेन निरूप्यत इति सर्वस्यापि अतिदेशसमान्यमूलत्वात् तदेवादौ निरूप्यते। यथोक्तं शास्त्रदीपिकायां सिद्धे अतिदेशे अधुना अतिदिष्टानां पदार्थानां मन्त्र-साम-संस्काराणां द्वारान्तरसम्बन्धनिमित्तो अन्यथा—भावात्मक ऊहश्चिन्त्यते। तस्य च अतिदिष्टविषयत्वात् अतिदेशोत्तरकालम्-आरम्भः 'इति। यद्यपि तन्त्रावापप्रसङ्गाः' उपदिष्टातिदिष्टपदार्थ-साधारणा इति पूर्वषट्के यत्र क्वापि निरूपयितुं शक्यन्ते। विशेषतश्च प्रयोग-विशेषविचारात्मकत्वेन चतुर्थ–पञ्चमयोः अध्याययोः तेषां निरूपणं युक्तं, तथापि अतिदिष्टपदार्थविषयकत्वेन उत्तरषट्के विशेषतश्च अतिदिष्टपदार्थेयत्ताविचारात्मकत्वात् तदुभयाधीनतया अन्ते कृतमिति नासङ्गतं।

अन्यथाभावः-ऊह इति शास्त्रदीपिकावाक्यमेव पुरस्कृत्य खण्डदेवाचार्येण 'प्रकृतौ अन्यथादृष्टस्य विकृतौ अन्यथाभावः' तत्त्वं चेत्यादिना ऊहलक्षणं परिष्कृतं। येन सम्बन्धेन प्रकृतौ यस्य पदार्थस्य यद्धर्मावच्छिन्नवृत्तित्वं श्रुतं, विकृतौ तेनैव सम्बन्धेन तस्य पदार्थस्य तद्धर्मावच्छिन्नभिन्न वृत्तित्वमिति। एवं सन्ति बहूनि स्थलानि, येषां निरूपणे ग्रन्थकलेवरमुपचिनुयात्। अतो ग्रन्थगौरवभयात् त्रिचतुराणि स्थलानि प्रदर्शितानि। त्रिविधेऽपि ऊहे लक्षणसमन्वयः स्पष्टः।

## ऊहभेदनिरूपणं

तत्र मन्त्रोहः प्रकृति प्रत्ययोहादिभेदेन अष्टविधः 'प्रकृत्यूहः-वचनोहः-लिङ्गोहः-प्रकृतिवचनोहः-लिङ्गवचनोहः-प्रकृतिलिङ्गोहः-प्रकृतिवचनलिङ्गात्मकतृतयोहः 'एकधेत्यादौ' कृत्स्नपदाभ्यासलक्षणश्चेति। तत्र प्रायेण प्रथमपादे प्रकृत्यूहो विचारितः, अस्मिन्पादे प्रायेण वचनोहश्चिन्त्यते। प्रकृत्यूहस्तु अल्पश इति प्रायेण प्रकृतिवचनोहविचारात्मकत्वात् प्रथमतृतीययोर्भेदः। द्वितीये च सामोहः इति। अयं चार्थः तन्त्र-रत्ने स्पष्टः। एवञ्च नवमस्य प्रथमपादे संस्कारोहः प्रकृत्यहः, सामोहः द्वितीयस्य, मन्त्रे-वचनोहः तृतीयस्य येषां मन्त्राणां अवान्तरकार्यं सन्दिग्धं तादृशमन्त्रोहश्च तुरीयपादस्य प्रतिपाद्य इति।

दशमे बाधो निरूप्यते। तत्र विकृतिषु अतिदिष्टानामङ्गानामियत्तापरिमाणमुच्यते। तत्र अभ्युच्चयः वैकृतैः प्राकृतानां समुच्चयः। अत्र बाधाभ्युच्चययोर्न अध्यायार्थत्वं, अध्यायभेदापत्तेः। अङ्गपरिमाणं एकमेव अध्यायार्थं इत्याशयेन उक्तं 'इयत्ता' इति। तथा च शास्त्रदीपिकावचनं—

ऊहे सिद्धे अतिदिष्टानां बाधाभ्युच्चयचिन्तया।
इयत्ता दशमेऽङ्गानां विकृतिष्वभिधीयते ॥ इति
शा. दी. भा. ३ पृ. ७८१।

'दशमे बाधाभ्युच्चयानुनिष्पादिनी शेषेयत्ताचिन्ते' (भी. द. पृ. १५२५-ति टुप्टीकावाक्यम्।

ननु नक्षत्रेष्टौ उपहोमाद्यैरभ्युच्चयस्यापि चिन्तनात् कथं बाधस्यैव अध्यायार्थत्वमिति नाशंकनीयम्, बाधापवादतया बाधस्यैव स्थिरीकरणार्थं अभ्युच्चयचिन्तनमुपपद्यते। अन्यथा द्वितीयाध्यायादौ अभेदादेरपि प्रतिपादनेन तस्यापि अध्यायार्थत्वप्रसङ्गात्। तस्मात् इयत्ता ऽभिधीयते इति

प्रयोजननिर्देशः, नाध्यायार्थनिर्देशः। अयमभिप्रायः-तन्त्र-प्रसङ्गयोः एकादश-द्वादशाध्यायार्थत्वं, प्रयोगपरिमाणं तु फलम्, तथा प्रकृतेऽपि बाध एव अध्यायार्थः, तस्य विकृतिगतपदार्थेयत्ता फलं। अन्यथा तत्रापि प्रयोगेयत्ताया एव एकादश—द्वादशध्यायार्थत्वं, तन्त्र—प्रसङ्गयोस्तु उपायत्वमिति वक्तुं शक्यत्वात् तयोः एकाध्यायत्वं प्रसज्येत।

## अत्र विशेषकथनं

इदमत्रावधेयं। बाधो द्विविधः—अभ्युच्चयपर्यन्तः केवलश्च। यत्र वैकृतेन प्राकृतस्य बाधप्रसक्तौ अबाधः प्रतिपाद्यते, सोऽभ्युच्चयपर्यन्तः, तत्रः प्राकृत-वैकृतयोरुभयोरपि अनुष्ठेयत्वात्। उदाहरणन्तु उक्तमेव। यत्र तु न वैकृतं किञ्चित्, किन्तु प्राकृतस्यैव लुप्तद्वारत्वादिशङ्कया बाधप्रसक्तौ अबाधो व्युत्पाद्यते, सः केवलः। तत्र प्राकृतस्यैव अनुष्ठेयत्वेन अभ्युच्चयाभावात्, यथा खलेवाल्यादौ पर्यूहणादेः अतिदिष्टपदार्थविषयकत्वात् ऊहवत् अतिदेशोत्तरकालं बाधस्यारम्भः। यद्यपि ऊह—बाधयोः न हेतुहेतुमद्भावः सम्भवति, तथापि 'ऊहस्य पदार्थगतरूपान्तरात्मकत्वेन पदार्थप्रत्यासन्नत्वात् पदार्थप्रापकातिदेशानन्तरं तच्चिन्ता कृता, बाधस्तु तन्निवृत्यात्मकः पश्चाच्चिन्त्यते। एवञ्च अतिदिष्टपदार्थस्य रूपान्तरं ऊहनं ततः सन्निकृष्यते, बाधस्तु पदार्थनिवृत्तिः ततो विप्रकृष्यत इति, तस्मात् न हेतुहेतुमद्भावः। एतेन ऊहबाधयोस्सामानाधिकरण्येन हेतुहेतुमद्भावरूपा सङ्गतिरिति प्रभाकरोक्तिर्निरस्ता। किन्तु अवसरसङ्गतिः। अवसरश्च प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तौ अवश्यवक्तव्यत्वं। प्रकृते च ऊहजिज्ञासायाः बाधनिरूपणप्रतिबन्धकत्वमादाय अवसरसङ्गतिर्वाच्या। तच्च प्रतिबन्धकत्वं उभयोः युगपन्निरूपणप्रसक्तौ घटते, नान्यथा इत्यभिप्रेत्य आह–'अतिदिष्टपदार्थविषयत्वात् बाधस्यापि' इति।

बाधः 'निवृत्तिः' अननुष्टानमिति पर्यायः। बाधश्चप्राकृतानां पदार्थानां द्वारलोप—प्रत्याम्नान—प्रतिषेधैः निवृत्तिः। अभ्युच्चयो नाम—औपदेशिकैरङ्गैः आतिदेशिकानां प्राकृतानामङ्गानां समुच्चयः। एवञ्च बाधाभ्युच्चयद्वारेण विकृतिषु पदार्थेयत्ता चिन्त्यते।

## बाधविषये आचार्यखण्डदेवमतं

अत्र खण्डदेवाचार्यः प्रत्यवतिष्ठते यथा अभ्युच्चयस्य शास्त्रार्थत्वाभावेन अध्यायार्थत्वं नोपपद्यते, तथैव अङ्गानामियत्तारूपपरिमाणस्यापि

शिष्टाकोपाधिकरणोक्त रीत्या अशास्त्रार्थत्वेन अध्यायार्थत्वं नोपपद्यते, अतः बाधमात्रस्यैव अध्यायार्थत्वं युक्तमिति। एवञ्च इयत्तायाः न्यूनातिरेकरूपायाः फलतःसिद्धायाः शास्त्रार्थत्वाभावेन निरूपणे प्रयोजनाभावात् प्राचां ग्रन्थेषु यदुक्तं बाधाभ्युच्चयचिन्तया अतिदिष्टपदार्थानामियत्ता चैका निरूप्यत इति। तदनुपपन्नं। अतः बाधस्यैव एकस्य अर्थलोप–प्रत्याम्नानप्रतिषेधैः सिद्धस्य शास्त्रार्थत्वेन निरूणीयत्वं उत्सर्गतः अपवादतश्च। अपोदिते च तस्मिन् अभ्युच्चयो अर्थसिद्ध इति—नाध्यायार्थः। एवञ्च ऊहे सिद्धे, अधुना अतिदिष्टानां पदार्थानां उत्सर्गापवादाभ्यां विकृतौ बाधो- निरूप्यत इति।

## तन्निरासः

इदं अविचारितरमणीयमिति वयं ब्रूमः। बाधः निवृत्तिः अननुष्ठानमिति बाधशब्दार्थो वर्ण्यते। अभावरूपेण बाधेन एतदध्यायसङ्गतेः स्वतोऽसंभवेन बाध्यमानानुष्ठेयार्थज्ञानद्वारैव तस्याः वक्तव्यत्वे सति समानन्यायात् अन्येषामपि नवमाध्यायपर्यन्तानां उपदिष्टातिदिष्टपदार्थवर्गज्ञापकत्वाविशेषात्। अनः बाधद्वारा अनुष्ठेयपदार्थपर्यन्तं बाधशब्दार्थो- वर्णनीयः। अपि च दशमाध्याये बाधोऽध्यायार्थ इत्युक्त्वा एकादशाद्ये तु स्वयं ब्रवीति अयमाचार्यः-तदेवं दशभिरध्यायैः प्रकृतौ च अनुष्ठेयपदार्थेषु अवगतेष्वधुना तेषां प्रयोगविध्यवगतमनुष्ठानतन्त्रत्वं निरूप्यत इति। एवञ्च अस्य ग्रन्थसन्दर्भस्य उपपत्तये प्रायेवचनाच्च इति न्यायेन अनुष्ठेयवर्गज्ञानद्वारेणैव अस्याध्यायस्य सङ्गतिर्वाच्या इति।

अत एवोक्तं—'ऊहे सिद्धे अतिर्दिष्ठानां बाधाभ्युच्चयचिन्तया' इत्यादि।

अतोऽतिदिष्ठानां पदार्थानां इयत्तैव एका निरूप्यत इति शास्त्रदीपिकाकारमतमेव युक्तं भाष्यवार्तिकानुगुणञ्च, न तु भाट्टदीपिकाकारमतं इति उत्पश्यामः।

तत्र आकांक्षितपदार्थसमर्पणार्थं प्रवृत्तो अतिदेशः प्रकृतौ येन अङ्गेन यादृशं प्रयोजनं कृतं, विकृत्या तादृशमेव प्रयोजनं आत्मनः सम्पादयितुं तदङ्गं प्रापयति। यत्र विकृतौ तादृशं प्रयोजनं न संभवति। तादृशं अङ्गं न विकृतौ प्रापयति अतिदेशः।

## बाधस्य त्रैविध्यं

सोऽयं अर्थलोपात् (प्रयोजनलोपात्) बाधस्य एकः प्रकारः। सप्तमपादपर्यन्तं विचार्यते। तत्र अर्थलोपकृत एव बाधः साक्षात् प्रथमे-

पादे विचारितः। तस्यैव उदाहरणबाहुल्येन विस्तरो द्वितीये पादे, बाधापवादः तृतीये, प्राकृतानां वैकृतैः सह समुच्चयः चतुर्थे पादे, ज्योतिष्टमयागसम्बन्धिग्रहाः पदार्थैकदेशबाधः पञ्चमे, सामविषयकः षष्ठे, ज्योतिष्टमाङ्गभूतपशुयागसम्बन्धी सप्तमे, सप्तमान्ते च प्रत्याम्नानात् बाधो वर्णितः। अतएवोक्तं ग्रन्थकृता दशमसप्तमसप्तदशाधिकरणे अध्यायादौ अर्थलोपाद् बाधो वर्णितः, प्रत्याम्नानस्य तु बाधकत्वं सिद्धवत्सर्वत्र व्यवहृतं, इदानीं तु तदेव चिन्त्यते' शा० दी० ३-भा० पृ. २९२ इति ।

अष्टमे च प्रतिषेधाद् बाधः। एवं दशमाध्यायगतेषु अष्टसु पादेषु एते विषया क्रमशो विचारिता इति। एवञ्च सप्तमे उपक्रान्तः अयं अतिदेशः दशमे अध्याये पर्यवसितः। तत्र दशमे विकृतौ एतावन्त्येव अङ्गानि न प्राप्यन्ते इति केषाञ्चिदङ्गानां निवृत्तिरुपबाधविचारद्वारा अत्र एतान्यङ्गानि कर्त्तव्यानीति अङ्गपरिमाणमपि निरूपितं भवति ।

## तन्त्रावापचिन्ता

तदनन्तरं तत्प्रसङ्गादेव समानाङ्गापेक्षिषु अनेकेषु प्रधानेषु कर्मसु आग्नेयादिषु युगपदनुष्ठीयमानेषु एकैकस्य प्रधानस्य कृते एकैकं अङ्गं सकृदनुष्ठेयं, अथवा आवर्तनीयं इति अनुष्ठानापरपर्यायस्य प्रयोगपरिमाणस्य निरूपणाय एकादशाध्यायस्य प्रवृत्तिः। तत्र प्रयोगपरिमाणचिन्ताया उभयत्र तुल्यत्वेऽपि तन्त्रनिरुपणाय एकादशाध्यायः, प्रसङ्गनिरूपणाय द्वादशोऽध्याय इति अध्यायभेदः उपपद्यते ।

## शंका

ननु दशमे अध्याये बाधो निरूपितः, एकादशे तन्त्रं निरूप्यते। तयोश्च कथं पौर्वापर्यं संजाघटीति हेतुहेतुमद्भावाभावात। यद्यपि दशमैकादशयोः हेतुहेतुमद्भावो न घटते, तथापि एकादशे निरुप्यमाणस्य तन्त्रस्य उपदेशातिदेशसाधारणत्वात् तदुभयनिरुपणपराणां द्वितीयादि-दशमान्तानां समेषां अध्यायानां बद्धक्रमत्वे सति अर्थात् (पारिशेष्यात्) दशमानन्तर्यं सिद्धयतीति, नाशंकनीयं। एवमपि दशमानन्तर्यं न सिद्धयति, यतो हि बाधः अतिदेशविरोधी। अतः नवमान्तैः अध्यायैः उपदेशातिदेशनिरुपणपरैः दशमाध्यायस्य अतिदेशनिरुपणात्मकत्वं नोपपद्यते। किञ्च तन्त्र-प्रसङ्ग्योः उपदेशातिदेशसाधारण्ये प्रमाणनिरूपणवद् आदावेव निरूपणस्य संभवात्। अतः कथं बाधेनिरूपिते एकादशे तन्त्रं निरूप्यत इति शंका जायते।

## तन्निरासः

तस्येदं समाधानं अतिदेशस्य बाधितेतरविषये संकोचकरणे बाधनिरूपणस्यापि विशेषातिदेशनिरूपणात्मकतया दशमान्तैरेव अध्यायैः उपदेशातिदेशसमाप्तिः। अतः अङ्गपरिमाणरूपे बाधस्य फले निरूपिते प्रयोगपरिमाणफलकत्वसामान्यात् एकादशे अध्याये विचार्यत इति न किञ्चिदनुपपन्नं। यदुक्तं प्रमाणवत् आदौ निरुपणप्रसङ्ग इति, तस्य एवंविधविशेषनियायकाभावात सर्वस्यापि प्रमाणाधीनसिद्धिकतया सर्वोपजीव्यत्वाच्च आदौ निरुपणं इति दृष्टान्तदार्ष्टन्तिकयोर्महद् वैषम्यं। यद्यपि प्रसङ्गस्यापि प्रयोगपरिमाणात्मकत्वं समस्ति, तथापि प्रसङ्गनिरूपणं—तन्त्रनिरूपणं अपेक्षते। यथा-पश्वाद्यर्थनुष्ठितैरङ्गैः पुरोडाशाद्युपकारसिद्धिलक्षणः प्रसङ्गः पश्वर्थानां अङ्गानां पुरोडाशोपकारकत्वसंभावनायां उपपद्यते, नान्यथा। तत्संभावना च पश्वर्थानां पारार्थ्यनिश्चयेन विशेषग्रहणात् पुरोडाशोपकारकत्वं न संभवति इति शंकया न आजानतः ( स्वरसतः ) उत्पद्यते, किन्तु प्रयाजादेः आग्नेयाद्यनेकप्रधानोपकारकत्वदर्शनात् कथंचित् उन्मिषति। ततश्च प्रयाजादीनां अगृह्यमाणविशेषतया एकदेशकालकर्तृकानेकप्रधानोपकारकत्वलक्षणतन्त्रव्युत्पादनस्य गृह्यमाणविशेषस्थलेऽपि एकस्य अनेकोपकारकत्वसंभावनाद्वारेण प्रसङ्गनिरूपणे हेतुत्वमुपपद्यते। अत एव ग्रन्थकारः द्वादशाद्ये आह—'सकृदनुष्ठितमपि अङ्गं बहूनां शक्नोत्युपकर्तुं' इत्युक्तवान, न तु अन्यथा उपकरोति इत्येव अवक्ष्यत्। अतः तन्त्र-प्रसङ्गनिरुपणयोः हेतुहेतुमद्भावः संभवति। एवञ्च एकादशे प्रयोगपरिमाणं तन्त्रावापद्वारेण विचार्यते।

## तन्त्रप्रसंगाप्रयोजकत्वानां लक्षणम्

तन्त्रसामान्यलक्षणन्तु यत् अनेकप्रधानसाधारणं सकृदङ्गानुष्ठानं। अत एव भाष्यकारः तन्त्र-प्रसङ्गयोः वैलक्षण्यं ब्रवीति। तत्र यत् सकृत कृतं सत् बहूनामुपकरोति, तत् तन्त्रं इत्यभिधीयते। यथा बहूनां ब्राह्मणानां मध्ये कृतः प्रदीपः। यस्तु आवृत्त्या उपकरोति, सः आवापः। यथा तेषामेव ब्राह्मणानां अनुलेपनं इति। प्रसङ्गं प्रतित्वाह अन्यत्र कृतस्यापि अन्यत्र आसक्तिः प्रसङ्गः। यथा प्रासादे कृतस्य प्रदीपस्य राजमार्गेऽपि आलोककरणमिति। तथा च प्राचीनश्लोकः भाष्यकारेण उदाहृतः—'श्लोकमप्युदाहरतीत्यादिना।'

'साधारणं भवेत् तन्त्रं परार्थत्वप्रयोजकः।
एवमेव प्रसङ्गः स्यात् विद्यमाने स्वके विधौ॥' इति।

अस्यायमर्थः। तथाहि—यत् साधारणेन अनुष्ठितं सत् बहूनां उपकारकं भवति अर्थात् ( अनेकेषां प्रयोजकत्वशक्तिः तन्त्रं )। एतेन साधारणं भवेत् तन्त्रं इत्युक्तार्थम्। परार्थत्वप्रयोजकः। अत्र परार्थे परमात्रार्थे इत्यर्थः। अर्थात् परमात्रार्थं एवाऽनुष्ठीयमानं परस्योपकरोति, अन्यथा तन्त्रेऽतिप्रसङ्गात्। पुरोडाशकपाले श्रपणार्थं उपात्ते तृतीया-विभक्त्या कपालानां तुषोपवापेऽपि तादर्थ्यावगमात्, अतः परार्थ इत्यस्य परमात्रप्रयुक्तः इत्यर्थो बोध्यः। यथा दध्यानयनं वाजिनस्य। तत्र अपरो वाजिनरूपः अप्रयोजकः—इति। 'एवमेव प्रसङ्गः स्यादि'त्युक्ते कस्तर्हि अप्र-योजक-प्रसङ्गयोर्भेद इति जिज्ञासायां 'विद्यमाने स्वके विधौ' विशेषः उक्तः। यद्यपि भाट्टमीमांसकानां मते पश्वागाङ्गभूते पुरोडाशयागे प्रसङ्गो-पकारिणः प्रयाजादेः अङ्गत्वं नेष्यते। तदंशे पुरोडाशीयोऽतिदेशः, प्रयोग-वचनश्च लुप्यत इति, तथापि पिष्टलेप-फलीकरणाज्यभागादिसाधारण्येन प्रयाजादिप्रयुक्तिसमर्थो विधिरस्ति। वाजिनादिविधिस्तु वाजिनाद्येव विषयीकरोति, न च तस्य तत्प्रयोजकत्वशक्तिरस्ति। अन्यत्तु किञ्चि-न्नैवासौ विषयीकरोति इति वैलक्षण्यं बोध्यं।

एतेन 'एवमेव प्रसङ्गः स्यात् विद्यमाने स्वके विधौ' इति प्राचां पद्यार्धं व्याख्यातं। अन्यत्र कृतस्य अन्यत्रापि प्रसक्तिःप्रसङ्ग इति। यथा प्रदीपस्य प्रासादे कृतस्य राजमार्गेऽपि आलोककरणं इत्यादि भाष्यसंदर्भस्य उपर्युक्त एवार्थे तात्पर्यमिति ज्ञेयं विज्ञैः।

## खण्डदेवाचार्योक्तस्यानुवादः

अत्र खण्डदेवाचार्येण द्वादशाद्ये शास्त्रदीपिकायां, तन्त्ररत्ने च सुब्रह्मण्या-प्रसङ्गविचाराधिकरणे अन्यार्थेन अङ्गेन अन्यस्य उपकारकत्वं प्रसङ्ग-लक्षणं कृतं। शास्त्रदीपिकायां च अङ्गपदहानेन अन्यार्थेन अन्यस्य उपकार-सिद्धिः इति प्रसंगलक्षणं सुब्रह्मण्याप्रसङ्गाविचाराधिकरणे उक्तं। काम्येन नित्यप्रयोगस्य प्रसङ्गसिद्धिः इत्यत्रापि अनुपपत्तिः इत्यादिकं प्रादर्शि। भाष्यकारेण च एकादशाद्ये तन्त्रलक्षणार्थं प्रदर्शिते प्राचां श्लोके प्रसङ्ग-लक्षणप्रदर्शनावसरे चतुर्थपादस्य उपादानं कृतं, अतः प्रयोगविध्यन्तर-प्रयोज्येऽर्थे दध्यानयने वाजिनं अप्रयोजकं भवति, स्वप्रयोगविधेः प्रयोज-कत्वशक्तौ सत्यामपि अप्रयोजकत्वं प्रसङ्ग इति भेदः निर्वोढव्यः। अतः अनुष्ठापकशक्तिलोपपर्यन्तं प्रसङ्गलक्षणं नैव कर्त्तुं शक्यम्। अतः प्रसङ्गो-नाम अन्यत उपकारलाभप्रयुक्ताङ्गाननुष्ठानं इति अनुष्ठानघटितं-लक्षणं कृतं।

## तन्निरासः

इदं च अविमृश्यमाणसुन्दरं इति विद्वांसो मन्यन्ते। यतो हि इव प्रसङ्गसामान्यलक्षणं 'अनुष्ठानघटितस्य सर्वप्रसङ्गसाधारण्याभावात्। तथाहि—प्रसङ्गस्त्रिविधः—अनुष्ठानप्रसङ्गः, पदार्थप्रसङ्गः, शास्त्रप्रसङ्गश्चेति।

तत्र पदार्थस्य तत्त्वे सति परार्थं अनुष्ठानेन परस्योपकारः अनुष्ठान-प्रसङ्गः। यथा—पशुपुरोडाशादौ पश्वर्थप्रयाजादेः। पदार्थस्य भेदे सत्यपि परार्थं उपात्तेन परस्य उपकारः पदार्थप्रसङ्गः। यथा सौमिक्या वेदेः इष्टि-पशुवेद्यपेक्षया भेदे सत्यपि तया सोमान्तर्गतेष्टि-पशुषु उपकारः। एकेन शास्त्रेण शास्त्रान्तरस्य उपकारः शास्त्रप्रसङ्गः। यथा—'याजनादिभिः—ब्राह्मणः धनं अर्जयेत्' इति द्रव्यार्जनशास्त्रेण ज्योतिष्टोमादिशास्त्रस्य ऋत्विगपेक्षस्य त्रैवर्णिकं आर्त्विज्यं आक्षिप्य प्रवृत्तस्य उपकारः। अतः भवदुक्तलक्षणस्य सर्वप्रसङ्गसाधारण्याभावात् अन्यदेव प्रसङ्गलक्षणं वाच्यं। प्रकृष्टः सङ्गः—सम्बन्धः प्रसङ्ग इति योगवशात् अन्यदेव लक्षणं वक्तव्यम्। तस्मात् अन्यार्थेन गृह्यमाणविशेषेण तत्प्रयुक्तिशक्तस्य उपकारः प्रसङ्गः इति प्रसङ्गसामान्यलक्षणं वक्तव्यम्। अतः अन्यार्थस्य अङ्गस्य अन्येन उपजीवनं प्रसङ्ग इति मूलोक्तं लक्षणं सुब्रह्मण्याप्रसङ्गविचाराधिकरणेन साकं न विरुद्ध्यते। तस्यापि अस्मिन्नेवार्थे तात्पर्यात्। अत एव सोमनाथीये यदङ्गं अनुष्ठीयमानं अगृह्यमाणविशेषत्वात् अनेकशेषिसाधारणं भवति, तत् तत्र तन्त्रं। यथा आग्नेयादिषु प्रयाजादेः। यत्तु अनुष्ठीयमानं परार्थत्वेन गृह्यमाणविशेषत्वेऽपि परस्य उपकारकं, तत् परार्थोपजीवि अप्रयोजकः। यथा—वाजिन—तुषोपवापादिकं दध्यानयन—कपालादेः। यत्र तु स्वविधेः प्रयोजकत्वशक्तिसद्भावेऽपि परार्थोपजीवनं, तत्र प्रसङ्ग इत्यर्थः। एतावन्मात्रेण समुच्चयचिन्तायाः प्रसङ्गापवादकत्वं सिद्ध्यति इत्यभिप्रायेण अन्येन कार्यसिद्धेः अन्यस्य निवृत्तिः इति शास्त्रदीपिकावचनं समंजसं भवति।

---

## पशुपुरोडाशादेः प्रयाजादिप्रयोजकशक्तिसद्भावे शंका-समाधाने

तत्र अङ्गत्वं अस्ति, नवेत्याशंक्य अन्यशेषभूतेष्वपि शेषत्वव्यवहारो-भवति। यथा—अदहत्यपि वह्नौ दाहकव्यपदेशः, तथैव प्रयाजादिष्वपि पशुपुरोडाशार्थं अननुष्ठीयमानेष्वपि तद्योग्यतया तदङ्गत्वव्यपदेशः। प्राभाकरमीमांसकास्तु योग्यतैव शेषत्वं, अतः पुरोडाशेऽपि प्रयाजादीनां—

मुख्यमेव शेषत्वं अस्तीति मन्यन्ते, भाट्टमते तु गौणं शेषत्वमिति विशषः। यथा तथा वास्तु, सर्वथा तावदुपपद्यते शेषत्वव्यवहार इति। तस्मात् मूलोक्त-प्रसङ्गलक्षणस्य न कश्चिद्दोषः, प्रत्युत खण्डदेवाचार्यमत एव अव्याप्तिदूषणं वज्रलेपायत इति, अलमधिकाक्षरक्षरणेन।

एकादशेऽध्याये तन्त्रावापलक्षणं प्रयोगपरिमाणं निरूप्यते, तत्र तन्त्रं त्रिविधं—फलतन्त्रं, पदार्थतन्त्रं, अनुष्ठानतन्त्रञ्चेति। एतत् त्रिविध-मपि तन्त्रमध्यायार्थः। तत्र हेतुहेतुमद्भावरूपा संगतिरेकदेशा ( सामानाधि-करण्य ) पेक्षयोपपद्यते, नत्ववच्छेदकावच्छेदेन। नन्वनुष्ठानतन्त्रमेवा-ध्यायार्थ इति नाशंकनीयम्। तथासति द्वितीयपादे करिष्यमाणस्य देश-कालकर्त्रादिलक्षणपदार्थतन्त्रस्यासांगत्यं स्यात्। न च तस्योपोद्घातसंगत्या-निरूपणमिति वाच्यम्। मध्ये क्रियमाणस्य तस्य उपोद्घातत्वासंभवात्। तस्मात् त्रिविधस्य तन्त्रस्य निरूपणात् सामानाधिकरण्येन हेतुहेतुमभाव-संगतिस्तृतीय—चतुर्थयोरध्याययोरिव संगच्छत इति ध्येयम्।

तत्रैकादशस्य प्रथमे पादे तन्त्रस्योपोद्घातो वर्णितः। तत्रानेकेषां प्रधानानां युगपदनुष्ठानप्रसक्तौ सत्यामेव तदंगकाण्डस्य तन्त्रप्रसंगचिन्तायाः अवसर इति औपोद्घातिकं प्रयोगान्तःपातित्वमिति केवलप्रधानानाम-नुष्ठानतन्त्रत्वं विचारितम्।

द्वितीयपादे चांगप्रधानार्थानां देशकालादीनां तन्त्रता प्राधान्येन, देशादितन्त्रतायाः अनुष्ठानतन्त्रतानिर्वाहकत्वादिति प्रतिपादनमुखेनांगानां क्वचित्तन्त्रम्, क्वचिदावृत्तिरिति द्वयं च विचारितं संक्षेपेण।

तृतीयपादे च द्वितीयपादे प्राधान्येन निरूपितताया अंगप्रधानादिषु कालादितन्त्रताया अपवादनया क्वचिदंग—प्रधानयोर्भिन्नकालत्वं प्रस्तुत्य-भिन्नदेशकालानामंगानां तन्त्रत्वं व्युत्पाद्यते। यथा 'अप्स्ववभृथेन चरन्ती'त्यत्र-भिन्नदेशत्वम, 'पूर्वेद्युरमावास्यायां वेदिं करोती'त्यादौ भिन्नकालत्वमित्यादि-तन्त्रमेवोदाहरणबाहुल्येन प्रपञ्चितम्।

चतुर्थपादे—एवं त्रिभिः पादैर्यत्र देश-काल-कर्तृणां भेदाभेदौ स्फुटौ, तद्विषयतन्त्रावापौ विचारितौ। अस्मिन पादे तु यत्र भेदाभेदौ न स्फुटौ, किन्तु दक्षिणाभेद-तदभावादिनोन्नेयौ, तद्विषयतन्त्रावापौ विचार्येते, तन्मुखे-नाऽवापो वर्णित इत्यनेन प्रकारेणैकादशाध्यायस्य पादार्था अवगन्तव्याः।

## द्वादशाध्यायस्य प्रतिपाद्याः विषयाः

द्वादशेऽध्याये प्रसंगो निरूपितः। प्रसंगलक्षणञ्च 'अन्यार्थेन गृह्यमाण-विशेषेणान्यस्य तत्प्रयुक्तिशक्तस्योपकारः प्रसंग इति बोध्यम्। स त्रिविधः—अनुष्ठानप्रसंगः, पदार्थप्रसंगः, शास्त्रप्रसंगश्चेति। उदाहरणं—पदार्थस्य तत्वे सति परार्थमनुष्ठानेन परस्योपकारोऽनुष्ठानप्रसंगः। यथा-पशुपुरोडाशादौ-पश्वर्थानुष्ठितस्य प्रयाजादेः।

पदार्थस्य भेदे सत्यपि परार्थमुपात्तेन परस्योपकारः पदार्थप्रसंगः। यथा सौमिक्या वेदेः पशुवेद्यपेक्षया भेदेऽपि तया सोमान्तर्गतेष्टिपशूपकारः।

एकेन शास्त्रेण शास्त्रान्तरस्योपकारः शास्त्रप्रसंगः। उदाहरणं याजनादिभिर्ब्राह्मणो धनमर्जयेदिति द्रव्यार्जनशास्त्रेण ज्योतिष्टोमादि-शास्त्रस्य ऋत्विगपेक्षस्याविशेषेण त्रैवर्णिकस्यार्त्विज्यमाक्षिप्य प्रवृत्तस्योप-कारः। त्रिविधेऽपि प्रसंगे सामान्यलक्षणस्य सत्त्वाल्लक्षणसमन्वयः।

एतेन-अनुष्ठानघटितं किञ्चिल्लक्षणं परिकल्प्य भाष्य-तन्त्ररत्न-शास्त्र-दीपिकाद्युक्तलक्षणेषु अतिव्याप्त्यादिदूषणोद्भावनं, स्वोक्तलक्षणस्य समर्थ-नञ्च भाट्टदीपिका-प्रभावल्योरकाण्डताण्डवमिति अभियुक्ता मन्यन्ते। तन्त्रत्रै-विध्यमिव प्रसंगत्रैविध्यस्याध्यायप्रतिपाद्यत्वे बाधकाभावात्। एतेन काम्येन नित्यस्य प्रसंगसिद्धिरपि व्याख्याता।

तत्र प्रथमपादे यदीयतन्त्रमध्ये यन्निपतति, तदीयानामंगानां तत्र-प्रसंग इति तन्त्रमध्यपातस्थलीयप्रसंगव्युत्पादनेन पशुधर्माणां पुरोडाशयागे-प्रसंगः, सौमिकवेदेरुत्तरकालीनकर्मसु प्रसंगश्च निरूपितः।

द्वितीयपादे तन्त्रमध्यपाताभावस्थलीयः प्रसंगः प्राधान्येन प्रतिपाद्यते। तत्र सवनीयपशोस्तन्त्रित्वं, सवनीयपुरोडाशानां प्रसंगित्वम्, विकृतिः-तन्त्रिणी, न प्रकृतिः, अन्वारम्भणीया विकृतिष्वपि स्यात्, न तु प्रकृतावे-वेत्यादिविचारः कृतः।

तृतीयपादे विकल्प–समुच्चयमुखेन प्रसंगो विचार्यते, विकल्पिते ह्येकस्य वैकल्पिकस्यानुष्ठाने वैकल्पिकान्तरस्य प्रसंगसिद्धकार्यत्वम्। समुच्चये तु तदभाव इति समुच्चयः प्राधान्येन विचार्यते, यथा त्वग्वाससोस्समुच्चयः, आघारगतऋजुत्वादीनां समुच्चयः, व्रीहि-यवयोर्विकल्पस्समुच्चयापवादत्वेन इत्युभयं चिन्तितम्।

चतुर्थपादे अस्फुटविषयविकल्प-समुच्चयविचारानन्तरं स्फुटविषये विकल्प-समुच्चयविचारः क्रियते, तत्रापि ऐन्द्राबार्हस्पत्ययाज्यानुवाक्यायुगलयोर्विकल्प इत्यादिकं प्राधान्येन, याज्यानुवाक्ययोस्समुच्चय इत्यादिकं-विकल्पापवादत्वेनेत्युभयं विप्रस्यैवार्त्विज्यञ्च विचारितम्। तदेवं द्वादशाध्यायगतेषु षष्टिसंख्याकपादेषु प्रतिपाद्याऽर्थाः संगृहीता जिज्ञासूनामुपकृतये।

## प्रभाकरमतस्य संक्षेपः

इतः परं प्राभाकरमीमांसकानामभिमतान् द्वादशाध्यायगतान् पदार्थानधस्तान्निर्दिशामो वयम्। अत्रैषा दर्शनस्थितिः 'अथातो धर्मजिज्ञासेत्यत्र' धर्मशब्देन वेदार्थो विवक्षितः। अथ–वेदाध्ययनानन्तरं वेदार्थविचारः कर्तव्यः-इति सूत्रार्थं ते वर्णयन्ति। स च वेदार्थः कार्यरूप इति चोदनासूत्रार्थं वर्णयन्ति। तच्च कार्यं प्रत्यक्षादिप्रमाणान्तरागोचरमिति प्रत्यक्षसूत्रे प्रतिपाद्यते, तच्च-यागादिक्रियातो भिन्नं लिङादिशब्दवाच्यमित्यपूर्वाधिकरणे प्रतिपादितं। कार्यञ्च-कृतिसाध्यं कृत्युद्देश्यञ्चोच्यते। यद्यपि यागादौ कृतिसाध्यत्वमस्ति, कृत्युद्देश्यत्वं नास्ति। स्वर्गादिफले कृत्युद्देश्यत्वं वर्तते, कृतिसाध्यत्वं नास्ति। उभयञ्च वेदार्थत्वेन सम्मते कार्येऽस्ति।तच्च प्रमाणान्तरागोचरत्वात् अपूर्वमिति, पुरुषं नियुञ्जानं सत् नियोग इति चाख्यायते, अलौकिकेऽस्मिन कार्ये शक्तिः, 'अनन्यः लभ्यश्शब्दार्थः' इति न्यायात्। लौकिके क्रियाकार्ये लक्षणा। तच्च-नियोज्यं'विषयञ्चापेक्षते। तत्र षष्ठाद्ये स्वर्गकामाधिकरणे कार्यस्य स्वसंबन्धितया बोद्धा नियोज्योऽस्तीति प्रतिपाद्यते। स्वर्गकामना च नियोज्यविशेषणमित्येकादशाद्ये निरूप्यते, तस्य च कामिनियोज्य-कामकार्ययोस्साध्यसाधनभावो बोध्यत इति बादर्यधिकरणे सिद्धान्तितम्, नियोज्यावगमनिमित्तत्वात्। तच्च क्रियारूपं न भवितुमर्हति, तस्याः क्षणिकत्वेनाशुतरविनाशित्वात् कालान्तरभाविस्वर्गादिफलसाधनत्वासंभवात्। देवताराधनमुखेन फलसाधनत्वं नास्तीति नावमिके देवताधिकरणे व्युत्पादितं। पुरुषसंस्कारमुखेन नास्तीति 'कर्माण्यारम्भभाव्यत्वादि'त्यधिकरणे उक्तम्। कर्मणः, तच्छक्तेर्वा स्थायिता नास्तीत्यपूर्वाधिकरणे व्यक्तं।

कार्यञ्च कृतिसाध्यं, कृतिश्च पुरुषप्रयत्नः, न चासौ भावार्थमन्तरेणेति; कार्येण सह साधनतया भावार्थोऽन्वयं यातीति भावार्थधिकरणे निर्दिश्यते। साधनभूतो धात्वर्थो कृत्यवच्छेदद्वारा नियोगमवच्छिन्दन विषयो-भवतीति शब्दान्तराधिकरणे निरूप्यत इति, अनेकन्यायसाध्यमिदम्।

तथा च 'यजेत स्वर्गकामः' इत्यतः स्वर्गकामनियोज्यकं यागविषयकं कार्यमिति शाब्दबोधो भवति ।

## प्रभाकरमतेन प्रथमध्यायार्थनिरूपणम् ।

विधिः, उपदेशः, चोदना, नोदना, नियोगः, शास्त्रमिति च पर्यायशब्दाः- प्राभाकरमते, अधीतवेदस्य प्रथमं तावत् वेदार्थविचारः कर्तव्यः इति प्रथम- सूत्रेण प्रतिज्ञा कृता। चोदनालक्षणोऽर्थोधर्म इति २सूत्रेण वेदार्थस्य कार्यरूपत्वं प्रतिपाद्यते तत्रेयमाकाँक्षा जायते कथं चोदनैकप्रपाणको कार्यरूप इति । तदर्थं- मनपेक्षत्वसाधकं प्रमाणलक्षणमारब्धव्यम्, चोदनाप्रामाण्यसाधनाय प्रथमा- ध्यायस्य प्रवृत्तिः । अर्थवाद-मन्त्र-स्मृति शिष्टाचार-नामधेयादिविचारस्य विध्य-परपर्यायचोदनाप्रामाण्यसिद्धयर्थत्वात् ।

यथोक्तमभियुक्तैः—

'वादोक्तहेत्वपेक्षत्वान्न विर्धर्मानतेति चेत् ।
सत्यन्वये स्तुतिद्वारा नापेक्षेति गुरुर्जगौ ॥' इति ॥

चोदनासूत्रं प्रथपादार्थप्रतिपादनपरमिति भाट्टप्रस्थानम् । प्राभाकर- प्रस्थानन्तु चोदनासूत्रप्रतिज्ञातं चोदनाप्रामाण्यमेवाध्यायार्थं इति । अत- एवार्थवादाधिकरणे, स्मृत्यधिकरणे 'चोक्तमप्रामाण्ये स्मृतीनां वेदस्यापि तदपेक्षत्वादप्रामाण्यं स्यादिति च शास्त्रदीपिका । तस्मादरब्धव्यं प्रमाण- लक्षणम् ।

## द्वितीयस्य विषयः

उक्ते प्रमाणलक्षणेऽयं विचारः प्रस्तूयते-यत् प्रमाणं शास्त्ररूपं भिन्नम्, अथवाऽभिन्नमिति । अतो द्वितीयेनाध्यायेन शास्त्रभेदः प्रतिपाद्यते । कर्म ( भावना ) भेदश्शब्दान्दारादिभि षड्भिः प्रमाणैः प्रतिपाद्यते इति भाट्ट प्रस्थानं। शास्त्रभेदस्संख्यातिरिक्तैः प्रमाणैर्विचार्यत इति प्राभाकरप्रस्थानमिति न विस्मर्तव्यम् । स च शास्त्रभेदः क्वचिन्निरपेक्षसाध्यभेदनिबन्धनः, क्वचिदनुबन्धभेदनिबन्धनः । तौ चात्रानिरूपितभेदाभेदौ शास्त्रादवगतौ शास्त्रस्य भेदकौ भवतः ।

## साध्यभेदाच्छास्त्रभेदनिरूपणं

तत्र साध्यभेदस्तावत्, उत्पत्तिः-प्राप्ति-विकृति-संस्कृति-करणोपकार-करणावान्तरकार्यैश्वर्यलक्षणाधिकाररूपभेदात् सप्तविधः। शास्त्रत्वञ्चासन्निकृष्टार्थविषयत्वम्। तत् यत्र निरपेक्षभिन्नासंन्निकृष्टार्थतात्पर्यवत्वम्, तत्र शास्त्रभेदः। यत्र तु नैवं, तत्राभेद एव। उदाहरणं—यथा 'पिष्टानि संयौति' इति पुरोडाशोत्पत्तिशास्त्रस्य पुरोडाश चतुर्धाकरणशास्त्रात्। अनयोर्निरपेक्षासान्निकृष्टार्थतात्पर्यवत्वात् 'यदाग्नेयोऽष्टाकपालः' इति शास्त्रादभेद एव, तत्सापेक्षपुरोडाशोत्पत्तितात्पर्यवत्वात्।

एवं 'पयोदोग्धि इति पयःप्राप्तिशास्त्रस्य पयस्संस्कारशास्त्रात् भेद एव। अभेदश्च ऐन्द्रं पयः इति सान्नाय्यशास्त्रात्। एवं 'व्रीहिनवहन्ती'ति व्रीहिशास्त्रस्य व्रीहीनाहरती'ति शास्त्रात् भेदः। अभेदश्च व्रीहिभिर्यजेतेत्यस्मात् प्रधानशास्त्रात्।

एवं 'व्रीहीन् प्रोक्षती'ति संस्कृतिशास्त्रस्य अवहन्तिशास्त्रात् भेदः। तथा'समिधो यजती'त्यादीनामिति कर्तव्यताशास्त्राणां करणोपकाररूपसाध्यतात्पर्यवत्त्वेन, 'आग्नेयोऽष्टाकपालो भवतीत्या'दिशास्त्राणाञ्च करणावान्तरकार्ययोगित्वेन परस्परं भेदः। अभेदश्च 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यस्मादधिकारशास्त्रात्।

अत एव 'शास्त्रान्तरविहितं शेषीभवती'ति प्राभाकरग्रन्थस्य भवनाथं वरदराजाभ्या वाकयान्तरशेषा'त्यत्रा तात्पर्यमुक्तं। तत्सापेक्षत्वात् सकलेतिकर्तव्यताशास्त्राणां करणशास्त्राणाञ्च। तथा जीवनाधिकारसाध्यभेदे च 'यावज्जीवं' दर्शपूर्णमासाभ्यां यजेत, दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यनयोश्शास्त्रयोर्भेदः। विवरणमते वाक्यभेदे सत्यपि न शास्त्रभेदोऽस्ति, वस्तुबलवादित्वात्, प्रातिस्विकसाध्यभेदात् शास्त्रभेदानुज्ञानात्। अत एवोक्तं वरदराजेन संख्याधिकरणे 'न वाक्यभेदश्शास्त्रभेदे तन्त्रमि'ति।

## अनुबन्धभेदात् शास्त्रभेदनिरूपणम्

तथाऽनुबन्धभेदादपि शास्त्रभेदः। अनुबन्धत्वं-नियोगविषयत्वम्। तद्भेदश्च शब्दान्तराभ्याससंज्ञागुणप्रकरणान्तरैः पञ्चभिः प्रमाणैः प्रतिपाद्यमानः पञ्चविध एव। संख्यायास्त्वनुबन्धभेदकत्वात्; न शास्त्रभेदकत्वम्, धात्वर्थमात्रभेदकतया प्रसंगेनोपन्यास इति।

तदुक्तं शालिकनाथेन ऋजुविमलापंचिकायां ।

यथा—'अध्यायेन द्वितीयेन गुरुर्भाष्यनिबन्धने ।
साध्यानुबन्धभेदाभ्यां शास्त्रभेदमवर्णयत् ॥' ति.पृ.३१२ इति ।

## तृतीयस्य प्रतिपाद्यो विनियोगः

प्रतिपादिते शास्त्रभेदे शास्त्रार्था अपि भिन्नाः । तत्रेयं जिज्ञासा पुनरापतति—किमेते शास्त्रार्था अन्योन्यसंबद्धाः, उतासंवद्धा इति । तत्र शेषलक्षणेन संवन्धः प्रतिपाद्यते, तत्र शेषत्वं नामैदमर्थ्यलक्षणम् तव द्विविधं वैनियोगिकं, औपादानिकञ्चेति, तत्र वैनियोगिकं शेषत्वं श्रुत्यादिप्रमाणक तृतीयाध्यायार्थः । औपादानिकं शेषत्वं चतुर्थे इति विवेक्तव्यम् । प्राभाकरमीमांसकाः तृतीये श्रुति-लिग-वाक्य-प्रकरण-स्थान-समाख्यानैश्शेषविनियोगलक्षणमुक्तमिति भाष्ये श्रुत्याद्युक्त्याऽन्यच्छेषप्रमाणमुपादानाख्यं श्रुत्यादिव्यतिरिक्तं शेषत्वे प्रमाणान्तरमस्तीत्यवगम्यते, सचोपादानलक्षणोविधिव्यापारः प्रमाणान्तरभूतः क्वचिदैदमर्थ्ये, क्वचिदनुष्ठाने, क्वचिदधिकारे, क्वचिदुत्पत्ताविति प्रतिपाद्यते।यथा—प्रोक्षणादीनामन्विताभिधानतःप्रतिपन्ननियोगैदमर्थ्यानां श्रुत्यादिसिद्धवैनियोगिकं ब्रीह्यादिद्वारैदमर्थ्यानां पश्चादौपादानिकं तदुभयप्रतीति निर्वाहकं द्वारैदमर्थ्यसाध्यं करणैदमर्थ्यम् ।

## प्रयोगापरपर्यायानुष्ठानस्योपादानगम्यत्वम्

यथा—निमित्तपर्यन्तेऽधिकारे साँगेषु प्रधानेषु प्रयोग उपादानत एव भवति ।

## अधिकारस्यौपादानिकत्वम्

यथा—विश्वजिदादिष्वधिकारकल्पना औपादानिकी ।

## उत्पत्तेरौपादानिकत्वम्

यथा—'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः',इत्यादिषु केवलाधिकारचोदनासु उत्पत्तिनियोगाक्षेप उपादानादेव। न खलु उत्पत्तिनियोगं विना तत्रांगोपस्कृतात् प्रधानाधिकारनियोगसिद्धिरूपपद्यते, कर्मस्वरूपाणां क्षणिकत्वेनोपकार्योपकारकाभावादिति एकादशे भाष्यकारेण दर्शितत्वात् । स चायमुपादानलक्षणो विधिव्यापारः श्रुत्यादिप्रमाणषट्कातिरेकी तार्तीयविनियोगा-

पेक्ष इति तृतीयचतुर्थयोरध्याययोर्हेतुहेतुमद्भावरूपा संगतिः। यथोक्तं मयूरवमालिकायां सोमनाथमखिना 'प्राभाकरास्तु उपादानाख्यप्रमाण-गम्यं शेषत्व-प्रयो ाधिकार-उत्पत्त्याख्यचतुष्टयमध्यायार्थं इति वदन्ती'ति पृ० ३४७ इति।

अतएवोक्तं ऋजुविमलापञ्चिकायां 'प्रतिपादिते श्रुत्यादिनिबन्धने-शास्त्रार्थानां परस्परसंबन्धे पुनरियमपेक्षोपजायते— किं श्रुत्यादिभिरेव परस्परसंबन्धः, उताऽपरमपि अस्ति कारणमिति। तत्रोपादानलक्षणमपर-मपि कारणमस्तीति प्रतिपादनायोपादानलक्षणमारब्धव्यमिति। औपादानि-कविनियोगचिन्तायाम्, अपरमप्यौपादानिकं सर्वमेव चिन्तितं' भा०-२-पृ० ३ इति।

## पञ्चमस्य विषयनिर्देशः

चतुर्थे उपादाननिबन्धनायां प्रयुक्तौ विचारितायां कथमनुष्ठानं निर्वर्तते, कर्तुरेकत्वात् पदार्थानामनुष्ठेयानामनेकत्वादिति विचारणायां क्रमो निरूप्यते। तत्र कः क्रम आदर्तव्य इत्याकांक्षायां क्रमनिरूपणाय-पञ्चमोऽध्याय आरब्धव्यः। तत्र श्रुत्यादि षट् प्रमाणानि।

## विवरण-निबन्धनयोस्स्वरूपम्

विवरणं नाम प्रथमं गुरुणा प्रणीता लघ्वी टीकेति तत्संप्रदायः। अयं वस्तुबलवादी, निबन्धनं नाम पश्चात् गुरुणैव प्रणीता बृहतीटीका। अयन्तु शब्दबलवादी।

तदुक्तं तन्त्ररहस्ये धर्मपुर्यभिजनेन रामानुजाचार्येण—

'आलोच्य शब्दबलमर्थबलं श्रुतीनामि'॥ति।

## क्रमविषये विवरणमतम्

'वषट्कर्तुः प्रथमभक्षः' इत्यादिषु प्रथमादिशब्दवाच्यः पूर्वपदार्थ-प्रतियोगिक उत्तरपदार्थानुयोगिकः पदार्थद्वयाश्रयः पौर्वपर्यलक्षणस्तार्तीयः क्रमः। पाञ्चमिकस्तु अनेकपदार्थव्यासक्तोवितति लक्षणशब्दानभिधेयः। उभयस्यापि अभिधेयत्वानभिधेयत्वरूपवैलक्षण्यसद्भावेऽपि वस्तुस्वरूपपर्या-लोचनायां न विधेयत्वमिति विवरणकारमतं।

निबन्धनकारस्तु—तार्तीयक्रमस्य, एकादशादिसंख्यायाश्चाभिधानं—संभवति, प्रथमं ग्राहकग्रहणं, तदनु ग्राहकशेषत्वं, ततः करणशेषत्वं, तदनन्तरं द्वारशेषत्वं, ततः प्रयोगविध्यनुष्ठाप्यत्वं, तदेव च विधेयत्वमिति तन्मतमर्यादा। तस्य शब्दबलवादितया शब्दस्वभावपर्यालोचनेनाभिधेयस्य क्रमस्य विधेयत्वं संभवति। ग्राहकग्रहणं नाम साधिकारस्य विधेः स्वयंसाध्यतया प्रयोजनरूपस्य सन्निधिसमाम्नातैःस्वयमप्रयोजनभूतैः प्रयोजनप्रयोजनिभावेनान्विताभिधानं यच्च नाभिधीयते, न तस्यैवंरूपं ग्राहकग्रहणं संभवति। न च तदगृहीतस्य विध्यैदमर्थ्यमस्ति। न च तादर्थ्यशून्यस्य विधिरनुष्ठानमाक्षिपति, अतदाक्षिप्तानुष्ठानस्य न विधेयत्वं संभवति। यथोक्तं 'यत्तु स्वसिद्धयर्थमुपादीयते- ( आक्षिप्यते ) तदपि विधेयमिति तन्त्रे व्यवहारः' पं. टी.पृ. ३८ इति। तस्य क्रमस्यानभिधेयत्वेनानंगत्वात्, तद्धानेऽपि वैगुण्याभावादनर्थकः क्रमः इति उभयमतेन पूर्वपक्षः।

मतद्वयसाधारणसिद्धान्तः—सत्यमनंगमेव क्रमः, तथापि विध्यपेक्षितत्वात् क्रमविचार अवश्यमेवारम्भणीयः, अनंगस्यापि तस्याऽऽदरणीयत्वात्। श्रुत्याद्यवगतक्रमविशेषसमालिंगितप्रयोगविशेषसाध्यो हि प्रयोगविधिरवसीयते। तेन प्रयोगविधिः प्रयोगविशेषन्त्वाक्षिपत्येव, न तु यथा तथा प्रयोगं, स च ऋते क्रमविशेषात् न सिद्धयतीति, तदादरः। तेनारब्धव्यं क्रमलक्षणम्।

## षष्टेऽधिकारनिरूपणम्

परस्परापेक्षत्वात् पञ्चानां न तावदधिकारः एषामवसरे निपतितुमर्हति। किन्तु एषु समाप्तेषु किं क्रमपर्यन्ते उपदेशार्थेऽधिकारी विद्यते, नवेति षष्ठे विचार्यते। ततश्चाधिकारलक्षणमारब्धव्यम्। एवं विचारसिद्धयर्थं पञ्चलक्षणान्यधिकारोऽपेक्षते, यावत्तानि न चिन्त्यन्ते, तावदधिकारचिन्तावकाश एव नास्तीति। अन्यत्रावसरालाभावात्, इदानीमवसरलाभात् अस्मिन्नेव स्थानेऽधिकारलक्षणमारभ्यते, हेतु हेतुमद्भावेनापेक्षा नास्ति, किन्त्ववसरसंगत्या। एतत्सर्वं मनसि निधायाह टीकाकारः 'परस्परापेक्षेषु परिसमाप्तेषु अधिकारस्यावसर इति पञ्चलक्षणापेक्षो ह्यधिकार इत्युच्यते, न हेतुतः' इति। स चोत्सर्गापवादाभ्यां अष्टसु पादेषु विचारितः।

## सप्तमाष्टमयोर्विषयः

पूर्वषट्के उपदेशः; उत्तरषट्केऽतिदेश इति भाट्टप्रस्थानम्। उपदेशप्रमेयं पूर्वषट्के चिन्त्यते, कार्यप्रमेयमुत्तरषट्के इति उपदेशातिदेशयोरेक-

निष्ठत्वमेव, न तु भिन्ननिष्ठत्वम्। अर्थात् उपदेशकार्याश्रितौ। अत उपदेश-प्रमेयं कार्यं, कार्यप्रमेयभूताः पदार्थाः। अत्र कार्यशब्देनोपकारो विवक्षितः, न नियोग इति न प्रस्मर्तव्यम्। एवञ्चोपकारस्तयोरुपदेशातिदेशयोर्विचारितः, तद्विचारेणैव तत्प्रमेयभूता अपि पदार्थास्तयोर्विचारिताः। अत एवोपादानाभिधानो विध्याक्षेप उत्पत्त्यधिकारप्रयोगशेषत्वादयश्चतुर्थे। उपकारस्यैकरूपत्वात् तन्त्रं, उपकारभेदेऽावृत्ति-प्रसंगौ, एकादश-द्वादशयोर्विचारितौ संगच्छेते। तथा चोपकारस्य केवलविध्याक्षेप्यत्वादुपदिष्टत्वम्। तद्वद्भावेन प्रापितत्वाच्चातिदेशिकत्वम्। न तूपकारस्योकेवलमौपदेशिकत्वम्, न वा केवलमातिदेशिकत्वमिति, उभयलक्षणाक्रान्तत्वादुभयरूपत्वमिति।

अत्रेयं विषयपरिशुद्धिः—प्राकृतानां पदार्थानामतिदेशेन विकृतौ-प्राप्तौ सत्यां प्राकृतात् कार्यात् विशिष्टं कार्यमवगम्यते, तत्प्रमाणकश्चोहः। सामान्येनातिदेशः सप्तमे, विशेषातिदेशश्चाष्टमे इति, भवति विशेषातिदेशः ऊहस्य हेतुः।

ऊह्यत इति व्युत्पत्त्योह्यमानपदार्थपरत्वेन तस्य शास्त्रव्युत्पाद्यत्वमस्तीति, नाशंकनीयम्। कृत्स्नशास्त्रार्थस्योह्यमानतया नवमासाधारणार्थत्वानुपपत्तेः। तथाप्यस्मिन् शास्त्रे विकृतप्रयोगः ऊहशब्देनाभिधीयते।

श्लोकमप्युदाहरन्ति—

'प्राकृतस्थानपतितपदार्थान्तरकार्यतः ।
ऊहः प्रयोगो विकृत ऊह्यमानतयोदितः ॥' ऋ. पं. २१० इति।

स च प्राकृतात् कार्यादन्यस्मिन कार्येऽवगतेऽवगम्यते, प्रकृतावघातादीनामपूर्वसाधनभूतविशेषा व्रीहयः, यवाश्च कार्यत्वेन प्रतिपन्नाः। विकृतौ-नीवारद्रव्यवत्यां अपूर्वसाधनत्वाविशेषादतिदेशेन प्राकृतानां नीवारा एव-कार्यत्वेनावसीयन्ते। ततश्चेतेष्ववघातादयः क्रियमाणा विकृता भवन्ति, कारकभेदेन क्रियाविकारस्यापरिहार्यत्वात्। कथं पुनर्नीवाराणां कार्यत्वावगमः? उपदेशस्तावत् अपूर्वविशेषगृहीतधर्माणां विशिष्टापूर्वसाधनविशेषः। न चात्र प्रमाणान्तरं प्रक्रमत इति शंका जायते।

उच्यते—तस्येदं समाधानं शाब्दं प्रमाणं द्विविधं-उपदेशजम्; कार्यजञ्चेति। कः पुनरुपदेशः? किं पुनः कार्यमिति? ग्रन्थसन्दर्भस्य पाठः। कार्यं तु द्वारभूतं करणोपकारादि। तत्र ग्रन्थसन्दर्भजन्यं 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत', व्रीहिभिर्यजेत, यवैर्यजेत, व्रीहीनवहन्ति, इत्यादिपर्यालोच-

नयाऽपूर्वप्रयुक्ततां सर्वधर्माणामनुसन्दधतां व्रीहीणां यवानाञ्चापूर्वविशेषसाधनत्वं तुल्यमाकलयतां व्रीहियवकार्यकमवघातविज्ञानमुत्पद्यते, तच्चेदमुपदेशजं शाब्दमिति प्रथमः प्रकारः।

द्वितीयः प्रकारश्चेत्थं। तथाहि—पुनश्च विकृत्यपूर्वान्तरे द्रव्यान्तरवर्तिचोदकप्राप्तेष्ववघातादिषु जिज्ञासेयमुपजायते—कथमेते प्रयोक्तव्याः' इति। तदर्थञ्च कीदृशं कार्यमुपदेशेन प्रयुज्यत इत्येतन्निरूप्यते—किं दर्शपूर्णमासापूर्वसाधनविशेषकार्यतया प्रतीयते, अथवा यस्यापूर्वस्यावघातोऽङ्गं, तदीयसाधनविशेषः—इति। तत्र यदि दर्शपूर्णमासापूर्वसाधनता विवक्षिता, तदा नीवाराणां तद्रूपताभावात् तेषां कार्यता न स्यात्।

अथ तु यस्यापूर्वस्यावघातोऽङ्गं, तदीयसाधनतामात्रं विवक्षितं, तदाऽस्तितद्रूपता नीवाराणामिति, तेषामपि कार्यता 'व्रीहीनवहन्ती' त्यादिभिरेव प्रतीयते। तत्र विशेषापूर्वांगमात्रज्ञानं नान्तरीयकदर्शपूर्णमासापूर्वसाधनविशेषः कार्यभूत इति। अपूर्वविशेषसंबन्धिनोहि धर्मस्य तदीयं कार्यं भवितुमर्हति, अपूर्वेदमर्थ्याविरोधादिति, नान्तरीयकमपूर्वविशेषसाधनत्वमविवक्षितम्। यदीयोऽवघातः, तत्साधनमेव कार्यमिति चोदनार्थः। अतश्च 'व्रीहीनवहन्ती' त्यनयैव चोदनया नीवाराणां कार्यत्वमवगम्यते। तदिदं कार्यनिरूपणज्ञानमुपजायत इति कार्यजं शाब्दम्। तेन नाप्रमाणत्वं, नाशाब्दत्वम्, नोपदेशत्वमिति। स्वयंमेव भगवान विवरण [टीका] कार उक्तवानिति। एतत्सर्वंमनसि निधायैव टीकावाक्यम् 'विशिष्टकार्यावगम्यत्वादूहस्य विशेषातिदेशलक्षणं हेतुरि'ति।

अयं विशेषः प्राभाकरमते तत्तदवान्तरव्यापाराणामाग्नेयसंबन्धित्वेन रूपेण क्रोडीकृत्य आग्नेयोपकारव्यक्तिसमानजातीयोपकारैस्सौर्यस्योपकर्तव्यमित्येवंविध वाक्यकल्पनया प्रथममुपकारस्यातिदेशः, उपकारेष्वतिदिष्टेषु पश्चात् तज्जनकापेक्षायां तज्जनकप्राकृतपदार्थानां पृथगेवातिदेशकल्पनम्। अतिदिष्टानां विकृत्यंगत्वेऽपि अनुष्ठानस्य बाधात् अननुष्ठानलक्षणो बाध गुरुमतरहस्यम्।

बाधो दशमे निरूपितः, नवमे तूहः। अनयोः का संगतिरित्याशंक्य, हेतुहेतुमद्भावसंगतिमुपपादयन्ति। यत् प्रकृतौ पदार्थानां कार्यं, विकृतावपि तदेव कार्यमिति, कार्येण हविष्प्रकृतिद्रव्येण संस्कार्येण हविःप्रकृतिभूतेषु कृष्णलेषु अवधातस्योहप्रयोगः प्राप्तः। इदानीं कृष्णलसंस्कारत्वेनावघातस्योहप्रयोगे निश्चिते, कर्तव्योऽवघातः कार्यहविःशून्यो भवति, तुषविमोचनकार्याभावात्।

## ऊहबाधयोर्द्वारलोपस्थल एव सामानाधिकरण्येन हेतुहेतुमद्भावः, न त्ववच्छेदकावच्छेदेनेति कथनं

अतो विचार्यते—किं कार्यशून्यस्यावघातस्य अनुष्ठानं क्रियतां, नवेति। तत्र द्वाराभावात् अननुष्ठानमवघातस्येति बाधो भवति लोपद्वार-निबन्धनः। एवञ्चावघातादेर्विकृत्यपूर्वतादर्थ्ये सति प्राकृतस्थानपतितकृष्णलादौ तच्चिकीर्षायां द्रव्यान्तरे अनुष्ठेयत्वेन प्रयोगविकारात्मके ऊहे निश्चिते, पश्चात् द्वारचिन्तायां द्वारलोपः, ततो बाधः। तथा चोहस्य साक्षात्बाध-हेतुत्वाभावेऽपि बाधहेतुभूतद्वारलोपद्वारा हेतुत्वम्। किञ्च प्राभाकर-मीमांसकैरर्थलोपस्थल एवोहस्य हेतुत्वकथनात्। 'नार्षेयं वृणीते, न तौ पशौ करोती'त्यादिप्रतिषेधस्थले च प्राकृतप्रयोजनलोपाभावेऽपि बाधो भवतीति-तन्मतस्थितिः। यथोपोद्घातत्वमर्थलोपीयबाधं प्रत्येव, प्रत्याम्नान-प्रतिषेधस्थलेच एतदसंभवात्भट्टमते, तद्वत्। ततश्च बाधहेतुभूतद्वारलोपनिश्चयहेतु-त्वादस्त्यूहस्य बाधं प्रति हेतुत्वम्। अत एव सूत्रकारः आग्रयणेष्टावन्वा-हार्यस्थानपतितयोवासौ-वत्सयोरन्वाहार्यधर्मोहं दर्शयित्वा, द्वाराभावेन पाकस्य बाधं 'पाकस्यान्नकारित्वात्' १०-३-३७ इत्यत्र दर्शयिष्यति। अत्र श्लोका भवन्ति—

'विकृत्यपूर्वतादर्थ्ये क्रतुशेषत्वसीमनि।
प्राकृतानां पदार्थानामतिदेशात्मके स्थिते॥ १॥
प्राकृतस्थानपतितवस्त्वन्तरचिकीर्षया।
प्रयोगे विदिते द्वारलोपः शक्यविनिश्चयः॥ २॥
द्वारलोपनिमित्तश्च बाधोऽतो हेतुसिद्धये।
ऊहापेक्षेति संबन्धो व्यक्त एवोह-बाधयोः॥ ३॥'

ऋ. पं. पृ. ३०८ इति।

### अत्रेदमवधेयम्

श्रूयतां तन्मतरहस्यं यत् विज्ञानं निश्चितम्, तदर्थशून्यं न भवति। मिथ्याभावश्च ज्ञानस्याऽर्थशून्यत्वम्। नहि निश्चितं ज्ञानं मिथ्या भवति, विज्ञानस्य स्वमहिम्नैवार्थोपस्थापकत्वात्। विशिष्य प्राभाकरमीमांसकानां मते अग्रहणनिबन्धनमेव मिथ्यात्वम्। तन्मते भेदाग्रहरूपतया ज्ञानस्य-

मिथ्यात्वं, न ज्ञानरूपतया। विवेकाग्रहणाद्धि स्मृतिज्ञानं प्रत्यक्षव्यवहार-प्रवर्तकतया पुरुषं व्यवहारे विसंवादमापादयत् मिथ्याभूतमित्युच्यते। तेनाग्र-हणनिबन्धनं मिथ्यात्वमिति तन्मतरहस्यम्।

## दशमाध्यायस्यप्रतिपाद्यकथनं तत्र प्रकारद्वयञ्च

तत्र द्वयी गतिः तत्तद्रवान्तरव्यापाराणामेवाग्नेयसंबन्धित्वेन रूपेण क्रोडीकृत्याग्नेयोपकारव्यक्तिसमानजातीयोपकारैः सौर्यस्योपकर्तव्यमित्येवं-विधवाक्यकल्पनयोपकारा अतिदिश्यन्ते, तेष्वतिदिष्टेषु पश्चात्तज्जनकापे-क्षायां तज्जनकप्राकृतपदार्थानामतिदेशकल्पनमिति प्रथमः प्रकारः। इदमेव प्राभाकरमतम्।

द्वितीयस्तु प्रथममाकांक्षायोग्यतासत्तिभिरुपकारस्यातिदेशोऽपि उपकार-जनकापेक्षायामपि पृथक्पदार्थानामतिदेशकल्पने गौरवात् पदार्थविशिष्टो-पकाराणामेवातिदेशः—प्रकृतिवत् तत्तत्पदार्थजन्यांस्तत्तदुपकारान् विकृतौ कुर्यादिति। इदमेव पार्थसारथिमिश्रमतम्।
यथोक्तं दशमाद्ये।

'अपेक्षासत्तियोग्यत्वैरुपकारातिदेशनमि' शा०दी०भा०पृ० २२१ ति।

अतएव खण्डदेवाचार्यः नवमे आह 'प्रकृतौ निरूपितरूपाणामेव विकृतावतिदेशः' भा. दी. ३ भा. पृ. १३५ इति। अस्यायमाशयः—राण-कमते यद्रूपं यादृशप्रणाडीद्वारकापूर्वसाधनत्वं, उपकारपृष्ठभावेन तत्तत्पदा-र्थानां भिन्नाभिन्नस्यातिदेशकल्पने भट्टसोमेश्वरमते गौरवं स्यात्। पार्थ-सारथिमते तूपकारजनकपदार्थानामेक एवातिदेश इति लाघवम्। अतः तन्म-तमेव युक्तमित्याशयेनोक्तं 'निरूपितरूपाणामेवे'ति। एवञ्च यादृशोप-कारजनकत्वं प्रकृतौ क्लृप्तम्, तादृशोपकारविशिष्टानामेव पदार्थानामेकः एवातिदेश इति। अयमर्थो बहुस्थलेषूक्तः शास्त्रदीपिकायां। प्रकृतंमनुसरामः। तथा च प्राभाकरमते उपकारस्य, तज्जनकपदार्थानाञ्चातिदेशः,।

## एकस्यैवोपाधिभेदेन द्वैविध्यम्

अत्रेदं बोध्यम्—साध्यभूतस्य विध्यर्थानुष्ठानापेक्षैव प्रथमं जायते, न पुनस्तदनपेक्षा, अंगानामपेक्षा, ततश्च यद्यप्यंगानि प्रथममवमृश्यन्ते; तथापि तेषां तदानीमनपेक्षणमेव, पश्चादुपस्थितमप्यनुष्ठानमेवादौ स्वीकर-णीयम्। तस्मिन् स्वीकृते, पश्चात्तज्जनकांक्षायां अनुष्ठानजनकतया प्रकृतौ

प्रतिपन्नसंबन्धानामनुष्ठानेनैवोपस्थितानां पदार्थानां स्वीकरणं न केवलं विकृतौ, अपितु प्रकृतावपि अनुष्ठानापेक्ष एव संबन्धः। अतएवोक्तं-टीकाकारेण—'प्रकृतावपि अनुष्ठानापेक्ष एवांगैस्संबन्धः, अन्यथा संबन्ध-एव न स्यादि'ति। एवं सति औपदेशिक-कार्यगम्ययोश्शाब्दत्वाविशेषेणा-नयोः कस्को विशेष इति शंकनीयम्। उच्यते। उपदेशो हि विध्यर्थप्रति-पादको ग्रन्थसन्दर्भः, न विध्यर्थसापेक्ष उपदेशस्संभवति, तेन विध्यर्थ-सापेक्षात् शब्दात् यदेवावगम्यते, तदेवौपदेशिकं, यच्च कार्येणावगम्यते, यच्चोपदेशेन,तदुभयमपि शाब्दमेव भवति। उभयोः शाब्दत्वेऽपि अयं विभा-गोऽस्ति, किञ्चिच्चौपदेशिकं, किञ्चिच्च कार्यगम्यमिति।

विकृतौ यथा प्राकृतोपकारसंबन्धो भवति, पश्चात् तज्जनकत्वात् पदार्था अपि संबध्यन्त इति न कश्चिद्दोषः।

किञ्च यश्चायं पदार्थातिदेशः, स कार्यप्रमाणक नोपदेशप्रमेयः, पाठेन, विध्यर्थेन वाऽनुपस्थापितत्वात्। न हि विध्यर्थेन पदार्था उपस्थाप्यन्ते, किन्तूपकाराख्येन कार्येणोपदेशकार्यप्रमाणकेनाध्यायषट्केन। यथोक्तं टीका-कृता सप्तमाद्ये 'औपदेशिकी प्रतीतिर्विचारिता। इदानीं कार्यतो अधिगति-र्विचार्यते' इति। अत्र कार्यशब्देन करणोपकारादिकमभिप्रेतम्, न तु नियोगः-इति न प्रस्मर्तव्यम्। नियोगकार्ये गृह्यमाणे चतुर्थाध्यायचिन्ताऽपि द्वितीयषट्के स्यादिति।

अत्रेयं प्राभाकरसिद्धान्तमर्यादा। तथाहि—आकांक्षा-सन्निधि-योग्यताः अन्विताभिधानहेतवः, प्रथमं विधेः कथमिति करणोपकाराकांक्षा-जायते, प्राकृतश्चोपकारः प्रत्यक्षवचनेन, नाम्ना, चोदनालिंगेन च सन्नि-धाप्यते, योग्यश्चासाविति तदन्वितोविध्यर्थः स्वशब्देनाभिधीयते, साचोप-कारप्राप्तिः अतिदेशः, अन्यदीयस्याऽन्यत्र संबन्धात्। औपदेशिकी चोपदेश-प्रमेयत्वात्। यच्च साक्षाच्छब्देन विध्यर्थं प्रति उपादीयते, यच्च विध्यर्थेन-वाक्यप्रमेयेन, तत् सर्वमौपदेशिकमेव, उपकारश्च विध्यर्थेनोपस्थापनीय-एव प्रकृतिवत्। प्रकृतौ विध्यर्थ एवोपकारं कल्पयित्वोऽपस्थापयति, विकृतौ तु प्रकृतिक्लृप्तमेव परं विध्यर्थान्वितोपकारं विध्यर्थस्सन्निधापयतीति-विशेषनियमे चोदनालिंगादीनामेव व्यापारः।

किञ्च प्रत्यक्षवचनोपनेयः, नाम्नोपनेयश्च सुतरामौपदेशिकः, पठ्य-मानाक्षरसमर्पितत्वात्। चोदनालिंगोपनेयःसत्यां विधेराकांक्षायां बुद्धिस्थो भवति, न नान्यथेति, सोऽपि विध्यर्थोपनेयः इति। एवञ्चोपदिष्टत्व-

अतिदिष्टत्वञ्च न विरुद्धम्,उपदिष्टप्रमेयतयोपदिष्टत्वम्, अन्यदीयस्याऽन्यत्र संबन्धादतिदिष्टत्वम्। पुनश्च विधेरूपकारे लब्धे, तज्जनकाकांक्षायां प्रकृताविव पदार्थास्तेनैवोपकारेणैव तज्जन्येनोपस्थापिता अन्वयं गच्छन्ति, आकांक्षा-सन्निधि-योग्यतानामन्वयहेतूनां विद्यमानत्वात्। अन्वयश्च गुण-प्रधानभावमन्तरेण न संभवतीति, विध्यर्थः प्रधानभूतः, पदार्थाः गुणभूताः प्रतीयन्ते, तेन गुणभूतप्राकृतपदार्थान्वितो विध्यर्थस्स्वशब्देनाभिधीयते। तथा सति पदार्थानामपि अतिदेशस्सिद्धो भवति। सच अवहितेन मनसा ब्रह्म-विद्येवानुसन्धेय इति परमगहनोऽयं। एवं त्रिविधो बाधो निरूपितः।

## एकादशस्य प्रतिपाद्यो विषयः

एकादशाध्याये तन्त्रावापलक्षणं व्याख्यातं। अधुना द्वादशं प्रसंगलक्षणं व्याख्यास्यामः। तच्चैतत् वृत्तवर्तिष्यमाणानुकीर्तनं संबन्धकथनार्थमिति मतद्वयसाधारणम्। तत्र प्राभाकरमीमांसाका मन्यन्ते यदि प्रयोगवचनः-एकस्स्यात्, तर्हि प्रयोगचोदनाशेषभूता देश-काल-कर्तारो न भिद्यन्ते, ततश्च प्रयोगानुबन्धभूतानां तेषामभेदात् एक एव प्रयोगस्स्यात्, अगृह्यमाण-विशेषत्वात्। तथा च 'समे दर्शपूर्णमासाभ्यां यजेत, पौर्णमास्यां पौर्णमास्या-यजेत, 'दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः' यानि इति देश-काल-कर्तृणां शास्त्राणि तेषां योऽर्थः, तस्याविशेषेण प्रयाजादीनामंगानाम-नुष्ठानात् तन्त्रेण कार्यसिद्धिरुक्ता तथा च तन्त्रलक्षणेऽनुष्ठानाविशेषेण कार्यस्याविशेषस्साधितः। स च कर्त्राद्यभेदनिबन्धन एवेति। स चायं कार्या विशेषः तन्त्रलक्षणेन साधितः।

## द्वादशाध्यायस्य विषयः

प्रकृतमनुसरामः—तन्त्रलक्षणे अनुष्ठानाविशेषेण कार्याविशेषः साधितः, स च कार्याविशेषः देश-काल-दक्षिणा कर्त्राधिभेदनिबन्धन एव। कर्त्राद्यभेदात् अनुष्ठानाभेदः। अनुष्ठानाभेदात् कार्याभेदः इति, अयमर्थः टीकाकारेण प्रसाधितः।

स चायं कार्याविशेषः अङ्गकार्यतन्त्रता तन्त्रलक्षणेन साधिता, सति प्रसङ्गे परोद्देशानुष्ठितेनापि परोपकारलाभे निश्चेतव्ये हेतुतां प्रतिपद्यते-इति, अनयोः तन्त्रप्रसङ्गाध्याययोः हेतुहेतुमद्भावः।

उक्तार्थस्याऽयमत्र सङ्ग्रहः । पशुयागोद्देशेन अनुष्ठितानामपि प्रयाजादीनां अङ्गानां यत् अवान्तरकार्यमस्ति, तत् पशुपुरोडाशयोः द्वयोरपि साधारणं इति सिद्धे अङ्गावान्तरकार्यतन्त्रत्वे तन्त्रलक्षणेन परार्थं-अनुष्ठितैरपि पदार्थैः परस्य उपकारलक्षणकार्यसिद्धेरुदासीना प्रधानान्तरप्रयुक्तिर्भवतीति प्रसङ्गनिश्चयो जायत इति, तन्त्रस्य प्रसङ्गं प्रति हेतुभावः। दृष्टं हि परार्थानुष्ठितस्यापि परं प्रति उपकारत्वम्। तत्र भवन्ति श्लोकाः—

परोद्देशप्रवृत्तानामङ्गानां यत्परान् प्रति।
महोपकारसामर्थ्यं स प्रसङ्ग उदाहृतः ॥ १ ॥
अङ्गावान्तरकार्याणां तन्त्रता तस्य बोधिका।
हेतुता हेतुमत्ता च तेन तन्त्रप्रसङ्गयोः ॥ २ ॥
कर्तृत्वाद्यविशेषेण कर्त्रादीनां प्रसिद्ध्यति।
अनुष्ठानसकृद्भावः तेन कार्यस्य तन्त्रता ॥ ३ ॥
अनुष्ठानाविशेषेण तन्त्रे कर्त्राद्यभिन्नता।
तन्त्रमध्यनिपातेन प्रसङ्गे सा च सिध्यति ॥ ४ ॥

एवं च यथा प्रासादोद्देशेनापि कृतस्य प्रदीपस्य यदवान्तरकार्यं प्रभालक्षणं, तस्य साधारणत्वात् गमनकार्यजनकता राजमार्गेपि भवति, तथा पुरोडाशेपि प्रयाजादिना उपकारो भवतीति। प्रसंगः, तन्त्रिनिर्णयः, समुच्चयः, विकल्पश्चिवप्रस्यैवार्त्विज्यमित्यादिकं समानमेव भाट्टमतवदिति, प्राभाकरमेतन अध्यायार्थसंक्षेपः।



## शास्त्रदीपिकायां प्राभाकरमतनिर्देशस्थलानि

श्रीमानयं ग्रन्थकारः स्वेष्टदेवतां नमस्कृत्य, कर्तव्यमर्थं प्रतिजानीते· द्वितीयेन पद्येन । यथा—

न्यायाभासतमश्छन्नशास्त्रतत्त्वार्थदर्शिकां ।
कुमारिलमतेनाहं करिष्ये शास्त्रदीपिकां ।।

अत्र पूर्वार्धेन प्राभाकरोद्भावितैर्न्यायाभासरूपैस्तमोभिर्यच्छन्नं—मीमांसाशास्त्रं तादृशतमोनिराकरणेन मीमांसाशास्त्रतत्त्वार्थप्रदर्शनं प्रयोजनमुक्तं, 'करिष्ये शास्त्रदीपिकामि'ति कर्तव्यार्थप्रतिज्ञा, कुमारिलमतेनेत्यनेन, मतान्तरनिरासो ध्वनितः । एतेनेदं ज्ञायते यत् गरीयानभिनिवेशः कुमारिलभट्टमते, प्राभाकरमतोपरोधात् भट्टपादमतसंरक्षणगौरवं नाऽन्यस्य विना पार्थसारथिमिश्रेण । अतोऽयं ग्रन्थकारः पूर्वपक्षरूपेण प्राभाकरमतमुपन्यस्य, साग्रहं सधिक्कारञ्च खण्डयति, अतस्तन्मत निर्देशस्थलानि निर्दिश्यन्ते जिज्ञासूनामुपकाराय, निषेध्यबोधाद्धि निषेधबोध इति न्यायात् । तेषां निराकरणप्रकाराः ग्रन्थकृता ग्रन्थशरीर एव निवेशिता इति नोपन्यस्यन्ते ।

## शास्त्रदीपिकायां पूर्वपक्षरूपेणोद्धृतानां प्राभाकरमतानां निर्देशस्थलानि ।

१. जिज्ञासाधिकरणेऽध्यापनविधिविचारः ।

२. द्वितीयसूत्रे कार्यरूपो वेदार्थः, शब्दानामर्थासंस्पर्शितानिराकरणञ्च ।

३. वृत्तिकारग्रन्थस्य प्राभाकरमतेनाऽभिप्रायवर्णनम् ।

४. अनुभूतिः प्रमाणमिति प्राभाकरमतस्योपपादनम् ।

५. ज्ञानानां त्रिपुटीरूपत्वं, ज्ञानानां स्वप्रकाशत्वञ्च ।

६. अनुमानविषये प्राभाकरमतं ।

७. अनुमानं द्विविधमिति भाष्यसन्दर्भस्य प्राभाकरमतेन व्याख्यानम् ।

८. सप्रतिसाधनविषये प्राभाकरमतं ।

९. हेतोर्निश्चितत्व-सन्दिग्धत्वाभ्यां अनुमानार्थापत्त्योर्वैलक्षण्यकथनम् ।

१०. अनुपलब्धिप्रमाणविषये प्राभाकरमतं ।

११. जातिव्यक्तिविषये प्राभाकरमतं ।

१२. शब्दस्य गुणत्वम् ।

१३. पदान्येव वाक्यं, पदार्था एव वाक्यार्थः, अान्विताभिधान-विवेचनञ्च ।

## द्वितीयपादे ।

१४. विधिप्रामाण्यसिद्ध्यर्थमेवार्थवादविचारः ।

१५. विधिर्वाऽर्थवादो वेत्यनिर्णयेन [ अनध्यवसायेन ] पूर्वपक्षः-शालिकमते, भवनाथमतेन तु स्वतन्त्रसाध्यद्वयप्रतीतिमाश्रित्यानध्यवसायः प्रतिपादितः । उक्तञ्च तेन—'अत एव न गुणफलसंबन्धोऽयं, आख्यातद्वया-वगतसाध्यद्वयविरोधात्' इति ।

१६. हेतुवन्निगदाधिकरणं ।

१७. मन्त्रप्रामाण्यसिद्ध्यर्थमेव स्मृतिप्रामाण्यसमर्थनम् ।

१८. नित्यानुमेयवेदमूलत्वं स्मृतीनामित्युपपादनम् ।

१९. व्याकरणाधिकरणविचारः ।

२०. आकृत्यधिकरणं ।

२१. विधिप्रामाण्यसिद्ध्यर्थं होमस्य विषयत्वेनान्वयनिराकरणं, नामधेयत्वसमर्थनञ्च ।

२२. वाजपेयाधिकरणस्यानुपपत्तिः प्राभाकरमते ।

२३. भावार्थाधिकरणस्य विषयव्यवस्थानिर्देशः प्राभाकरमते ।

२४. अपूर्वस्य लिङभिधेयत्वं ।

२५. अनुबन्ध-साध्यभेदाभ्यां शास्त्रभेदनिरूपणं ।

२६. वार्तिककारोन्नीतप्रकृतिद्रव्यविधिर्न संभवति ।

२७. संस्कारवाक्यैस्सोमरसस्य प्राप्तिरिति प्राभाकरपक्षः ।

२८. चोदकमनादृत्य तद्धिताभिधेयस्य विशिष्टस्य द्रव्यस्य बहुत्वावग-मात् यागभेदः २-२-७ ।

२९. 'दध्नेन्द्रियकामस्यजुहुयादित्यत्र'विवरणकारोक्तो जुहोत्यन्वय-प्रकारोऽन्यः, निबन्धकारोक्तश्चान्यः ।

२०. गणाधिकारस्थले वाक्येन गुणविभक्तावारनरोरस्थितस्य कर्मंगः फलेविधानमिति प्राभाकरमतम् ।

## तृतीयेऽध्याये

२१. द्वितीयेन शास्त्रभेदे सिद्धे, तृतीये वैनियोगिकं शेषत्वं प्रतिपाद्यत इति ।

२२. 'शास्त्रान्तरविहितं शेषी'ति प्राभाकरग्रन्थस्य वाक्यान्तरविहितं शेषिभवतीति भवनाथ-वरदराजाभ्यां व्याख्यानं ।

२६. गुणकर्मणां साध्यभेदेन भेद इति साध्यभेदाभावान्न कर्मभेदः ३-१-६ ।

२७. साधिकारविधीनामेवेतिकर्तव्यताकांक्षा, नांगविधीनामिति ३-१-१० ।

२८, सन्निधानस्यैवासंबन्धिपदैर्व्यवधानं, न प्रकरणस्येति प्राभाकरमतं।

२९. 'यदाहवनीये जुहोती'ति अनारभ्यवाक्यस्य होमांगतया आहवनीयविधायकत्वमाश्रित्य प्रभाकरोन्वीतः सिद्धान्तप्रकारः ।

३०. वेदयतीति व्युत्पत्त्या वेदशब्दो यौगिकः न तु रूढः, ततश्चैकैकमेव वाक्यं वेदशब्दार्थ इति प्राभाकरमतं ।

३१. अवान्तरप्रकरणाभ्युपगमे तैरापादितस्य दोषजातस्य विवेचनं ।

१. अवान्तरप्रकरणानंगीकारेऽभिक्रमणाधिकरणमनर्थकं स्यात् ।

२. अवान्तरप्रकरणानंगीकारेसन्निधेर्दुर्बलत्वात्, असत्यपि विच्छेदे सामिधेनीनां दर्शपूर्णमासांगत्वं सिद्ध्यतीति, उपवीताधिकरणं व्यर्थं स्यात् ।

३. श्रौत विनियोगप्रस्तावेनाऽस्यासंगतिः । अवान्तरप्रकरणप्रसंगादेव तदनुवृत्त्यननुवृत्तिविचार इत्यपि बोध्यम् ।

४. अवान्तरप्रकरणाभ्युपगमे तैरुद्भावितदोषजातस्य समुद्धारः प्रकरणाधिकरणे, तुल्यस्सर्वेषामित्यधिकरणे च द्रष्टव्यः ।

३२. प्रकरणस्यारादुपकारकेष्वेव व्यापारः, सन्निपातिषु व्यापारो नास्तीति ।

३३. 'अथ यत् तत्र तत्रे'त्यादिभाष्यस्य न कस्य परिहारलेशः ३-३ ७ ।

३४. विधानविकल्पाभिधानं, न प्रयोगाभिप्रायमितिप्राभाकरमतम्, यागविषयैव कृतिः, न तु यागकरणिका स्वर्गकृतिः ।

३५. निबन्धनकारस्याभ्युपेत्यवादः, भक्षान्तरविधि विवरणकारस्य ।

३६. एकदेशिनान्तु अवगोरणस्य यातनाफलत्वं न सिद्धयेत्, नञर्थं पर्यवसायित्वात् प्रतिषेधविधेः ।

३७. अतो यत् केनचिदुक्तमपसुब्रह्मण्यावादिनो अपन्यायवादिनः इति ३-५-७ ।

३८. वचनाभावेऽपि कारणभूतस्य वषट्कारस्य प्राथम्यादेव वषट्कर्तुः प्रथमं भक्षणं भवति, इति प्रतिपादयितुमिदमधिकरणमिति ।

३९. ये तु अवान्तरप्रकरणं नेच्छन्ति, तेषां सूत्र-भाष्यविरोधः. यच्चाचिष्टप्रसजनं पितृयज्ञेऽपि तुल्यम् ३-६-७ ।

४०. सत्रेषु होत्रादयो न सन्ति, तदभावाच्च न हौत्रादेश्चोदकतः प्राप्तिः ३-८-१० ।

४ . 'प्रत्यक्षविधानादतिदिष्टं सिद्धमिति निबन्धनग्रन्थतो विरुद्धयते' इति. ९४३ ।

४२. यत् पुनर्भाष्ये श्रुत्यादिकीर्तनं ४-?-१ ।

४३. केचित्तु नियम एवात्र चिन्त्यत इत्याहुः ।

४४. अथवा मन्दधियामयं भ्रमो क्रमस्याभावार्थत्वेन अविधेय एव क्रम-इति ५-१-१ ।

४५. कर्तृ नियमः कस्मान्न भवति,

४६. रथकारस्येदमाधानं विधीयते ।

४७. ये तु नञर्थविषयस्य नियोगस्य, भक्षणप्रवृत्तस्य नियोज्यस्य च लब्धत्वात् न प्रत्यवायकल्पनाऽर्थवतीत्याहुः ६-२-५ ।

४८. तीर्थान्तरञ्च निराकृतमित्युपरम्यते ।

४९. अष्टमस्य चतुर्थे प्राभाकरैः करिष्यमाणातिदेशापवादार्थतया गुणविध्यादिविचार इति ।

५०. यस्यापूर्वस्यावघातोंऽगं, तदीयं साधनं द्वारमिति ९-१-१ ।

५१. ननूह-बाधयोर्न हेतुहेतुमत्ता ।

५२. यस्तु पदार्थाननुरक्तं तदुपलक्षितमुपकारस्य स्वरूपमतिदिश्य, तस्य जनकापेक्षायां पदार्थानामपिविकृत्यपूर्वेण तादर्थ्यादन्वयमिच्छति,

५३. ये त्वाहुः क्रमो नाम न कश्चित् गुणः पदार्थव्यतिरिक्तोऽस्ति, यस्य पृथक् बाध व्यवस्थापयामः, पदार्था एव वितताः प्रतीयन्ते, तेन केवलस्य क्रमस्य बाधासंभवात्, तद्बाधे पदार्थोऽपि बाधित इति,अवघातो न कर्तव्य-इत्येतन्निराकरणार्थमिदमधिकरणम् ।

५४. यद्यप्येकं वाक्यं, तथापि दक्षिणासंयोगात् सर्वनिवृत्तिरिति केचित् ।

५५. केचित्त्वाहुः—सत्यमर्थस्यैव देवतात्वं चोदनयोच्यते, तस्माच्चोदनाशब्दानियमः ।

५६. 'न तौ पशौ करोति' इत्यत्र विकल्पपरिहाराय पर्युदास इति केचित् । तत्र कश्चदाह अपूर्वताया एवार्थवादः दोतृवरणाभावे लाघवं स्यात् ।

नहि कार्याकार्यभेदाभेदमात्रचिन्ता प्रयोजनवती । तत्रापि प्रतिषेधपक्षे कुर्यादिति ।

५७. कश्चित्तु प्रयाजादिष्वपि, प्रयोजकत्वं विधेनं बाध्यते, सत्येव प्रयोजकत्वे कार्यस्याऽन्यार्थैरेव सिद्धेर्नानुष्ठानम् ।

एवञ्चाप्रयोजकाद्विशेषो भवति । इतरथा प्रसंगाप्रयोजकयोरविशेषस्स्यादित्याह । शा. दी. भा. ३ पृ. २६२ ।

५८. केचित्तु कृत्वाचिन्तामाहः—असत्यपि नामधेये 'गार्हपत्येहवीषि श्रपयती'त्यनारभ्यवादस्य सर्वार्थत्वादुपदेशत. प्राप्तः प्राजहितश्चोवकप्राप्तं शालामुखीयं बाधते । शास्त्रदीपिकायामुद्धृतानि स्थलानि संगृहीतानि ।

## प्राभाकरमतस्य विकासक्रमः

तत्र शास्त्रदीपिकाव्याख्यातुस्सर्वतोमुखसोमयाजिनस्सोमनाथदीक्षितस्य भवनाथवरदराजानुयायित्वमवगम्यते, शास्त्रदीपिकामूलव्याख्यानावसरे प्राभाकरास्त्वित्यादिना तन्मतमनुवदति, तत्खण्डनञ्च मूल एव विशद इति, तन्मतस्यानुवादोजिज्ञासूनां विदुषां, छात्राणाञ्चोपकाराय स्थालीपुलाकन्यायेन कानिचित् स्थलानि संक्षिप्य प्रदर्श्यन्ते । तेषु प्रथमं-यथा—तत्प्रख्याधिकरणम् शा. दी. ४६ । एतेन ये धात्वर्थस्य विषयतया, करणतया चान्वयं मन्यन्ते, ते निराकृता इति ।

इदञ्च मतं प्रभाकरमिश्रोपज्ञं शालिकनाथकृतमर्यादं भवनाथेन वरदराजेन च क्रमेण पल्लवितं पुष्पितं फलितञ्चेति । तन्मते विकासक्रमः

इत्यवधेयं विज्ञैः । तत्र प्राभाकरमीमांसकाः -- कार्यताज्ञानं प्रवृत्तिप्रति कारणं मित्यन्वय—व्यतिरेकाभ्यां सिद्धम् ।

तेन प्रवृत्तिहेतुभूतकार्याभिधानं लिङादीनां वृद्धव्यवहारे सिद्धम् । प्रवृत्तिहेतुत्वञ्च विलक्षणकार्यस्यैव, कार्यसामान्यज्ञाने प्रवृत्त्यदर्शनात् । एवञ्च विशेषतः कार्यप्रतिपत्त्यर्थमवच्छेदकापेक्षायां, धात्वर्थोऽवच्छेदकतया संबध्यते । यद्यपि धात्वर्थस्साक्षात् कार्यमवच्छेत्तुं न क्षमते, तथापि यागकृति-साध्यमपूर्वमित्येवं कृत्यवच्छेदद्वारा कार्यमपूर्वमवच्छेत्तुं शक्नोतीति, धात्वर्थोऽवच्छेदकत्वेन संबध्यते, अवच्छेदकत्वमेव विषयत्वमिति, धात्वर्थस्य यागादेर्लिङाद्यर्थे कार्ये प्रतिपत्त्यनुबन्धतया विषयत्वेनान्वयः । तथा कार्यं-कृतिसाध्यं, भाव्यमिति पर्यायः । तथा च भाव्यरूपोद्देशप्रवृत्ता या कृतिः, सा भावनेत्युच्यते । सा च क्रियात्वात् करणमन्तरेण अनुपपन्नेति, कृतिसाध्य लक्षणकार्यस्य स्वनिष्पत्त्यर्थं स्वसाधनार्थप्रवृत्तकृतिभावनामुखेन करणा-पेक्षायां धात्वर्थ एवोत्पत्त्यनुबन्धित्वेन करणतयाऽपि संबध्यते । परोद्देश प्रवृत्तकृतिव्याप्यत्वरूपकरणत्वे संभवति च अपूर्वोद्देशप्रवृत्तकृतिव्याप्यस्य धात्वर्थस्य करणत्वं ।

तस्माद्धात्वर्थस्य विषयतया करणतया चान्वय इति । अयञ्च विषयः त्रिषयकरणीयनाम्नि १२ प्रकरणे ४५ -४६ पर्यन्ते शालिकनाथेन निरूपितः । अस्मिन् प्रकरणे धात्वर्थ एव विषयः करणमिति प्राधानिकोविषयः । कार्या-भिधायिनामेव लिङादीनां भावनावाचित्वं, लङादिस्थलेत्वाख्यातस्य संख्या-मात्रवाचित्वम् । धात्वर्थः क्रिया इत्येते विषयाः प्रसंगादुपवर्णिता इति ध्येयम् ।

## औदुम्बराधिकरणे प्राभाकरमतस्यानुवादः

औदुम्बराधिकरणे पूर्वोत्तरपक्षौ प्राभाकरमीमांसकैरित्थमुपवर्णितौ, तथाहि --'औदुम्बरो यूपोभवती'ति यूपौदुम्बरत्वसंबन्धविधिः, ऊर्जंपशूना-प्नोतीति पशुदुम्बरसंबन्धविधिश्च प्रतीयत इति वाक्यभेदः प्रतिभाति । तथा 'ऊर्जं पशूनाप्नोतीत्यस्य स्तुतिपरत्वावलम्बनेन सस्तुतिकौदुम्बरता-विधेरेकवाक्यत्वञ्च प्रतिभाति । तयोश्च बलाबलानध्यवसानात् अप्रामाण्य-मिति पूर्वपक्षः । यथानियोगं विनियोग इति, एकवाक्यत्वस्य प्रबलत्वात् सस्तुतिकौदुम्बरताविधिरिति सिद्धान्त इति शालिकनाथमतं ।

भवनाथस्तु गुणाधिकारस्थले गुणकामसंबन्धः, गुणफलसंबन्धश्चेति संबन्धद्वयविधानमाश्रित्याऽनध्यवसायो नोपपादितः, अपितु 'औदुम्बरो-यूपोभवतीति स्वतन्त्रो विधिः प्रतीयते, तथा 'ऊर्जं पशूनाप्नोतीति उदुम्बर-

व्यापारविषयकः पशुकामनियोज्यक-स्वतन्त्र एव-विधिः साधीयान् भातीति, स्वतन्त्रसाध्यद्वयप्रतीतिमाश्रित्यानध्यवसायः प्रतिपादितः । यथोक्तं-तैः 'प्राएव न गुणफलसंबन्धोऽयं' आख्यातद्वयावगतस्वतन्त्रसाध्यद्वय-विरोधादिति नय० वि० पृ० ।

## इन्द्रियाकामाधिकरणे

निबन्धनकारस्य मतं—'दध्नेन्द्रियकामस्य जुहुयादि'त्यत्र दधिरूप-गुणविभक्ताकारोहोमश्शब्दतः प्रतीयते । ततश्चनिबन्धनमते शब्दबलात् गुणविभक्तत्वाकारेण होमस्य विषयत्वम् । प्रकृतनियोगे तु न गुणविभक्तत्वा-कारेण होमोविषयः, किन्तु स्वरूपेण । एवञ्च रूपभेदेन प्रकृतविषयप्रत्य-भिज्ञाभावात्, पूर्वनियोगान्नियोगान्तरमिन्द्रियकामवाक्ये प्रतीयत इति शब्दबलवादिनो निबन्धनकारस्य मतं ।

## विवरणकारस्यमतम्

विवरणकारस्य वस्तुबलवादित्वात्, शब्दतो गुणविभक्तहोमप्रतीतावपि न गुणविभक्ताकारेण नियोगविषयत्वम्, किन्तु वस्तुबलात् भावार्थरूप-होममात्रस्यैव । एवञ्च रूपभेदाभावेन प्रकृतविषयप्रत्यभिज्ञाबाधाभावादि-न्द्रियकामवाक्ये न नियोगान्तरं, किन्तु स एव नियोग इति विवरणकार-मतम् । तस्मात् होमसंबद्धस्य दध्नोविधिः, दधिसंबद्धस्य होमस्य वा विधि-रिति प्राभाकरमतमिति संक्षेपः ।

## आरादुपकारकेष्वेव प्रकरणस्य व्यापारः, न सन्निपातिष्विति प्राभाकरमतम् ।

प्राभाकरमीमांसकाः प्रकरणस्यारादुपकारष्वेवांगेषु व्यापारः, न सन्निपातिष्विति मन्यन्ते । अत्रेयं तन्मतमर्यादा—प्रकरणस्यारादुपकारकेष्वेव व्यापारः, प्रयाजादीनां करणेदमर्थ्यस्य प्रमाणान्तरेणालाभात् । अतः प्रकरणमेव तेषां विनियोजकम् । सन्निपातिषु सप्तमाद्यव्युत्पाद्यं ग्राहक-ग्रहणाख्यं प्रमाणं, तेनापूर्वार्थत्वम् । तच्च सर्वेषां पदार्थानां(ग्राहकेण प्रधाना-पूर्वेण ) प्रयोजनप्रयोजनिभावेनन्विताभिधानरूपं । तच्च ग्राहकत्वं न करणतयाऽवघातादीनां संभवति, तस्य स्ववाक्यगतकरणान्तरावरोधात् । ततः पारिशेष्यात् करणोपकारकत्वेनैव निर्वहतीति नियोग, एव तदन्वितः प्रतीयमानः करणोपकारकत्वं विना तदन्वयानुपपत्तेः, करणोपकारं कल्पयन्

करणेदमर्थ्यमाक्षिपति । तेनानुपपद्यमानावस्थानियोगापरनामकोपादानाख्यप्रमाणेन क्रत्वर्थत्वम् । तत्र च द्वारापेक्षायां यथायथं श्रुत्यादिभिस्त्रिभिः प्रमाणैर्व्रीह्यादिद्वारेदमर्थ्यञ्चावगम्यत इत्येवमर्थत्रयस्यान्यत एवाऽवगमेन प्रकरणस्य सन्निपातिषु व्यापारो नास्तीति । तन्मतस्थितिः । संक्षेपेणद्वित्राणि-स्थलानिप्रदर्शितानि । वैषम्यञ्च पट्टिकया विशदमेव ।

## द्वादशानामध्यायानां प्रतिपाद्यविषये भाट्ट-प्रभाकर प्रस्थानयोर्भेद-प्रदर्शिनी पट्टिका ।

### प्रथमेऽध्याये

| भाट्टप्रस्थाने | प्राभाकरप्रस्थाने |
|---|---|
| १—धर्मे यावन्ति प्रमाणानि सम्भाव्यन्ते, तेषां सर्वेषां कात्स्न्र्येन निरूपणम् । तत्र प्रथमे साक्षाद्विधिप्रामाण्यम्, द्वितीयेऽर्थवाद-मन्त्रयोः, तृतीये स्मृति-शिष्टाचारयोः, चतुर्थे नामधेयादिप्रामाण्यतिचार इति विवेकः । | १—चोदनाविध्यपरपर्यायशास्त्र-प्रामाण्यनिरूपणम्, तदर्थमेवार्थवाद-मन्त्र-स्मृति-शिष्टाचारनामधेयादि - विचारः । |

### द्वितीयेऽध्याये

| भाट्टप्रस्थाने | प्राभाकरप्रस्थाने |
|---|---|
| २—शब्दान्तरादिभिष्षड्भिः प्रमाणैः भावनापरपर्यायस्य कर्मणो-भेदनिरूपणम् । धात्वर्थभेदस्य, अपूर्वभेदस्य चानुषंगिकतया निरूपणमिति । | २—अनुबन्ध-निरपेक्षसाध्यभेदेन शास्त्रभेदनिरूपणम्, अनुबन्ध-भेदश्च संख्यां विहाय, अविशिष्टैः प्रमाणैरिति विशेषः । |

### तृतीयेऽध्याये

| भाट्टप्रस्थाने | प्राभाकरप्रस्थाने |
|---|---|
| ३—श्रुत्यादिप्रमाणषट्कसहकृतेन विनियोगविधिना शेष-शेषिभावनिरूपणम्, प्रकरणं द्विविधं-महाप्रकरणावन्तरप्रकरणभेदेन तेषां परस्परविरोधे प्राबल्यदौर्बल्य-विचारश्च । | ३—वैनयोगिकं शेषित्वं श्रुत्यादिभिः, अवान्तरप्रकरणं नास्ति । |

चतुर्थेऽध्याये

४—प्रयोज्यप्रयोजकभावविचारः क्रत्वर्थ-पुरुषार्थविचारमुखेन ।

४—उपादानाख्यं प्रमाणं विध्याक्षेपरूपविधिव्यापारात्मकम्-शब्दप्रमाणान्तर्गतम्, तस्योपादानाख्यस्य चातुर्थिकस्य शेषत्व-प्रयुक्त्यधिकारोत्पत्त्याख्यचतुष्टयं विषयः ।

पञ्चमेऽध्याये

५—श्रुत्यर्थपाठ-स्थानमुख्य-प्रवृत्त्याख्यैष्षड्भिः प्रमाणैः क्रमनिरूपणम् क्रमश्च पौर्वापर्यरूपः स च पदार्थविशेषणतयाविधेयः तेषां प्राबल्य-दौर्बल्यविचारश्च ।

५—श्रुत्यादिभिः प्रमाणं क्रमनिरूपणम्, परमयं विशेषः, शब्दशक्तिवादिनो विवरण-कारस्यमते, अर्थ .क्तिवादिनः निबन्धनकारस्य-मते च सोऽविधेय एवेति ।

षष्टेऽध्याये

६—अर्थीसमर्थो विद्वान् शास्त्रेणापर्युदस्तो यजेतेत्यनेकाधिकरण-साध्याधिकारनिरूपणम्, अन्यचत्र तदनुबन्धि क्वचिच्च चान्यत् पूर्वोक्तस्यापवादः ।

६—अधिकारनिरूपणं भाट्टमते अत्रायं विशेषः ।

रथकारकर्तृकमाधानमर्थकर्म, नाग्निसंस्कारार्थम्, अतोः विश्वजिन्यायेन कल्प्यफलम्, प्रभाकर-प्रस्थानन्तु रथका स्यक्रत्वधिकार-मङ्गीकरोति यथोक्तं टीकाकृता आहिताग्नितया च ज्योतिष्टोमादिष्वधिकारो द्रष्टव्यः' बृ. भा. ३

सप्तमेऽध्याये

७—सामान्यातिदेशः ।

७—प्राभाकरमीमांसकानां सर्वस्वभूतमन्विताभिधाननिरूपणपूर्वकं सामान्येनातिदेशः ।

अष्टमेऽध्याये

८ विशेषातिदेशः ।

८ - तथा ।

## नवमेऽध्याये

९—ऊहो मन्त्र-साम-संस्काराणाम् ।

९—मन्त्र-साम-संस्कारणामूह - निरूपणम् ।

## दशमेऽध्याये

१०—अर्थलोप-प्रत्याम्नान-प्रतिषेधैः उत्सर्गापवादाभ्यां बाधनिरूपणम्, बाध्यस्य पदार्थस्य अतिदेशतो विकृतौ न प्राप्तिः ।

१०—प्राकृतानां पदार्थानानिकृतावंगत्वमस्ति, परं द्वारलोपादिनाऽनुष्ठानं न भवति ।

## एकादशेऽध्याये

११—तन्त्रावापाभ्यामङ्गपरिमाणनिरूपणम् ।

११—तथैव ।

## द्वादशेऽध्याये

१२—प्रसंगनिरूपणं । अंगाननुष्ठानमिति प्रायोवादः, प्रसंगत्रैविध्यात् ।

१२—तथा

## विकल्पप्रयोजकविचारः

प्रसंगनिरूपणार्थं प्रवृत्ते द्वादशाध्याये प्रसङ्गस्वरूपम्, तन्त्रिनिर्णयः, समुच्चयः विकल्पश्चेत्येवमादिरूपेण सापवादः—प्रसङ्गः न्यरूपि । यद्यपि अधिकरणमालायाम् उपोद्घातप्रकरणे प्रमाणेत्यादि पद्यैः अध्यायार्थाः, विध्यर्थवादः इत्यादि श्लोकैः पादार्थाश्च संग्रहीताः । अनुक्तं अन्यतोग्राह्यं इति न्यायेन केचनविषयाः संक्षेपेण अत्र उपवर्णिताः, ये सम्प्रदायैकसमधिगम्या इति । 'एकार्थास्तु विकल्पेरन् समुच्चयेह्यावृत्तिः स्यात् प्रधानस्य' १२।३।१० इति सूत्रेण एकार्थत्वं विकल्पस्य प्रयोजकमित्युक्तम् । यथा 'व्रीहिभिर्यजेति' 'यवैर्यजेत' इति विधिभ्यां व्रीहियवयोः एकपुरोडाशनिष्पादकत्वेन एकार्थत्वद्विकल्पो युज्यते। पदसम्बन्धिकार्ये सामर्थ्यं प्रयोजकम्, तच्च एकार्थीभावलक्षणम्, व्यपेक्षालक्षणन्तु वाक्ये इति अयं विषयः 'समर्थः पदविधिः' इति सूत्रस्यभाष्येव्यक्तः । एकार्थत्वं विकल्पस्य प्रयोजकं इत्युक्तौ आग्नेयादीनामपि स्वर्गरूपैकफलसाधनत्वात् विकल्पः प्रसज्येत, तद्वारणाय

विकल्पलक्षणे निरपेक्षसाधनत्वं इति विषेशणं देयम्। आग्नेयादीनां एकफलार्थत्वेऽपि निरपेक्षसाधनत्वरूपविशेषणाभावाददोषः। किञ्च अस्मिन्पक्षे 'दण्डेन दीक्षयति' इत्यादिना विहितानां दण्डादीनां तृतीयाविभक्त्या निरपेक्षसाधनत्वावगमात् विकल्पः स्यात्, इष्टापत्तिरिति वक्तुं न शक्यते, पञ्चमे क्रमलक्षणे 'परेणावेदनात् दीक्षितः स्यात् सर्वैदीक्षासम्बन्धात्' ५।३।२९ इत्यधिकरणे दण्डादीनां समुच्चयः साधितोऽनुपपन्नः स्यात। अतएव पार्थसारथिमिश्रेण तन्त्ररत्ने समुच्चयप्रमाणाभावोऽपि विकल्पे कारणम् इत्यङ्गीकर्तव्यमित्युक्तम्। अतः समुच्चयबोधकप्रमाणाभावे सति एकार्थत्वं विकल्पप्रयोजकमिति पर्य्यवस्यति।

## अत्र न्यायसुधोक्तस्य अर्थस्य निरासः

'व्रीहयोनिरपेक्षा हि ज्ञायन्ते यागसाधनम्।
यवानाञ्चैवमतस्तेषां मिश्रत्वं नावकल्पते॥' इति।

विरोधाधिकरणवार्तिकन्यायसुधायाः परिशीलनेन निरपेक्षसाधनत्वं विकल्पप्रयोजकमिति अवगम्यते, तत् दण्डादिषु व्यभिचारि। तत्र तृतीयाविभक्त्या निरपेक्षसाधनत्वावगमात्। अतोऽयं ग्रन्थसन्दर्भः मिश्रताव्यावृत्तिद्वारा समुच्चयग्राहकप्रमाणाभावपरतया योजनीयः। एतेन दृष्टार्थत्वं अदृष्टार्थत्वं वा विकल्पप्रयोजकमिति केषाञ्चित् पक्षोनिरस्तः। दर्शपूर्णमासातिपातजन्यदोषनिर्घातार्थानां पथिकृत् वैश्वानरादीनां काम्यानामेकफलानां उद्भिच्चित्रादीनाञ्च विकल्पोनिरस्त इति वेदितव्यम्। एवञ्च समुच्चयग्राहकप्रमाणाभावे सति एकार्थत्वं विकल्पप्रयोजकमिति वेदितव्यम्।

## विकल्पे अष्टदोषप्रतिपादनम्

विकल्पो ह्यष्टदोषदुष्ट इति मीमांसकमतप्रसिद्धिर्वरीवर्ति। 'व्रीहिभिर्यजेत' इत्यत्र (१) प्रथमं व्रीह्यनुष्टानपक्षे यवशास्त्रस्य प्रतीतप्रामाण्यपरित्यागः, (२) अप्रतीताप्रामाण्यस्वीकारश्च। तथा प्रयोगान्तरे यवेषु उपादीयमानेषु यवशास्त्रे पूर्वं (३) त्यक्तप्रामाण्यस्य स्वीकारः, (४) प्राक् स्वीकृताप्रामाण्यपरित्यागश्चेति यवशास्त्रे चत्वारोदोषाः। द्वितीयप्रयोगे च यदा यवानुष्ठानं तदा (१) व्रीहि शास्त्रस्य त्यक्तस्य प्रतीतप्रामाण्यस्य पुनरुज्जीवनं, (२) अप्रतीतस्य अप्रामाण्यस्य त्यक्तस्य स्वीकारश्चेति द्वौ दोषौ। पुनस्तृतीयप्रयोगे, (३) व्रीहिषु उपादीयमानेषु स्वीकृताप्रामाण्यपरित्यागः; (४) परित्यक्तप्रामाण्यस्वीकारश्चेति द्वौ

दोषौ। एवं प्रयोगत्रयेण यवशास्त्रे चत्वारोदोषाः व्रीहि-शास्त्रेचत्वारः इति, अर्थात् व्रीह्यनुष्ठाने यवशास्त्रे द्वौ दोषौ, व्रीहिशास्त्रे द्वौ इति चत्वारो दोषाः। एवं यवानुष्ठानेऽपि व्रीहिशास्त्रे द्वौ दोषौ यवशास्त्रे च द्वौ इति चत्वारः। एवञ्चमिलित्वा अष्टोदोषाः सम्पद्यन्ते। यथोक्तं वार्तिके:—

'एवमेव अष्टदोषोऽपि यद्व्रीहि-यववाक्ययोः।
विकल्प आश्रितस्तत्र गतिरन्या न विद्यते॥'

( तन्त्रवार्तिके, पृष्ठ संख्या १२० ) इति।

अतएव न ह्येकार्थत्वमात्रं विकल्पहेतुः, किं तर्हि निरपेक्षैकोपकार-साधनत्वं इति तृतीयपरिच्छेदान्ते न्यायरत्नमालायामपि पार्थसारथिमिश्रो-वदति। तस्यापि पूर्वोक्त एवार्थे तात्पर्यं इति बोध्यम्। एवं अष्टदोषदुष्टो विकल्प इति।

## तत्र शंका।

अत्रेयमाशंका समुन्मिषति यत् प्रामाण्यपरित्यागो नाम प्रामाण्या-भावस्वीकार एव, अन्यस्य निर्वक्तुमशक्यत्वात्। तथा अप्रामाण्यस्वीकारोऽपि स एव। एवञ्च अपौरुषेये वेदे विपर्यासजनकत्वस्यासंभवेन अप्रामाण्य-स्वीकारः इत्यत्र अप्रामाण्यशास्त्रस्य प्रामाण्याभावपरत्वात्। एवञ्च आद्ययोदोषयोर्न वैलक्षण्यमिति।

## उपाधिभेदेन तयोर्वैलक्षण्यमिति समाधानेन-तन्निरासः।

अत्र समाधीयते—अप्रामाण्यं प्रामाण्याभावः। प्रामाण्यपरित्यागोऽपि-प्रामाण्याभाव इति, उभयत्रापि प्रामाण्याभावस्वीकारं एव पर्यवसितो-दोष इति फलति। तस्य दूषकत्वबीजं द्विविधं प्रामाण्ये प्रामाणस्य निर्दोष-त्वादेः सद्भावरूपं प्रामाण्याभावे प्रमाणस्य प्रामाण्यानुपलम्भस्य अभाव-रूपञ्चेति। तथा च भावप्रमाण सद्भावोपाधिकतया प्रथमोदोषः। अभाव-प्रमाणभावोपाधिकतया स एव दोष इति उपाधिभेदेन दोषद्वैविध्यं विवक्षितं। अतो न दोषः। तथा च वार्तिकं—

"प्रमाणं अप्रतीतं यत् उज्वलं तदपह्नुतं।
एकस्तावदयं दोषः स्यात्प्रमाणविपर्ययात्॥
तथा तदप्रमाणत्वं यदभावप्रमाणकं।
भावे सत्यप्यभावेन विनैव परिकल्प्यते॥'

वा. पृ. १४२ इति।

अस्यार्थः—अत्र प्रथमे पद्ये प्रमाणविपर्ययादित्यनेन प्रामाण्यसद्भावविषयक प्रामाण्याभावस्वीकारस्य दोषत्वं प्रादर्शि। द्वितीयपद्येन तु अभावप्रमाण सद्भावमूलकं प्रामाण्याभावस्वीकारस्य दोषत्वं उपवर्णितं। द्वितीय श्लोकस्यायमर्थः—यथा प्रामाण्य परित्यागो दोषः, तथा तदप्रमाणत्वमपि दोषः + यत्-यस्मात्कारणात् अभावप्रमाणकं प्रामाण्यानुपलब्धिरूपं अभावप्रमाणग्राह्यं, प्रामाण्याभावरूपमप्रमाणत्वं। भावे सत्यपि प्रामाण्योपलम्भरूपे भावे विद्यमानेऽपि तस्य अभावेन विनैव कल्प्यते, ततो हेतोर्द्वितीयो दोष इति सर्वमनवद्यम्।

## विकल्पभेदप्रदर्शनम्

प्रथमं तावद्विकल्पः त्रिविधः—वाचनिकः, न्यायगम्यः, ऐच्छिकश्चेति। 'रथन्तरं पृष्ठं भवति' 'बृहत्पृष्ठं भवति' इति। द्वितीय-तृतीयौ प्रसिद्धौ। पुनरपि द्विविधः अव्यवस्थित विकल्पः, व्यवस्थितविकल्पश्चेति। आद्यस्य उदाहरणं यथा—अग्निहोत्रे दध्यादिदशद्रव्यविकल्पः। एवं 'उदिते जुहोति' इति ऋग्वेदिनां। 'अनुदिते जुहोति' यजुर्वेदिनामिति। द्वितीयस्योदाहरणं 'व्रीहिभिर्यजेति 'यवैर्यजेति' इति। न्यायगम्य एव विकल्पः अष्टदोषदुष्टः अगत्या स्वीकृतः। ते च प्राङ्निरूपिताः इति।

## विधिनिरूपणम्

### मीमांसकानां परमं सर्वस्वं—

भाट्टानां प्राभाकराणां च मीमांसकानां परमं सर्वस्वं विधिरिति। तदेकवाक्यतयैव अर्थवादादीनां प्रामाण्यं अर्थवत्त्वञ्च विधिनाऽवेकवाक्यत्वात् इत्यादौ प्रसिद्धं। यथोक्तं—

'आम्नायान्तिमसीमनि स्फुरति यः सद्भावनागोचरः,
स्वे स्वे कर्मणि यः प्रशास्ति पुरुषं योग्याधिकारक्रमात्।
आदत्ते विविधोपकारमखिलैरङ्गैरशेषाङ्गिनां,
साक्षाद्विष्णुरिवैधते विधिरसौ नानावताराश्रयः॥' इति।

## विधेरवस्थाचतुष्टपनिरुपणम्

स च विधिरुत्पत्तिविनियोगप्रयोगाधिकारभेदात् चतस्रोऽवस्थाः अनुभवति। अयमर्थः सूत्र-भाष्य-वार्तिक-विधिविवेक-न्याय कणिकादि महा

निबन्धेषु विस्तरेण उत्पत्त्यादिचतुर्विधप्रमेयोपन्यासेन द्वितीयादिषष्ट-पर्यन्तस्याध्यायगणस्य अर्थः संकलितः । अत्रापि ग्रन्थशरीरे पार्थसारथिमिश्रेण कण्ठेहत्य विवेचितः ।

## अस्यैव प्रकारस्य अनन्तरकालिकेषु ग्रन्थेषु अनुसरणं

अस्यैव विधिचतुष्टयप्रकारनिरुपणस्य शास्त्रदीपिका– मयूख-मालिका-न्यायप्रकाशार्थसंग्रहपर्यन्तेषु ग्रन्थेषु अनुसरणं समर्थनञ्च दरीदृश्यते ।

## स्वरूपैक्येऽपि प्रमेयभेदेन विधीनां चतुर्विध्य प्रतिपादनम् ।

अत्रेदमवधेयं-अप्रवृत्तप्रवर्तनैकरसो विधिरिति विधेः स्वरूपं एकमेव, परन्तु अस्य प्रमेयं उत्पत्तिविनियोगप्रयोगाधिकारभेदेन चतुर्विधं । अप्रवृत्तप्रवर्तकस्वरूपस्य विधेः यदा तत्सिद्धर्थं कर्मस्वरूपपरत्वं भवति, तदा विध्यन्वयप्रतीतवशादेव तद्विशेषस्य धात्वर्थस्य यागादिकर्मणः प्रमाणान्तराप्राप्तिकल्पनेन उत्पादकत्वं सिद्धयति । अयमेवोत्पत्तिविधिः । अत एव न्यायप्रकाशादौ कर्मस्वरूपमात्रबोधको विधिः उत्पत्तिविधिरिति उत्पत्तिविधेर्लक्षणं उक्तं । तस्यायमाशयः—अत्र मात्रशब्दो भिन्नक्रमः, कर्मस्वरूपबोधकतामात्रमुत्पत्तिविधिरित्यर्थः । बोधस्य अनन्यसाध्यस्यैव फलत्वसंभवात् अज्ञातार्थबोकत्वं इति लभ्यते । एवञ्च प्रमाणान्तरेण-( प्रत्यक्षानुमानाभ्यां ) ज्ञातार्थाज्ञापकत्वं उत्पत्तिविधेर्लक्षणं पर्यवस्यति । जीवदेवस्तु उत्पत्तिः-प्राथमिकी प्रतीतिरिति उत्पत्तिशब्दार्थं वर्णयामास । तद्विषयस्य धात्वर्थस्य यागादिकर्मणः स्वर्गादिफलसाधनत्वं, फलवदुप कारकत्वं वा कल्प्यत इति विनियोजकत्वंसिद्धिः । विनियोगो नाम अङ्गत्वेन सम्बन्धः । अत एव अङ्गप्रधानसम्बन्धबोधको विधिर्विनियोग-विधिरिति । फलसाधने कर्मणि पुरुषस्याधिकारः—फलस्वाम्यं सिद्धयति इत्यधिकारोऽपि विधिप्रमेयमेव ।

अङ्गवाक्यैकतामापन्नः प्रधानविधिरेव प्रयोगविधिरित्युच्यते, स श्रौतः इत्यन्ये । कल्पित इत्यपरे मन्यन्ते, प्रयोगविधेः प्रत्यक्षस्य अदर्शनादिति । अत स्वरूपेण एकस्यापि विधे, प्रमेयचतुर्विध्यात् विधेश्चातुर्विध्यं इति युक्तमेव । 'अत एव अभियुक्ताः कथति 'विधिशब्दो हि प्रवर्तनैक सं विध्यात्मानं अभिदधानः तदन्वयानुपपत्यैव प्रमेय चतुष्टयं कल्पयति' इति । विशेषस्तु न्यायरत्नमालाभूमिकायां विशिष्य निरूपितः + यतो हि विधेः

महिमा परमगहन इति । सर्वत्रापि प्रतीयमाने अस्मिन् चतुष्टये ऐदंपर्यं-भिद्यते, ऐदंपर्यमुपपदविशेषसम्बन्धात् । क्वचिचतुष्टयपरता, यथा 'उद्भिदा यजेत पशुकामः' इति । उत्पत्त्यादीनामन्यतमस्य प्रमाणान्तरेण अलाभात्, क्वचित् फलपदसम्बन्धात्त्रिपरता, यथा 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति । 'अत्र सोमेन यजेत' इत्यनेन उत्पत्तेः लाभात् । क्वचित् द्विपरता । यथा दर्शपूर्णमासवाक्ये । उत्पत्ति-प्रयोगयोः यदाग्नेयादिवाक्यैः सिद्धेः, क्वचिदेकपरता । यथा 'अग्निहोत्रं जुहोति' इति । एतेषां परस्परमविनाभावात्, इतरे अंशाः प्रतीताः इति अविवक्षिताः, 'अनन्यलभ्यः शब्दार्थ' इति न्यायात् । अयं च न्यायः कर्त्रधिकरणसिद्धः । एवञ्च उपर्युक्तदिशा किं केन कथमिति अंशत्रयान्वितायां भावनायां अनुष्ठानयोग्यतया तत्र विधिः पुरुषं प्रवर्तयतीति प्रथमप्रतीतौ विधि भावनयोरन्वयः तदा पर्यवस्यति । इयमेवावस्था विधिप्रक्रमः विधिपर्यव-सायिनी इति पार्थसारथि मिश्रेण व्यवहृता । शाब्दी भावनातोऽपि आर्थी भावनायाः प्राधान्यं । अतः मीमांसकानां परमं सर्वस्वं आर्थीभावना एव । तस्या एव समग्रोऽपि प्रपञ्च इति ।

## प्राभाकरमतेन शास्त्रार्थसंग्रहः

प्राभाकरमते द्वादशानां अध्यायानां प्रतिपाद्यं प्रमेयजातं संक्षेपेण उपवर्णितं, तदीयः शास्त्रार्थसंक्षेप अधस्तात् प्रदर्श्यते । तथाहि– प्राभाकर-मीमांसकाः लिङादियुक्तेषु वाक्येषु नियोगः लिङादीनां वाच्योऽर्थः, तदेव अपूर्वं नियोगः इत्यादिशब्दैः प्राभाकरसंप्रदाये पर्यायत्वेन परिगृह्यते । कृत्युपहितमर्यादं हि कार्यं कृत्या व्याप्तं । अर्थात् कार्यवाचिनामेव लिङादि-शब्दानां कृतिवाचकत्वं; अन्यत्र लडादौ कालसंख्यादीनामेव बोधः, न तु कृतिः आख्यातार्थ इति । अयं विषयः क्षुण्ण एव न प्रस्मर्तव्यः । स एव वाक्यार्थः अर्थात् तदेव वाक्यार्थे शाब्दबोधापरपर्याये मुख्यविशेष्यतया भासते । 'सर्वं सर्वस्य कार्यं न भवति, अपितु कस्यचिदेव किञ्चिदेव कार्यं-भवति इति कार्यस्वरूपविवरणमुक्तं । यथा ज्ञानं आश्रयत्व-विषयत्वाभ्यां निरुप्यते, तथा नियोगापरपर्यायं कार्यमपि विषयनियोज्याभ्यां निरुप्यते इति–तन्मतस्थितिः । यथा 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजते' इत्यादौ धात्वर्थो यागः लिङर्थे कार्ये विषयतया अन्वेति । अतः स एव प्रतिपत्त्यनुबन्धः, विषयः इति चाभिधीयते । अपूर्वप्रतिपत्त्यपायतया विषयत्वम्, कार्योत्पत्तौ असा-धारणकारणत्वाच्च तस्यैव करणत्वं । स्वर्गकामपदञ्च न कर्तृपरं, न वा

साध्यपरं, अपितु नियोज्यपरं इति षष्ठाद्ये सम्प्रधारितोऽयं विषयः। तत्र स्वर्गकामपदसमभिव्याहारान्यथानुपपत्त्या कृत्यतिरिक्तं प्रमाणान्तरागोचरं अपूर्वं इति तदुपपत्तये नियोज्यपरमेव। नियोज्यः स उच्यते, यो: ममेदं कार्यमिति स्वसम्बन्धितया कार्यमवगच्छति। अतो ममेदं कार्यं इति प्रत्येता-नियोज्यः इत्यभिधीयते। तथा च शालिकाचार्यः—

'नियोज्यः स च कार्यं यः स्वकीयत्वेन बुध्यते' प्र. पं. वा. मा. ४३३ इति।

बोदधृतया अन्वयः—नियोज्य ।याऽन्वय इति। अयं प्रकारो लोकेऽपि प्रसिद्धः पुष्टिकामः क्षीरं पिबेदि'त्यादौ पुष्टिकामः क्षीरपानं मम कार्यं इत्यव-गच्छति। यद्यपि स्वर्गशब्दः सुखविशेषवाचित्वेन 'यन्नदुःखेन संभिन्नमि'त्यादि-अर्थवादप्रसिद्धः। स च देहान्तरभोग्यः, कामनायोगाच्च तस्य साध्यत्वं। नहि सिद्धे कामना भवति, तेन साध्य स्वर्गविशिष्टः नियोज्यः तदेव कार्यमव-गच्छति यत् स्वकाम्यसाधनं, तत्र कार्यमेव वाक्यार्थो मुख्यविशेष्यम्। अन्य नि पदानि तदन्वितमर्थं प्रतिपादयन्ति, सर्वपदानां कार्यान्वये व्युत्पत्तेः। एवञ्च स्वर्गकामनियोज्यकं यागविषयकं कार्यं इति तन्मते शाब्दबोधः।

यथोक्तं शालिकायां पञ्चिकाटीकायां—

'लोके कर्तृत्व [तत्] संबन्धः पुरुषः फलसाधनम्।
मानान्तरेण विज्ञाय कर्माधिकुरुते स्वयम्॥

ततोऽनुष्ठेयतां ज्ञात्वा स्वार्थं कर्मानुतिष्ठति।
नियोज्यत्वमतस्तत्र तेनांशेनोपयुज्यते॥

लोके तस्य प्रतीतस्य वेदेप्यवगतिः कुतः।
न हि व्युत्पत्तिरहितः शब्देनार्थोऽभिधीयते॥

सत्यमेवं लिङादीनां कार्यार्थत्वञ्च वर्णितम्।
न चानुष्ठानशून्यस्य कार्यत्वमुपपद्यते॥

अनुष्ठानावबोधाच्च कर्मण्यैश्वर्यबन्धनः।
ऐश्वर्यं च न यागादौ फलदर्शनसंभवः॥

ततः कार्यमकार्यं स्यात् ऐश्वर्येण विना नृणाम्।
न च कर्तृत्वमात्रेण कर्मण्यैश्वर्यसंभवः॥

ऐश्वर्येणैव कर्तृत्वं यावत्कर्मसु दृश्यते।
कार्ये बोद्धृतया तत्र कामी सम्बद्ध्यते यदि।
तदा कार्यफलप्राप्तिः कार्याधीनाऽवसीयते॥

न च क्षणापवृक्तेन कर्मणा शक्यते फलम् ।
कालान्तरे जनयितुं तस्मात् कार्यं ततोऽधिकम् ॥
तेन कार्येण सम्बन्धः साधनत्वेन कर्मणः ।
स्वकार्यसाधने कर्मणीश्वरः पुरुषस्ततः ॥
तथा च सति कर्मापि समासादितसाधकम् ।
लब्धानुष्ठानमित्येवं कार्यं कार्यत्वमृच्छति ॥
प्रवृत्तिबीजजातायाः कार्यव्युत्पत्तिवीरुधः ।
नियोज्यत्वं फलासङ्गि कुमुदं विकसत्यदः ॥
तेन व्युत्पत्तिविरहो न दोषायाऽत्र जायते ।
सिद्धो वेदे नियोज्योऽतः कार्ये बोद्धृतयाऽन्वितः ॥'

ऋ. पं. ५४-५५ इति ।

अतः कार्यात्मनि नियोगे बोद्धृतया यः सम्बद्धयते, स एव नियोज्यः, ततः अधिकारी, ततः कर्ता इति इमास्तिस्रो अवस्थाः पुरुषस्य क्रमेण भवन्ति—इति ।

## प्राभाकरमते पदार्थानां अन्वये विशेषकथनम् ।

तन्मते अन्वये परं अयं विशेषः, तथाहि—तत्तत्प्रकरणपठितानां पदार्थानां नानाप्रकारेणान्वयः । केषाञ्चित् करणतया । यथा'यजेत'इत्यादौ यागादेः । केषाञ्चिन्नियोज्यतया 'स्वर्गकामः पशुकामः' इत्यादेः । केषाञ्चित् इतिकर्त्तव्यतया, केषाञ्चिन्नामधेयतया, यथा उद्भिदादेः, केषाञ्चित् स्तावकतया, यथा अर्थवादानां, केषाञ्चित् अनुष्ठेयपदार्थस्मारकतया, यथा 'अग्नये त्वा जुष्टं निर्वपामि' इत्यादिमन्त्राणां । प्रगीतानां स्तोत्रमन्त्राणां, अप्रगीतानां शस्त्रमन्त्राणाञ्च गुणिनिष्ठगुणप्रकाशकतया अन्वयः । प्रैषमन्त्राणान्तु परप्रत्यायनार्थतया इति यथायोगं अन्वयो भवति । अतः कृत्स्नोवेदः कार्यतया प्रमाणं, अतो वेदार्थः कार्यरूपः इति टीकाकारेण 'चोदनालक्षणोऽर्थो-धर्मः' १-१-२ इति सूत्रे चोदनेति क्रियायाः प्रवर्तकवचनमाहुः; इति भाष्यव्याख्यानावसरे कार्येऽर्थे वेदस्य प्रामाण्यं दर्शयति' ( बृहती टीका पृष्ठ २० ) इति ।

## ग्राहकग्रहणस्वरूपवर्णनम्

तदेव स्वप्रकरण पठितंपदार्थजातं स्वशेषतया गृह्णन् ग्राहकमित्युच्यते। गृहीतं पदार्थवर्गं श्रुत्यादिभिः स्वातन्त्र्येण द्वारशेषतया विनियुञ्जानः विनियोजकमिति आख्यायते। स्वशेषतया गृहीतं पश्चात् द्वारशेषतया विनियुक्तं इतिकर्त्तव्यताजातं, करणञ्च अनुष्ठापयन् प्रयोजकमित्युच्यते। एवञ्च ग्राहकस्यैव अपूर्वस्य ग्राहकत्व-विनियोजकत्व-प्रयोजकत्वरूपाः तिस्रोऽवस्थाः क्रमेण, भवन्ति। प्रयोजकत्वञ्च काम्यज्योतिष्ठोमापूर्व-प्रयुक्त्या स्वविषयानुष्ठानसिद्धौ व्यवस्थितं दृश्यते। नित्यस्थले तु करणांशे, इतिकर्त्तव्यतांशे च प्रयोजकत्वं, अत एव कामाधिकारापूर्वस्य करणांशे न प्रयोजकत्वं, कामनावशादेव तत्र प्रवृत्तेः, अपितु इतिकर्त्तव्यतांशे इति। स च अन्वयः पदार्थवर्गं प्रति ग्राहकैदमर्थ्यरूपः, इदमेव ग्राहकग्रहणं इत्युच्यते। अस्यैव नामान्तरं अन्विताभिधानवाद इति। विधीयतामभ्यासो वाक्यार्थ-मातृकायाम्।

## सप्तमाद्यविचारः

अयमर्थः टीकाकारेण सप्तमाद्ये विवेचितः। सप्तमाद्ये एवं चिन्तितं- किं वेदविहिताः सर्वे क्रतुधर्माः सर्वत्र पारिप्लवा भवन्ति, किंवा प्रति-प्रकरणं व्यवतिष्ठन्त इति। यदि सर्वत्र सर्वे धर्माः पारिप्लवा भवेयुः, तर्हि सर्वेषामपि क्रतूनां व्यवस्थाभावेन क्रतुभेदो न स्यात्। अतः अधिकार-वाक्यैः प्रत्येकं विषय-नियोज्यसंघटितानि अधिकारापूर्वाणि अवगम्यन्ते। तेषाञ्च प्रत्येकं यागविषयकृतिसाध्यतया अवगतत्वात् विषयस्य च अभि-लषितफलकरणत्वपूर्वकत्वात् इतिकर्त्तव्यतासध्रीचीनस्य करणत्वात् प्रकरणपठितैरेव अङ्गैः इतिकर्त्तव्यतायाः अवगमात् प्रतिप्रकरणं धर्माः व्यवतिष्ठन्त इति।

तत्र च अयं क्रमः अधिकारवाक्यगतलिङ्पदेन प्रतीयमानमपूर्वं प्रकरणित्वेन प्रधानतया अवगम्यते। तच्च प्रकरणे ग्राहकं, विनियोजकं, प्रयोजकञ्चेति त्रिविधं, तत्र प्रकरणपठितान् पदार्थान् स्वीयभावेन गृह्णत् ग्राहकं, द्वारकार्ये विनियुञ्जानं सत् विनियोजकं, अनुष्ठापयत् सत् प्रयोजकं इत्येवं अधिकारविधेरेव ग्राहकत्वं प्रयोजकत्वञ्चेत्युक्तं। तत्र च आदौ सर्वेषा मपि पदार्थानां प्रातिपदिकमात्राभिहितानां अपूर्वेणैवान्वयः। तदेव च च अन्विताभिधानं ग्राहकग्रहणमिति च व्यवह्रियते प्राभाकरमीमांसकैः।

तत्र अधिकारविधेः प्राधान्येन प्रयोजनवत्त्वं, इतरपदार्थजातस्य तु उपसर्जनत्वेन अपूर्वीयत्वात् प्रयोजनित्वं, स एव प्रयोजनप्रयोजनिभावः। अनेन च अन्वयेन खलेकपोतन्यायः उदाह्रियते। यथा—गगने समुत्पतन् कपोतः खले अवशिष्टान् गृह्णन् स्वीयत्वेन अभिमन्यमानः खले निपतति तद्वदधिकारापूर्वमपि प्रकरणपठितान् पदार्थान् स्वीयत्वेन गृह्णाति इति प्रथमं तिरस्कृतविभक्तिकप्रातिपदिकार्थानामेवान्वयः। पश्चात्तु विभक्तिपर्यालोचनया यथायोग्यं द्वारकार्थान्वय इत्येवं सप्तमाद्ये सिद्धान्तितम्, अत एव पञ्चिकायां उक्तं—'सप्तमाद्ये अनवहितो भवानिति'ति। अतः इदमेवापूर्वं प्रयोजकं।

## क्वचिदवान्तरापूर्वस्यापि प्रयोजकत्वं

क्वचित अवान्तरापूर्वस्यापि प्रयोजकत्वमास्थीयते प्राभाकरैः। यथा—'प्रयाजादेः' आग्नेयोत्पत्त्यपूर्वं प्रति करणत्वेनैवान्वयात्, तस्यैव साक्षात्प्रयोजकत्वे संभवति द्वारद्वारितया प्रयोजकत्वकल्पनं न युज्यते। 'व्रीहिनवहन्ति, तण्डुलान् पिनष्टि' इति विहितयोरवहनन—पेषणयोः परमापूर्वं न प्रयोजकं, किन्तु आग्नेयाद्युत्पत्त्यपूर्वमेव। इत्थं नियोज्यान्वयवशात् लिङादीनामपूर्वपरत्वं अवोचि। स च अन्वयः प्रयोजकापूर्वस्यैव, अङ्गप्रधानोत्पत्त्यपूर्वाणां तच्छून्यानामेव अभिधानं अङ्गोत्पत्तिनियोगा अपि ग्राहकगृहीत प्रयाजादिविषयत्वात् अधिकारनियोगत एव लब्धस्वविषयानुष्ठानानां सिद्धयतीति, न तेषु नियोज्याभिधानम्। तथा प्रधानोत्पत्तिनियोगा अपि अधिकारनियोगाक्षिप्तविषयानुष्ठानेन अवाप्तसिद्धय इति, न तत्रापि नियोगापेक्षा। यथा अपूर्वप्रतीतौ नियोज्यः, एवं प्रतीत्यनुबन्धः विषयोऽपि। परन्त्वयं विशेषः नियोज्यान्वयः प्रायिकः। यथोक्तं प्रकरणपञ्चिकायां—'नियोज्यान्विताभिधानञ्च प्रायिकं अध्ययनाधानाङ्गप्रधानोत्पत्तिनियोगानां नियोज्यशून्यानां अभिधानाभ्युपगमात्' ( प्र. पं. पृष्ठ ४४१ ) इति। विषयान्वयस्तु नियत एव। अधिकारापूर्वप्रधानाङ्गोत्पत्त्यपूर्वाणां विषयनियतत्वात्, अतः प्रकृत्यर्थभूतः धात्वर्थ एव विषयत्वेन अन्वेति।

## प्राभाकरमीमांसकानां शास्त्रार्थान्वयप्रकारस्य सामान्यतः उक्तस्य विशेषरूपेण कथनम्

तथाहि—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजते' इति प्रकृत्य दर्शपूर्णमासरूपकालयोगि आग्नेयादियागषट्कं विहितं। तथा 'समिधो यजति'

'तनूनपातं यजति' इत्यादि, एवं 'व्रीहीन् प्रोक्षति' इत्यादि सन्निपत्योपकारक-आराद्उपकारकपदार्थजातं पठितं। तत्र दर्शपूर्णमासवाक्यमेव विधिवाक्यम्; अथवा अधिकारवाक्यम्, विध्युद्देशवाक्यं इति च व्यपदिश्यते प्राभाकरमीमांसकैः; 'भूतिकाम इत्येवमन्तो विध्युद्देशः' पृ० २१ इति अर्थवादाधिकरणे भाष्योक्तेः। तस्मिन्नेव वाक्ये विषयनियोज्यान्वितंनियोगापरपर्यायं यागादिक्रियातिरिक्तं अपूर्वनामकं कार्यं प्रतीयते, तदेव कृत्युद्देश्यतया कृतिसाध्यत्वेन च प्रधानं-अधिकारापूर्वं। इतरेष्वपि वाक्येषु साधिकारविधेः सन्निहितत्वेन प्रत्यभिज्ञानात्। तदेवापूर्वं तत्तद्विधिप्रत्ययेन अनूद्यते। तत्र आग्नेयादीनां षण्णां यागानां उत्पत्तिवाक्येषु कालसम्बन्धात् दर्शपूर्णमासपदवाच्यत्वं। दर्शपूर्णमासाभ्यां इति द्विवचनञ्च 'य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वान् अमावास्यां यजते 'इति विद्वद्वाक्यद्वयेन समुदायद्वयस्यानुवादात् समुदायगतं द्वित्वमादाय उपपद्यते। 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायां अमावास्याया यजेत' इति वाक्यद्वयञ्च पौर्णमासीकालकर्त्तव्यानां त्रयाणां यागानां, अमावास्याकालकर्त्तव्यानाञ्च त्रयाणां यागानां सहप्रयोगविधानेन अर्थवदिति एकादशे क्षुण्णं। एवञ्च विषयनियोज्यघटिते स्वयं प्रयोजनभूते अधिकारापूर्वे प्रतिपन्ने सति तत्सन्निधिपठितस्य आराद्उपकारक-सन्निपत्योपकारकपदार्थसमुदायस्य स्वयमप्रयोजनतया प्रयोजनाकाङ्क्षायां सत्यां प्रयोजनभूतेन परमापूर्वेण अधिकारापूर्वापरपर्यायेण अन्वययोग्यत्वे सति 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजते' इति अधिकारवाक्यगतः लिङ्प्रत्ययः सकलपदार्थान्वितं स्वार्थमभिधत्ते।

स चान्वयः पदार्थवर्गं प्रति ग्राहकैदमर्थ्यरूपः, लोकेऽपि प्रयोजन-प्रयोजनिभावेनान्वयः प्रसिद्धः। इदमेव ग्राहकग्रहणमिति व्यपदिश्यते। अस्यैव नामान्तरं अन्विताभिधानवाद इति। अयं विषयः सप्तमाद्ये विशदः इति उक्तपूर्वं। तत्र सन्निपत्योपकारकविधायकवाक्येषु विधिप्रत्ययेन अधिकारापूर्वे अनूदिते सति अवघात-प्रोक्षणादिकं, तदन्वितं स्वार्थं अभिधत्त इति अन्योन्यान्विताभिधानं। आराद्उपकारकाङ्गविधायकवाक्येषु अधिकारापूर्वान्वितं स्वार्थाभिधानं न संभवति, साधिकारविधिसन्निधौ प्रयाजादिवाक्यानि पठितानि, तानि च सहसा स्वस्वविषयं नियोगान्तरम-भिधातुं नेशते, अधिकारापूर्वस्य अनुवादशङ्काकुण्ठितत्वात्। किन्तु द्रव्य-देवताविशिष्टं यागस्वरूपमेव उपपादयन्ति। तत्र लिङ्शब्दः तदन्वितं स्वार्थं अभिधत्ते, प्रयाजादीनां क्षणिकत्वेन विनश्वरतया सम्भूय उपकारकत्वसिद्धये अवान्तरापूर्वाणि अभ्युपगम्यन्ते। तत्र योऽसौ लिङादिशब्दः प्रथमं अनूद्यमा-

नार्थतया शंकित आसीत्, स इदानीं परमापूर्वाङ्गतयैव नियोगान्तरं अभिधत्ते, अन्यथा विषयनियोगविरोधापत्तेः। अभिहिते च तस्मिन् प्रयाजादिवाक्यानि स्वार्थबोधकानि भवन्ति, न तु परमापूर्वान्वितस्वार्थबोधकानि। एवञ्च ग्राहकग्रहणाविशेषेऽपि सन्निपातिषु अन्विताभिधानं उपपद्यते, आरादुपकारकवाक्येषु नेति तन्मतस्थितिः।

इदञ्च ग्राहकग्रहणं खले कपोतन्यायेन अन्योन्यान्वितैः कृत्स्नपदार्थैः सह अपर्यायेण भवति। एवञ्च सकलपदार्थविशेषिते प्रयोजनभूते ग्राहके प्रतीते सति तस्य स्वतःसाध्यतया करणाकांक्षायां विषयभूतानामेव आग्नेयादीनां करणत्वेन अन्वयो भवति। इत्थं करणान्वितं प्रधानापूर्वं इतिकर्त्तव्यतां अपेक्षमाणं स्वयमेव उभयविधं पदार्थवर्गं करणशेषतया विनियुंक्ते। इदमेव प्राभाकरमीमांसकैः करणैदमर्थ्यमिति व्यपदिश्यते। एतच्च ग्राहकैदमर्थ्यनिर्वाहाय भवति। तदनन्तरञ्च करणैदमर्थ्यनिर्वाहाय करणोपकारं अपेक्षमाणं करणशरीरनिर्वर्तकं सन्निपत्योपकारकपदार्थवर्गं श्रुत्यादिविहितं तत्तद्द्वारशेषतया विनियुङ्क्ते। विनियुञ्जानमपि तत्प्रधानापूर्वभेदनिबन्धनं करणभेदमाश्रित्यैव तत्तत्कारकगतातिशयाधानद्वारेण करणशरीरनिर्वर्तकं भवति। तत्वञ्च सन्निपातित्वं इति मन्तव्यम्। तत्तत्कारकगतातिशय एव अवान्तरव्यापारः। तथा प्रकरणमात्रसहायः प्रयाजादीन् साक्षात्करणतया विनियुङ्क्ते, विनियुञ्जानोऽपि कृत्स्नकरणशेषतया अगृह्यमाणविशेषत्वात्, अवान्तरापूर्वाण्येव करणोपकारः, स एव तज्जन्यः करणोपकारः। इत्थं करणैदमर्थ्यनिर्वाहः ग्राहकैदमर्थ्यनिर्वाहश्च भवति। अवान्तरापूर्वकरणोपकारकत्वमेव आरादुपकारकत्वमिति तत्त्वं। अनेन प्रकारेण सन्निपत्योपकारकाणां करणैदमर्थ्यनिर्वाहो भवति। प्रयाजादीनां समुच्चयेनान्वयः, तन्त्रेणानुष्ठानञ्च। अखण्डोपकारस्तु उभयविधाङ्गनिष्पाद्यः।

## विशेषकथनं

किञ्च अयं विशेषः—प्राभाकरमीमांसकानां मते प्रधानान्वयपूर्वकः द्वारान्वय इति। साक्षात्परम्परया वा कृत्स्नस्य पदार्थवर्गस्य द्वारान्वयपूर्वकः प्रधानान्वयः भाट्टनये इति, परमगभीरेयं सिद्धान्तसरणिः। तथा च दण्डचक्रादिन्याये प्रधानान्वयपूर्वकः कृत्स्नस्यापि पदार्थवर्गस्य द्वारान्वयः। एवञ्च आग्नेयाग्निषोमीययोः उत्पत्तिशिष्टपुरोडाशावरोधात्। व्रीहिणां न साक्षात्करणत्वं, किन्तु प्रकृतित्वमेव, 'निरुढं प्रति अनिरुढस्य शेषता' इति

न्यायात्। व्रीहिणां प्रकृतितया अन्वये अवहननादीनां द्वारद्वारिभावेनान्वयः। इत्थं यथाविनियोगं सकलपदार्थान्वितं ग्राहकत्व-प्रयोजकत्वावस्थमधिकारापूर्वमेव शास्त्रप्रमेयं इति प्राभाकरमतेन शास्त्रार्थस्य संक्षेपः।

## भाट्टमतेन शास्त्रार्थस्य संक्षेपेण वर्णनम्

भाट्टमीमांसकास्तु भावनैव वाक्यार्थं इति वर्णयन्ति। तेषामयं भावः। तथाहि भाट्टमीसांसकमते सर्वेषु वाक्येषु कारकविशिष्टरूपेण भावनैव वाक्यार्थः शास्त्रप्रमेयमित्यभ्युपगम्यते —

'भावनैव हि वाक्यार्थः स्वकारकविशेषिता' 'इति' अर्थैकत्वात् एकं 'वाक्यं' २-१-४६ इति एकवाक्यत्वलक्षणाधिकरणे उक्तं। तद्भूताधिकरणे च उक्तं—

'भावनैव हि वाक्यार्थः सर्वत्राख्यातवत्तया।
अनेकगुणजात्यादिकारकार्थानुरञ्जिता ॥' इति।

अस्यायमर्थः—वाक्यप्रयोज्यशाब्दबोधमुख्यविशेष्यं वाक्यार्थः। आख्यातवत्तया—आख्यातसामान्यप्रतिपाद्यत्वात्, 'अनेकगुणजात्यादि' इत्यनेन गुणादीनां प्रकारतया, भावनायाः मुख्यविशेष्यत्वेन वाक्यार्थत्वं प्रतिपादयन्ति। अतः भेदः संसर्गो वा न वाक्यार्थः, अनेकार्थत्वप्रसङ्गात्। अत एवोक्तं भाष्ये —'भेदः संसर्गो वा वाक्यार्थ इति यद्युच्यते, तथापि एकार्थता न स्यात्' बहुपदेषु भेदानां संसर्गाणाञ्च बहुत्वादिति।

अस्य भाष्यस्य अभिप्रायः वार्तिके इत्थं विवृतोऽस्ति। तथाहि-व्यक्ति पदार्थपक्षे सर्वासां व्यक्तीनां गवादिपदेनैव उपात्तत्वात्। तद्विशेषशब्दैः शुक्लादिभिः कृष्णादिव्यवच्छेदः कर्त्तव्यः, तत्संसर्गः पदार्थान्तर्गतत्वात् न वाक्यार्थो भवति। तदुपसर्जनः तेषां भेदो गृह्यते। स च यथा शुक्लशब्देन गोशब्दस्य कृष्णादिभ्यो भिद्यमानत्वाद्भवति। एवं शुक्लशब्दस्य गोशब्देन अश्वादिभ्यो व्यावर्तितस्य भवति व्यवच्छेद्यमानत्वात् नास्ति एकवाक्यत्वे प्रमाणं। भेदसामान्यग्रहणे च सर्ववाक्यार्थैकत्वप्रसङ्गः इति।

## आकृतिपदार्थपक्षे दूषणं

आकृतिपदार्थत्वपक्षे तु शुक्लत्व-गोत्वयोः स्वरूपेणाभिहितयोः सन्निधानात् इतरेतरानुषङ्गात् अर्थसिद्धो भेदः, न तु वाक्यार्थः।

स च एको गोत्वे शुक्लत्वसंसर्गः, शुक्लत्वे च गोत्वसंसर्गः सामस्त्येन एक-व्यक्त्युपसंहारात् उपलभ्यत इति नाना। यद्यपि कथञ्चित् द्विपदे स एव उभयत्रापि संसर्ग इति एकत्वं गम्यते, तथापि बहुपदे येन प्रदेशेन पदद्वयं संसृज्यते, तेन तेन तत्संसर्गरूपोपलब्धेः अनेकत्वं इति। तस्मात् न भेदः संसर्गो वा वाक्यार्थः, अपितु भावनैव वाक्यार्थ इति। सा च भावना सर्वैः पदैः कारकविशिष्टत्वेन लक्ष्यते, एकैककारकविशिष्टत्वेन तत्तत्कारक-पदैः, क्रियापदेन तु सर्वकारकविशिष्टत्वेनेति इति विशेषः सम्प्रदायैकै-समधिगम्यः।

## भावनायाः द्वैविध्यं।

सा च भावना द्विविधा शाब्दी, आर्थी चेति।

'अभिधाभावनामाहुरन्यामेव लिङादयः।
अर्थात्मभावना त्वन्या सर्वाख्यातस्य गोचरः॥'

(तं० वा० पृ० ३७८) इति

प्रवर्तना विध्यर्थः, सा च इष्टसाधनत्वेन इति 'न्यायविदां तु इदं मतं' इत्यादिना न्यायरत्नमालायां विध्यर्थः उपवर्णितः। तत्र 'पुंसो नेष्टाभ्यु-पायत्वात्' इति विधिविवेकवाक्यं उद्धृतं, समर्थितञ्च। अतः अभिधा-व्यापार एव विध्यर्थः। स च शब्दस्येत्यङ्गीक्रियते, तथा च स्वर्गकामाधि-करणस्थवाक्यसंदर्भः—'कस्य पुनरसौ प्रवर्तनारूपो व्यापारः? शब्दस्येति-ब्रूमः, तस्य सन्निहितत्वात् अन्यस्य च अप्रतीतेः। यद्यपि च शब्दस्य अचेतनत्वात् आज्ञादिव्यापारासंभवः, तथापि योऽस्य व्यापारः संभवति; तस्यैव यथा प्रवर्तनारूपत्वं संपद्यते, तथा यतितव्यम्। अंशत्रयविशिष्ठ-भावनाप्रतिपादनञ्च अस्य व्यापारः। तत्र यदि भाव्यांशे पुरुषार्थ उपनीयते, ततः तत्प्रतिपादनम् प्रवृत्तिहेतुर्भवति, नान्यथा। तेन शब्दकर्तृकस्य अर्थ-प्रतिपादनरूपस्य व्यापारस्य प्रवर्तनारूपत्वं सम्पादयितुं तद्विषयभूतायाः भावनायाः पुरुषार्थभाव्यकत्वं निश्चीयते 'शा. दी. भा. ३ पृ. २ इति। अस्य च प्रवृत्तिफलता प्रवर्तनारूपता च अर्थप्रतिपत्त्यैव कल्पयितुं न शक्या-इति अनन्यलभ्यत्वात्, अभिधान्तरविलक्षणां लिङः शक्तिं कल्पयति। एवं-विधविध्यवरुद्धा च भावना पुरुषार्थसाधनतया निश्चीयते। न हि अपुरुषार्थफलस्य व्यापारस्य प्रवर्तनारूपविध्यन्वयः संभवति। प्रेक्षापूर्व-

कारिणां निष्फले प्रवर्तयितुं अशक्यत्वात् । तदेवंविधं अभिधाव्यापारमेव प्रवर्तनारूपेण अभिदधाना लिङादयः तद्बलादेव फलसाधनत्वं बोधयन्ति ।

## भावनाया अंशत्रयवैशिष्ठ्यं

अतः तत्र विधिः भावनायां पुरुषं नियुङ्क्ते, व्यापारे पुरुषः कर्तृत्वेन नियोज्यत इति । यद्यपि विधिः अन्यैः असंस्पृष्टः शुद्धां भावनां स्पृशति, तथापि शुद्धायाः भावनायाः विधातुमशक्यत्वात् न तन्मात्रे विश्राम्यति । यथा आकांक्षा सम्बन्धकारणं । एवं योग्यताऽपि सम्बन्धकारणमिति सर्वसंप्रतिपन्नं । न च अंशत्रयापरिपूर्णा आर्थी भावना च तेन प्रवर्तनात्मक विध्यन्वययोग्या भवितुमर्हति, तस्याः प्रत्यासन्नत्वात् । भावनया अन्वयेन भविष्यमिति सामान्यतः सम्बन्धः प्रतीयते । इयं च अवस्था विधिसंस्पर्शः, विधिप्रक्रमः इति चास्मिन् शास्त्रे व्यवह्रियते । एवञ्च एकप्रत्ययोपादानेन विधिभावनयोः अन्वयावगमेऽपि विधिः अयोग्यत्वात् भावनां विधातुं न शक्नोति किमाद्याकांक्षात्रयविशिष्टा ( किं केन कथं इति ) यावन्न भवति, तावत् प्रयोगयोग्या न भवति । यथा लोके प्रणीतबालात्मको वरः तावद् विलम्बमानः प्रसारितहस्त आस्ते यावत्सर्वाङ्गसुन्दरीव प्रयोगयोग्या भावना भवति । अयमर्थः वार्तिके निरूपितः—

'विधि—भावनयोः एकप्रत्ययग्राह्यताकृतः ।
धात्वर्थात् प्रथमं तावत् सम्बन्धोऽध्यवसीयते ।' इति ॥

'यद्यप्यन्यैरसंस्पृष्टां विधिः स्पृशति भावनां ।
तथाप्यशक्तितो नाऽसौ तन्मात्रे पर्यवस्यति ॥

अनुष्ठेये हि विषये विधिः पुंसां प्रवर्तकः ।
अंशत्रयेण चापूर्णा नानुतिष्ठति भावनां ॥

तस्मात्प्रक्रान्तरूपोऽपि विधिस्तावत प्रतीक्षते ।
यावत् योग्यत्वमापन्ना भावनान्यानपेक्षणी ॥'

( श्लोक वार्तिक पृष्ठ ६२१ ) इति ॥

## आर्थभावनाया आख्यातसामान्यवाचित्वं

अत एव भावार्थाधिकरणशास्त्रदीपिकायां पुरुषधर्मप्रयोजकव्यापाररूप एव इत्याह । सा च किं करोति ? पचति, पाकं करोति इति च करोतिसामानाधिकरणात् सर्वाख्यातवाच्या । करोतेः व्यापारसामान्य—

वाचित्वात्। करोतिश्च किञ्चिदुत्पाद्यवस्त्वन्तरविषयं प्रयोजकव्यापार-मेव आह। तस्याश्च पूर्वापरीभूतं सर्वकारकान्वययोग्यं क्रियारूपं आख्याते-नैवोच्यते इति अनाख्येयोऽन्येन। सा च चेतनप्रवर्तनात्मकविध्यवरुद्धा पुरुषार्थरूपं साध्यं विना विधिर्नोपपद्यते, अतः पुरुषार्थरूपं सा भाव्यं-लभमाना अनिर्ज्ञातकरणत्वात् अनिर्ज्ञातेतिकर्तव्यताकत्वाच्च स्वयं शास्त्रीयं सत् शास्त्रीय एव करणेतिकर्तव्यते परिगृह्णाति। एतामेव भावनां साक्षाद्विषयीकुरुतो विधि-निषेधौ, तद्वारा तु तद्विशेषणानि कारकाणि। सैव अर्थयत इति अर्थः—फलकामः पुरुषः; तद्धर्मत्वात् अर्थ-भावना इत्युच्यते। सैव वाक्यार्थे मुख्यविशेष्यतया भासते। सा हि भावना आख्यातेन सामान्यरूपेण उक्ताऽपि वाक्यान्तरोपात्तं प्रकरणाधीतं प्राच्यो-दीच्याङ्गजातं अपेक्षते। प्रकृतिवद्भावलभ्यमपि याचते, अर्थसामर्थ्यगम्यमपि याचते। अर्थसामर्थ्यगम्यमपि स्पृहयति इति अनन्तप्रकार एषः उपदेशाति देशात्मकस्य शब्दप्रमाणस्य महिमा। अयमेव वाक्यार्थः एकयैव बुद्धया अनेकजाति-द्रव्य-गुण-क्रियाद्यङ्गकल्माषितशरीरः सकलाङ्गपरिपूरित-भावनातत्त्वविषयः प्रतिभासते। तत्र पदज्ञानप्रभृति आनिराकांक्ष वाक्यार्थपरिच्छेदमेकैव शाब्दी प्रमितिः। अत एव अयं ग्रन्थकार तस्माद्वक्तव्यं भावनारूपं किमिति? अत्रोच्यते इत्यादिना आख्यातसामान्यवाच्यं व्यापारसामान्यरूपं अन्योत्पादनानुकूलरूपं अभिधीयत इत्याह।

'धात्वर्थव्यतिरेकेण यद्यप्येषा न लक्ष्यते।
तथापि सर्वसामान्यरूपेण अन्याऽवगम्यते॥' तं. वा. पृ ३४९ इति॥

इयं च कारिका भावनाविवेके आचार्य मण्डनेन विवृता—

'कथ्यमानाद्रूपभेदात् द्विधा धात्वर्थसंगतिः।
अन्योत्पादानुकूलात्मा भावना न प्रदुष्यति॥' भा. वि. पृ. ३९ इति।

## श्लोकद्वयस्य व्याख्यानं

इदं श्लोकद्वयं स्वयं ग्रन्थकृता व्याख्यातं—एतदुक्तं भवतीत्यादिना। तथाहि—सत्यं न धात्वर्थातिरिक्ता भावना, धात्वर्थानामेव द्वे रूपे पाको-यागः प्रयत्नः संकल्पः चलनं क्लेदनं अभिधानं इति प्रातिस्विकं धात्वभि-धेयं एकं अक्रियात्मकं सिद्धस्वभावं। अपरन्तु सर्वधात्वर्थानुयायि करोति-प्रत्ययवेद्यं क्रियात्मकं साध्यस्वरूपं, अन्योत्पादानुकूलात्मकं, आख्याता-

भिधेयं इति। ये तु प्रयत्नमेकं भावनां कथयन्ति, ये वा स्पन्दं, ये चोभयं, तैरपि अन्योत्पादानुकूलरूपं तच्च सर्वधात्वर्थानामस्तीति सर्वव्याप्येव भावनारूपं अङ्गीकर्त्तव्यम्। तस्मिञ्च क्रियारूपे प्रकृत्युपात्ते यागादिः कदाचित्कर्मत्वेन सम्बद्धयते, कदाचित् करणत्वेन सम्बद्धयते यथाविवक्षितं-यागं करोति, यागेन करोति इति। एवञ्च यदवस्थो यागः स्वर्गं सम्पादयति, तदवस्थो यागः येन व्यापारेण निष्पद्यते, स व्यापारः स्वर्गकृतिः इत्येवंरूपेण आख्याताभिधेयो भवति। अर्थात फलसाधनावस्थयागसम्पादनं विना यागात् स्वर्गासिद्धेः, यागेन स्वर्गं कुर्यादित्यस्य यादृशव्यापारैः येन प्रकारेणोपेते यागे अनुष्ठिते यागात् फलं भवति, तथा तादृशव्यापारोपेततया यागजननानुकूलकृतिरेव स्वर्गकृतिः इति।

## व्यापारसामान्यस्य विशेषरूपत्ववर्णनं

तस्य व्यापारस्य विशेषरूपं प्रकरणादिप्रमाणान्तरवेद्यं अर्थापत्तिगम्यं च नाख्यातेन स्पृश्यते। 'यागेन स्वर्गं कुर्यादि'त्यनेन एतावदवगम्यते-यथा यागात्स्वर्गो भवति, तथा व्याप्रियेत इति। तत्र कथं व्यापरितव्यं? कोऽसौ व्यापार इति अपेक्षिते व्यापारविशेषात्मककथंभावाकांक्षायां अग्यन्वाधानप्रयाजावधातादिभिः जन्यदृष्टादृष्टोपकारसम्पादनमिति शास्त्रान्तरैरवगम्यते। यागस्वरूपस्य च द्रव्यादिना सम्पादनं अर्थापत्त्या। न हि अनिष्पादितस्य करणत्वमुपपद्यते। तच्च स्वरूपसंपादनं, प्रयाजादिभिश्च उपकारसंपादनमिति सकलोऽयं व्यापारः स्वर्गकृतिः इति अनेन आकारेण आख्यातशब्देनाभिधीयते। विशेषरूपन्तु प्रयाजादिशास्त्रान्तरैः। तेन सकलोऽयं प्रयाजादिव्यापारः प्रधानकरणिकायाः ( फलभावनायाः ) एव प्रपञ्च इति।

अयं भावः—प्रयाजादि तत्तद्रूपेण प्रयाजादिव्यापारनिचयः फलसाधनात्मना सम्पद्यमानस्य तत्तद्रूपविशिष्टव्यापारेषु न करणत्वं, येन विरोधः स्यात्। किन्तु प्रातिस्विकरूपविशिष्टप्रयाजादिव्यापारनिचयेन फलसाधनात्मना सम्पत्तिः। तथा सम्पन्नस्य यागस्य तस्यैव प्रयाजादिव्यापारनिचयस्य स्वर्गोत्पादनानुकूलत्वरूपं स्वर्गकृतित्वं, तद्रूपापन्ने तस्मिन् व्यपारे करणत्वं इति न किञ्चिदनुपपन्नं। एतेन धात्वर्थसामान्यमेव भावना इति शंका निरस्ता। यतो हि यजेत इत्यत्र यागस्यैव अन्योत्पादानुकूलात्मना भावनात्वे यागानुवादेन गुणविधिषु यागस्य कर्मत्वं न स्यात्।

यागोत्पादनानुकूलव्यापारो हि यागकर्मको भवति। न च याग एव यागोत्पादनानुकूलव्यापारः। एवं यागस्य करणत्वस्थलेऽपि स्वर्गोत्पादनानुकूल कृतेः वस्तुतः यागत्वे भेदाभावात् करणत्वं न स्यात् इति यजेतेत्यत्र यागव्यतिरिक्तैव भावना अभ्युपेतव्या।

एवञ्च'द्विधा धात्वर्थस्य संगतिरि'त्यस्य एकस्यैव धात्वर्थस्य प्रकृत्यर्थभूतस्य यागात्मना भावनात्मना च प्रतीतिः इति न भ्रमितव्यं, किन्तु यजेतेत्यत्र प्रकृतिलक्षणधात्वर्थः यागः विशेषरूपेण संबद्धयते। प्रयत्नसंकल्पादिधात्वन्तरार्थस्तु प्रत्ययार्थसामान्यरूपेण संबद्धयते। एवञ्च धात्वन्तरार्थस्य प्रकृतिधात्वर्थस्य च धात्वर्थत्वेन एकत्वं अभिप्रेत्य द्विधा धात्वर्थसंगतिः इत्यर्थो वर्णनीयः। तस्मात् धात्वर्थातिरिक्तं करोतिप्रत्ययवेद्यं अन्योत्पादनानुकूलस्वभावं व्यापारसामान्यं आर्थीभावना इति।

## निर्वचनेन व्यापारविशेषलाभ इति निरूपणं

अतएव प्रकरणाधिकरणे साधनानुग्राहकत्वं इतिकर्त्तव्यतात्वं इति पक्षं दूषयित्वा ग्रन्थकारः प्रकारान्तरेण प्रकरणस्वरूपं वर्णयामास। अननुग्रहीतस्यापि केवलस्या कर्मणः संयोगविभागारम्भकत्वं दृश्यते। अनुग्रह शब्दार्थोऽपि सामर्थ्योद्बोध इत्यादिना विकल्प्य दूषितः। अन्ते च इतिकर्त्तव्यताकांक्षा नाम—प्रकाराकांक्षा इति प्रकारशब्दार्थः उपवर्णितः। यद्यपि तेन 'अस्ति प्रकाराकांक्षा' इति पूर्वमुक्तत्वात् इतिकर्त्तव्यताकांक्षा प्रकाराकांक्षा एव इति सिद्धप्रायमेव, तथापि इतिकर्त्तव्यताशब्दस्य अवयवव्युत्पत्त्याऽपि अयमर्थो लभ्यते। अतएव इतिकर्त्तव्यताशब्दं निर्वक्ति ग्रन्थकारः इतिशब्दः-प्रकारवचनः, कर्त्तव्यस्य भावः कर्त्तव्यता, कर्त्तव्यतायाः प्रकारः-इतिकर्त्तव्यता। अत्र इतिशब्दः प्रकारवाची, कर्त्तव्यता च विविच्यमाना कर्त्तव्यशब्दप्रकृतिभूत कृञ्धात्वर्थश्च क्रिया, तस्मात् कर्त्तव्यताशब्दः—क्रियावचन इति। सामान्यस्य भेदको विशेषः प्रकार इति। अत्र मयूरव्यंसकादेराकृतिगणत्वात् इतिकर्त्तव्यताशब्दः पूर्वपदार्थरूपप्रकारप्रधानः। धात्वर्थः कारकं, न क्रिया इति सिद्धान्तो न प्रस्मर्त्तव्यः। एवञ्च यागेन 'स्वर्गं भावयेदि'त्यस्य यागात्स्वर्गो यथा भवति, तथा यागे व्याप्रियेत इत्यर्थः-पर्य्यवस्यति। एवञ्च सः व्यापारः यागगोचरत्वेन स्वर्गोत्पत्त्यनुकूलत्वेनावगतोऽपि ईदृशोऽयं असौ व्यापारः इत्येवं विशिष्यानवगतः। तेन कोऽसौ व्यापारः इत्यस्ति व्यापारविशेषापेक्षा, सेयं जिज्ञासा इतिकर्त्तव्यताकांक्षा-

इत्युच्यते। भावना नाम भवितुर्भवनानुकूलः प्रयोजकव्यापारः। तेन स्वर्गोत्पत्त्यनुकूलव्यापार एव स्वर्गभावना इत्यभिधीयते। करणत्वञ्च फलोद्देशप्रवृत्तकर्तृव्यापारगोचरत्वं। ततश्च यागकरणकस्वर्गकर्मकभावनां विदधतः वाक्यस्य यागात्स्वर्गो यथा भवति, तथा व्याप्रियेत इति करणगतव्यापारविशेषाकांक्षैव इतिकर्त्तव्यताकांक्षा। अत्र तस्य करणगतत्वञ्च-तदुपकारकत्वं, न तु तन्निष्ठत्वं, तस्य तेन विना अपूर्वाजननात्। तथा च अयं वाक्यार्थः यागेन स्वर्गं कुर्यात्, कथं केन व्यापारेण यागात्स्वर्गो भवतीति। तत्राह—'समिधो यजति, व्रीहीनवहन्ति' इत्यादि। तदयमर्थो भवति समिदादिभिः अदृष्टद्वारं, अवधातादिभिश्च द्रव्यदेवतासंस्कारद्वारा, द्रव्यदेवतेन च स्वरूपसंपादनेन यागे व्याप्रियेत एवंभूतोऽसौ व्यापारः, यागात्स्वर्गो भवतिः। यागः फलारंभाभिमुखो भवतीति, अतः आख्यातवाच्यस्य व्यापारसामान्यस्य विशेषाकांक्षैव इतिकर्त्तव्यताकांक्षा। एवं सति 'असंयुक्तं प्रकरणादितिकर्त्तव्यतार्थित्वात् जै. सू. ३-१-११ इति सूत्रे पञ्चम्योः सामानाधिकरण्यं युक्तं भवति, अतः करणगतविशेषाकांक्षैव इतिकर्त्तव्यताकांक्षा इति। अयमर्थः प्रकरणाधिकरणशरीरे एव सुव्यक्तः। मतन्तरदूषणन्तु तत्रैव सूचितप्रायमिति उपरम्यते। ( सा. दी. पृ. ६१ )।

'द्रव्यत्यागाद्धुतवहमुखक्षेपणाच्चातिशस्ता ।
निष्प्रत्यहं विधिपरिचिता भावनेयं चकास्ति ॥
यस्यास्सङ्गादतिशयफलप्रापि यागादि जातं ।
तामद्याहं मुररिपुपदद्वन्द्वपङ्के अर्पयामि ॥'

## अस्य शैली

श्रीमानयं मीमांसकाग्रणीः पार्थसारथिमिश्रः आस्तिकनास्तिकदर्शनकाननपञ्चाननः मीमांसाशास्त्रीयग्रन्थकर्तॄणां गोष्ठ्यां तात्पर्याचार्यस्य वाचस्पतिमिश्रस्य अनन्तरं स्थानं अलंकरोति। अस्य वचोभङ्गी मनोहरिणी प्रसन्नपदगम्भीरा सरसवाहिनी वाग्वैखरी शास्त्रीयव्युत्पत्तिः। सहृदयमसौ कौमारिलमतमवलम्बते। प्रभाकरमतप्रतिक्षेपे अनन्यसाधारणी विचारचातुरी। कुमारिलभट्टपादेऽभक्तिमते अस्मै पार्थसारथिमिश्राय प्राभाकरीया शास्त्रविचारसरणिः नैव रोचते। साभिनिवेशं प्राभाकरमतं खण्डयति इति कानिचिद् वाक्यानि उपहासे निन्दायाञ्च अस्माभिः उक्तपूर्वाणि इति।

## भाट्टप्रस्थान-प्राभाकरप्रस्थानयोरस्य वैशिष्ट्यम्

पार्थसारथिमिश्रस्य प्रस्थानद्वयेऽपि अनन्यसाधारणवैदुष्ये उभयत्रापि अप्रतिहतप्रतिभावैशिष्ट्येऽपि कुमारिभट्टे, तदुपबृंहिते भाट्टप्रस्थाने अतिश्रद्धा समादरश्च । प्राभाकरमतोपरोधात् कौमरिलप्रस्थानसंरक्षणगौरवं अस्यैव नान्यस्य कस्यचिद्विदुषः । अनेन तिरस्कृतस्य प्राभाकरसंप्रदायस्य नाद्यावधि कोऽप्युद्धर्ता दृश्यते, श्रूयते वा । यथोक्तं—

'अविभक्तविभक्तमार्गयोः मतयोः भट्टगुरूपदिष्टयोः ।
उभयोरपि पार्थसारथिः प्रथितः प्राथमिके अभियोगवान् ॥'

धर्मपुर्य्यभिजनः रामानुजाचार्यः अवीति यत् गुरुतन्त्रदीक्षितोऽपि अहं पार्थसारथिमिश्रे बहुमानेन तदुपज्ञस्य न्यायरत्नमालाख्यप्रकरणस्य व्याख्यां करोमीति ।

यथा—

'गुरुतन्त्रनियन्त्रितोऽपि सन् बहुमानादिह पार्थसारथेः ।
विवृणोमि मतान्तराश्रितां स्थिरभावां नयरत्नमालिकां ॥' इति ।

'अस्पष्टभावमपरीक्षकदुष्प्रवेशं,
आचार्यतन्त्रमधिकृत्य नयप्रकाशं ।
न्यक्कृत्य पार्थरथसारथिरन्यतन्त्रं,
सत्प्रीतये ग्रथितवान् नयरत्नमालां ॥' इति ॥

आचार्यमतमाश्रित्य श्रीमद्यज्ञात्मसूनुना ।
पार्थसारथिमिश्रेण प्रयुक्तितिलकः कृतः ॥
न्यायागमानुसारेण श्रीमद्यज्ञात्मसूनुना ।
पार्थसारथिमिश्रेण कृतोऽयं विधिनिर्णयः ॥ इति ॥

एतैस्तदीयैरेव वचनैः स्वपितृनाम यज्ञात्मन् [ यज्ञेश्वर ] आत्मनाम पार्थसारथिमिश्र इति, स्वपितुः सकाशादेव सर्वविद्यावाप्तिञ्च कथयति । श्रीमानयं 'आचार्यवान्पुरुषो वेद, त्रिभिरेत्य सन्धिं' इत्यादिश्रुतिशतसिद्धां प्राचीनभारतीयसंस्कृतिं संप्रदायविशद्धां स्मारयति ।

## ग्रन्थकर्त्तुः परिचयः—

अवसितोऽयं ग्रन्थार्थविचारः प्रासङ्गिकञ्च। साम्प्रतं इदं प्रस्तूयते-शास्त्रदीपिकाकारोऽयं पार्थसारथिमिश्रः स्वजन्मना कं देशं अलञ्चकार, कावस्य पितरौ, कोऽस्य कालः, तत्प्रणीता ग्रन्थाः के, तेषां निर्माणे कीदृशं पौर्वापर्यमिति। अयञ्च सुगृहीतनामधेयः, पार्थः सारथिः मिश्रोपाधिना सरलसरसार्थबहुललेखनप्रशैल्या मैथिल इति तर्कयामोवयं। अत एव श्रीविन्ध्येश्वरीप्रसादत्रिवेदिना न्यायवार्तिकभूमिकायां वाचस्पति मिश्र पार्थसारथि मिश्र प्रभृतीनां मैथिलत्वं प्रासाधि। विस्तरस्तु तत्रैव द्रष्टव्यः। अभियुक्तानां प्रसिद्धिरपि वस्तुनिर्णये साहाय्यमाचरति। प्रसिद्धञ्च अस्य मैथिलत्वं विद्वत्समाजे इति वयमपि तथैवाङ्गीकुर्मः यावद्वलवद्बाधकोपलम्भं। केचिद्वदन्ति नाम्नाऽयं दाक्षिणात्य इति। तन्न साधु, तदुपष्टम्भकाभावात्।

अयञ्च ग्रन्थकारो न्यायरत्नमालायां अवसाने स्वपितुर्नाम, स्वनाम च निर्दिशति, साभिमानं कथयति स्वपितुः सकाशादेव साङ्गोपाङ्ग वेदशास्त्राणि यथाविधि समधीत्य सुप्रख्यातो जात इति च। यथा—

'भुवनत्रयविख्यातः श्रीमद्यज्ञात्मनन्दनः।
तत एव श्रुतं प्राप्य विश्रुतः पार्थसारथिः॥' इति

### शास्त्रदीपिकायां तन्त्ररत्नस्य न्यायमालायाश्च निर्देशः।

यथा—१ प्रपञ्चेन अयं पक्षो न्यायरत्नमालायामेव निरस्त इति उपरम्यते ( शा. दी. पृ. ११ )। २ यथा च असंभवः तथा न्यायरत्नमालायामेवोक्तं।

२—अयञ्च न्यायस्तन्त्ररत्ने, न्यायरत्नमालायाश्च प्रपञ्चितः ( शा. दी. तृतीय भाग पृ. २० )।

३—युगपदधिकरणे द्वंद्व इत्यस्यापवादादित्युक्तं तन्त्ररत्ने शा. दी. पृ. ६०।

४—अन्यानि दूषयानि तन्त्ररत्न एव दर्शितानि इति, नेह प्रपञ्च्यते।

५—तन्त्ररत्न एवास्माभिर्व्याख्यातं शा. दी. ३ भा. ११६

### नायकरत्ने शास्त्रदीपिकायाः निर्देशः—

१. विषयज्ञानार्थक्रियाज्ञानयोर्न कश्चिद्विशेष इति दर्शितं शास्त्रदीपिकायां ( पृ ५२ )।

२. विषयत्वं ज्ञानकर्मफलभागित्वं, तदेव ग्राह्यत्वं, नान्यत् संभवति-इति शास्त्रदीपिकायां उपपादितं ( पृ. ३२५ )।

३. निरस्तश्चायं क्षयभङ्गवादः शास्त्रदीपिकायां ( न्यायरत्नाकर पृ. सं. ८४० )।

अनेन समुद्धरणेन तदीयग्रन्थानां पौर्वापर्यमवगम्यते । प्रथमं न्यायरत्न-माला, ततो द्वितीयं तन्त्ररत्नं । तृतीयं शास्त्रदीपिका, ततो न्यायरत्नाकरश्चेति।

## अस्य कालः

## सी. ए. डी. १०५०–११२०

पार्थसारथिमिश्रस्य अयं पूर्वावधिः १०५० इतः पूर्वं अयं नासीत्। ११२० इयं उत्तरावधिः। यतो हि हलायुधभट्टःधनञ्जयभट्टस्य तनुजः कर्नाटकदेशीयः उत्कलाभिजनः मीमांसाशास्त्रसर्वस्वे शास्त्रदीपिकायाः न्यायरत्नमालायाश्च वचनानि प्रमाणतया बहुलं समुद्धरति । अयञ्च हलायुध पण्डितः श्रीभट्टनारायणवंशसंभूतः। अयञ्च भट्टनारायणः श्रीवंगाधिपादिशूरेण लक्ष्मणसेनेन आनीतेषु ब्राह्मणेषु अन्यतमः अस्ति। अस्मात् भट्टनारायणात् द्वादशः पुरुषः हलायुधभट्टः। हलायुधभट्टः बंगाधिपतेः लक्ष्मण-सेनस्य आस्थानपण्डित आसीत्। स च लक्ष्मणसेनः अस्मै बाल्ये आस्थान-पण्डितपदं, यौवने मन्त्रिपदं, वार्धके धर्माधिकरणिकपदञ्च दत्तवान्। यथोक्तं सर्वस्वे ।

तथा च सर्वस्ववचनम्—

'बाल्ये ख्यापितराजपण्डितपदश्वेतांशुबिम्बोज्वल-
च्छत्रोत्सिक्तमहामहत्तनुपदं दत्वा नवे यौवने ॥
यस्मै यौवनशेषयोग्यमखिलं क्ष्मापालनारायणः ।
श्रीमान् लक्ष्मणसेनदेवनृपतिर्धर्माधिकारं ददौ ॥'

ब्रा. स. श्लो १२ इति ।

सोऽयं लक्ष्मणसेन ईसवीय द्वादशशताब्दीप्रारम्भे आसीदिति प्रत्न-तत्वविदो मन्वते । तेन सुतरां हलायुधोऽपि ईसवीय द्वादशशताब्दीप्रारम्भ-कालिक इति सिध्यति ।

अयञ्च ब्राह्मणसर्वस्वम्, धर्मशास्त्रसर्वस्वम्, मीमांसासर्वस्वमि-त्यादीन् बहून् ग्रन्थान् निर्ममे । तेषु मीमांसासर्वस्वे स्वोक्तिदार्ढ्याय

शास्त्रदीपिका-न्यायरत्नमाला-न्यायरत्नाकरवचनानि समुद्धरति । अतस्तत्-पूर्वकालिकः पार्थसारथिमिश्र इत्यायाति । तत्रापि दशमशतकस्य उत्तरार्द्धे एकादशशतकस्य पूर्वार्द्धे वाऽऽसीदिति सम्प्रधार्यते यावद्बलवद्बाधकोपनिपातम् ।

## शास्त्रदीपिकाविषये वक्तव्या विशेषाः

अस्मिन् महानिबन्धे द्वाशसु अध्यायेषु प्राभाकरसिद्धान्तान् निरस्य, आचार्यमतेन विषयविशेषा विविच्य व्युत्पाद्यन्ते इति प्राक् अवोचाम । तत्र यथा मिथिलामण्डलमण्डनायमानस्य आचार्य मण्डनमिश्रस्योद्वेगे शालिकनाथ मिश्रस्येव शालिकनाथस्योद्वेगे महदेव असहनं आसीत् । तदेव निमित्तं पार्थसारथिमिश्रस्य शास्त्रदीपिकाख्यस्य महानिबन्धस्य विरचनेऽपि । अस्य महानिबन्धस्य परिशीलनेन भाट्ट-प्राभाकर प्रस्थानयोः साम्य वैषम्य बोधका संप्रदायैक समधिगम्याः विषयाः करतलामलकवदवभासेत विद्वधौरेयाणां । पूर्वसंम्पादकेनसमाहृताः मूले असंलग्नकाः पाठभेदा निरस्ताः, शुद्धपाठाश्च सन्निवेशिताः । शास्त्रदीपिकायाः अर्थानुसंधानाय मूलकारिकाः संगृहीताः । सूत्राणां अधिकरणानां च विवरणावेदिका च पट्टिका संन्निवेशिता, जिज्ञासुनां, विनेयानां च परिज्ञानाय । अन्ते च शुद्धपाठपत्रिका च योजिता ।

## अस्य प्रकाशने हेतूपन्यासः

प्रातस्मरणीयचरिताः श्रीजगद्गुरुवल्लभाचार्यमहाप्रभुवंशावतंसाः विविधानविद्यविद्योतितान्तःकरणाः । श्रीगोस्वामिदीक्षितमहाराजाः शास्त्रदीपिका महानिबन्धस्य दौर्लभ्यं अवलोक्य अध्येतॄणां क्लेशञ्च शुद्धमेकं संस्करणं त्वाया कर्तव्यमिति माम सकृत् तदा तदा प्रेरयामासुः।तेषां महानुभावानां वेदशास्त्रैकसंरक्षणबद्धपरिकराणां प्रोत्साहनेनैव अहं अस्मिन् कर्मणि प्रावर्तिषि । ते च महानुभावाः न्यायवैशेषिकसांख्ययोगादिनानादर्शनमर्मज्ञाः वैष्णव प्रस्थानेषु चतुर्ष्वपि अनितरसाधारणपाण्डित्याः शाङ्करप्रस्थाने च । वेदार्थैकनिरूपणपरे बहुविद्यासमाश्रिते अध्वरमीमांसादर्शने लब्धकौशलाः विशिष्य शास्त्रदीपिका महानिबन्धे, महती आस्थाऽऽसीत् । तेषां जीवित काल एव अस्य महानिबन्धस्य सम्पादनं अभिसंहितमासीत् । परन्तु दुर्दैवविलसितात् इदानीमेव सज्जीकृतं प्रियपाठकानां करकमलयोः सादरं समर्प्यते, तेषां कार्तज्ञ्यं आवहन् तेषां आत्मजान् श्रीगोस्वामि श्याममनोहर-

महाभागान् प्रार्थयामास तेषां प्रतिकृतिः अत्र योजनीयेति। तेपि मदीय-प्रार्थनामङ्गीकृत्य झटित्येव प्रतिकृतिपत्राणि सानुकंपं प्रेषयामासुः। अतः तेऽपि प्रसंगेऽस्मिन् धन्यवादं अर्हन्ति।

## उपसंहारः

अध्यापनादिकार्येषु व्यापृतेन मया अत्यन्तशुद्धिसंपादनाय विहितेपि महति प्रयासे मानवमात्रसुलभात् दृष्टिदोषात् नान्तरीयकतया संजातानामशुद्धीनां परिमार्जनं विधाय पठितुं प्रियपाठकमहाभागाः सादरं सानुनयं च अनुरुध्यन्ते।

## अस्य प्रसाधनकर्मणि उपलब्धसामग्री

अस्य महानिबन्धस्य संपादनाय समाहृताः आदर्शकोशा इमे—

१. म. म. चिन्नस्वामिशास्त्रिचरणानां संशोधितःप्रथमः क इति संकेतेन व्यवहृतः।

२. श्री राममिश्रशास्त्रिमहाभागैः संपादितः द्वितीयः।

३. काशिकसरस्वतीभवनस्थस्तृतीयः, अनेन आंशिकस्तत्र तत्र उपयोगः, अस्य परिशीलनं तदा तदा तत्र गमनेन अभूदिति, सः ग इति व्यवहृतः।

४. अस्मदध्ययनकाल एव शोधितमध्यापनकाले च परिष्कृतं। एतान् आदर्शकोशान् आधारीकृत्य इदं सम्पादनकृत्यं समवर्त्तिष्ठ। अन्ते च विद्वद्वरेण्या प्रार्थ्यन्ते यत् सदसद्व्यक्तिहेतवो गुणैकपक्षपातिनः प्राज्ञाः मधुलिह इव शास्त्रदीपिकासाररसं विशिष्टभूमिकासहितं पायं-पायं सफलयन्तु मम परिश्रमम्। अवसाने च अस्मत्पूज्यपादान् सादरं सप्रश्रयं च कोटिशः प्रणमामि-यैः मीमांसाशास्त्रमेव समुद्धृतं प्रसारितं प्रचारितञ्च।

लेखेऽस्मिन् नाप्यपूर्वः क्वचिदनवगतो नाप्यसंभावनीयः।
विद्वद्भिर्नीतिविद्भिः न मितिमतिगतो नाप्यमूलो न बौद्धः॥
अर्थः प्रादर्शि किन्तु गुरुमतमथनीर्मिश्रवितर्पूविभाव्य।
प्राचां संगृह्य किंचिल्लिखितमपि मया हन्त तुष्यन्तु संतः॥

छ

सिद्धान्तरीतिषु मया भ्रमदूषितेन ।
स्यादन्यथापि लिखितं यदि किंचिदत्र ।।
संशोधने सहृदयास्सदया भवन्तु ।
सत्संप्रदायपरिपालननिर्विशंकाः ।।
कुतो वा नूतनं वस्तु वयं उत्प्रेक्षितुं क्षमाः ।
वचोविन्यासवैचित्र्यमात्रमत्र विचार्यताम् ।।
यदत्र गर्हणीयं स्यात् मदीयं तत्कुकल्पनम् ।
शास्त्रीयं युक्तियुक्तं च गुरुभिर्भाषितं तु तत् ।।

विदुषामाश्रवः
मीमांसारत्नं अ० सुब्रह्मण्यशास्त्री
कपालतडागपुराभिजनः
दर्शन-मीमांसा-वेदान्ताचार्यः
मीमांसाधर्मशास्त्र-पौरोहित्य-कर्मकाण्ड-
शास्त्री भूतपूर्वविभागाध्यक्षः
का. हि. वि. वि.
वाराणसी—५

मकरसंक्रान्तिः
१४–१–१९७८

## शास्त्रदीपिकायाः षष्ठादि-द्वादशान्तायाः मूलश्लोकाः

भेदादिलक्षणैरेवमनुष्ठेये निरूपिते ।
कोऽनेनाधिक्रियेतेति साम्प्रतं सम्प्रधार्यते ॥ १ ॥

तदुपोद्घातरूपेण त्वादावेतद्विचार्यते ।
कर्मभिः पुरुषः कर्ता किमधिक्रियते न वा ॥ २ ॥

धात्वर्थस्यैव भाव्यत्वं पदश्रुत्या प्रतीयते ।
स्वर्गादेः खलु वाक्येन श्रुतेर्वाक्यं च दुर्बलम् ॥ ३ ॥

भूतञ्च स्वर्ग-पश्वादि द्रव्यं भव्याय कर्मणे ।
उपदेश्यं न भूताय भव्यकर्मोपदेशनम् ॥ ४ ॥

पदश्रुतेर्बलीयस्या विधिश्रुत्या हि भावना ।
अवरुद्धा न यागादि भाव्यमालम्बितुं क्षमा ॥ ५ ॥

स्वर्गादिः कामनायोगात् फलत्वेनैव गम्यते ।
स्वारस्यात्पुरुषाणां हि कामना फलगोचरा ॥ ६ ॥

तत्र प्रधानवाक्येन सर्वेषामधिकारधीः ।
जायते तद्वशेनाङ्गवाक्यानामुपवर्णनम् ॥ ७ ॥

नैवाज्यावेक्षणादीनां पुरुषं प्रति चोदना ।
यतोऽसमर्थस्तच्छक्यं कर्म कृत्वाऽधिकारभाक् ॥ ८ ॥

क्रतुं प्रति विधिस्तेषां तादृशं तञ्च शक्नुवन् ।
कृत्वा फलमवाप्नोति ततोऽन्यानधिक्रिया ॥ ९ ॥

तत्र पुँल्लिङ्गनिर्देशात्पुंस एवाधिकारिता ।
प्रकृत्यर्थतया लिङ्गं संख्यावन्नाविवक्षितम् ॥ १० ॥

प्रकृत्यर्थोऽपि खल्वेतदुद्देश्यस्य विशेषणम् ।
संख्यया तुल्यनीतित्वान्न विवक्षां प्रपद्यते ॥ ११ ॥

पूर्वत्राख्यातसंख्यायाः कर्तृरूपेऽन्वयः स्थितः ।
तेनेह कर्तृरूपस्य भेदो द्विवचनाद्भवेत् ॥ १२ ॥

वसानाविति चौकारात् पुंद्वयं संप्रतीयते ।
द्वित्व-पुंस्त्वे हि तद्वाच्ये नियम्येते च ते मिथः ॥ १३ ॥

क्षौमशब्दो न मुख्यस्सन् मुख्यमर्थं परित्यजेत् ।
नापि धात्वर्थयोगेन वर्तते रूढिसम्भवात् ॥ १४ ॥

वसान-क्षौमशब्दौ च तत्र स्यातामनर्थकौ ।
द्वित्वमात्रविधायित्वात्तस्मात् क्षौमं विधीयते ॥ १५ ॥
तद्विधाने च पुंद्वित्वं विधातुं नैव शक्यते ।
उत्पत्तिवाक्यादन्यत्र नानेकार्थविधिर्यतः ॥ १६ ॥
सन्निकर्षश्च शब्दस्य धर्मो न तदनुग्रहात् ।
प्रधानभूतशब्दार्थपरित्यागोऽवकल्पते ॥ १७ ॥

कर्तृरूपस्य चैक्येऽपि तदधिष्ठानभेदतः ।
युक्तं द्विवचनं यद्वदग्नीषोमौ हि देवते ॥ १८ ॥
अप्राप्तत्वात्तु वसने यदा क्षौमं विधीयते ।
वसानावादधीयातामित्येतावनुवादकौ ॥ १९ ॥

अनुवादो यथाप्राप्ति सा च स्त्रीपुंसयोर्द्वयोः ।
तेन प्राप्तिवशाच्छब्दाविमौ तावेव वक्ष्यतः ॥ २० ॥

एक एव पुमांस्तस्मादादधीत सह स्त्रिया ।
उत्पत्तिवाक्ये ह्येकत्वमुपादेयं विवक्षितम् ॥ २१ ॥
यजमानसमाख्यानं यजमानपदाद्यथा ।
निष्पद्यते तथैवैतद् यजमानापदादपि ॥ २२ ॥

विद्वत्त्वाद्वा पुमानेव कुर्यादविदुषीतरा ।
वेदाध्ययनशून्यत्वात् प्रतिषिद्धं हि तत् स्त्रियाः ॥ २३ ॥

सत्यमध्ययनं नाङ्गं तत्कृता त्वङ्गमर्थधीः ।
तद्वतः क्रतवो लब्ध्वा न तुर्यस्याक्षिपन्ति ताम् ॥ २४ ॥

असंख्याकविधौ तावत् प्रतिषेधद्वयाश्रयात्
वाक्यद्वयं प्रसज्येत त्रीनित्येतच्च पाक्षिकम् ॥ २५ ॥

एक-द्वि-त्रिविधानं चेत्ततो वाक्यत्रयं भवेत् ।
विकल्पश्च भवेत्तस्मात् त्रित्वमेव विधीयते ॥ २६ ॥

पक्षद्वयेपि शब्दोऽयं योगादेव प्रवर्तते ।
तत्र षष्ठीसमासत्वे विदुषः स्यादधिक्रिया ॥ २७ ॥

आहिताग्नेश्च यदि तु कर्मधारय इष्यते ।
अनाहिताग्नेरज्ञस्य संप्रसज्येताऽधिकारिता ॥ २८ ॥

तेन षष्ठीसमासोऽयमिति प्राप्तेऽभिधीयते ।
निषादपदमेवं तु स्थपतौ लक्षणां व्रजेत् ॥ २९ ॥
न हि षष्ठी श्रुता येन न तत्संबन्धी विधिर्भवेत् ।
निषादपदमेवातः षष्ठ्यर्थं लक्षयेदिदम् ॥ ३० ॥
कर्मधारयपक्षे तु न कदाचिदपि लक्षणा ।
निषाद एव स्थपतिरतः श्रुत्या प्रतीयते ॥ ३१ ॥
तेन श्रुतिबलादज्ञोऽनाहिताग्निश्च सन्नपि ।
निषाद एव स्थपतिः कर्मण्यत्राधिकारभाक् ॥ ३२ ॥
इति शास्त्रदीपिकायां षष्ठाध्यायस्य प्रथमः पादः ॥ १ ॥

## द्वितीयपादः

समुदायस्य कर्तृत्वात् तस्य कृत्स्नफलान्वयः ।
फलावयवयोगः स्यात्प्रत्येकं समुदायिनाम् ॥ ३३ ॥
समुदायस्य कर्तृत्वं यद्यपि स्यात्तथाऽपि तु ।
प्रत्येकमधिकारित्वात्तथैव फलमाप्नुयुः ॥ ३४ ॥
कर्तृत्वमपि चैतेषां प्रत्येकमवगम्यते ।
कर्तृगामि बहुत्वं हि द्रव्यगाम्यन्यथा भवेत् ॥ ३५ ॥
फलार्थिनं समुद्दिश्य कर्मणामुपदेशनात् ।
उद्देश्यगामिनी संख्या ग्रहवन्न विवक्षिता ॥ ३६ ॥
रागप्राप्ता फलप्राप्तिर्न सा शब्देन बोध्यते ।
प्रत्ययश्च क्रियावाची न प्राप्तिं प्रतिपादयेत् ॥ ३७ ॥
उपग्रहविशेषाच्च नाकर्तुः फलसङ्गतिः ।
विधेश्चैवमतोऽन्यस्य न फलप्राप्तिसम्भवः ॥ ३८ ॥
स्वर्गादिकाममुद्दिश्य क्रियैवेह विधीयते ।
यागादियुक्ता संख्या च तद्गतत्वाद्विवक्षिता ॥ ३९ ॥
फलक्रिया नियोगेन न हि पुंसां फलार्थिनाम् ।
रागप्राप्ता यतो ह्येषा शब्देन न विधीयते ॥ ४० ॥

तत्राभीप्सितसिद्ध्यर्थं साधनेषु प्रवर्तते ।
सिद्धे तस्मिंस्तदिच्छायां वीतायां किं प्रवर्त्तते ॥ ४१ ॥

न हि सम्भावनामात्राद् भ्रान्तिः कल्पयितुं क्षमा ।
सर्वस्मृतिषु तुल्यत्वादप्रामाण्यप्रसञ्जनात् ॥ ४२ ॥

तथा च निन्दावचनं प्रायश्चित्तञ्च श्रूयते ।
तस्मात् क्रतुमुपक्रान्तं नियोगेन समापयेत् ॥ ४३ ॥

अशास्त्रादेव हि प्राप्तिर्दृष्टार्थेषु गृहादिषु ।
तेन शास्त्रं न कल्प्येत पुरुषार्था हि देवला ॥ ४४ ॥

भक्षणव्यवधानेन नञ्विध्योर्नास्ति सङ्गतिः ।
भक्षणन्तु नञा युक्तमव्यवायाद्विधीयते ॥ ४५ ॥

श्रुत्या च विधिसम्बन्धो भक्षणस्य नञः पुनः ।
पदान्तरत्वाद्वाक्येन श्रुतेर्वाक्यं च दुर्बलम् ।
तस्माद्भक्षणमेवेह नञा युक्तं विधीयते ॥ ४६ ॥

नञ्-भक्षयत्योरेवन्तु स्वार्थहानिः प्रसज्यते ।
सङ्कल्पलक्षणात्-तत्र श्रुतेरत्यन्तबाधनम् ॥ ४७ ॥

अङ्गत्वेऽपि च कालस्य न त्यागोऽन्याङ्गवत्कुतः ।
अनुपादेयरूपत्वात्तस्मिन्कर्मविधिर्यतः ॥ ४८ ॥

वीप्सायुक्तो वसन्तो हि निमित्तत्वेन गम्यते ।
यावद्वसन्तं नियमः सोमस्यातोऽवगम्यते ॥ ४९ ॥

यावद्वसन्तमभ्यासः काम्यस्यैवाथ चोद्यते ।
यजेतेति पदेनैवं प्राप्नोत्यभ्यासलक्षणा ॥ ५० ॥

इति द्वितीयः पादः ।

---

## तृतीयः पादः ।

समुच्चितानामङ्गानामित्थम्भावेन सङ्ग्रहः ।
सर्वाङ्गयुक्तमेवातः प्रधानं फलसाधनम् ॥ ५१ ॥

नैमित्तिकं नियोगेन कर्तव्यमवगम्यते ।
निमित्तेन ततोऽशक्यहानेनापि प्रयुज्यते ॥ ५२ ॥

द्रव्यस्यैव क्रिया नाम रूपं नार्थान्तरं ततः ।
तदात्मनश्च तद्भेदे न भवेद्भिन्नता कथम् ? ॥ ५३ ॥

तदात्मनोऽपि त्वस्त्येव व्यतिरेकः कियानपि ।
जातिवद्गुणवच्चातस्तद्भेदेऽपि न भिद्यते ॥ ५४ ॥

यदा त्वलाभात् व्रीहीणामुदास्ते व्रीहिचोदना ।
कर्मशास्त्रं तदा द्रव्यमन्यदाक्षिपति ध्रुवम् ॥ ५५ ॥

आग्नेयचोदना तावद्यत्किञ्चिद् द्रव्यमाक्षिपेत् ।
व्रीहिशास्त्रं पुनर्व्रीहिविषयं नान्यगोचरम् ॥ ५६ ॥

अतः केन प्रमाणेन सदृशस्योपसंग्रहः ।
व्रीहिचोदनया सत्यं व्रीहिजातिर्विधीयते ॥ ५७ ॥

सा च द्रव्यपरिच्छेदद्वारेणाङ्गत्वमृच्छति ।
तच्च द्रव्यं परिच्छिन्नमनेकावयवात्मकम् ॥ ५८ ॥

द्रव्यार्था एव संस्काराः, तेषां नान्यत्प्रयोजनम् ।
तद्वशेन ततो द्रव्यपरित्यागो न युज्यते ॥ ५९ ॥

ततः संस्कारहीनेऽपि खदिरे स्यान्नियोजनम् ।
तक्षणादीनि लुप्येरन् प्रधानेन विरोधतः ॥ ६० ॥

भूयसां शेषकार्याणां मा भूदत्यन्तबाधनम् ।
एकस्य व्रीहिशास्त्रस्य किञ्चिद्बाधस्तु युज्यते ॥ ६१ ॥

व्रीहयोऽपि पुरोडाशभूता यागस्य साधनम् ।
तद्वैकल्ये प्रधानस्य गुणहानिः प्रसज्यते ॥ ६२ ॥

इति तृतीयः पादः ।

## चतुर्थः पादः

कृत्स्नं खलु पुरोडाशं प्रकृत्य श्रूयते वचः ।
मध्यादवद्यतीत्येतद्विकलान्नावगम्यते ॥ ६३ ॥

तत्रैकदेशभेदस्य नित्यत्वान्न निमित्तता ।
कादाचित्कस्तु कृत्स्नस्य भेदो गच्छेन्निमित्तताम् ॥ ६४ ॥

होमोऽयं भिन्नसंस्कारो भेददोषनिबर्हणात् ।
सन्निपत्योपकारित्वात्तथा सति हि लभ्यते ॥ ६५ ॥

आराद्रुपक्रियातश्च न्याय्या स्यात्सन्निपातिता ।
सन्निपातित्वपक्षे तु वाक्यं स्याद्विनियोजकम् ॥ ६६ ॥

आराद्रुपक्रियात्वे तु प्रक्रिया विनियोजिका ।
कार्यक्षमश्च संस्कार्यः कृत्स्नभिन्नं न तत्क्षमम् ॥ ६७ ॥

संस्कारत्वे भवेदेवं न त्वियं भिन्नसंस्क्रिया ।
संस्कार्यत्वे हि भिन्नस्य निमित्तत्वं न लभ्यते ॥ ६८ ॥

निमित्ताभावतो होमो नित्यलिङ्गं कृतोर्भवेत् ।
नित्यश्चानित्यसंस्कार्यसंबन्धं लभते कथम् ॥ ६९ ॥

यच्छब्दोपक्रमं यावन्निमित्तं पर्यवस्यति ।
तावद्ग्राह्यं ततोऽन्यत्तु श्रुतमप्यविवक्षितम् ॥ ७० ॥

उद्देश्यत्वान्न साहित्यं तयोः शक्यं विवक्षितुम् ।
ततः प्रत्येकमेवाभ्यां भक्षणं प्रतिभूयते ॥ ७१ ॥

निमित्तत्वे भवेदेवं एकैकस्य निमित्तता ।
होमाभिषवकर्त्ता तु भक्षाङ्गत्वेन चोच्यते ॥ ७२ ॥

सत्यं निमित्तवेलायामुभावित्यविवक्षितम् ।
नैमित्तिकं तु नैवैतदेकस्योत्पादनक्षमम् ॥ ७३ ॥

आर्तत्वाद् द्रव्ययोरन्यत्कर्मणो द्रव्यमीप्सितम् ।
लाघवं च विधेरेवमतो द्रव्यविधिर्भवेत् ॥ ७४ ॥

स्थानापत्या हि नैकान्तात्प्राप्तिरिन्द्रस्य लभ्यते ।
महेन्द्रस्यापि सद्भावात् तस्मादिन्द्रो विधीयते ॥ ७५ ॥

प्राप्ते कर्मणि नैकेन विधिना द्रव्य-देवते ।
शक्ये विधातुं ताभ्यां तु विशिष्टं कर्म चोद्यते ॥ ७६ ॥

स्यादेवं यद्यमावास्या निवृत्ता न तु सा तथा ।
पूर्वद्रव्यविनाशेऽपि द्रव्यस्याऽन्यस्य सम्भवात् ॥ ७७ ॥

द्वयोरपि भवेत्कस्माद्विशेषस्याश्रुतत्वतः ।
प्रवृत्त एव वा कुर्यात्तत्राङ्गं हि तथा भवेत् ॥ ७८ ॥
निमित्तश्रुतिवैयर्थ्यान्न त्वेतदपि युज्यते ।
साधारण्ये च वैरूप्यं क्रत्वर्थपुरुषार्थतः ॥ ७९ ॥

इति चतुर्थः पादः ।

## पञ्चमः पादः

अनेकार्थविधायित्वात् कर्मान्तरविधिर्भवेत् ।
प्राप्तकर्मानुवादेन नानेकार्थविधिः क्षमः ॥ ८० ॥
प्रकृतप्रत्यभिज्ञानान्न कर्मान्तरचोदना ।
प्राकृतीभ्यस्तदाच्छिद्य द्रव्यमन्याभ्य उच्यते ॥ ८१ ॥
पौर्णमास्यां यदा तिस्रो द्वे दर्शविषये सदा ।
प्रधानाहुतयस्सन्ति तदा संख्योपपद्यते ॥ ८२ ॥
नैमित्तिकमिदं सोमविभागेन विशेषितम् ।
नाक्रीतराजकस्यैतच्छक्यं क्रीते भवेदतः ॥ ८३ ॥
यदि सोमविभागोऽयमङ्गत्वेन विधीयते ।
तत एवं भवेदेष त्वर्थप्राप्तो न चोद्यते ॥ ८४ ॥
याज्जनाः प्रतिनन्दन्ति रात्रिं धेनुमिवायतीम् ।
संवत्सरस्य या पत्नी सा नो अस्तु सुमङ्गली ॥ ८५ ॥
स्यादेवं यदि कर्तृत्वं सापेक्षमुभयोर्भवेत् ।
एकैकस्य तु यत्नेन निरपेक्षेण जायते ॥ ८६ ॥
विच्छेदस्तेन कर्तृत्वं द्वयोः प्रत्येकमस्ति नः ।
कालमात्रं तु तत्रैकं प्रायश्चित्तमतो भवेत् ॥ ८७ ॥
अशाब्दत्वात् समूहस्य न फलं प्रति चोदना ।
यागस्य चोदना तत्र यागाः प्रत्येकमेव ते ॥ ८८ ॥

अतो मिथोऽनपेक्षास्ते यागाः स्वाङ्गसमन्विताः ।
फलं संहृत्य कुर्वन्ति स्वापूर्वद्वारमाश्रिताः ॥ ८९ ॥
तेन यस्मिन्नपच्छेदस्तदावृत्तिगुणान्वितः ।
अनावृत्तिगुणैरन्यैः संहृत्य कुरुते फलम् ॥ ९० ॥

इति पञ्चमः पादः ।

---

## षष्ठः पादः

सत्राणि सर्ववर्णानां भवेयुरविशेषतः ।
ऋद्धिकमादिवाक्येषु विशेषः श्रूयते न हि ॥ ९१ ॥
प्राप्तेषु त्रिषु वर्णेषु यच्छब्देनोपबन्धनात् ।
संस्कारार्थतया तेषां आर्त्विज्यमुपयुज्यते ॥ ९२ ॥
नार्त्विज्यं यजमानानां संस्कारत्वेन चोद्यते ।
तथा ह्यप्राकृतं कार्यमार्त्विज्यस्य प्रसज्यते ॥ ९३ ॥
तेन यच्छब्दयोगेऽपि नोद्देशः स्वामिनामिह ।
आर्त्विज्यमेव तूद्दिश्य यजमानविधिर्भवेत् ॥ ९४ ॥
इष्टिपूर्वकता सोमविकाराणामवस्थिता ।
इष्टौ चानाहिताग्नीनां न कथञ्चिदधिक्रिया ॥ ९५ ॥
आधातुरग्नयः कार्यं नान्येषां साधयन्ति च ।
उपग्रहविशेषेण कर्तृरेव फलान्वयात् ॥ ९६ ॥
प्रकृतौ हि श्रुतं वाक्यं ततो नोत्कर्षमर्हति ।
तस्माद्वैश्यानुवादेन साप्तदश्यं विधीयते ॥ ९७ ॥
तच्च वैश्यनिमित्तत्वात्पाञ्चदश्यस्य बाधकम् ।
वैकृतैर्वचनैः साप्तदश्यं क्रत्वङ्गमुच्यते ॥ ९८ ॥
तदनैमित्तिकत्वेन त्रयाणां न विशिष्यते ।
तस्मादध्वरकल्पादौ त्रयाणामधिकारिता ॥ ९९ ॥

इति षष्ठः पादः ।

## सप्तमः पादः

प्रत्यक्षवचनादिष्टसर्वदानविरोधतः ।
चोदकावगतं कर्म शेषं लभ्येत दुर्बलम् ॥ १०० ॥

प्रधानत्वात्क्रतोर्नैव दानं तद्बाधनक्षमम् ।
किञ्चित्तु क्रतवे शिष्ट्वा सर्वमन्यत्प्रदीयते ॥ १०१ ॥

दक्षिणार्थेन निर्द्दिष्टं प्राप्तं द्रव्यमनूद्य तु ।
विधेयं सर्वतामात्रं लाघवं हि तथा विधेः ॥ १०२ ॥

गणेषु द्वादशाहस्य विध्यन्तस्स्थापयिष्यते ।
द्वादशञ्च शतं ज्योतिष्टोमात्तत्रातिदिश्यते ॥ १०३ ॥

विश्वजित्यपि सैव स्यात् दक्षिणा गणवर्तिनी ।
नामातिदेशप्राबल्यात्सर्वस्वं त्वेव दक्षिणा ॥ १०४ ॥

ततो न्यूनेऽधिके वापि सर्वशब्दोपपत्तितः ।
उभयोरधिकारः स्यात् न्यूनाधिकप्रदायिनोः ॥ १०५ ॥

इदं तु प्रकृतेः प्राप्तं सर्वदानं नियम्यते ।
तत्र चानतिसिद्ध्यर्थं अधिकं सर्वमीरितम् ॥ १०६ ॥

आपेक्षिको हि बह्वर्थं सहस्रापेक्षया भवेत् ।
तस्यानन्तरनिर्देशात् सहस्रादधिकस्ततः ॥ १०७ ॥

त्रिवृदादिपदैः स्तोमविशिष्टमहरुच्यते ।
नाहःसङ्घस्ततोऽहस्तु गौणी संवत्सराभिधा ॥ १०८ ॥

इति सप्तमः पादः ।



## अष्टमः पादः

वचनस्यार्थवत्वायानाहिताग्नेरधिक्रिया ।
आहत्य च तदर्थास्ते चोदिता नान्यगामिनः ॥ १०९ ॥

सामान्यावसिता तावच्चोदना वाक्यभेदतः ।
मन्त्रस्तदविरोधेन पाक्षिको यौगिकोऽपि वा ॥ ११० ॥

चोदना पशुसामान्यमङ्गत्वेनावबोधयेत् ।
छागेऽप्यविकलं तत्तु प्रतिव्यक्ति समाप्तितः ॥ १११ ॥

मन्त्रः प्रकरणाम्नानान्नित्यमङ्गं प्रतीयते ।
क्लृप्तया रूढिशक्त्या च यच्छागस्यैव वाचकः ॥ ११२ ॥

तेन तं तादृशं गृह्णन् विधिरात्मा विरोधिनम् ।
विधत्ते छागमेवाङ्गं तस्माच्छागोपसंग्रहः ॥ ११३ ॥

अधिकृतिरिति सिद्धा भेद-शेष-प्रयुक्ति-
क्रमनियमविचारैरेतया चाधिकृत्या ।
स विदित उपदेशोऽनन्तरं चातिदेशो-
विकृतिषु तत ऊहो-बाध-तन्त्र-प्रसङ्गाः ॥ ११४ ॥

इति अष्टमः पादः ।

## सप्तमस्य प्रथमः पादः

धर्माणां करणाङ्गत्वे विचारो नैव विद्यते ।
भावनान्वयपक्षे च तादर्थ्यं नावकल्पते ॥ १ ॥

प्रधानविधिवाक्यं खल्वङ्गवाक्यसमन्वितम् ।
अङ्गप्रधानसंयुक्तां विधत्तेऽपूर्वभावनाम् ॥ २ ॥

भावनान्वयतः पश्चादंशयोरार्थिकोऽन्वयः ।
ततः कर्मान्तरेऽङ्गानां प्राप्तिराशङ्क्यते कुतः ॥ ३ ॥

भावनान्वयितामात्रं नांशयोस्तुल्यकल्पना ।
अपरित्यक्तरूपत्वाद् गुणप्राधान्यसंभवात् ॥ ४ ॥

पूर्वेषां ब्राह्मणं यत्तदुत्तरेष्वतिदिश्यते ।
चोद्यन्ते येन वाक्येन तत्तेषां ब्राह्मणं मतम् ॥ ५ ॥

यद्यपि ह्यङ्गविधिभिर्हविषां न विधेयता ।
तथाऽप्यस्त्येव संबन्धस्तत्संबन्ध्यङ्गचोदनात् ॥ ६ ॥

इति सप्तमस्य प्रथमः पादः ।

## तृतीयःपादः

उभयोरविशेषेण सामानाधिकरण्यतः ।
नामधेयमिदं तस्मान्न धर्मानतिदेक्ष्यति ॥ ७ ॥
एकस्य त्वभिधेयत्वे गौणत्वेनापि संभवात् ।
नान्यस्यप्यभिधेयत्वमनेकार्थत्वदोषतः ॥ ८ ॥

प्रायणीयपदं येन निमित्तेन प्रवर्तते ।
प्राथम्येन तदस्त्येव गावामयनिकेऽपि नः ॥ ९ ॥
तस्मात्सिद्धनिमित्तेन श्रुत्या नामत्वसंभवात् ।
न गौणत्वेन धर्माणामतिदेशोऽवकल्पते ॥ १० ॥
सत्यं, ममापि तुल्यत्वमस्ति, तत्तु प्रमाणवत् ।
कर्मान्तरे प्रयुक्तत्वात् भवतस्त्वप्रमाणकम् ॥ ११ ॥
गौणत्वं न हि शब्दस्य स्वरसादवगम्यते ।
अर्थान्तरे प्रयोगे तु निश्चिते गौणता भवेत् ॥ १२ ॥
अपूर्वकर्मविधिनाऽनेकेषामपि चोदना ।
अन्यथा तुषनिष्कासपदानर्थक्यदोषतः ॥ १३ ॥
तद्विशिष्टविधिस्तेन पुरोडाशस्य बाधनम् ।
श्रुत्या हि तुषनिष्कासं विशेषेण च चोद्यते ॥ १४ ॥
श्रुत्या वैष्णवशब्दोऽयं देवताया विधायकः ।
न गौणवृत्तिमाश्रित्य धर्मानतिदिशत्यतः ॥ १५ ॥
न हि प्रणयतीत्येतत्सौमिकस्याभिधायकम् ।
प्राकृतस्यानुवादे च वचनं स्यादनर्थकम् ॥ १६ ॥
तस्मात्प्रणयन्तीत्येतदप्राकृतमसौमिकम् ।
अपूर्वमग्नेर्नयनं वदत्याहवनीयतः ॥ १७ ॥
वह्निमात्राभिधायित्वान्न संस्कारातिदेशनम् ।
होमादिभिः फलापेक्षा संस्कृतानां निवर्तिता ॥ १८ ॥

उपतिष्ठतिना तावदपूर्वं कर्म चोद्यते ।
पृष्ठशब्दोऽपि तस्यैव विधत्ते पृष्ठतुल्यताम् ।। १९ ।।
जघन्यवृत्तिता पृष्ठशब्दस्येहोभयोस्समा ।
उपतिष्ठतिधातुश्च समीपस्थितिवाचकः ।। २० ।।

इति तृतीयः पादः ।

---

## चतुर्थः पादः

वैदिकी हि निबद्धत्वान्नेतुं नान्यत्र शक्यते ।
लौकिकी त्वनिबद्धत्वात्सर्वत्रैवानुषज्यते ।। २१ ।।
वैदिकी वैदिकत्वेन सामान्येनोपतिष्ठते ।
लौकिकी त्वसमानत्वान्नोपस्थास्यत्यपेक्षिता ।। २२ ।।
यद्यप्यनुमिताद्वेदाल्लौकिकोऽपि तु वैदिकः ।
प्रत्यक्षवेदविरहान्नैवासौ सदृशो मतः ।। २३ ।।
प्रत्यक्षं श्रूयते नाम चोदकस्त्वानुमानिकः ।
न प्रत्यक्षविरुद्धार्थमनुमानं प्रवर्तते ।। २४ ।।
वचनादभिधानतस्तथा विदितं कृत्स्नमिहातिदेशनम् ।
अनुमावचसापि सत्तया भविता तस्य विशेषचिन्तनम् ।। २५ ।।

इति चतुर्थः पादः ।

---

## अष्टमाध्याये प्रथमः पादः

तत्र प्रकृतिसम्बन्धाद्विकृतावतिदेशनम् ।
प्रयाजादिवदेतेषामिति प्राप्तेऽभिधीयते ।। १ ।।
प्रकृत्यैव निबद्धत्वाद्विकृत्या सह नान्वयः ।
न चातिदेशतः प्राप्तिः इत्थंभावान्वयादृते ।। २ ।।
न हि गोदोहनादीनामित्थंभावेन संग्रहः ।
इत्थंभावातिदेशेन तेषां नातोऽतिदेशधीः ।। ३ ।।

व्यवस्था प्रकृतौ दृष्टा प्राप्यते विकृतावपि ।
प्रकृतावार्थिको त्वेश्रा विकृतौ नातिदिश्यते ।: ४ ॥

हविषस्त्याज्यमानत्वात्प्रत्यासत्तिर्हि कर्मणि ।
उद्देश्यमात्ररूपत्वाद्देवताऽऽराद्रुपस्थिता ॥ ५ ॥

वर्णसामान्यस्य चाधिक्याद् द्रवत्वस्याविशेषतः ।
अनुग्रहाच्च धर्माणामाज्यधर्मं मधूदकम् ॥ ६ ॥

दधि क्षीरं च संसृष्टमामिक्षेत्यभिधीयते ।
उभयोश्च रसस्तस्यां दृश्यतेऽतो द्वयात्मिका ॥ ७ ॥

विशेषाग्रहणात्तस्मादुभयोर्विकृतिर्भवेत् ।
तप्ते पयसिवावये तु सप्तम्या गुणतः पयः ॥ ८ ॥

दधि द्वितीयानिर्देशात्प्रधानं तेन सापदं ।
दध्येव प्रतिनिर्दिश्य तेन बध्नाति देवतां ॥ ९ ॥

दध्येवातो हविस्तस्मात्सायं दोहविकारता ।
पयसस्तु प्रधानत्वं तत्र कर्मसमाप्तितः ॥ १० ॥

दध्ना हि नीयमानेन तदेव व्याप्यते पयः ।
कर्मतोऽपि प्रधानत्वं तस्य स्यात्संप्रदानवत् ॥ ११ ॥

सर्वनाम्ना परामर्शस्तस्यैवातोऽवकल्प्यते ।
यदेव दधिसंयोगाद्घनीभूतमतो हविः ॥ १२ ॥

तस्यैव देवतायोग श्रमिक्षापि तदेव नः ।
प्रातर्दोहविकारत्वमामिक्षायास्ततस्स्थितम् ॥ १३ ॥

सत्रस्यैव तु सत्रेषु प्रवृत्तिः सत्रसाम्यतः ।
तथाऽहीनेष्वहीनस्य सुसहृक्त्वादिति स्थितम् ॥ १४ ॥

तत्रोपर्यतिरात्रत्वाद् द्विरात्रादिवदेतयोः ।
अहीनत्वम्भवेन्नैवमासनोपायचोदनात् ॥ १५ ॥

सत्रसंज्ञातकाण्डे च समाम्नातमिदं द्वयं ।
तस्मात्सत्रमतः सत्रविध्यन्तोऽत्र प्रवर्तते ॥ १६ ॥

इति प्रथमः पादः ।



## तृतीयः पादः

चतुर्विंशतिरेतानि चत्वारष्षडहा इति ।
चोऽद्यंतेऽहानि तेनैषु द्वादशाहः प्रवर्तते ।। १७ ।।

चतुर्विंशतिसंख्योऽत्र गणः साक्षान्न चोद्यते ।
चतुस्सख्यैस्तु षडहैरनुमानेन गम्यते ।। १८ ।।

चतुःसख्यास्तु षडहाः प्रत्यक्षेणैव चोदिताः ।
तस्मात्षडहविध्यन्तः शीघ्रमत्रावगम्यते ।। १९ ।।

संस्थानिमित्तास्त्वेते न क्रतोः कस्यापि वाचकाः ।
सन्निध्यभावतः संस्थाविशिष्टगणचोदनाः ।। २० ।।

संख्यामात्राभिधायित्वे सर्वत्रैव प्रसज्यते ।
मन्त्रान्तरे घटादौ च तस्मात् संख्यान्वितामृतम् ।। २१ ।।

अष्टाक्षरैस्त्रिभिः पादैर्युक्तामभिधात्यसौ ।
तिस्रोऽनुष्टुभ इत्यत्र गौणः शब्दो न मुख्यतः ।। २२ ।।

इति तृतीयः पादः ।

संक्षेपविस्तारकस्सापवादः
सहक्त्वानुमानात् तथा नामधेयात् ।
अधीताच्च वाक्यात् प्रसिद्धोऽतिदेशः
करिष्यामहेऽन्तः परन्तूहचिन्ताम् ।। २३ ।।

इति चतुर्थः पादः ।

---

## नवमोध्यायस्य प्रथमः पादः ।

यजेस्तावन्निमित्तत्वं न केनचिदिहोच्यते ।
अपूर्वस्यापि तन्नोक्तमर्थात्तस्य निमित्तता ।। १ ।।

अवहन्तिश्रुतेस्तावदवघातः प्रतीयते ।
तत्साधनत्वमेवातस्तृतीयातोऽवगम्यते ।। २ ।।

सामानाधिकरण्याच्च प्रोक्षणं तद्विशेषणम् ।
एवं हन्त्यर्थता, अपूर्वशेषत्वं प्रक्रियावशात् ।। ३ ।।

अवघातावसायं सत्प्रोक्षणं स्यादनर्थकम् ।
विनापि प्रोक्षणं हन्तेः रूपनिष्पत्तिदर्शनात् ॥ ४ ॥

तद्द्वारेण त्वपूर्वार्थं भवन्नानर्थकं भवेत् ।
न हि तेन विना कस्य निष्पत्तिरवगम्यते ॥ ५ ॥

फलवत्परमापूर्वं तच्छेषत्वं ततो भवेत् ।
स्वापूर्वं क्रतुशेषत्वान्न स्वयं फलवद्यतः ॥ ६ ॥

फलवच्छेषता युक्ता न तु निष्फलशेषता ।
तस्मात्तत्साधने रूपे स्वरभेदो विधीयते ॥ ७ ॥

एवमाश्रीयमाणे हि भवेल्लक्षितलक्षणा ।
स्वापूर्वे लक्षणामात्रं तस्मात्तच्छेषता वरम् ॥ ८ ॥

तच्छेषत्वेपि धर्मस्य नानर्थक्यं प्रसज्यते ।
तस्याप्यदृष्टरूपत्वात् फलापूर्वोपयोगतः ॥ ९ ॥

संस्कारोपि ह्यदृष्टत्वादपूर्वमिति गीयते ।
प्रयाजापूर्ववत्तस्मादुभयं स्यात्प्रयोजकम् ॥ १० ॥

तत्र स्वर्गादिशेषत्वं भवेल्लिंगेन मन्त्रयोः ।
फलस्यादृष्टरूपत्वात्प्रधानत्वाच्च सर्वतः ॥ ११ ॥

अग्न्यादेर्याच्यमानस्य फलदायित्वसम्भवात् ।
तादर्थ्यमेव मन्त्रस्य युक्तं नापूर्वशेषता ॥ १२ ॥

सत्यं फलस्य सर्वस्मात्प्राधान्यं न तु तावता ।
मन्त्रस्तद्रूपशेषःस्यादानर्थक्यप्रसंगतः ॥ १३ ॥

इन्द्रादेस्संप्रदानत्वात्कर्मणोऽपि प्रधानता ।
यागः पूजा तदंगं स्यादतिथेर्भोजनं यथा ॥ १४ ॥

यागस्यैव पदश्रुत्या फलसाधनतोच्यते ।
देवतायाश्च तादर्थ्यं तन्निर्वृत्त्युपयोगतः ॥ १५ ॥

यागश्च साध्यरूपत्वात्साधनत्वेन देवताम् ।
गृह्णाति सिद्धरूपा च देवता तस्य साधनम् ॥ १६ ॥

तत्र श्रुतिबलीयस्त्वाद् व्रीह्यादिद्रव्यशेषता ।
प्रक्रियावगतापूर्वशेषत्वस्यापबाधिनी ॥ १७ ॥

व्रीह्यादिरूपशेषत्वे सत्यानर्थक्यमापतेत् ।
प्रोक्षणस्य विनाप्यस्मात् तत्स्वरूपस्य सिद्धितः ॥ १८ ॥
तस्मात्साधनरूपं यद्व्रीहीणां शास्त्रचोदितम् ।
तेन रूपेण संबन्धः प्रोक्षणादेर्विधीयते ॥ १९ ॥

तत्राविशेषात् सर्वेषां पत्नीसंयाजसंस्थितिः ।
असंस्थावचनं गौणं यज्ञस्य चिरसंस्थितेः ॥ २० ॥
अपेक्षितविधानाय प्रागुत्तममयं विधिः ।
मुख्यत्वसम्भवाद्वाक्यशेषस्य न च गौणता ॥ २१ ॥

तत्र स्त्रीलिंगनिर्देशादाहवनेनाभिधीयते ।
तस्या एव त्रिरभ्यासस्बन्धोऽत्र विधीयते ॥ २२ ॥
श्रुत्या प्रथमशब्देन प्राथम्यमभिधीयते ।
ऋक् तु लक्षणयोच्येत तस्मात्प्राथम्यधर्मता ॥ २३ ॥

आवृत्तौ हि प्रधानानामङ्गावृत्तिरसंशया ।
दर्शाद्यंगमियन्तस्मादावर्तेत प्रयाजवत् ॥ २४ ॥
आरंभद्वारकंत्वेतदंगं साधारणश्च सः ।
तस्य साधारणत्वेन सापि साधारणी भवेत् ॥ २५ ॥

पुरुषार्थत्वपक्षे हि फलक्लृप्तिः प्रसज्यते ।
तेनान्वाधानशेषः स्यात्स ह्यारम्भोऽनयोर्यतः ॥ २६ ॥
तस्यावृत्तौ तदंगत्वादेषाप्यऽऽवृत्तिमश्नुते ।
प्रधानवशवर्तित्वादेवं प्राप्तेऽभिधीयते ॥ २७ ॥

न खल्वारम्भशब्देन पदार्थः क्वचिदुच्यते ।
यदेव ह्यप्रवृत्तस्य कर्तुराद्यं प्रवर्तनम् ॥ २८ ॥
तत्रायं वर्त्तते शब्दस्तद्योगात्तु पदार्थधीः ।
आरप्स्यमानशब्दस्तत्कर्त्तुश्चैव वाचकः ॥ २९ ॥

लृट्प्रत्ययोपि श्रुत्यैव तदर्थस्याभिधायकः ।
आद्या प्रवृत्तिरेकैव बह्वृचो नैकस्य कर्मणः ॥ ३० ॥
तत्र दृष्टार्थतालाभाद्देवतावाचिता भवेत् ।
निर्वापस्य प्रशंसार्थाः संन्तोऽदृष्टार्थतामियुः ॥ ३१ ॥

सवित्रादिपदैस्तस्मादग्न्यादिरभिधीयते ।
अग्निना वा विकल्प्येत सविता मान्त्रवर्णिकः ॥ ३२ ॥

उत्पत्तौ तद्धितोक्तेन न मन्त्रोक्तो विकल्प्यते ।
वैषम्यान्न सवित्रादिपदमग्नेश्च वाचकम ॥ ३३ ॥

मन्त्रवाक्यानि चैतानि भिद्येरन् प्रतिदैवतम् ।
जुष्ट-निर्वापशब्दौ च भजेतामनुषङ्गिताम् ॥ ३४ ॥

सर्वश्च निर्वपाम्यन्त एकमन्त्रः प्रतीयते ।
जुष्टादिः सकृदाम्नातो न सहेतानुषञ्जनम् ॥ ३५ ॥

तत्रायं समवेतोऽग्निरस्मिन् कर्मणि यद्यपि ।
मन्त्रे त्वत्राग्निशब्दो न समवेताभिधायकः ॥ ३६ ॥

नात्र जुष्टस्य निर्वापो मन्त्रेणानेन कथ्यते ।
निर्वापकरणात्त्वत्र कीर्त्यते जुष्टभावना ॥ ३७ ॥

इडामन्त्रैकवाक्यत्वादिडास्तुत्यर्थता भवेत् ।
स्वामिवृद्ध्यर्थता त्वस्य सामर्थ्येनावगम्यते ॥ ३८ ॥

वाक्याच्च बलवल्लिङ्गं दृष्टं चेह प्रयोजनम् ।
उत्साहकरणात् स्तुत्यामदृष्टार्थत्वमापतेत् ॥ ३९ ॥

यजमानेषु बहुषु सर्वसंस्कारसिद्धये ।
ऊहो यज्ञपतीन्वर्द्धानित्येवं प्राप्त-उच्यते ॥ ४० ॥

प्रत्यक्षादेव वचनादिडोपाह्वानशेषता ।
कृत्स्नस्य निगदस्योक्ता तन्मध्यपतितं ततः ॥ ४० ॥

न पृथग् भवितुं शक्तमतः स्तुत्यर्थता वरं ।
वृद्धिप्रकाशने कल्प्यं लिंगेन विनियोजनम् ॥ ४१ ॥

यच्छब्देन च पारार्थ्यं वृद्धेः श्रुत्याभिधीयते ।
लिङ्गादपि ततो वृद्धेर्न स्वार्थेन प्रकाशनम् ॥ ४२ ॥

सत्स्वेतेषु गुणेष्वेवं तत्सद्भावे तु न प्रमा ।
वाक्यशेषात्स्वदुक्ता ये स्तुतिमात्रपरा हि ते ॥ ४३ ॥

पशुशब्दश्रुतावेवं भवेन्नत्त्विह स श्रुतः ।
तस्मात् प्रयोगकाले यदपरोक्षतया स्थितम् ॥ ४४ ॥

द्रव्यं तत्र प्रयुक्तोऽयं पुंलिंगं वदितुं क्षमः ।
न स्त्रीद्रव्यमतो मेष्यामशक्तेर्न प्रवर्तते ॥ ४५ ॥

न प्रगाणं भवेत्कस्मादप्रगीतस्य चोदनात् ।
प्रगीता तद्धितोत्पत्तावायीरीयं प्रसज्यते ॥ ४६ ॥

गिरापदस्य यत्स्थानं तत्र हीदं विधीयते ।
इरापदमतस्तस्य या गीतिस्तां लभेत तत् ॥ ४७ ॥

इति प्रथमः पादः ।

## नवमेऽध्याये द्वितीयः पादः

अक्षराणामभिव्यक्तिः साम्नां दृष्टं प्रयोजनम् ।
अक्षरैश्चाप्यभिव्यक्तैः स्तुतिः ऋत्वङ्ग चोदिता ॥ ४८ ॥

एवं दृष्टे फले लब्धे नादृष्टफलकल्पना ।
ननु चाविनियुक्तत्वादक्षराणां न संक्रिया ॥ ४९ ॥

सक्तूनामिव होमेन नैवं दृष्टफलत्वतः ।
प्रयोजनं न सक्तूनां दृश्यते श्रूयतेऽपि वा ॥ ५० ॥

साम क्रियते इत्येवं सम्मनिर्वृत्तिरूच्यते ।
तामुद्दिश्य ऋचां त्रित्वमङ्गत्वेन विधीयते ॥ ५१ ॥

स्तोत्रीयस्य हि साम्नोत्र तृचसंबन्ध उच्यते ।
स्तोत्रसाधनभूतं च स्तोत्रीयमिति भण्यते ॥ ५२ ॥

साम्नः स्तोत्राङ्गभावश्च स्तोत्रसाधनसंस्कृतेः ।
स्तोत्र साधनता चर्चां प्रत्येकं न तु संघशः ॥ ५३ ॥

उभयोरेक्यकार्यत्वात्कार्यसाधनोगोचराः ।
धर्माः द्वयोर्द्वयेऽपि स्युर्व्रीहिधर्मा यवेष्विव ॥ ५४ ॥

सामनोर्व्यवस्थया यस्मन्निर्देशो मीलनादिषु ।
तस्मान्न सङ्करो युक्तो न त्वेवं प्रोक्षणादिषु ॥ ५५ ॥

विकल्प एव तेषां स्यात् प्रकृतावसमुच्चयात् ।
।मथोऽनपेक्षैस्तैर्धर्मौ प्रकृतौ साधिता सुतिः ॥ ५६ ॥

पृथक्निर्देशसामर्थ्याद्व्यवस्था प्रकृतौ कृता।
इदं त्वप्राकृतं साम द्वयोः कार्ये विधीयते ॥ ५७ ॥

चोदकेन विकल्पेन प्राप्तयोः पृष्ठयोरिह।
स्वधर्मयुक्तयोरेव समुच्चयविधिस्त्वयम् ॥ ५८ ॥

काले शब्दस्य मुख्यत्वात्कालाभीज्येह मन्यते।
पृणातेर्दानकर्मत्वात्कर्मण्यपि च मुख्यता ॥ ५९ ॥

उद्देशपूर्वकस्त्यागो यजिना ह्यभिधीयते।
त्यागे च नास्ति कर्मत्वं देवतायाः कथंचन ॥ ६० ॥

प्रकृतौ यादृशो मन्त्रश्चोदकेन हि तादृशः।
प्राप्यते विकृतौ तस्मान्नोहस्तत्रावकल्पते ॥ ६१ ॥

प्रकृतौ यादृशं रूपं मन्त्राणां हि विवक्षितम्।
तादृगेवातिदेष्टव्यं विकृतौ नाविवक्षितम् ॥ ६२ ॥

दोषनिर्हरणायेदं प्रायश्चित्तं विधीयते।
दोषश्च प्रतिषिद्धे स्यात्प्रतिषेधश्च लौकिके ॥ ६३ ॥

प्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य कर्मणः।
उभयोः प्रकृतौ भावान्नोत्कर्षोऽस्याऽवकल्पते ॥ ६४ ॥

प्रकृतौ यस्य शब्दस्य यादृशोऽर्थो निरूपितः।
तादृगेवातिदेशेऽपि स हि कार्यपरो यतः ॥ ६५ ॥

देवतात्मन एकत्वादविकारः पुरोदितः।
तद्रूपस्य तु भिन्नत्वे को नामोहं निवारयेत् ॥ ६६ ॥

वङ्क्रयित्ता प्रकाश्येह पार्श्वसाकल्पसिद्धये।
ता इति प्रतिनिर्देशादपि तासां प्रधानता ॥ ६७ ॥

एवकारोपवद्धत्वान्न षर्डविंशतिचोदना।
चतुस्त्रिंशन्निषेधे च नानुवादोऽस्य सम्भवी ॥ ६८ ॥

ऋच एव निषेधोऽतस्तथा सति च चोदकात्।
प्राप्तं षर्डविंशतिरिति ब्रूयादित्यनुकीर्त्यते ॥ ६९ ॥

उद्गायेदिति लिङ्श्रुत्या धात्वर्थस्य निमित्तताम्।
वदत्यग्नेस्तु वाक्येन तस्मादारादुपक्रिया ॥ ७० ॥

उद्वानस्याग्नियुक्तस्य नित्यत्वान्न निमित्तता।
न च तस्याग्निना व्याप्तिः कदाचिदपि विद्यते ॥ ७१ ॥

अग्निहोत्रार्थं उद्वाते प्रायश्चित्तमिदं श्रुतं।
धार्यस्य चास्ति तादर्थ्यं सर्वार्थं धार्यते ह्यसौ ॥ ७२ ॥

अन्यार्थमुद्धृतोह्येषः गतश्रीत्वेन धार्यते।
धारणस्य निमित्तं तन्नोद्धारस्याऽश्रुतत्वतः ॥ ७३ ॥

दर्शार्थेऽप्युद्धृते वह्नावग्निहोत्रं प्रवर्त्तते।
साधनत्वंप्रयुक्तश्च धर्मो नाङ्गमपेक्षते ॥ ७४ ॥

काले खल्वनुपादेये प्राप्ते कर्म विधीयते।
साङ्गं तस्मात्तु कालात्प्राङ्नाधिकारोऽस्ति कर्मणि ॥७५॥

चरोर्देवतया योगं पयसा चरुलक्षितं।
विदधद्भिद्यते वाक्यमर्थद्वयाविधानतः ॥ ७६ ॥

चरुणाऽऽधारभूतेन पयसा च विशेषितः।
द्रव्यदैवतसम्बन्ध एकार्थोऽत्र विधीयते ॥ ७७ ॥

द्वितीयया प्रधानत्वं सोमस्यात्रावगम्यते।
तृतीयया च तादर्थ्यं पयसः प्रतिपाद्यते ॥ ७८ ॥

श्रुतेश्चादृष्टसंस्कारकल्पना नैव दुष्यति।
तस्मात्प्रदेयधर्माणां न पयःप्रभृतौ क्रिया ॥ ७९ ॥

विना यागेन न द्रव्यं देवतान्वयमृच्छति।
द्रव्यदैवतसंयोगादतो यागो विधीयते ॥ ८० ॥

प्राकृतार्थपतितान्यकार्यतो मन्त्रसामविषये च संस्कृतौ।
एवमूहविधिरत्र चिन्तितौ बाधचिन्तनमतः करिष्यते ॥८१॥

इति नवमेऽध्याये चतुर्थः पादः समाप्तः।

## दशमेऽध्याये प्रथमः पादः

ऊहे सिद्धेऽतिदिष्टानां बाधाभ्युच्चयचिन्तया।
इयत्ता दशमेऽङ्गानां विकृतिष्वभिधीयते ॥ १ ॥

अपेक्षाऽऽसतियोग्यत्वैरुपकारातिदेशनम् ।
तदभावात्पदार्थानामतिदेशो न कल्प्यते ॥ २ ॥

कर्तव्या चोदकप्राप्तेरिति प्राप्तेऽभिधीयते ।
अङ्गभूतास्वियं लुप्तद्वारत्वान्न प्रवर्तते ॥ ३ ॥

आरप्स्यमानपुरुषसंस्कारार्थेयमिष्यते ।
नारम्भो दीक्षणीयादेः प्रधानारम्भसिद्धितः ॥ ४ ॥

वचनाददेवतालाभे न मन्त्रात्कल्पनं क्षमम् ।
तस्योश्चानुपयोगित्वाद्भवेदाराढुपक्रिया ॥ ५ ॥

न देवताविधौ शक्तिर्द्वितीयान्तस्य विद्यते ।
न च यागविधौ क्षीणो विधत्ते देवतां विधिः ॥ ६ ॥

दृष्टे स्मरणसंस्कारे सति नादृष्टकल्पना ।
पशुधर्मैश्च सन्दंशात्तदङ्गत्वं सुनिश्चितम् ॥ ७ ॥

भक्षार्थोद्युपहारऽतो भक्षोऽपि युगपद्भवेत् ।
सहाप्युपहृतौ शक्यं यथाकालं तु भक्षणम् ॥ ८ ॥

यद्यसम्भवि कर्त्तव्यं तत एवं भवेदिदं ।
जीवन्नेव तु संप्रैषाच्छिष्टे कर्तृत्वमृच्छति ॥ ६ ॥

प्रकारद्वारतः प्राप्तेरतिदेशेन कर्मणां ।
तान्यनूद्य गुणः शक्यो विधातुमिति तद्विधिः ॥ १० ॥

न च सत्यां गतौ न्याय्यं विशिष्टविधिगौरवम् ।
वाक्यार्थविधिदोषश्च समानः पक्षयोर्द्वयोः ॥ ११ ॥

तत्र प्रत्यक्षपाठेन प्रत्यक्षवचनेन च ।
वैकृताः प्राकृतान्मन्त्रान् बाधेरन्नेककार्यतः ॥ १२ ॥

न प्रत्यक्षेन वाक्येन होमार्थं वैकृताः श्रुताः ।
दीक्षार्थताबलात्तेषां होमाङ्गत्वं प्रकल्प्यते ॥ १३ ॥

सकृत्प्रयोगमात्राच्च तादर्थ्यमुपपद्यते ।
वैकृतैः प्राकृतास्तास्तस्मात्समुच्चेया न बाधनम् ॥ १४ ॥

ऋत्विक्परिक्रियार्थेन दानमेतदिति स्थितम् ।
तेन तेषां प्रधानत्वाद्बहुत्वं न विवक्षितम् ॥ १५ ॥

गवादीनां प्रधानत्वे दृष्टं नास्ति प्रयोजनम् ।
ऋत्विगानमनार्था तु दक्षिणा सप्रयोजना ॥ १६ ॥

द्वितीयाश्रुतिसामर्थ्याद्ददाति क्रिययाऽन्वयः ।
एकया पञ्चभिश्चातः सर्वं देयं निवर्त्तते ॥ १७ ॥

ददातिसङ्गतौ सत्यां गोशब्दे लक्षणा भवेत् ।
पाक्षिको वाऽनुवादः स्याद्विधौ वाक्यं तु भिद्यते ॥ १८ ॥

तदानन्तर्यसम्प्राप्तं बाधित्वाऽध्वर्युसङ्गमम् ।
द्वितीयाश्रुतिसामर्थ्याद्ददातीति क्रियान्वयः ॥ १६ ॥

उच्यतेऽध्वर्युसम्बन्ध एव प्राकाशयोरिह ।
विधीयतेऽथवाऽपूर्वं दानं द्वाभ्यां विशेषितम् ॥ २० ॥

प्राकाशवद्युपर्युक्तः स्यात्तद्भागस्य बाधकः ।
न चायं बाधकस्तस्य प्राप्तस्य नियमो ह्यसौ ॥ २१ ॥

सति प्राकृतकार्यत्वे भवेद्बाधो न चास्ति तत् ।
साधारणं न होमत्वं तस्योपस्थापनक्षमम् ॥ २२ ॥

येषां मिथोऽनपेक्षाणां कार्येणैकेन सङ्गतिः ।
तेषां बाधो विकल्पो वा नैवमस्ति ग्रहे पुनः ॥ २३ ॥

प्राकृतानामबाधेन वैकृतानामसम्भवः ।
यत्र तत्रैव बाधः स्याद् विवृद्धौ त्वस्ति सम्भवः ॥ २४ ॥

देवतात्वं विधायाग्नेश्चोदना विनिवर्त्तते ।
प्रयोगकाल उद्देशो येन केनापि सिद्ध्यति ॥ २५ ॥

तत्रैकेनार्थनिर्देशसिद्धेर्नोच्चारणं द्वयोः ।
स चाग्निशब्द एवैकश्चोदकानुग्रहोभवेत् ॥ २६ ॥

उभयोर्दर्शशेषत्वाद्विशेषानवधारणात् ।
न मिथोङ्गाङ्गिभावः स्यात्तस्मादारादुपक्रिया ॥ २७ ॥

देवतास्मरणं होत्रः दृष्टमेव प्रयोजनम् ।
अनुयाजस्य तेनेह न युक्ताऽदृष्टकल्पना ॥ २८ ॥

अग्निद्वारेण मन्त्रोऽयं मग्नीषोमौ प्रकाशयन् ।
अन्तरेणैव वचनं प्रकृताववतिष्ठते ॥ २९ ॥

कृत्स्नस्याग्रयणादेव ग्रहणं नित्यवच्छ्रुतम् ।
न युक्तं बाधितुं तस्मान्न विकल्प-समुच्चयौ ॥ ३० ॥

उक्थ्याग्निष्टोमसंयोगेनाऽस्यस्तोत्रादिकं भवेत् ।
षोडशिस्तोत्रसंस्थायां नोक्थ्याग्निष्टोमता भवेत् ॥ ३१ ॥

अग्निष्टोमादिशब्दा हि स्तोत्रसंस्थानिमित्तकाः ।
षोडशिस्तोत्रसंस्थायामग्निष्टोमः क्रतुर्भवेत् ॥ ३२ ॥

सत्यं संस्थान्यतापत्तिर्वचनात्तु न दुष्यति ।
पूर्वसंस्थोपमर्दन संस्थैवाऽन्याविधीयते ॥ ३३ ॥

उक्थ्यसंस्थो हि यः प्राप्तस्तथाऽग्निष्टोमसंस्थितिः।
राजन्यस्य तथा नाऽसौ किन्तु षोडशिसंस्थितिः ॥ ३४ ॥

इत्येषवचनस्यार्थस्तस्मात् सस्तुतशस्त्रकः ।
तदंगत्वेन हि स्तोत्रं शस्त्रञ्चाहृत्य चोदितं ॥ ३५ ॥

अनपेक्षितसंबन्धात् वाक्यभेदप्रसंगतः ।
न युक्तोऽङ्गांगिसंबन्धस्तस्मात् कालार्थता वरं ॥ ३६ ॥

द्वादशाहाङ्गताह्यस्य गम्यते प्रक्रियावशात् ।
वाक्याद्वा षडहाङ्गत्वं त्र्यस्त्रिशाङ्गता क्रमात् ॥ ३७ ॥

दक्षिणा ह्यहरङ्गत्वात् प्रत्यहं भेदमर्हति ।
एकप्रयोगतापातात् तन्त्रेणैका प्रदीयते ॥ ३८ ॥

इति दशमेऽध्याये प्रथमः पादः ।



## सप्तमः पादः

तद्धितेन पशोरेव देवतान्वयचोदनात् ।
समस्तस्य पशोर्दानमैन्द्रस्य पयसो यथा ॥ ३९ ॥

खण्डनं प्राकृतार्थं हि हृदयादिषु दृश्यते ।
तस्मात्तत्प्रकृतित्वेन देवतासङ्गतिः पशोः ॥ ४० ॥

एकेनापि पशोर्यागसाधनत्वोपपत्तितः ।
तन्मात्रेणैव यागः स्यात्सर्वैर्वा युगपन्मतेः ॥ ४१ ॥

अविशेषाद्धि सर्वेषां हविष्ट्वमवगम्यते ।
अवदानवचोभ्यस्तु विशेषोऽत्राऽवधार्यते ॥ ४२ ॥

त्रित्वं नाङ्गानुवादेन विधातुं शक्यते तथा ।
तस्य प्रसरभेदेन सामर्थ्यं हि विहन्यते ॥ ४३ ॥

अध्वर्योर्यावती तृप्तिर्होतुस्तृप्तिश्च यावती ।
तन्त्रेण तावती तृप्तिर्भागेनैकेन लभ्यते ॥ ४४ ॥

तत्र प्रकृतितः प्राप्तेश्चोदकेनाज्यभागयोः ।
गुणान्तरस्य चाभावादनुवादत्वमिष्यताम् ॥ ४५ ॥

आनर्थक्यप्रसङ्गात्तु न त्वेतद्धृदयङ्गमं ।
तस्मादुभाभ्यां विध्यन्तो दार्शिकोऽत्र विधीयते ॥ ४६ ॥

तस्मादपूर्वतैव स्यात् गृहमेधीयकर्मणः ।
प्राकृताङ्गनिराकाङ्क्षं न तच्चोदकमर्थयेत् ॥ ४७ ॥

वाक्यभेदो हि न न्याय्यो विकल्पश्चाष्टदोषभाक्।
त्रिदोषा परिसंख्या च तस्मात्स्तुत्यैकवाक्यता ॥ ४८ ॥

स्यादेवं शंखिडान्ताङ्गरीतिर्यदि विधीयते ।
प्रवृत्तयोस्तु संस्थानं चोद्यते शंखिडान्तयोः ॥ ४९ ॥

वपामुद्दिश्य चोद्येत यदि पञ्चावदानता ।
स्यादेवमवदाने तु पञ्चसंख्याऽत्र चोद्यते ॥ ५० ॥

इति सप्तमः पादः ।

---

## अथाऽष्टमः पादः

तत्र श्रुत्यर्थलाभाय प्रतिषेधोऽन्यथा पुनः ।
पदद्वयमपि ह्यन्यपरत्वाल्लक्षणां व्रजेत् ॥ ५१ ॥

यत एव विकल्पोऽयं प्रतिषेधे प्रसज्यते ।
अतस्तत्परिहाराय पर्युदासाश्रयो वरम् ॥ ५२ ॥

सामान्यस्यापि लब्धत्वात्प्रत्यक्षेण विशेषवत् ।
नास्ति लिङ्गादिवद्बाधो नापि बाधोऽतिदेशवत् ॥ ५३ ॥

प्राप्तिः सामान्यशिष्टस्य विशेषे लक्षणावशात्।
श्रुत्या विशेषशिष्टस्य तस्मादस्ति बलाबलम्॥ ५४॥

क्लृप्तोपकाराः प्रकृतौ सामिधेन्यो यतस्ततः।
ताभिरेव निराकांक्षा नेच्छन्ति प्राकृतान्वयम्॥ ५५॥

साप्तदश्यं त्वनारभ्यवादप्राप्तमनूद्यते।
सामिधेन्यस्तु चोद्यन्ते ताभिश्चापूर्वता स्फुटा॥ ५६॥

भवेदेवमपूर्वत्वं सामिधेनीविधिर्यदि।
साप्तदश्यविधिस्त्वेष तस्मान्नाऽपूर्वता भवेत्॥ ५७॥

चोदकेनाऽन्यतिग्राह्यं विकृतौ न प्रदिश्यते।
कासुचिच्छ्रवणं तस्य तथा हि स्यादनर्थकम्॥ ५८॥

तस्मात्तदर्थवत्त्वाय प्रदेशो नेति कल्प्यते।
तेन यत्रोपदेशोऽस्य तत्रैवान्यत्र न क्रिया॥ ६०॥

अङ्गान्तरवदस्यापि प्राप्तिश्चोदकतो ध्रुवा।
चोदकार्थस्य कृत्स्नत्वात्कासुचिच्छ्रवणं पुनः॥ ६१॥

सामान्यविध्यसिद्ध्यर्थं नातिदेशं निवारयेत्।
कोऽर्थः सामान्यविध्ये चेद् गुणकामप्रवर्त्तनम्॥ ६२॥

तत्र द्वितीयासंयोगाच्चतुःखण्डनसंस्कृतम्।
होतव्यं हविषस्तस्माद्धोतव्यात्खण्डनं चतुः॥ ६३॥

चतुःसंख्यावदानस्था होमाङ्गं चोद्यते यदिः।
तत एवं भवेत्सा तु यथा प्राप्ताऽनुकीर्त्यते॥ ६४॥

विष्णवाद्या देवताः सत्यं मन्त्रवर्णाद्विकल्पिताः।
न तु कालद्वये यागः पौर्णमास्यान्तु वाक्यतः॥ ६५॥

स्यादेवमन्तरालस्य गुणत्वेन विधिर्यदि।
कालो विधीयते त्वत्र पुरोडाशोपलक्षितः॥ ६६॥

तदेवं लुप्तार्थं यदपि च निषिद्धं विकृतिषु-
तथा प्रत्याम्नातं त्रिविधमिह बाध्यं व्यवसितम् ।
अतस्त्वन्यस्याभ्युच्चयविधिरियत्तैवमुदिता-
प्रयोगेयत्तायास्त्वत उपरि चिन्तां प्रकुरुते ॥ ६७ ॥

इति दशमेऽष्टमः पादः समाप्तः ।

इति दशमोऽध्यायश्च समाप्तः ।



## एकादशाध्यायस्य प्रथमः पादः

परस्परानपेक्षाणामुत्पन्नानां फलार्थिनाम् ।
चोद्यमानं फलन्तेषामेकैकस्यावधार्यते ॥ १ ॥
तेषां ह्युद्दिश्यमानत्वात् साहित्यमविवक्षितम् ।
तस्मात् प्रत्येकमेव स्यादिति प्राप्तेऽभिधीयते ॥ २ ॥
आग्नेयादिकमुद्दिश्य फलं यद्युपदिश्यते ।
तत उद्दिश्यमानत्वात्तेषामेकैकशः फलम् ॥ ३ ॥
कामिनं तु यदोद्दिश्य कर्मणां चोदनात्तदा ।
तेषां विधीयमानानां सहभावो विवक्षितः ॥ ४ ॥
आत्मन्यतिशयः कश्चित्कृते कर्मणि नैव चेत् ।
प्रागवस्थासमानत्वादात्मनो न भवेत् फलम् ॥ ५ ॥
आत्मस्वरूपहेतुत्वे ह्यकर्तुरपि तद्भवेत् ।
तस्मादतिशयः कश्चित् कर्मभ्यो जायते नरे ॥ ६ ॥
स च कार्यविरोधित्वात् स्वफलाप्तेर्विनश्यति ।
फलान्तरार्थं कर्तव्यं तस्मादतिशयान्तरम् ॥ ७ ॥
स एवातिशयोऽस्माभिरपूर्वमिति गीयते ।
तस्माद् भूयः प्रयोक्तव्यं पुनः फलमभीप्सता ॥ ८ ॥

भेदेन विनियुक्तत्वात् भेदेनैव क्रिया भवेत् ।
कथंभावस्य भिन्नत्वात् भेदेन विनियोगधीः ॥ ९ ॥
सत्यं प्रत्येकमङ्गानां विनियोगस्तथापि तु ।
विधानवदनुष्ठानं सकृदेवोपकारकम् ॥ १० ॥

इति एकादशेऽध्याये प्रथमः पादः समाप्तः ।

## एकादशेऽध्याये द्वितीयः पादः

कर्मरूपेण संबन्धो देशादीनां फलस्य च ।
उत्पत्तिविधिनैवातः सर्वेषां एकवाक्यता ॥ ११ ॥
भावनोत्पत्तिवेलायां देशादिविधयो यदि ।
तत एवं भवेत्ते तु फलवद्भावनाश्रयाः ॥ १२ ॥
त्रिकद्वयस्य साङ्गस्य चोदना कालयोर्द्वयोः ।
तेनाङ्गानामिहावृत्तिर्वपादीनां पशौ पुनः ॥ १३ ॥
स्यादेवं यदि निर्वापः सर्वेषामपकृष्यते ।
प्रातःकालिकमात्रस्य तद्विशेषोऽत्र चोद्यते ॥ १४ ॥
सत्यं न तन्त्रमङ्गानि देशभेदात् तथापि तु ।
न पृथक् स्यादनुष्ठानं प्रसङ्गात्कार्यसिद्धितः ॥ १५ ॥
तन्त्रेऽन्यस्य समारब्धे यत्रान्यस्य विधिः श्रुतः ।
तत्र प्रसङ्गो न त्वत्र युगपत्सर्वचोदनात् ॥ १६ ॥
नान्यः कर्मविधिर्युक्तोऽनेकादृष्टप्रकल्पनात् ।
वाक्यभेदप्रसङ्गाच्च तस्मादुत्कर्षचोदना ॥ १७ ॥

इति एकादशेऽध्याये द्वितीय पादः ।

## अथ एकादशेऽध्याये तृतीयः पादः

निष्कासस्य हि सप्तम्या गुणभावोऽवगम्यते ।
द्वितीयया प्रधानत्वमितरस्य स्फुटं श्रुतम् ॥ १८ ॥
प्रयाजादिवदङ्गत्वादावृत्तिः स्यात्प्रतिक्रियम् ।
आनन्तर्याद्विशेषश्च गृह्यतेऽतो न तन्त्रता ॥ १९ ॥
स्वकालत्वात्तु तन्त्रत्वं विशेषाग्रहणाद्भवेत् ।
आनन्तर्याद्विशेषश्चेन्नाधानसमये ह्यसौ ॥ २० ॥
यथैवाध्वरकल्पायामाद्यस्यैवापकर्षणम् ।
निर्वापस्य तथा यूपोऽप्याद्य एवापकृष्यते ॥ २१ ॥
अग्नीषोमीयसंस्थायामतोऽसावपवृज्यते ।
भेदेन सवनीयादौ स्वकाले यूपसंग्रहः ॥ २२ ॥
नैतदस्त्यविशेषेण सर्वयूपापकर्षणात् ।
न चेहाध्वरकल्पावद्युक्तमाद्यापकर्षणम् ॥ २३ ॥
प्रधानकालबाधोऽत्र तथैवाऽप्राप्तचोदना ।
आद्यापकर्षणेऽप्यस्ति तस्मात्सर्वापकर्षणम् ॥ २४ ॥
देशकालफलाभेदादङ्गानां तन्त्रता भवेत् ।
कर्तृभेदोऽपि नैवास्ति दक्षिणामात्रभेदतः ॥ २५ ॥
उच्यते दक्षिणाभेदात्कर्तृत्वमपि भिद्यते ।
तदानतानां कर्तृत्वादानतेश्च पृथक्त्वतः ॥ २६ ॥
तन्त्रावापनिमित्तः प्रयोगपरिमाणनिश्चयो वृत्तः ।
प्रासंगिके प्रयोगे परिमाणमतः परं वक्ष्यामः ॥ २७ ॥

इति एकादशेऽध्याये चतुर्थः पादः ।

इति एकादशोऽध्यायः समाप्तः ।



## अथ द्वादशेऽध्याये प्रथम-द्वितीय-तृतीय पादाः

अंगानि पशुकालानि पश्वर्थानीत्यसंशयं।
अनागते पुरोडाशकाले नहि तदर्थता ॥ १ ॥
अन्यार्थानुष्ठितञ्चांगं न ह्यन्यस्योपकारकं।
तदर्थेन कृतं तस्य तथा प्रकृतिदर्शनात् ॥ २ ॥
विधीयमानं कालादौ कर्म सांगं विधीयते।
स्वकालेऽतः पुरोडाशः कार्यः सर्वांगसंयुतः ॥ ३ ॥
गुणकालकृतञ्चापि वैगुण्यं भाष्य ईरितम्।
तेनाऽपि न प्रसंगोऽस्तीत्येवं प्राप्तेऽभिधीयते ॥ ४ ॥
वितते पाशुके तन्त्रे समाप्तिमगते सति।
मध्ये पतन् पुरोडाशस्तत्तन्त्रमुपजीवति ॥ ५ ॥
चोदकेन पुरोडाशे यो विध्यन्तस्समर्पितः।
ऐष्टिकस्स पशावेव विततो दृश्यते यदा ॥ ६ ॥
तदा तेनैव सन्तुष्टः पुरोडाशविधिस्स्वयम्।
प्राकृतानां पदार्थानां न करोत्युपसंग्रहम् ॥ ७ ॥
तत्र प्रयोगवचनः प्रत्यक्षत्वान्न बाध्यते।
चोदकस्त्वनुमेयत्वाद्दुर्बलो बाधमर्हति ॥ ८ ॥
चोदकेनांगकार्याणां पुरोडाशान्वये सति।
प्रयोगवचनः पश्चात् तद्विशिष्टं विधास्यति ॥ ९ ॥

इति द्वादशेऽध्याये प्रथम-द्वितीय-तृतीयाः पादाः समाप्ताः।

## अथ द्वादशाऽध्याये चतुर्थः पादः

त्रयोऽप्यार्त्विज्यमर्हन्ति विद्वत्त्वात् स्मरणं पुनः।
पुरुषार्थमतः कर्मवैगुण्यं नास्ति किञ्चन ॥ १० ॥

द्विजोत्तमानामार्त्विज्यं न तु क्षत्रिय-वैश्ययोः ।
ब्राह्मणार्त्विज्यनियमः क्रत्वर्थेनापि हि स्मृतः ॥ ११ ॥

मध्ये तन्त्रं यस्य येषां विधानं–
तेषु प्रोक्तो मुख्यतन्त्रप्रसङ्गः ।
जिज्ञास्यो यो धर्म उक्तश्चतुर्धा–
स प्रज्ञातो लक्षणैर्द्वादशान्तैः ॥ १२ ॥

इति द्वादशाऽध्याये चतुर्थः पादः समाप्तः ।

इति द्वादशोऽध्यायःसमाप्तः ।

इति शास्त्रदीपिकाया मूलश्लोकास्समाप्ताः ।



# अथ षष्ठोऽध्यायः ।

## प्रथमः पादः ।

### स्वर्गकामाधिकरणम् ॥ १ ॥

द्रव्याणां कर्मसंयोगे गुणत्वेनाऽभिसम्बन्धः ॥१॥ असाधकन्तु तादर्थ्यात् ॥ २ ॥ प्रत्यर्थं चाऽभिसंयोगात् कर्मतो ह्यभिसम्बन्धः, तस्मात्कर्मोपदेशः स्यात् ॥ ३ ॥

भेदादिलक्षणैरेवमनुष्ठेये निरूपिते ।
कोऽनेनाधिक्रियेतेति साम्प्रतं सम्प्रधार्यते ॥ १ ॥
तदुपोद्घातरूपेण त्वादावेतद्विचार्यते ।
कर्मभिः पुरुषः कर्ता किमधिक्रियते न वा ॥ २ ॥

सत्यधिकारे, कस्य कुत्राधिकार इति चिन्तयितुं लक्षणमारब्धव्यमिति, तत्सिद्धचर्थमधिकारसद्भावः प्रथमं प्रतिपाद्यते । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, चित्रया यजेत पशुकामः' इत्यादिषु किं पुरुषस्याधिकारः-स्वाम्यम्-कर्मजन्यफलभोक्तृत्वमस्ति, न वेति चिन्त्यते । तदर्थमिदं विचार्यते-येयं प्रत्ययोपात्ता भावना, तस्यां किं धात्वर्थ एव भाव्यः प्रधानं, स्वर्गादि तु साधनतया गुणभूतम् ? उत काम्यमानत्वेनोपात्तः स्वर्गादिरेव भाव्यः, तत्साधनञ्च धात्वर्थ इति ? ततोऽप्येतद्विवेक्तव्यम् । योऽत्र क्रियायाः स्वर्गकामादेश्च पुरुषस्य क्रियाकर्तृरूपः सम्बन्धः, तत्र किं क्रिया प्रधानतः, पुरुषो गुणतः, ततो विपरीतं वेति । यदि गुणतः पुरुषः, तस्य गुणभावं क्रियाक्षेपसिद्धमनूद्य स्वर्गादि द्रव्यं साधनत्वेन विधीयते, कामयतिश्च साधनकामनानुवादः । तदयमर्थः—स्वर्गं साधनत्वेन कामयमानो यजेत—स्वर्गेण यागं कुर्यादित्यर्थः । यद्वा स्वर्गकामनैव समुद्रमनोध्यानवत् गुणभूतकर्तृविशेषणं-

---

सती यागाङ्गमुपदिश्यत इति द्वेधा पूर्वः पक्षः । अथ प्रधानतः पुरुषः, ततः तस्यात्मार्था स्वर्गादिगोचरा प्रवृत्तिः प्रत्ययेन विधीयते, साधनतया च यागः उपदिश्यते—स्वर्गकामो यागेन कुर्यादात्मार्थां प्रवृत्तिमिति । स्वर्गकामस्यात्मार्था प्रवृत्तिः स्वर्गविषयैवेति, स्वर्गभावनैवानेन प्रकारेणोपदिष्टा भवति ।

तदयमर्थः—स्वर्गं यः प्राप्तुमिच्छति, स यागेन कुर्यादभिलषितम्। स्वर्गश्च तस्याभिलषित इति, स्वर्गं भावयेत् यागेनेत्युक्तं भवति।

स्वर्गकामोदाहरणे तु प्रथमपूर्वपक्षौपयिकत्वादिदमपि चिन्त्यते—स्वर्गशब्दो द्रव्यवचनः, प्रीतिवचनो वेति। प्रीतिवचनत्वे तु तस्याः साधनत्वासम्भवादत्यन्तानालम्बनः प्रथमः पूर्वपक्षः स्यादिति।

तत्र पूर्वः पक्षः—धात्वर्थस्यैव भाव्यत्वं पदश्रुत्या प्रतीयते।
स्वर्गादेः खलु वाक्येन श्रुतेर्वाक्यं च दुर्बलम्॥ ३॥
भूतं च स्वर्गपश्वादि द्रव्यं भव्याय कर्मणे।
उपदेश्यं न भूताय भव्यकर्मोपदेशनम्॥ ४॥

स्वर्गशब्दश्चन्दनादिषु प्रयोगाद् द्रव्यवचन इति, न साधनत्वासम्भवः। पश्वादेस्त्वसन्दिग्धमेव द्रव्यवचनत्वम्।

अथवा स्वर्गादिकामनैव यागाङ्गमिति। सर्वथा याग एव भाव्यः, न तेनान्यत्फलम्, असति च फलेऽधिकाराभावादनारम्भणीयमधिकारलक्षणम्। न चैवमफले कर्मणि कः प्रवर्तेत, मा प्रवर्तिष्ट, किं नः छिन्नम्। नैतावता शक्यं फलमुपगन्तुम्। अफलस्य च कर्मणो धर्मत्वं न भवतीत्येतदपि भवतु। तथा च 'चोदनालक्षणोऽर्थो धर्मः' इत्येतदपि प्रत्युद्धृतं स्यादित्येतदपि सत्यम्। तदधीनं च सकलं शास्त्रमिति, सकलशास्त्राक्षेपेणेदमधिकरणमारब्धम्। विधिरपि पुरुषं प्रवर्तयति, न तु फलवत्तां गमयति। न च प्रवर्तितोऽपि कश्चिदफले प्रवर्तेत—इति व्यर्थ एव विधिरिति प्राप्ते—

अभिधीयते—पदश्रुतेर्बलीयस्या विधिश्रुत्या हि भावना।
अवरुद्धा न यागादि भाव्यमालम्बितुं क्षमा॥ ५॥
स्वर्गादिः कामनायोगात्फलत्वेनैव गम्यते।
स्वारस्यात्पुरुषाणां हि कामना फलगोचरा॥ ६॥

लिङादयो विधिम्, भावनां चाभिदधति। तेन प्रकृत्युपात्तयागसम्बन्धात् पूर्वमेव विधिसम्बन्धो भावनायाः प्रतीयते, प्रवर्तनारूपश्च विधिः, प्रवृत्तिहेतुश्च व्यापारः प्रवर्तना, तद्योगिता चापुरुषार्थभाव्यायां भावनायां न सम्भवतीति, यागातिक्रमेण पुरुषार्थस्यैव भाव्यत्वं विधिश्रुतिबलादध्यवसीयते। कस्य पुनरसौ प्रवर्तनारूपो व्यापारः? शब्दस्येति ब्रूमः। तस्य सन्निहितत्वात्, अन्यस्य चाप्रतीतेः, यद्यपि चास्याचेतनत्वादाज्ञादिव्यापारासम्भवः, तथापि योऽस्य व्यापारः सम्भवति, तस्यैव यथा प्रवर्त्तना-

रूपत्वं सम्पद्यते, तथा यतितव्यम्। अंशत्रयविशिष्टभावनाप्रतिपादनं चास्य व्यापारः, तत्र यदि भाव्यांशे पुरुषार्थ उपनीयते, ततस्तत्प्रतिपादनं प्रवृत्तिहेतुर्भवति, नान्यथा। तेन शब्दकर्तृकस्यार्थप्रतिपादनरूपस्य व्यापारस्य प्रवर्तनारूपत्वं सम्पादयितुं तद्विषयभूताया भावनायाः पुरुषार्थभाव्यत्वं निश्चीयते। स्वर्गादिश्च कामनायोगात् भाव्यतया गम्यते, भाव्यविषया हि मुख्यरूपेण कामना, साधनेषु तु तत्सम्बन्धनिमित्ता गौणी। न चात्र गौण्या ग्रहणे प्रमाणमस्ति। तस्माद्विधिश्रुतेः, कामनायोगाच्च स्वर्गपश्वादीनामेव भाव्यत्वम्, यागश्च तत्साधनम्। प्रीतिवचनः स्वर्गशब्दः, तामनभिधाय तद्विशिष्टद्रव्याभिधानासम्भवात्, द्रव्यस्वरूपमात्रे वा प्रयोगात्। अतः स्वर्गादिकामस्य पुरुषस्य तद्भावना यागादिविशिष्टा विधीयते। यद्यपि च स्वर्गकामस्यार्थान्तरविषयापि प्रवृत्तिः शेषत्वेन सम्भवति, तथापि पुरुषान्तरशेषत्वस्यापि सम्भवात्। स्वर्गकामस्य कदाचित्फलान्तरमनिच्छतस्तच्छेषित्वासम्भवान्न स्वर्गकामार्थप्रवृत्तित्वेन निर्दिश्यते। यैव हि स्वर्गकामेषु शेषत्वेनानुस्यूता पुरुषान्तरेभ्यश्च व्यावृत्ता स्वर्गार्था प्रवृत्तिः, सैव स्वर्गकामप्रवृत्तिरित्येवं विशेषणं सहते। अतः स्वर्गकामार्थप्रवृत्त्युपदेशात्तत्साधनत्वेनैव विहितो यागः स्वर्गसाधनत्वेनैव विहितो भवति। फलसाधने च कर्मणि फलभागिनः पुरुषस्य सिद्धोऽधिकार इति, लक्षणमारब्धव्यम्।

इति प्रथमं स्वर्गकामाधिकरणम्।

---

तिर्यगधिकरणम् ॥ २ ॥

फलार्थत्वात्कर्मणः शास्त्रं सर्वाधिकारं स्यात् ॥४॥ कर्तुर्वा श्रुतिसंयोगाद्विधिः कार्त्स्न्येन गम्यते ॥ ५ ॥

सिद्धेऽधिकारे, स किमसमग्रानुष्ठानासमर्थानामन्ध-बधिर-पङ्गु-मूक-देवतिरश्चामपि? किं वा समर्थानां मनुष्याणामेवेति संशयः। तत्र यदि यथाधिकारमङ्गविनियोगः, ततः सर्वेषामपि। अथ यथाविनियोगमधिकारः, तदासमग्रानुष्ठानसमर्थानामेवेति।

तत्र प्रधानवाक्येन सर्वेषामधिकारधीः।
जायते तद्वशेनाङ्गवाक्यानामुपवर्णनम् ॥ ७ ॥

'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति प्रधानवाक्येन सर्वेषां स्वर्गकामाधिकारं कर्मावगतम्। तदनुसारीणि चाङ्गवाक्यानि न तत्सङ्कोचायालम्। अतश्चक्षुष्मन्तम्प्रत्याज्यावेक्षणविधिः, अचक्षुष्मतस्तु विध्यभावात् तद्रहितमेव फलसाधनम्। एवं बधिरस्य वाचनहीनम्, मूकस्य मन्त्रोच्चारणरहितम्, पङ्गोश्च विष्णुक्रमणरहितमिति, सर्वेषामर्थिनामशक्याङ्गरहितकर्मानुष्ठानात्सिद्धोऽधिकारः।

स्यादेवमर्थिनाम्। तिरश्चान्तु साम्परायिकफलकामनाभावात्कथमधिकाराशङ्का, तेषामपि चतुर्दश्युपवासादिदर्शनादस्त्येवादृष्टार्थितेति मन्यते।

अत्रोच्यते—नैवाज्यावेक्षणादीनां पुरुषं प्रति चोदना।
यतोऽसमर्थस्तच्छून्यं कर्म कृत्वाधिकारभाक्॥ ८॥

पुरुषम्प्रति विधीयमानमसमर्थं प्रत्यविहितत्वादनङ्गमेवेति, तद्रहितमेव कर्माविगुणं समग्रं फलं साधयेत्।

क्रतुं प्रति विधिस्तेषां तादृशं तच्च शक्नुवत्।
कृत्वा फलमवाप्नोति ततोऽन्यस्यानधिक्रिया॥ ९॥

न हि स्वातन्त्र्येणाङ्गवाक्यानि पुरुषैः सम्बध्यन्ते, प्रधानवाक्यशेषत्वात्तेषाम्। तत्प्रयुक्तेन तु प्रधानवाक्येन तदङ्गेन युक्तः क्रतुः पुरुषैः संयुज्यमानोऽसमर्थानपहाय समर्थान् प्रति विज्ञायते। अतोऽन्धस्य क्रतुरेव अविहितः, न त्वाज्यावेक्षणमेवाविहितम्, इतरच्च विहितमिति मन्तव्यम्। न च प्रधानवाक्यविरोधात्सर्वाधिकारनिश्चयः, विशेषाभावाद्धि सर्वाधिकारः स्यात्। अस्ति चात्र विशेषोऽङ्गोपसंहारसामर्थ्यम्, अतः समर्थानामेवाधिकारः।

यत्र तु प्रधानवाक्यादिविरोधो यावज्जीवादौ, तत्र भवत्येव यथाशक्तिप्रयोगादपि फलमिति वक्ष्यते। तदविरोधे तु सर्वाङ्गयुक्तकर्मानुष्ठानादेव फलम्, तिरश्चां तु प्रधानमात्रेऽप्यसामर्थ्यान्न क्वचिदधिकारः, ऋषीणां त्वनादौ संसारे पूर्वपूर्वभृग्वादिवरणसम्भवादस्त्येवाधिकार इति, ऋष्युदाहरणमनादर्तव्यम्। देवतानां त्वात्मोद्देशेन त्यागासम्भवाद्विग्रहाभावाच्चाशक्तेरनधिकारः।

इति द्वितीयं तिर्यगधिकरणम्।

---

यागादिषु स्त्रीपुंसयोरुभयोरधिकाराधिकरणम् ॥ ३ ॥

लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः ॥ ६ ॥ तदुक्तित्वाच्च दोषश्रुतिरविज्ञाते ॥ ७ ॥ जातिं तु बादरायणोऽविशेषात्; तस्मात् स्त्र्यपि प्रतीयेत; जात्यर्थस्याऽविशिष्टत्वात् ॥ ८ ॥ चोदितत्वाद्यथाश्रुति ॥ ९ ॥ द्रव्यवत्त्वात्तु पुंसां स्याद् द्रव्यसंयुक्तं क्रयविक्रयाभ्यामद्रव्यत्वं स्त्रीणां द्रव्यैः समानयोगित्वात् ॥ १० ॥ तथा चाऽन्यार्थदर्शनम् ॥ ११ ॥ तादर्थ्यात्कर्मतादर्थ्यम् ॥ १२ ॥ फलोत्साहाविशेषात् ॥ १३ ॥ अर्थेन च समवेतत्वात् ॥ १४ ॥ क्रयस्य धर्ममात्रत्वम् ॥ १५ ॥ स्ववत्तामपि दर्शयति ॥ १६ ॥

इदानीं किं पुंस एवाधिकारः ? उत स्त्रिया अपीति संशयः ।

तत्र पुँल्लिङ्गनिर्देशात्पुंस एवाधिकारिता ।
प्रकृत्यर्थतया लिङ्गं संख्यावन्नाविवक्षितम् ॥ १० ॥

विभक्त्यर्थस्य हि संख्याया ग्रहाधिकरणेऽविवक्षितत्वमुक्तम्, लिङ्गन्तु प्रातिपदिकार्थो ग्रहवत् विवक्षितम्, उद्देश्योऽपि फलकामो विवक्षितलिङ्गः पुमानेव स्यात्, अद्रव्यत्वाच्च स्त्रिया द्रव्यत्यागात्मकयागानुष्ठानासम्भवादननुष्ठाने चाधिकारासम्भवादनधिकारः ।

तथा 'भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः' इति स्मरणात् । अतः पुंस एवाधिकारः—

उच्यते—प्रकृत्यर्थो ऽपि खल्वेतदुद्देश्यस्य विशेषणम् ।
संख्यया तुल्यनीतित्वान्न विवक्षां प्रपद्यते ॥ ११ ॥

ग्रहस्तूद्देश्यत्वाद्धि विवक्षितः, न प्रातिपदिकार्थत्वात् । लिङ्गन्तु प्रतिपदिकार्थोऽप्युद्देश्यविशेषणत्वादविवक्षितम्, वाक्यभेदप्रसंगात् । अनपेक्षितपरिच्छेदत्वाच्चोद्दिश्यमानस्य । न चायं प्रातिपदिकार्थः, विभक्तिविकाराणां टाबादीनां चान्वय-व्यतिरेकाभ्यां लिङ्गाभिधायित्वात् । अतः संख्यावदविवक्षितमिति, स्त्रिया अप्यधिकारः । न चाद्रव्यत्वमस्याः, कर्तनादिभिरर्जनसम्भवात्, पित्रादिदत्तसम्भवाच्च, दायादिसम्भवात् 'पुत्राभावे दुहिते' त्यादि स्मरणात् । पत्याऽऽर्जितस्य चोभयसाधारणत्वात् 'धर्मे चार्थे च कामे च नातिचरितव्या, पाणिग्रहणात्तु सहत्वं कर्मसु, तथा पुण्यफलेषु,

द्रव्यपरिग्रहे चे.' आ. ध. सू. त्याद्विवचनात्। 'ये च यज्ञपत्नीं वर्धानि' त्यादिमन्त्रवर्णेभ्यश्च स्पष्टः स्त्रिया अधिकारः। पत्नीशब्दस्य स्वामिवचनत्वात्, 'भार्या पुत्रश्चे'ति वचनन्तु बहुश्रुतिस्मृतिविरुद्धत्वादस्वातन्त्र्यपरं व्याख्येयम्।

इति तृतीयं यागादिषु स्त्रीपुंसयोरुभयोरधिकाराधिकरणम्।

---

यागे दम्पत्योः सहाधिकाराधिकरणम् ॥ ४ ॥

**स्ववतोस्तु वचनादैककर्म्यं स्यात् ॥ १७ ॥ लिङ्गदर्शनाच्च ॥ १८ ॥ क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते ॥ १९ ॥ फलार्थित्वात्तु स्वामित्वेनाभिसम्बन्धः ॥ २० ॥ फलवत्तां च दर्शयति ॥ २१ ॥**

सिद्धे द्वयोरधिकारे, किं दम्पती पृथग् यजेयाताम्? उत सहेतिचिन्तायामाख्यातोपात्तायाः संख्यायाः गुणभूतोपादेयकर्तृगामित्वेन विवक्षितत्वादेकैकशः प्रयोगे प्राप्ते—

सहेति ब्रूमः। तथा सति हि कर्म समग्रं भवति, इतरथा वैगुण्यं स्यात्। यजमानप्रयोगे पत्न्यवेक्षणान्वारम्भादिलोपात्, तत्प्रयोगे च यजमानावेक्षणादिलोपात्। न चर्त्विक्परिक्रयेण यजमानः पत्नीम्, सा च तमुपादातुं शक्नुतः, स्वामिवचनत्वात् पत्नी-यजमानशब्दयोः, स्वामिनश्च परिक्रयेणासम्पत्तेः, अतोऽङ्गसाकल्यालोचनया सहप्रयोगमध्यवस्यामः, संसृष्टद्रव्यत्वाच्च तयोर्विभागप्रतिषेधाच्च। न पृथग् यष्टृत्वसम्भवः, परस्परसापेक्षयोरेवाग्नीषोमयोरिव देवतात्वं दम्पत्योः कर्तृत्वम्, कर्तृरूपैक्यादाख्यातोपात्तैकसङ्ख्याऽग्नीषोमौ देवतेतिवत्सहप्रयोगेऽप्यविरुद्धा। तस्मात्सहप्रयोगः।

इति चतुर्थं यागे दम्पत्योः सहाधिकाराधिकरणम्।

---

एकस्यैव पुंस आधानाधिकरणम् ॥ ५ ॥

**द्व्याधानं च द्वियज्ञवत् ॥ २२ ॥ गुणस्य तु विधानत्वात्पत्न्या द्वितीयशब्दः स्यात् ॥ २३ ॥**

आधानं प्रकृत्य 'क्षौमे वसानावग्निमादधीयाताम्' इति श्रुतम्। तत्र-संशयः—किमाधानं द्वौ पुमांसौ सस्त्रीकौ सह कुर्याताम् ? उतैक इति।

तत्र—पूर्वत्राख्यातसंख्यायाः कर्तृरूपेऽन्वयः स्थितः।
तेनेह कर्तृरूपस्य भेदो द्विवचनाद्भवेत्॥ १२॥
वसानाविति चौकारात् पुंद्वयं सम्प्रतीयते।
द्वित्व-पुंस्त्वे हि तद्वाच्ये नियम्येते च ते मिथः॥ १३॥

यद्यपि पुंद्वयवत् स्त्रीपुंसयोरपि द्विवचनमौकारान्तं दृष्टं-कुक्कुटश्च कुक्कुटी च कुक्कुटाविति, तथाऽप्युभयाव्यभिचारात्पुंस्त्वं द्वित्वं चास्य-अभिधेयम्, तयोश्चाभिहितयोरसति स्त्रीसद्वितीयप्रमाणे परस्परनियमात् पुमांसावेव द्वौ गम्येते, तयोश्चोत्पत्तावप्राप्तेस्तद्विधानार्थमेवेदं वचनम्। उत्पत्तिवाक्यस्य त्वाधानविधिपरत्वेनार्थवत्त्वादेकवचनं निर्देशमात्रार्थम्-भविष्यति। क्षौमशब्दश्च 'टुक्षु शब्दे' इत्यस्माद्धातोरुत्पन्नः शब्दवत्त्वादनुवादः, मलिनत्वेन क्षौमसादृश्याद्वा गौणः, तस्माद् द्वौ पुमांसौ। एवञ्चात्यन्तसन्निकृष्टार्थविधानात् श्रुत्यनुग्रहः, क्षौमवसानसम्बन्धविधावत्यन्तमनुपपन्नम् वाक्यं स्यादिति प्राप्ते—

अभिधीयते—एक एव। कुतः ?

क्षौमशब्दो न मुख्यस्सन् मुख्यमर्थं परित्यजेत्।
नापि धात्वर्थयोगेन वर्तते रूढिसम्भवात्॥ १४॥
वसानाक्षौमशब्दौ च तव स्यातामनर्थकौ।
द्वित्वमात्रविधायित्वात्तस्मात् क्षौमं विधीयते॥ १५॥
तद्विधाने च पुंद्वित्वं विधातुं नैव शक्यते।
उत्पत्तिवाक्यादन्यत्र नानेकार्थविधिर्यतः॥ १६॥
सन्निकर्षश्च शब्दस्य धर्मो न तदनुग्रहात्।
प्रधानभूतशब्दार्थपरित्यागोऽवकल्पते॥ १७॥
कर्तृरूपस्य चैक्येऽपि तदधिष्ठानभेदतः।
युक्तं द्विवचनं यद्वदग्नीषोमौ हि देवते॥ १८॥
अप्राप्तत्वात्तु वसने यदा क्षौमं विधीयते।
वसानावादधीयातामित्येतावनुवादकौ॥ १९॥

अनुवादो यथाप्राप्ति सा च स्त्रीपुंसयोर्द्वयोः ।
तेन प्राप्तिवशाच्छब्दाविमौ तावेव वक्ष्यतः ॥ २० ॥
एक एव पुमांस्तस्मादादधीत सह स्त्रिया ।
उत्पत्तिवाक्ये ह्यचैकत्वमुपादेयं विवक्षितम् ॥ २१ ॥

इति पञ्चममेकस्यैवं पुंस आधानाधिकरणम् ।

---

पत्न्या यावदुक्ताशीर्ब्रह्मचर्यादावेवाधिकाराधिकरणम् ॥ ६ ॥

## तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् ॥ २४ ॥

दम्पत्योः सहप्रयोगः स्थितः । तत्र 'पत्न्यवेक्षते' इत्यादिषु पत्न्येव कर्त्री । 'शुक्रं यजमानोऽन्वारभते' इत्यादिषु चोपादेयस्य यजमानस्य विवक्षितलिङ्गत्वात् पुमानेव कर्त्ता, ये तु फलिसंस्काराः वचनेनापि न व्यवस्थापिताः, ते द्वयोरपि फलित्वादावर्तन्ते, अतो न तेषु चिन्ता । यानि तु परार्थान्युपस्थानानुमन्त्रणादीनि याजमानसमाख्यया यजमानकर्तृकाणि, तेषु किं दम्पत्योरन्यतरः कर्ता ? उत पुमानेवेति चिन्त्यते ।

तत्र—याजमानसमाख्यानं यजमानपदाद्यथा ।
निष्पद्यते तथैवैतद् यजमानापदादपि ॥ २२ ॥

तेन समाख्यानाविशेषादविशिष्टं द्वयोरपि कर्तृत्वम् ।

[1]विद्वत्त्वाद्वा पुमानेव कुर्यादविदुषीतरा ।
वेदाध्ययनशून्यत्वात् प्रतिषिद्धं हि तत् स्त्रियाः ॥ २३ ॥

यद्यप्युपनयनमष्टवर्षस्य संस्कार्यत्वेनाविवक्षितलिङ्गत्वात् स्त्रिया अपि भासते, अत एवाध्ययनमप्यनिर्दिष्टकर्तृकत्वात् प्रकृतमुपनीतं कर्तारमाश्रयत् स्त्रिया अपि स्यादित्यधिकारबुद्धिर्भवति, तथाऽऽप्याहत्य स्त्रीणामध्ययनप्रतिषेधादविदुषी स्त्री न शक्ता मन्त्रोच्चारणं कर्तुम् । न च तदन्यथाऽनुपपत्त्या तस्या अपि विद्वत्ता सम्पादयितुं शक्यते, संपन्नविद्येन पुंसा तेषामनुष्ठानसिद्धेः । अतः पुमानेव कर्त्ता ॥

इति षष्ठं पत्न्या यावदुक्ताशीर्ब्रह्मचर्यादष्वेवाधिकाराधिकरणम् ।

---

१. विद्वत्तया. मु. पु. पा ।

अपशूद्राधिकरणम् ॥ ७ ॥

चातुर्वर्ण्यमविशेषात् ॥ २५ ॥ निर्देशाद्वा त्रयाणां स्यादग्न्याधेये ह्यसम्बन्धः, क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः ॥ २६ ॥ निमित्तार्थेन बादरिस्तस्मात् सर्वाधिकारः स्यात् ॥ २७ ॥ अपि वाऽन्यार्थदर्शनाद्यथाश्रुति प्रतीयेत ॥ २८ ॥ निर्देशात्तु पक्षे स्यात् ॥ २९ ॥ वैगुण्यान्नेति चेत् ॥ ३० ॥ न काम्यत्वात् ॥३१॥ संस्कारे च तत्प्रधानत्वात् ॥ ३२ ॥ अपि वा वेदनिर्देशादपशूद्राणां-प्रतीयेत ॥ ३३ ॥ गुणार्थित्वान्नेति चेत् ॥ ३४ ॥ संस्कारस्य-तदर्थत्वाद्विद्यायां पुरुषश्रुतिः ॥ ३५ ॥ विद्यानिर्देशान्नेति-चेत् ॥ ३६ ॥ अवैद्यत्वादभावः कर्मणि स्यात् ॥ ३७ ॥ तथा-चान्यार्थदर्शनम् ॥ ३८ ॥

किमग्निहोत्रादिषु चतुर्णामपि वर्णानामधिकारः? उतापशूद्राणां-त्रयाणामिति। तदर्थमिदं विचार्यते—किं कामश्रुतिप्रयुक्तं विद्यार्जनम्? उत स्वाध्यायविधिसिद्धविद्योपजीविन्यः कामश्रुतय इति। द्विधा चात्र पूर्वः पक्षः। एकस्तावत्स्वाध्यायाध्ययनं क्रत्वनुष्ठानज्ञानौपयिकतया विहितं क्रत्वङ्गम् क्रतुविधिभिरेव प्रयाजादिवत्प्रयुज्यते, क्रतवश्चाविशेषेण चातुर्वर्ण्यमधिकुर्वाणाश्चतुर्णामध्ययनं प्रयुञ्जते, तत्र त्रयाणां 'वसन्ते ब्राह्मणमुपनयीते'-त्यादिभिरुपनयनसंस्कारोऽध्ययनाङ्गत्वेन विहितः, चतुर्थस्तु विध्यभावादनुपनीत एवाधीत्य, विद्यां लब्ध्वाऽधिक्रियत इति।

द्वितीयस्तु—न क्रत्वङ्गमध्ययनं श्रुत्याद्यभावात्, अक्षरग्रहणादिदृष्टकार्य-परम्परया वाक्यार्थज्ञानं यावद्गतं, ज्ञानस्यानुष्ठानौपयिकत्वेन स्वयमेव फलत्वोपपत्तेस्तत्रैवाध्ययनं स्वविधिना विनियुज्यते, न तद्द्वारेण क्रतौ। तेनाध्ययनमाधानमिवाग्न्यर्थं ज्ञानाङ्गम्, न क्रत्वङ्गम्। अतस्तेन विनापि क्रतूनामवैगुण्यादनधीतवेद एव शूद्र उपद्रष्टृवचनादनुतिष्ठन्नधिक्रियते, क्रतवो ह्यविशेषेण चतुरोऽप्यधिकुर्वाणास्त्रयाणामध्ययनविधिसिद्धविद्यत्वाद्विद्यार्जनं न प्रयुञ्जते। शूद्रस्य त्वन्यतः सिद्धविद्यत्वाभावात्तदर्जनमपि प्रयुञ्जते। अतो यद्यपि स्वाध्यायविधिरनिर्दिष्टकर्तृकत्वात्कर्तारमपेक्षमाणः प्रकृतोपनयनसंस्कृतान्किमर्थं वयमाचार्यसमीपमानीता इत्येवं प्रयोजनमपेक्षमाणान्—

ब्राह्मणादीनेव कर्तृत्वेन स्वीकुर्वंस्तेषामेवाध्ययनं विधत्ते, न शूद्रस्य। तथाऽप्यसावविहितेनैवाध्ययनेन, उपायान्तरेण वा विद्यां लब्ध्वाऽधिक्रियेतेति।

सत्यमध्ययनं नाङ्गं तत्कृता त्वङ्गमर्थधीः।
तद्वतः क्रतवो लब्ध्वा न तुर्यस्याक्षिपन्ति ताम् ॥ २४ ॥

क्रतुविधयोऽन्यथानुपपत्त्या विद्यार्जनमाक्षिपन्ति, यदा तु स्वाध्यायविधिविहिताध्ययनोपात्तविद्यान् द्विजन्मनो लभन्ते, तदा तैरेव लब्धात्मानः अनुपपत्तिक्षयात् न चतुर्थस्य विद्यामाक्षिपन्ति, यदा चैवं विहितोपायसिद्धज्ञानवत एव विधयोऽधिकुर्वन्ति, तदा तदेव ज्ञानमकर्मकालोपात्तमपि अग्निवत्क्रतूनामङ्गमिति, तच्छून्यस्य स्वाच्छन्द्येन विद्यामर्जयतोऽपि न सिध्यत्यधिकारः। मन्त्रवत्सु च अनधीतवेदस्य कुतोऽधिकारः, कुतस्तरां चानग्नेरग्निसाध्येषु। तस्मात्त्रयाणामधिकारः।

इति सप्तममपशूद्राधिकरणम्।

—:०:—

### यागे निर्धनस्याप्यधिकाराधिकरणम् ॥ ८ ॥

त्रयाणां द्रव्यसम्पन्नः कर्मणो द्रव्यसिद्धित्वात् ॥ ३९ ॥
अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः ॥ ४० ॥

किं त्रयाणामपि मध्ये द्रव्यवत एवाधिकारः? उताद्रव्योपि कर्मार्थं द्रव्यमर्जयित्वाऽनुतिष्ठन्नधिक्रियत इति संशये, पुरुषार्थोपात्तद्रव्यवतां लाभान्नाद्रव्यस्य तदर्जनं क्रतुभिराक्षिप्यते। अतो विदुषामिव द्रव्यवतामधिकारः।

नैतत्तुल्यम्। विद्या हि प्रत्यक्षविधिसिद्धा त्रयाणामिति, तैरेवोपपन्नाः क्रतवो न शूद्रस्य नाक्षिपन्तीति युक्तम्। द्रव्यार्जनं तु सर्वपुरुषाणां द्रव्यकार्यैरेवाक्षेप्तव्यम्। तत्राविशेषात् भोजनादिवत् क्रतूनामपि तदाक्षेपकत्वं न वार्यते। अतोऽद्रव्योऽपि द्रव्यमर्जयित्वा कुर्यात्।

इत्यष्टमं यागे निर्धनस्याधिकाराधिकरणम्।



यागेऽङ्गहीनस्याप्यधिकाराधिकरणम् ॥ ९ ॥

अङ्गहीनश्च तद्धर्मा ॥ ४१ ॥

अङ्गहीनोऽपि द्रव्यहीनवत्तत्प्रतिसमाधानेन कुर्यात्, द्रव्यहानिर्बहिरङ्गमधिकारं व्यरौत्सीत् । अङ्गहानिस्त्वन्तरङ्गं विरुणद्धीति विशेषाशङ्का । अथवा द्रव्यहीनवदङ्गहीनस्य सिद्धमेवाधिकारमुत्तरविवक्षयाऽनुवदतीत्यपौनरुक्त्यम् ।

इति नवममंगहीनाधिकाराधिकरणम् ।

अचिकित्स्याङ्गवैकल्यस्य यागानधिकाराधिकरणम् ॥ १० ॥

उत्पत्तौ नित्यसंयोगात् ॥ ४२ ॥

यस्य त्वप्रतिसमाधेयमङ्गवैकल्यम् । स न कथंचिच्छक्नोति कर्तुमिति, न काम्येष्वधिक्रियते । नित्येषु त्वाहिताग्निश्चेद्यथाशक्ति कुर्वन्नधिक्रियत एव ।

इति दशममचिकित्स्यांगवैकल्यस्यानधिकाराधिकरणम् ।

दर्शपूर्णमासयोः त्र्यार्षेयस्यैवाधिकाराधिकरणम् ॥ ११ ॥

अत्र्यार्षेयस्य हानं स्यात् ॥ ४३ ॥

दर्शपूर्णमासयो 'रार्षेयं वृणीते' इति विधाय, पुनः श्रुतम् 'एकं वृणीते, द्वौ वृणीते, त्रीन्वृणीते, न चतुरो वृणीते, न पञ्चातिवृणीते' इति । तत्रविचारः-किं दर्शपूर्णमासयोरेकार्षेय-द्व्यार्षेययोप्यधिकारः ? उत त्र्यार्षेयस्यैवेति । तत्र 'आर्षेयं वृणीते' इति वरणमात्रे विहिते, चतुर्णां, षडादीनां च प्रतिषेधे कृते, अर्थादेक-द्वि-त्रि-पञ्चानां प्राप्तं वरणमिति, तच्छ्रवणमनुवादः । अथवाऽऽर्षेयं वृणीते' इति सामान्यं यथा 'त्रीन्वृणीते' इत्यनेन त्वत्पक्षे विशेष्यते, तथैकं वृणीते, द्वौ वृणीतो, इत्याभ्यामपि विशेषाभावात्, उभयथा द्वित्वैकत्वयोस्त्रित्वेनाविशेषादेकं द्वौ त्रीन् पञ्च वा वृणानोऽधिक्रियेतेति प्राप्ते-

ब्रूमः- असङ्ख्याकविधौ तावत्प्रतिषेधद्वयाश्रयात् ।
वाक्यद्वयं प्रसज्येत त्रीनित्येनच्च पाक्षिकम् ॥ २५ ॥

एकद्वित्रिविधानं चेत्ततो वाक्यत्रयं भवेत्।
विकल्पश्च भवेत्तस्मात् त्रित्वमेव विधीयते ॥ २६ ॥

'एकं वृणीते' इत्यादौ विध्यश्रवणादर्थवादेन विधिः कल्प्यते। तत्र यदि वरणमात्रे विहिते चतुर्णाम्, षडादीनां च प्रतिषेधः, ततः प्रतिषेधद्वयाश्रयणाद्वाक्यद्वयं कल्प्यं स्यात्। तत् एकादिपक्षे च त्रयाणामभावात् 'त्रीनि'ति नित्यश्रवणमुपरुध्येत, अथैकादिभिः सर्वैर्विशेष्येत, तथाऽपि सङ्ख्यात्रयविधानाय वाक्यत्रयं कल्प्यम्। त्रित्वस्य च पाक्षिकत्वं तदवस्थमेव। त्रित्वमात्रविधौ त्वेकार्थविधानादेकवाक्यत्वम्, तदन्तर्गतत्वाच्च द्वित्वैकत्वश्रवणम् नित्यानुवादः। चतुरादिप्रतिषेधश्चानुवाद एव, तस्मात्त्रित्वविशिष्टवरणविधानादेकवाक्यत्वम्, तदुपसंहारसमर्थस्यैवाधिकारः।

इत्येकादशं त्र्यार्षेयस्यैवाधिकाराधिकरणम्।

---

## रथकारस्याधानाधिकरणम् ॥ १२ ॥

वचनाद्रथकारस्याधानेऽस्य सर्वशेषत्वात् ॥ ४४ ॥ न्याय्यो वा-कर्मसंयोगाच्छूद्रस्य प्रतिषिद्धत्वात् ॥ ४५ ॥ अकर्मत्वात्तु नैवं-स्यात् ॥ ४६ ॥ आनर्थक्यं च संयोगात् ॥ ४७ ॥ गुणार्थमिति-चेत् ॥ ४८ ॥ उक्तमनिमित्तत्वम् ॥ ४९ ॥ सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात् प्रतीयेरन् ॥ ५० ॥

'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' तै.ब्रा.१-१-२ इति, विधाय, श्रूयते 'वर्षासु रथकारोऽग्निमादधीते' ति। किं ब्राह्मणादीनामेव रथकरणे निमित्ते वर्षाविधानम्, उत रथकारसंज्ञस्यावान्तरवर्णस्याधानान्तरविधानमिति संशये ? द्विजानां विद्वत्त्वात्कालमात्रविधानेन लाघवात्तेषामेव कालविधिः, नाऽविदुषोऽवान्तरवर्णस्य विशिष्टाधानविधानमिति प्राप्ते—

"रूढिबलेन योगबाधाद्वचनबलाच्चाविदुषोऽप्यधिकारप्रतीतेरविघातात् 'ऋभूणां त्वे' (तै.ब्रा१.१.४) ति च मन्त्रवर्णात् ऋभुसौधन्वनापर्यायस्यावान्तरवर्णस्य रथकारस्येदमाधानं विधीयते।

इति द्वादशं रथकारस्याधानाधिकरणम्।

---

निषादस्थपत्यधिकरणम् ।। १३ ।।

स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् ।। ५१ ।। लिङ्गदर्शनाच्च ।। ५२ ।।

'रौद्रं वास्तुमध्ये चरुं निर्वपेदि'ति प्रकृत्य श्रुतम्—'एतया निषास्थपतिं याजयेदि'ति । तत्र संशयः—किं द्विजातिरेव यो निषादानामाधिपत्यं करोति, तस्यात्राधिकारः, षष्ठीसमास एवायम् । उत निषाद एव स्थपतिः, तस्य, कर्मधारयश्चायमिति ।

तत्र—पक्षद्वयेऽपि शब्दोऽयं योगादेव प्रवर्तते ।
तत्र षष्ठीसमासत्वे विदुषः स्यादधिक्रिया ।। २७ ।।

आहिताग्नेश्च यदि तु कर्मधारय इष्यते ।
अनाहिताग्नेरज्ञस्य प्रसज्येताधिकारिता ।। २८ ।।

तेन षष्ठीसमासोऽयमिति प्राप्तेऽभिधीयते ।
निषादपदमेवं तु स्थपतौ लक्षणां व्रजेत् ।। २९ ।।

न हि षष्ठी श्रुता येन न तत्सम्बन्धी विधिर्भवेत् ।
निषादपदमेवातः षष्ठ्यर्थं लक्षयेदिदम् ।। ३० ।।

कर्मधारयपक्षे तु न काचिदपि लक्षणा ।
निषाद एव स्थपतिरतः श्रुत्या प्रतीयते ।। ३१ ।।

तेन श्रुतिबलादज्ञोऽनाहिताग्निश्च सन्नपि ।
निषाद एव स्थपतिः कर्मण्यत्राधिकारभाक् ।। ३२ ।।

इति त्रयोदशं निषादस्थपत्यधिकरणम् ।

इति शास्त्रदीपिकायां षष्ठस्याध्यायस्य प्रथमः पादः ।। १ ।।

# अथ षष्ठेऽध्याये द्वितीयः पादः ।

सत्रे प्रत्येकस्य सत्रिणः फलसम्बन्धाधिकरणम् ॥ १ ॥

पुरुषार्थैकसिद्धित्वात्तस्य तस्याधिकारः स्यात् ॥ १ ॥ अपि वोत्पत्तिसंयोगाद्यथा स्यात् सर्वदर्शनं तथाभावोऽविभागे स्यात् ॥२॥

अनेककर्तृकेषु कर्मसु 'ऋद्धिकामाः सत्रमासीरन्नि 'त्यादिषु किमेकैकस्य कृत्स्नं फलं भवति, अतश्च प्रत्येकं कृत्स्नफलकामानामधिकारः ? उत समुदायस्य कृत्स्नं फलम्, प्रत्येकं तु फलावयवः, ततश्च फलावयवकामानामधिकार इति संशयः ।

तत्र—समुदायस्य कर्तृत्वात् तस्य कृत्स्नफलान्वयः ।
फलावयवयोगः स्यात्प्रत्येकं समुदायिनाम् ॥ १ ॥

यद्यपि कामपदे बहुत्वमुद्देश्यपरत्वादविवक्षितमिति कामिनः प्रधानभूतानुद्दिश्य गुणत्वेन विधीयमानं कर्म प्रतिप्रधानावृत्तेरेकैकस्य स्वफलं साधयतीति प्रतिभाति, तथाऽप्याख्यातोपात्तस्य कर्तृबहुत्वस्योपरितनाधिकरणन्यायेन विवक्षितत्वात् संहत्यकामिभिः कर्तव्यम् । न चैकस्मिन्कर्मणि बहूनां प्रत्येकं कर्तृत्वं सम्भवति, एकेन कृतेऽपरस्य कर्तृत्वायोगात्, अतः समुदितानां व्यासज्यकर्तृत्वम् । कर्तृगामि च फलम् । अतस्तदपि समुदायस्यैव, तदंशन्तु समुदायिनः प्राप्नुवन्तीत्यवयवकामानामधिकार इति प्राप्ते—

अभिधीयते—समुदायस्य कर्तृत्वं यद्यपि स्यात्तथाऽपि तु ।
प्रत्येकमधिकारित्वात्तथैव फलमाप्नुयुः ॥ २ ॥

यद्यथाऽवगम्यते, तत्तथैवाङ्गीकर्तव्यम् । इह चाधिकारावस्थायां साहित्यस्याविवक्षितत्वात्प्रत्येकमधिकारः प्रतीयते, कर्तृत्वं च संहतानाम् । अतः संहत्य प्रयुक्तं कर्म प्रत्येकं फलं साधयतीति स्वीकर्तव्यम् । न चैवमत्यन्ताकर्तृगामित्वम्, तेष्वेव व्यासज्यवृत्ति कर्तृत्वम्, प्रत्येकवृत्ति फलमिति प्रकारभेदमात्रम् ।

कर्तृत्वमपि चैतेषां प्रत्येकमवगम्यते ।
कर्तृगामि बहुत्वं हि द्रव्यगाम्यन्यथा भवेत् ॥ ३ ॥

कर्तृबहुत्वं साक्षादभिधीयते, न कर्त्रश्रयद्रव्यबहुत्वम्, व्यासज्यवर्तिनि च कर्तृत्वे न कर्तृणां बहुत्वं स्यात्, किन्तु द्रव्यमात्रस्य, तत्र कर्तृबहुत्वाभिधानमनञ्जसं स्यात्, सम्भवति च सर्वेषां प्रत्येकं युगपत् कर्तृत्वम्। पर्याये हि विरोधः स्यात्, एकेन कृते परस्य कर्तृत्वायोगात्, न यौगपद्येन। तस्मात्प्रत्येकमधिकारः।

इति प्रथमं सत्रे प्रत्येकं सत्रिणः फलसंबन्धाधिकरणम्।

---

दर्शादौ कर्त्रैक्यनियमाधिकरणम् ॥ २ ॥

प्रयोगे पुरुषश्रुतेर्यथाकामी प्रयोगे स्यात् ॥३॥ प्रत्यर्थं श्रुति भाव इति चेत् ॥ ४ ॥ तादर्थ्ये न गुणार्थताऽनुक्तेऽर्थातनरत्वात्कर्तुः प्रधानभूतत्वात् ॥ ५ ॥ अपि वा कामसंयोगे सम्बन्धात् प्रयोगायोपदिश्येत; प्रत्यर्थं हि विधिश्रुतिर्विषाणावत् ।६। अन्यस्यापीति चेत् ॥ ७ ॥ अन्यार्थेनाभिसम्बन्धः ॥ ८ । फलकामो निमित्तमिति चेत् ॥ ९ ॥ न नित्यत्वात् ॥ १० ॥ कर्म तथेति चेत् ॥ ११ ॥ न समवायात् ॥ १२ ॥

दर्शपूर्णमासादिषु किमेको द्वौ बहवो वा कर्त्तारः? उत एक एवेतिसंशयः। तदर्थंच किमाख्यातोपात्ता कर्तृसङ्ख्या विवक्षिता? नेति चिन्त्यते।

तत्र—फलार्थिनं समुद्दिश्य कर्मणामुपदेशनात्।
उद्देश्यगामिनी सङ्ख्या ग्रहवन्न विवक्षिता ॥ ४ ॥

स्यान्मतम्। यद्यपि कामपदगता सङ्ख्या उद्देश्यगतत्वात्तद्गतलिङ्गवत्, ग्रहैकत्ववच्चाविवक्षिता। तथाऽप्याख्यातोपात्तता सङ्ख्या विधीयमानक्रियाऽऽक्षिप्तगुणभूतकर्तृगामित्वाद्विवक्षितेति। तदसत्। अविधेयत्वात् क्रियायाः, यागेन स्वर्गं प्राप्नुयादित्येतावदुच्यते, नानुष्ठानं। तदर्थप्राप्तं, स्वर्गप्राप्तौ च पुंसः प्रधानत्वादविवक्षिता सङ्ख्या, यदि स्वर्गं कुर्यादित्युच्येत, तदा अन्यस्यापि स्वर्गः स्यात्, न कर्तुः, यद्यपि स्वर्गं कुर्यादित्युच्यते, तथाऽप्यविधेयैव क्रिया, यो हि यदिच्छति, स तत्करोतीत्येवं फलकामस्य फलविषया क्रिया प्राप्तैव, तां प्रत्ययेनानूद्य प्रकृत्यर्थो यागादिः करणतया विधीयते,

प्रत्ययार्थश्च कर्तृसङ्ख्या, तेनासावनुवाद्यगतत्वादविवक्षिता। न ह्येकेन त्ययेन फलकामस्य रागप्राप्तां फलभावनामुद्दिशता कर्तृसङ्ख्या भावनां यागं वा प्रत्युपादातुं शक्यते, वैरूप्यप्रसङ्गात्। अथ मतं, यद्यपि यागाननुरक्ता फलक्रिया प्राप्तैव, तथाऽपि यागक्रियाया अप्राप्तत्वेन विधेयत्वाद्विशेषणभूता संख्या विधेयगतत्वाद्विवक्षितेति। तदप्ययुक्तम्। यद्यपि यागानुरक्ता क्रिया न प्राप्ता, तथाऽपि क्रियास्वरूपं तावत्प्राप्तमेव, तत्र विशिष्टक्रियाविषयोऽपि विधिः श्रूयमाणः प्राप्ताप्राप्तविवेकेन यागानुरागमात्रपरो भवति। न हि फलक्रियातः क्रियान्तरं यागेनानुरज्यते, सा चेत्प्राप्तैव, तद्विशेषणं च सङ्ख्या न साक्षाद्यागगता, प्रत्ययार्थत्वात्। तस्मादविवक्षितेति—

अत्राभिधीयते—रागप्राप्ता फलप्राप्तिर्न सा शब्देन बोध्यते।
प्रत्ययश्च क्रियावाची न प्राप्तिं प्रतिपादयेत् ॥ ५ ॥
उपग्रहविशेषाच्च नाकर्तुः फलसङ्गतिः।
विधेश्चैवमतोऽन्यस्य न फलप्राप्तिसम्भवः ॥ ६ ॥
स्वर्गादिकाममुद्दिश्य क्रियैवेह विधीयते।
यागादियुक्ता सङ्ख्या च तद्गतत्वाद्विवक्षिता ॥ ७ ॥
फलक्रियानियोगेन न हि पुंसां फलार्थिनाम्।
रागप्राप्ता यतो नैषा शब्देन न विधीयते ॥ ८ ॥

अर्थिपदेन तावदर्थितामात्रमुच्यते, न प्रवृत्तिः। आख्यातमपि यच्छब्दाद्युपबन्धाभावात् यागादिविशिष्टभावनाविधिपरमेव स्वरसादवगम्यते। ततश्च स्वर्गो मे स्यादित्येवं यः कामयते, स तं यागेन भावयेदिति भावनैव सर्वविशेषणविशिष्टा फलोपायत्वेन कामिनो विधीयते। न चावश्यमर्थिनस्तद्विषया प्रवृत्तिः प्राप्ता, येन तद्बलात्तत उत्तार्य विधिर्यागाद्यनुरागमात्रपरत्वेनैव व्यवस्थाप्येत। न च फलकामः प्राग्वचनादिदं जानाति प्रवृत्तस्य मे स्वर्गः सिद्ध्यति, न त्वप्रवृत्तस्य दैवात्, कारणान्तराद्वेति। तदज्ञानात्स्वर्गप्राप्तिमभिलषंस्तद्विषयप्रवृत्त्यप्रवृत्त्योर्मध्यस्थ उदास्ते। यदा तु वचनमस्य यागादिविशिष्टं व्यापारं विधत्ते, तदा तस्येप्सितोपायतां विधिप्रामाण्यादवगम्य तत्र प्रवर्तते। तस्माद्विधेयैव भावना यागादिविशिष्टा, सङ्ख्या च तद्विशेषणमिति विवक्षितैव। लिङ्गं तु कामपदगतमुद्देश्यविशेषणत्वादविवक्षितमिति विशेषः।

### सुचरितनिश्रमतस्योपन्यास-निरासौ

ये तु स्वर्गकामस्यानुष्ठानमनूद्य यागस्तस्योपायत्वेन विधीयते 'वेदैवासौ मयैवैतत्कर्तव्यमिति' 'स्वयमेव हि जानन्ति कर्तव्यं पुरुषाः सदा' इत्यादिभाष्य-वार्तिकयथाश्रुतग्रहणात् भावनायाः अविधानमाहुः, तेषामनूद्यमानविशेषणस्याविवक्षिततत्वादिदमधिकरणं विरुध्यते, सर्ववाक्येषु च क्रियामविधाय गुणमात्रविधानात्। 'चोदिते हि तदर्थत्वात्तस्य तस्योपदिश्येत'–२-२-६। इत्येवमनेकगुणविधानं क्वचिदपि न स्यात्। ततश्च 'रेवतीषु 'वारवन्तीयं कृत्वा पशुकामो ह्येतेन यजेते'२-२-१२त्यादिषु प्राप्तभावनोद्देशेन यागस्य रेवती-वारवन्तीयसम्बन्धस्य च विधानात् गुणविधिपक्षवद् वाक्यभेदः–स्यात्। न च यागविशेषणत्वं गुणानां, येन तस्यैकस्य विशिष्टस्य विधानाद्वाक्यभेदः परिह्रियेत, सर्वेषां भावनागामित्वात्।

यथोक्तं 'धात्वर्थकारकाणामरुणैकहायन्यादिवत्परस्परेणाऽसम्बध्य-भावनासम्बद्धानामुत्तरकालं परस्परोपकारित्वमि'ति सप्तम-नवमाद्ययोर्वक्ष्यतीति। तस्माद्भावनाविधिकृतमेवानेकगुणविधानं प्रस्तुतं चाधिकरणं समर्थनीयम्। यथाह—'भावनारूढं विधित्वं भावनार्थत्वेनैव गृह्यते, तदाऽर्थाद्विशेषणविधौ सत्यवाक्यभेदं वक्ष्यामः। यदा तु तत् विशेषणार्थमित्यवधार्यते, तदा भावनायास्सन्निहितप्तोषितत्वात् अनेकविशेषणयोगे सति यदर्थे विधि वसीयते, तस्यैवैकस्य विधानम्, नेतरस्य तद्दे शस्यापि चक्षुषेव स्पर्शादिरि'ति वाक्यभेदो भविष्यति शा. भा. पृ० ५०३ इति। अल्पं चेदमुच्यते, सर्वत्र भावनाविध्यभिधानात्। तस्मात् 'वेदैवासौ मयैतत्कर्त्तव्यमिति, स्वयमेव हि जानन्ति कर्तव्यं पुरुषाः सदे'त्यादि भाव्यस्वरूपप्राप्त्यभिप्रायम्, न भावनाभिप्रायमिति व्याख्येयम्। अतो भावनाया विधेयत्वात्तद्विशेषणभूता कर्तृसङ्ख्या उपादेयगतत्वाद्विवक्षितेति सिद्धम्।

दर्शादौ कत्रैक्यनियमाधिकरणम्।

---

### आरब्धकाम्यकर्मणोऽपि समाप्तिनियमाधिकरणम् ॥ ३ ॥

प्रक्रमात्तु नियम्येताऽऽरम्भस्य क्रियानिमित्तत्वात् ॥३॥ फलार्थित्वाद्वाऽनियमो यथानुपक्रान्ते ॥ ४ ॥ नियमो वा तन्निमित्तत्वात्कर्तुस्तत्कारणं स्यात् ॥ ५ ॥

काम्यं कर्म कामार्थेन प्रक्रान्तं वीतायां फलेच्छायाम्, अवाप्ते वा फले, किं नियोगतः समापनीयम्, नेति चिन्त्यते।

तत्राभीप्सितसिद्ध्यर्थं साधनेषु प्रवर्तते।
सिद्धे तस्मिंस्तदिच्छायां वीतायां किं प्रवर्त्तते॥ ६॥

यदि मन्येत न फलार्थं कर्म, किन्तु फलकामनायां निमित्ते कर्मैव कर्तव्यम्। तस्य हि भाव्यता पदश्रुत्यैवावगम्यते, वाक्यात्कामस्य। तच्च दुर्बलम्। न चोपक्रममात्रेण चोदितं कृतं भवति, समाप्तेः शास्त्रार्थत्वात्। न च पूर्वाधिकरणोक्तरीत्या नित्यानित्यसंयोगविरोधः, काम्यानां नित्यत्वाभावात्। अतः कामे निष्पन्ने, निवृत्तेऽपि, तन्निमित्तं कर्म कर्तव्यमिति।

नैतदेवम्। न ह्यपुरुषार्थं कर्म भाव्यं भवतीत्युक्तं, न च फलान्तरं कल्पयितुं शक्यम्, श्रुतहान्यश्रुतकल्पनयोरन्याय्यत्वात्। शिष्टविगर्हणन्तु अनृतवादभ्रान्तिनिमित्तम्। न च परमार्थतोऽनृतमस्ति, शास्त्रार्थस्य सङ्कल्पितत्वान्निवृत्तायां च कामनायामशास्त्रार्थत्वात्तस्मादसमापनीयमिति प्राप्ते—

ब्रूमः—न हि सम्भावनामात्राद्भ्रान्तिः कल्पयितुं क्षमा।
सर्वस्मृतिषु तुल्यत्वादप्रामाण्यप्रसञ्जनात्॥ १०॥

तथा च निन्दावचनं, प्रायश्चित्तं च[1] युज्यते। तस्मात्क्रतुमुपक्रान्तं नियोगेन समापयेत्। तैत्तिरीया हि समामनन्ति 'देवताभ्यो वा एषः आवृश्च्यते, यो यक्ष्य इत्युक्त्वा न यजते, त्रैधातवीयेन यजेत, न देवताभ्यः आवृश्च्यते' तै० सं० २-४-११ इति।

इति तृतीयं आरब्धकाम्यकर्मणो नियमेन परिसमाप्त्यधिकरणम्।

---

आरब्धलौकिककर्मणः समाप्तेरनियमाधिकरणम् ॥४॥

लोके कर्मणि वेदवत्ततोऽधिपुरुषज्ञानम् ॥ १६ ॥ अपराधेऽपि च तैः शास्त्रम् ॥ १७ ॥ अशास्त्रात्तूपसम्प्राप्तिः शास्त्रं स्यान्न प्रकल्पकं; तस्मादर्थेन गम्येताऽप्राप्ते वा शास्त्रमर्थवत् ॥ १८ ॥

रथगृहकर्मादि प्रक्रान्तं किमवश्यं समाप्यम्, नेति संशये, तेषामपि शास्त्रीयत्वात् विहितमुपक्रान्तं नियमेन समापनीयमिति, श्रुतिकल्पनात्, 'देवताभ्यो वा एष आवृश्च्यते इति देवताश्रयव्यापारमात्रस्य अवश्यसमापनीयत्वावगमात्, गृहादीनामपि प्रक्रान्तानामावश्यकं समापनमिति प्राप्ते—

---

१—श्रूयते पा०।

अभिधीयते—अशास्त्रादेव हि प्राप्तिर्दृष्टार्थेषु गृहादिषु।
तेन शास्त्रं न कल्प्येत पुरुषार्था हि देवता ॥ ११ ॥

पुरुषार्था हि देवता गृहप्रदेशेषु निवेश्यते, न तु गृहकर्म देवताश्रयम्। तस्मान्न समापननियमः।

इति चतुर्थं लौकिककर्मणस्समाप्त्यनियमाधिकरणम्।



प्रतिषिद्धकर्मणामनुष्ठाने अनिष्टापाताधिकरणम् ॥ ५ ॥

प्रतिषेधेष्वकर्मत्वात्क्रिया स्यात्प्रतिषिद्धानां विभक्तत्वादकर्मणाम् ॥ १९ ॥ शास्त्राणां त्वर्थवत्त्वेन पुरुषार्थो विधीयते; तयोरसमवायित्वात्तादर्थ्ये विध्यतिक्रमः ॥ २० ॥

'न कलञ्जम्भक्षयेदि'त्येवमादिषु संशयः-किं प्रजापतिव्रतवत्पर्युदासाश्रयणेनाऽभक्षणं—भक्षणाभावसङ्कल्पः कल्प्यफलो विश्वजिदादिवद्विधीयते ? उत भक्षणं प्रतिषिध्यते प्रत्यवायपरिहारायेति। यदि नञ्विशिष्टं भक्षणं विधिना सम्बध्यते, ततः पर्युदासः। अथ नञ्विध्योः सम्बन्धः, ततः प्रतिषेधः।

तत्र—भक्षणव्यवधानेन नञ्विध्योर्नास्ति सङ्गतिः।
भक्षणन्तु नञा युक्तमव्यवायाद्विधीयते ॥ ११ ॥
श्रुत्या च विधिसम्बन्धो भक्षणस्य नञः पुनः।
पदान्तरत्वाद्वाक्येन श्रुतेर्वाक्यं च दुर्बलम् ॥
तस्माद्भक्षणमेवेह नञा युक्तं विधीयते ॥ १२ ॥

तत्र भक्षणाभावोऽननुष्ठेयत्वादविधेय इति, तद्धेतुः सङ्कल्पो विधीयते। स चाश्रुतफलः कल्प्येन फलेन सम्बध्यते। अतः फलकामाधिकारमेवंजातीयकमिति, निष्कामानां याथाकाम्यम्।

अत्रोच्यते—नञ्-भक्षयत्योरेवन्तु स्वार्थहानिः प्रसज्यते।
सङ्कल्पलक्षणात्-तत्र श्रुतेरत्यन्तबाधनम् ॥ १३ ॥

मत्पक्षे पुनः प्रत्यासत्तिमात्रबाधनम्, न वा तदपि, किं तर्हि भक्षयेदिति—पदं परिपूर्णं नञा सम्बध्यते—भक्षयेन्नेति। भक्षयेदिति च भक्षणभावनायां प्रवर्तना गम्यते।नञा सम्बद्धेन विधिना तद्विपरीतनिर्वतनाप्रतीतिः। निवर्त्तना च

निवृत्तिफलो व्यापारः। न च प्रेक्षापूर्वकारी पुरुषो रागतः प्रवर्तमानोऽसति प्रत्यवायफलत्वे निवर्तयितुं शक्यते इति, श्रुतनिवर्तनान्यथानुपपत्त्या विषयीभूतभक्षणव्यापारस्य प्रत्यवायफलत्वं कल्प्यते। अतस्तत्परिहाराय सर्वेषामेवंजातीयकं वर्जयितव्यम्।

प्राभाकरमतस्य उपन्यास-निरासौ—

ये तु नञर्थविषयस्य नियोगस्य, भक्षणे प्रवृत्तस्य नियोज्यस्य च लब्धत्वात् न प्रत्यवायकल्पना प्रमाणवतीत्याहुः, ते श्रुतार्थापत्तेः प्रमाणत्वोपपादनान्निरस्ताः। किञ्च भक्षणं नञर्थविशेषणत्वेनोपक्षीणं न नियोज्यविशेषणम्। आख्यातेन कर्तुरनभिधानात्, उभयविशेषणत्वे चावृत्तिप्रसङ्गात्। ननु न ब्रूमः श्रुत्या नियोज्यविशेषणत्वम्, नञर्थविशेषणस्यैवार्थान्नियोज्यविशेषणतामाचक्ष्महे। भक्षणप्रवृत्त एव हि तदभावे नियोक्तुं शक्यते, नान्यः। सत्यमेवम्। तथापि न नियोज्यविशेषणत्वे भक्षणस्य प्रमाणमस्ति। यदि ह्येतावतैव नियोज्यविशेषणत्वमाश्रीयते, ततः सर्वत्र जीवनं, शक्तिश्च नियोज्यविशेषणे स्याताम्। ततश्च तदवच्छिन्नस्य नियोज्यस्य लब्धत्वात् विश्वजिदादौ स्वर्गकामादेरकल्पनं स्यात्। तत्र यत्किञ्चित्केन चिदुच्यते- 'प्रयुक्तिलाघवाय फलकल्पनमि'ति तन्निषेधाधिकारेष्वपि समानमित्यास्तां, तावत्।

इति पञ्चमं प्रतिषिद्धकर्मणोऽनुष्ठानेऽनिष्टापाताधिकरणम्।

---

गुर्वनुगमनादीनामुपनयनोत्तरकालकर्तव्यताधिकरणम् ॥ ६ ॥

तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन् ॥ २१ ॥ अपि वा वेदतुल्यत्वादुपायेन प्रवर्तेरन् ॥ २२ ॥

स्मार्ता यमनियमाः 'प्राङ्मुखो भुञ्जीत, उदङ्मुखो मूत्रं कुर्यादि'त्येवमादयः किं जननप्रभृति प्रवर्तन्ते, जातो यदा शक्नुयात्तदेत्यर्थः? उतोपनयनप्रभृतीति संशये, अनग्निसाध्यत्वादमन्त्रसाध्यत्वाच्चैषां शक्तमात्राधिकारत्वे प्राप्ते—

ब्रूमः—उपनयनप्रभृति स्युरिति। कुतः? स्मरणात्। स्मरन्ति हि 'उपनयनादिर्नियमः' इति। तस्मादुपनीताधिकारः।

इति षष्ठं गुर्वनुगमनादीनामुपनयनोत्तरकालकर्तव्यताधिकरणम्।

---

यावज्जीवाधिकरणम् ॥ ७ ॥

अभ्यासोऽकर्मशेषत्वात् पुरुषार्थो विधीयते ॥ २३ ॥

एतस्मिन्नसंभवन्नर्थात् ॥ २४ ॥ न कालेभ्य उपदिश्यन्ते ॥ २५ ॥ दर्शनात्काललिङ्गानां कालविधानम् ॥ २६ ॥

'यावज्जीवमग्निहोत्रं जुहोतीति, यावज्जीवं दर्शपूर्णमासाभ्यां यजे-ते'ति च श्रूयते। तत्र संशयः—किं सातत्येनानुष्ठानम्? उत सायं प्रातरग्निहोत्रं, पौर्णमास्यमावास्ययोश्च दर्शपूर्णमासाविति संशयः। तत्र जीवने निमित्ते कर्म-विधानान्नैमित्तिके चासम्भाविताङ्गत्यागेऽप्यवैगुण्यात्, कालस्य चाङ्गत्वात् तल्लोपेन सन्ततानुष्ठानं न्याय्यमिमि प्राप्ते—

ब्रूमः—अङ्गत्वेऽपि च कालस्य न त्यागोऽन्याङ्गवत्कुतः।

अनुपादेयरूपत्वात्तस्मिन्कर्मविधिर्यतः ॥ १४ ॥

यद्धि प्रयोगविधिवशादुपादेयम्, तद्धि यथाशक्तीत्युपबध्यते, कालस्य पुनरनुपादेयत्वात्। एषा हि तत्र वचनव्यक्तिः—अस्मिन्काले प्राप्ते कर्म कर्तव्य-मिति। ततश्चार्थात्तत्कालमेव जीवनं निमित्तमिति, न कालान्तरानुष्ठानम्। एतेन अग्निविद्ये व्याख्याते। तयोरप्यध्ययनाधानविधिसिद्धयोः स्वीकरणात् प्रयोगविधिनाऽननुष्ठाप्यत्वात्। एषा वचनव्यक्तिः—अग्निमान् विद्वाँश्चाधि-क्रियेतेति। प्रत्यक्षमेव विद्यावतोऽधिकारश्रवणम्, 'य एवं विद्वानग्निहोत्रमिति सर्वत्र श्रवणात्। तस्मात्काले प्राप्ते विदुषः अग्निमतश्चाङ्गान्तराणि यथासम्भवमुपसंहृत्यानुष्ठानम्।

इति सप्तमं यावज्जीवाधिकरणम्।

---

अग्निहोत्रादिकर्मणां स्वकालावृत्त्या आवृत्त्यधिकरणम् ॥ ८ ॥

तेषामौत्पत्तिकत्वादागमेन प्रवर्त्तेत ॥ २७ ॥ तथा हि लिङ्गदर्शनम् ॥ २८ ॥

यदि कालशास्त्रानुरोधेन निमित्तसंकोचः, ततः कालशास्त्रस्य सकृ-दनुष्ठानेन सम्पादितत्वात्तद्वशेन सकृदेव सायंप्रातःकालयोः, पौर्णमास्यमावा-स्ययोश्च कृतः शास्त्रार्थ इति, न पुनः पुनरनुष्ठानं स्यात्।

मैवम्। न हि कालशास्त्रवशाज्जीवनस्य निमित्तत्वं हीयते, किन्तु तत्कालीनमेव जीवनम्, न कालान्तरीयमित्येतावत्। ततश्च तादृशस्यैव जीवनस्य पुनः पुनरावृत्तौ, शास्त्रमपि पुनः पुनर्नैमित्तिके पुरुषं नियुङ्क्ते। अतो निमित्तावृत्तावावृत्तिर्नैमित्तिकानाम्।

इत्यष्टममग्निहोत्रादीनां स्वकालावृत्त्या आवृत्त्यधिकरणम्।

---

दर्शादौ भेदनाद्यावृत्त्या होमावृत्त्यधिकरणम्॥ ९॥

तथान्तः क्रतुयुक्तानि॥ २९॥

युक्तं नैमित्तिकेषु पुरुषार्थेषु निमित्तावृत्तावावृत्तिरिति, तत्र प्रत्यावृत्ति फलमन्यदन्यच्च निष्पत्स्यते। क्रत्वर्थेषु तु भेदनहोमादिषु क्रतूपकारस्यैव साध्यत्वात्सकृत्कृतेनैव तत्सिद्धेरेकस्मिन्प्रयोगे भेदनावृत्तावपि, न होमावृत्तिरिति विशेषं मन्यमानस्य उत्तरं-क्रत्वर्थेष्वपि शास्त्रेण निमित्तावृत्तावावृत्त्यवगमादावृत्तौ निमित्तस्यावृत्तेनैव होमेन सगुणः क्रतुः स्वफलाय पर्याप्नोतीति-कल्पनात्। एषामपि निमित्तावृत्तावावृत्तिः।

इति नवमं भेदनाद्यावृत्त्या होमावृत्त्यधिकरणम्।

---

गुर्वनुगमनादीनां प्रतिनिमित्तमावृत्त्यधिकरणम्॥ १०॥

आचाराद्गृह्यमाणेषु तथा स्यात् पुरुषार्थत्वात्॥ ३०॥

गुर्वनुगमनादीनामाचारप्रमाणकानां गुरुगमनादिनिमित्तकानां किं निमित्तावृत्तावावृत्तिः स्यान्नेति संशये, तत्र दृष्टार्था ह्येते, अनुगमनाभ्युत्थानाभिवादनादिभिः प्रीतो गुरुः सम्यग् विद्यां ददातीति। तत्र यथाऽनुष्ठिते प्रीतिर्भवति, तथा कर्तव्यं सकृदसकृद्वा, न त्ववश्यमावर्तनीयमिति प्राप्ते-

अभिधीयते—दृष्टार्थेष्वपि नियमादृष्टाभ्युपगमात्, तस्य च शास्त्रप्रमाणकत्वात्तद्वशेन निमित्तावृत्तावावृत्तिः।

इति दशमं गुर्वनुगमनादीनां प्रतिनिमित्तमावृत्त्यधिकरणम्।

—:०:—

## ब्रह्म-क्षत्र-विशामृणत्रयापाकरणस्य नित्यताधिकरणम् ॥१२॥

## ब्राह्मणस्य तु सोमविद्याप्रजमृणवाक्येन संयोगात् ॥ ३१ ॥

'सोमेन यजेत, स्वाध्यायमधीयीत, प्रजामुत्पादयेदि'ति श्रुतं सोमविद्याप्रजं किं नित्यम्, उतानित्यमिति संशयः। तत्र यावज्जीवादितुल्यनिर्देशाभावात् 'ज्योतिष्टोमेन स्वर्गकामो यजेते'ति च फलश्रवणात् 'वसन्ते वसन्ते ज्योतिषा यजेते' आप० श्रौ० १०-२-५ति चास्य कालविधिपरत्वात्, अध्ययनप्रजयोस्तु विश्वजिद्वत्स्वर्गकल्पना 'त्सप्तमे ब्रह्मवर्चसकामः' इत्येवमादीनां चोपनयनगतानां फलानाम् उपनयनस्याध्ययनाङ्गत्वेन स्वयम्फलानपेक्षत्वादध्ययनफलत्वमेव न्याय्यम्। अतः फलकामाधिकारत्वमेवैषामिति प्राप्ते—

अभिधीयते नित्यानीति। कुतः?

वीप्सायुक्तो वसन्तो हि निमित्तत्वेन गम्यते।
यावद्वसन्तं नियमः सोमस्यातोऽवगम्यते ॥ १५ ॥
यावद्वसन्तमभ्यासः काम्यस्यैवाथ चोद्यते।
यजेतेति पदेनैवं प्राप्नोत्यभ्यासलक्षणा ॥ १६ ॥

तस्माद्वसन्ते निमित्ते विधानादागत आगते वसन्ते नियमेन सोमः कर्तव्य इति नित्यः। अध्ययनमप्यश्रुतफलमक्षरग्रहणादिना क्रमेण धर्माधर्मावबोधफलत्वात्, तस्य चावश्यकत्वादावश्यकम्, ब्रह्मवर्चसादिकं त्वध्ययनाङ्गभूतोपनयनाश्रितसप्तवर्षादिगुणफलत्वादध्ययनफलमनाशङ्कनीयमेव। प्रजोत्पादनमपि अमृतत्वानृणत्वफलश्रवणाद'नुत्पाद्य तथा सुतान् अधोगच्छती'ति प्रत्यवायस्मरणान्नित्यमेव सोमविद्याप्रजम्। ऋणश्रुतिरपि सोमादीनामावश्यकत्वं दर्शयति, न च तत्र ब्राह्मणश्रवणात्तद्विषयमेवावश्यकत्वम्, विधिवाक्येषु विशेषाश्रवणात्। ब्राह्मणग्रहणस्योपलक्षणार्थत्वात्। अतस्त्रयाणामप्यावश्यकाः सोमादयः।

इति द्वादशं ब्राह्मण-क्षत्रिय-विशामृणत्रयापाकरणस्य नित्यताधिकरणम्।

इति शास्त्रदीपिकायां षष्ठाध्यायस्य द्वितीयः पादः ॥ २ ॥



# अथ षष्ठेऽध्याये तृतीयः पादः ।

## प्रथमं सर्वशक्त्यधिकरणम् ॥ १ ॥

**सर्वशक्तौ प्रवृत्तिः स्यात्तथाभूतोपदेशात् ॥१॥ अपि वाऽप्येकदेशे स्यात्प्रधाने ह्यर्थनिवृत्तिर्गुणमात्रमितरत्तदर्थत्वात् ॥ २ ॥ तदकर्मणि च दोषस्तस्मात्ततो विशेषः स्यात्प्रधानेनाऽभिसम्बन्धात् ॥ ३ ॥ कर्माऽभेदं तु जैमिनिः प्रयोगवचनैकत्वात् सर्वेषामुपदेशः स्यात् ॥४॥ अर्थस्य व्यपवर्गित्वादेकस्यापि प्रयोगे स्याद्यथा क्रत्वन्तरेषु ॥५॥ विध्यपराधे च दर्शनात्समाप्तेः ॥ ६ ॥ प्रायश्चित्तविधानाच्च ॥ ७ ॥**

'यावज्जीवमग्निहोत्रं जुहुयात्', ब.ब्रा 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' 'वसन्ते वसन्ते ज्योतिषा यजेते' आप. श्रौ. १०-२-२ ति । किमत्र सर्वाङ्गोपसंहारेणैवाधिकारः ? उत यदा यावन्त्यङ्गानि शक्नोत्युपसंहर्तुम्, तदा तावद्भिरुपेतं प्रधानं कुर्वन्नधिक्रियेतेति संशयः ।

तत्र—समुच्चितानामङ्गानामित्थम्भावेन सङ्ग्रहः ।
सर्वाङ्गयुक्तमेवातः प्रधानं फलसाधनम् ॥ १७ ॥

न चाफलसाधनेऽधिकारोऽस्ति । अतो न हीनाङ्गस्य प्रयोगः ।

उच्यते—नैमित्तिकं नियोगेन कर्तव्यमवगम्यते ।
निमित्तेन ततोऽशक्यहानेनापि प्रयुज्यते ॥ १८ ॥

यावच्छब्दोपबद्धं हि जीवनं धातुसम्बन्धविहितेन णमुल्प्रत्ययेन सम्बन्धान्तरासम्भवान्निमित्तत्वेन यागानुरक्तभावनां प्रत्यवगम्यते । दर्शपूर्णमासविशेषितश्च यजिः कालयोगिनामाग्नेयादीनामेव वाचकः, नाङ्गानाम् । निमित्तस्य चैतद्रूपं—यत्तस्मिन्सति नैमित्तिकमवश्यं कर्तव्यम् । अतः प्रधानानुरक्ता भावना स्ववाक्यश्रुतनिमित्तवशप्राप्तावश्यकत्वानुरोधेन यथासम्भवम् अङ्गानि गृह्णाति, तावतैव शास्त्रवशात् फलसिद्धिरिति, यथाशक्ति प्रयोगेणैवाधिकारः । स चायं न्यायस्तन्त्ररत्ने, न्यायरत्नमालायां च प्रपञ्चितः । तीर्थान्तरं च निराकृतमित्युपरम्यते ।

इति प्रथमं सर्वशक्त्यधिकरणम् ।

अङ्गवैकल्ये काम्यस्य निष्फलत्वाधिकरणम् ॥ २ ॥

काम्येषु चैवमर्थित्वात् ॥ ८ ॥ असंयोगात्तु नैवं स्याद्विधेः शब्दप्रमाणत्वात् ॥ ९ ॥ अकर्मणि चाप्रत्यवायात् ॥ १० ॥

काम्यानि कर्माणि 'ऐन्द्राग्नमेकादशकपालं निर्वपेदि' तै. सं. २-१-१-त्यादीन्युदाहरणानि । प्रकृतावपि काम्यः प्रयोगः उदाहरणमेव । तत्रापि किं यथाशक्ति प्रयोगेणाप्यधिकारः ? उत सर्वाङ्गोपसंहारेणैवेति विचारः । तत्रासत्यपि निमित्ते प्रजाकामादिशब्दैरविशेषप्रतीतेरसमर्थानामप्यधिकार इति, स्थितेऽपि तिर्यगधिकरणे, पूर्वाधिकरणोपजनिताङ्गलोपकालुष्यबुद्धिः–काम्येष्वपि लोपं मन्यते ।

अत्रोच्यते—प्रजाकामादिशब्दाः समर्थेऽप्यविरुद्धाः । न च कामना निमित्तम्, येनावश्यकत्वं शाब्दं स्यात् । अङ्गानि तु शाब्दानि न शक्यन्ते बाधितुम् । नैमित्तिके पुनः शाब्दमावश्यकत्वं प्रधानस्येति, तदविरोधेन अङ्गानि यथाशक्ति गृह्यन्त इति विशेषः ।

इति द्वितीयमंगवैकल्ये काम्यकर्मणो निष्फलत्वाधिकरणम् ।

---

द्रव्यभेदेऽपि कर्माभेदाधिकरणम् ॥ ३ ॥

क्रियाणामश्रितत्वाद्द्रव्यान्तरे विभागः स्यात् ॥ ११ ॥ अपि वाऽव्यतिरेकाद्रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यान्नामधेयं च सत्त्ववत् ॥ १२ ॥

अतः परमतिप्रसङ्गनिराकरणेन नैमि[1]त्तिके स्थापितस्य यथाशक्ति-प्रयोगस्य शेषत्वेन प्रतिनिधिविचाराः प्रस्तोष्यन्ते । तदुपोद्घातत्वेन त्विदं–चिन्त्यते-किं दर्शपूर्णमासादिषु नीवारादिद्रव्यान्तरं क्रियमाणं कर्मान्तर-त्वमापादयति ? उत द्रव्यान्तरेऽपि तदेव कर्मेति ? यद्यन्यत्, ततो न प्रतिनिधिः, अथ तदेव, तदा द्रव्यान्तरं प्रतिनिधाय प्रयोक्तव्यं कर्म ।

तत्र—द्रव्यस्यैव क्रिया नाम रूपं नार्थान्तरं ततः ।
तदात्मनश्च तद्भेदे न भवेद्भिन्नता कथम ? ॥

उच्यते—तदात्मनोऽपि त्वस्त्येव व्यतिरेकः कियानपि ।
जातिवद्गुणवच्चातस्तद्भेदेऽपि न भिद्यते ॥

---

१—नैमित्तिकेष्वपीति पा. ।

क्रियापि जात्यादिवद्देवदत्तादिभेदेऽपि चलति, यजति, दर्शपूर्णमासावनुतिष्ठतीत्येवमेकबुद्धिवेदनीया न भेदं प्रतिपद्यते। न ह्यत्यन्तभिन्नत्वं द्रव्यात् क्रियायाः, येन तद्भेदात्भेदः स्यात्, भेदोऽपि त्वस्त्येव, अनेकान्ताभ्युपगमात्। अतो द्रव्यान्तरेऽपि क्रियाभेदाभावात्सिद्धः प्रतिनिधिः।

इति तृतीयं द्रव्यभेदेऽपि कर्माभेदाधिकरणम्।

---

द्रव्यापचारे प्रतिनिधिना समापनाधिकरणम् ॥ ४ ॥

श्रुतिप्रमाणत्वाच्छिष्टाभावेऽनागमोऽन्यस्याऽशिष्टत्वात् ॥ १३ ॥ क्वचिद्विधानाच्च ॥ १४ ॥ आगमो वा चोदनार्थाविशेषात् ॥१५॥ नियमार्थः क्वचिद्विधिः ॥ १६ ॥ तन्नित्यं तच्चिकीर्षा हि ॥१७॥

दर्शपूर्णमासयोः श्रुतद्रव्यापचारे द्रव्यान्तरं प्रतिनिधाय प्रयोगः कर्तव्यो नेति विचारे, न कर्तव्य इत्याह। सर्वशक्त्यधिकरणे अशक्याङ्गत्याग उक्तः, न पुनरङ्गान्तरागमः। न च द्रव्यान्तरागमे प्रमाणमस्ति। कर्मचोदना तावन्न द्रव्यं प्रयुङ्क्ते,। यत्तु द्रव्यस्य प्रयोजकं 'व्रीहिभिर्यजेते'ति, तद् व्रीहिणामेव प्रयोजकम्, नान्यस्य। अतो नान्यागमः,। स्यादेवं यदि व्रीहिशास्त्रं द्रव्यस्य विधायकं स्यात्। कर्मचोदनया त्वाक्षिप्तं द्रव्यं व्रीहिशास्त्रेण नियम्यते।

यदा त्वलाभात् व्रीहीणामुदास्ते व्रीहिचोदना।
कर्मशास्त्रं तदा द्रव्यमन्यदाक्षिपति ध्रुवम् ॥ २१ ॥

तस्मादस्ति प्रतिनिधिः।

इति चतुर्थं द्रव्यापचारे प्रतिनिधिना समापनाधिकरणम्।

---

देवतामन्त्रक्रियाणामपचारे प्रतिनिध्यभावाधिकरणम् ॥ ५ ॥

न देवताग्निशब्दक्रियमन्यार्थसंयोगात् ॥ १८ ॥ देवतायां च तदर्थत्वात् ॥ १९ ॥

देवता–अग्नीन्द्रादिः, अग्निः–आहवनीयादिः, शब्दः-मन्त्रः, क्रिया-प्रयाज-प्रोक्षणादिरदृष्टार्था। दृष्टार्थेषु त्ववघातादिषु अस्त्येव प्रतिनिधिः।

१. अत्र देवता–मन्त्र-क्रियासु विस्मृतिरेव प्रतिनिध्युपादानस्य कारणम्, अग्नेरसिद्धत्वम्, अननुगतत्वञ्चेति बोध्यम्।

# अथ षष्ठाध्याये षष्ठः पादः ।

सत्रे समानकल्पानां सहाधिकाराधिकरणम् ॥ १ ॥

सन्निपातेऽवैगुण्यात्प्रकृतिवत्तुल्यकल्पा यजेरन् ॥ १ ॥ वचनाद्वा शिरोवत्स्यात् ॥ १ ॥ न वाऽनारभ्यवादत्वात् ॥ ३ ॥ स्याद्वा यज्ञार्थत्वादौदुम्बरीवत् ॥ ४ ॥ न तत्प्रधानत्वात् ॥ ५ ॥ औदुम्बर्याः परार्थत्वात्कपालवत् ॥ ६ ॥ अन्येनापीति चेत् ॥ ७ ॥ नैकत्वात्तस्य चानधिकाराच्छब्दस्य चाविभक्तत्वात् ॥ ८ ॥ सन्निपातात्तु निमित्तविघातः स्यात् बृहद्रथन्तरवद्विभक्तशिष्टत्वाद्वसिष्ठनिर्वर्त्ये ॥ ९ ॥ अपि वा कृत्स्नसंयोगादविघातः प्रतीयेत; स्वामित्वेनाभिसंबन्धात् ॥ १० ॥ साम्नोः कर्मवृद्धयेकदेशेन संयोगे गुणत्वेनाभिसंबन्धस्तस्मात्तत्र विघातः स्यात् ॥ ११ ॥

दर्शपूर्णमासयोः पुरुषभेदेन कल्पभेदः समाम्नातः-'राजन्य-वासिष्ठादीनां-नाराशंसो द्वितीयः प्रयाजः, तनूनपादन्येषामि' आ. श्रौ. १५.१६ त्यादिः । स दीक्षणीयादिष्वतिदिष्टः सत्रेष्वनेककर्तृकेषु प्राप्तः । तत्र संदिह्यते-किं भिन्नकल्पा अपि संहत्य सत्रमासीरन्, उत तुल्यकल्पा एवेति । तदर्थमिदं विचार्यते-किं वासिष्ठादयो नाराशंसाद्यङ्गत्वेन कर्तारो विधीयन्ते ? उत वासिष्ठानुद्दिश्य नाराशंसादि तादर्थ्येन विधीयत इति ? तत्र वासिष्ठार्थत्वेन विधाने फलकल्पनात्प्रकरणबाधाच्च वासिष्ठादय एव नाराशंसाद्यङ्गत्वेन विधीयन्ते। षष्ठी च सम्बन्धवाचिनी। सत्रेषु च सत्रिणां प्रत्येकमेव कर्तृत्वमिति स्थितम् । अतस्तत्र वासिष्ठावासिष्ठैः क्रियमाणो नाराशंसो वासिष्ठेनापि तावत् क्रियत एवेति अविगुणः । तथा तनूनपादन्यैरपि । अतोयं कञ्चित्कल्पमाश्रित्य भिन्नकल्पा अप्यधिक्रियेरन् इत्येवं प्राप्ते –

ब्रूमः—वासिष्ठादीन् स्वामित्वेनोद्दिश्य तादर्थ्येन नाराशंसादिविधीयते, तादर्थ्ये च क्लृप्तोपकारद्वारेणाऽप्युपपन्नमिति, न फलकल्पनापत्तिः। एवं च धात्वर्थस्यान्यत्र विधानात्सन्निकृष्टविधिर्भवति । प्रयाजोद्देशेन तु-

वासिष्ठादिविधौ, धात्वर्थेऽन्यस्य विधानाद्विप्रकृष्टार्थविधानं स्यात्। अतः तत्रोऽन्यतरकल्पाश्रयणे, अन्येषां तेन क्रतूपकारालाभाद्विगुणः क्रतुर्न फलं साधयेत्। तस्मात्तुल्यकल्पानामेवाधिकारः।

इति प्रथमं सत्रे तुल्यकल्पानामेवाधिकाराधिकरणम्।

---

भिन्नकल्पयोरपि राज्ञः पुरोहितस्य च कुलाययज्ञेऽधिकाराधिकरणम् ॥२१॥

वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणित्वम् ॥ १२ ॥ अर्थाभावात्तु नैवं स्यात् ॥ १३ ॥ अर्थानां च विभक्तत्वान्न तच्छ्रुतेन सम्बन्धः ॥ १४ ॥ पाणेः प्रत्यङ्गभावादसंबन्धः प्रतियेत ॥ १५ ॥

'एतेन राजपुरोहितौ सायुज्यकामौ यजेयातामि' तां. ब्रा. १९-१५त्यत्र-संशयः—किमयं षष्ठीतत्पुरुषैकशेषः-राज्ञः पुरोहितो राजपुरोहितः, राजपुरोहितश्च राजपुरोहितश्च राजपुरोहिताविति। ततश्च राजद्वयसम्बन्धिनोर्द्वयोः पुरोहितयोरधिकारः? उत कृतैकशेषेणोत्तरपदेन तत्पुरुषो राज्ञः पुरोहितौ राजपुरोहिताविति। ततश्चैकराजसम्बन्धिनोर्द्वयोरधिकारः?उत कर्मधारयः? राजात्मकौ पुरोहिताविति। अथवा द्वन्द्वः राजा च पुरोहितश्चे ति? तत्र युगपदधिकरणे द्वन्द्वः। तेन पदद्वयमपि लक्षणावृत्ति स्यात्, अतस्तत्पुरुषोऽयम्। समासादुत्पन्नं द्विवचनं तदर्थस्यैव द्वित्वमाह। तस्माद् राजद्वयसम्बन्धिनौ द्वौ। यद्वा पुरोहितपदाद् द्विवचनं तदर्थस्यैव द्वित्वमाह—राजपुरोहितौ द्वाविति। एतस्मिंस्तु पक्षद्वये पूर्वपदं लक्षणावृत्ति स्यात्। किञ्च नैकस्य राज्ञः पुरोहितद्वयमस्ति। 'पुरोहितं वृणीते' इत्युपादीयमानस्यैकत्वस्य विवक्षितत्वात्। प्रथमपक्षे राजपदमनर्थकम्। राज्ञ एव पुरोहितोऽस्ति, नान्यस्य। अतोऽव्यभिचारादविशेषणं सदनर्थकं राजपदं स्यात। अतः कर्मधारयोऽस्तु। सोऽपि न, राज्ञः पुरोहितत्वाभावात्। ब्राह्मण एव पुरोहितत्वेन वरीतव्य इति श्रूयते। तस्माद द्वन्द्व एवायम्। न च तत्र कस्यचिल्लक्षणा, 'युगपदधिकरणे द्वन्द्वः' इत्यस्यापवादादित्युक्तं तन्त्ररत्ने,। तस्माद् राज्ञः, पुरोहितस्य चात्र भिन्नकल्पयोरेव सतोर्वचनादधिकारः।

इति द्वितीयं भिन्नकल्पयो राजपुरोहितयोः कुलाययज्ञेऽधिकाराधिकरणम्।

---

सत्रे ब्राह्मणमात्रस्याधिकाराधिकरणम् ॥ ३ ॥

सत्राणि सर्ववर्णानामविशेषात् ॥१६॥ लिङ्गदर्शनाच्च ।१७॥ ब्राह्मणानां वेतरयोरार्त्विज्याभावात् ॥१८। वचनादिति चेत् ॥१९॥ न स्वामित्वं हि विधीयते ॥ २० ॥ गार्हपते वा स्यान्नामाविप्रतिषेधात् ॥ २१ ॥ न वा कल्पविरोधात् । २२। स्वामित्वादितरेषामहीने लिङ्गदर्शनम् ॥ २३ ॥

सत्रेषु किं त्रयाणामपि वर्णानामधिकारः ? उत ब्राह्मणस्यैवेति-विचारः। तदर्थं किं—'ये यजमानाः,त ऋत्विजः' इत्यनेनार्त्विज्यं यजमान-संस्कारत्वेन विधीयते ? उत यजमाना आर्त्विज्याङ्गत्वेनेति चिन्त्यते ।

सत्राणि सर्ववर्णानां भवेयुरविशेषतः ।
ऋद्धिकामादिवाक्येषु विशेषः श्रूयते न हि ॥ ५४ ॥
प्राप्तेषु त्रिषु वर्णेषु यच्छब्देनोपबन्धनात् ।
संस्कारार्थतया तेषामार्त्विज्यमुपयुज्यते ॥ ५५ ॥

प्रधानभूतैरेव च तैः क्रियमाणमार्त्विज्यं न गुणभूतानध्वर्यून् कर्तॄनपेक्षते । गुणभूतकर्तृपरिच्छेदेन ब्राह्मण्यमार्त्विज्याङ्गं, तदभावे तदपि द्वाराभावान्न सत्रे प्राप्नोति । तस्मात् त्रयाणामधिकार इति प्राप्ते—

ब्रूमः—नार्त्विज्यं यजमानानां संस्कारत्वेन चोद्यते ।
तथा ह्यप्राकृतं कार्यमार्त्विज्यस्य प्रसज्यते ॥ ५६ ॥
तेन यच्छब्दयोगेऽपि नोद्देशः स्वामिनामिह ।
आर्त्विज्यमेव तूद्दिश्य यजमानविधिर्भवेत् ॥ ५७ ॥

प्रकृतितश्च द्वौ धर्मावार्त्विज्याङ्गत्वेन प्राप्तौ—अन्यकर्तृकता, ब्राह्मणकर्तृकता च। तत्राऽन्यकर्तृकता 'ये यजमानाः, त ऋत्विजः' इत्यनेन बाधिता । ब्राह्मणकर्तृकतायास्तु न किञ्चिद् बाधकमस्ति । ऋद्धिकामादिशब्दानां ब्राह्मणत्वाविरोधात् । तस्मात्प्रकृततः प्राप्तं ब्राह्मणकर्तृकत्वं, वाचनिकं च यजमानकर्तृकत्वमुभयं सम्पादयितुं ब्राह्मणा एव सत्राण्यासीरन्निति ।

इति तृतीयं सत्रे ब्राह्मणमात्रस्याधिकाराधिकरणम् ।

---

सत्रे वैश्वामित्र-तत्समानकल्पानामेवाधिकाराधिकरणम् ॥ ४ ॥

वासिष्ठानां वा ब्रह्मत्वनियमात् ।२४। सर्वेषां वा प्रतिप्रसवात् ।२५। वैश्वामित्रस्य हौत्रनियमाद् भृगु-शुनक-वसिष्ठानामनधिकारः ॥ २६ ॥

ब्राह्मणानामपि किं सर्वेषामधिकारः ? उत वासिष्ठानां तत्समानकल्पानां च ? अथवा वैश्वामित्राणां तत्समानकल्पानां चेति संशयः। तत्राविशेषात्सर्वेषां । 'वासिष्ठो ब्रह्मे'ति प्रकृतौ वचनात् ब्रह्मत्वस्यावैगुण्यायाऽवश्यं वासिष्ठेन भवितव्यम् । अतस्तत्समानकल्पानामधिकारः । य एव कश्चित्स्तोमभागमधीते, स एव वासिष्ठ इति, अवासिष्ठस्यापि स्तोमभागविदो ब्रह्मत्वस्यानुज्ञानान्नावश्यम्भावी वासिष्ठः । 'वैश्वामित्रो होते'ति-वचनात् हौत्रमवश्यं वैश्वामित्रेणैव कर्त्तव्यम् । न च भिन्नकल्पनामधिकारः–अस्तीति स्थितमाद्ये । तस्माद्वैश्वामित्रस्य, तत्समानकल्पानां च सत्रेऽधिकारः ।

इति चतुर्थं वैश्वामित्र-तत्समानकल्पानामधिकाराधिकरणम् ।

—:-०-:—

सत्रे आहिताग्नेरेवाधिकाराधिकरणम् ॥ ५ ॥

विहारस्य प्रभुत्वादनग्नीनामपि स्यात् ॥ २७ ॥ सारस्वते च दर्शनात् ॥ २८ ॥ प्रायश्चित्तविधानाच्च ॥ २९ ॥ साग्नीनां वेटिपूर्वत्वात् ॥ ३० ॥ स्वार्थेन च प्रयुक्तत्वात् ॥ ३१ ॥ सन्निवापं च दर्शयति ॥ ३२ ॥

किमनाहिताग्नीनामपि सत्राधिकारः, उताहिताग्नीनामेवेति संशयः ।

तत्राग्नीनां पदार्थत्वाद्यस्य कस्य चिदग्निषु ।
साधितं कर्म सर्वेषां फलं साधयति ध्रुवम् ॥ ५८ ॥

औदुम्बरीव येन केनचिद्यजमानेन संमिता, तस्माद्येन केनचिदाहिताग्निना संहत्याऽनाहिताग्नयोऽप्यासीरन् ।

नैवम्—इष्टिपूर्वकता सोमविकाराणामवस्थिता ।
इष्टौ चानाहिताग्नीनां न कथञ्चिदधिक्रिया ॥ ५९ ॥
आधातुरग्नयः कार्यं नान्येषां साधयन्ति च ।
उपग्रहविशेषेण कर्तुरेव फलान्वयात् ॥ ६० ॥

'आदधीते'त्यात्मनेपदादाधातुरेवाधानफलेन भवितव्यं, कर्मयोग्यता चाग्नीनां फलम् । अतोऽन्येनाहिता अन्यस्य कर्म न साधयन्ति, तस्मादनाहिताग्नीनामनधिकारः । 'यजमानसंमितौदुम्बरी' तै. सं. ६-२-१० ति तु शास्त्रार्थो येन केनचिदपि प्रकृतप्रयोगगतेन यजमानेन सम्पाद्यत इति वैषम्यम् ।

इति पञ्चममाहिताग्नेरेवाधिकाराधिकरणम् ।

—:-०-:—

जुह्वादीनां साधारण्याधिकरणम् ॥ ६ ॥

जुह्वादीनामस्युक्तत्वात्संदेहे यथाकामी प्रतीयते ॥ ३३ ॥ अपि वाऽन्यानि पात्राणि साधारणानि कुर्वीरन्विप्रतिषेधाच्छास्त्रकृतत्वात् ॥ ३४ ॥ प्रायश्चित्तमापदि स्यात् ॥ ३५ ॥

जुह्वादिपात्रेषु चिन्ता—किं यस्य कस्यचित्पात्रैः सत्रं प्रयोक्तव्यम्, उतान्यानि साधारणानि उत्पाद्यानीति । तत्राग्निवदुपग्रहविशेषविरोधाभावात् यस्य कस्यचित्पात्राणि भवेयुः । सत्यम् । अयं विरोधो नास्ति, किन्त्वाहिताग्निमग्निभिर्दहन्ति, यज्ञपात्रैश्च दहन्ती'ति, तथा 'दक्षिणे हस्ते जुहूमासादयेदि'त्यादिवचनैः पात्राणां दाहे गुणभावः, सादनप्रतिपत्तिश्च विधीयते । तद्यदि कस्यचित्पात्रैरुपक्रान्ते प्रयोगे, तस्य यजमानस्य दिष्टंगतिः स्यात् । ततस्तस्य संस्कारः, पात्राणां च प्रतिपत्तिर्हीयेत । यदि तु तैर्दह्येत, तदा प्रक्रान्तः प्रयोगो विगुणः स्यात् । तस्मात्साधारणान्युत्पाद्येरन् ।

इति षष्ठं जुह्वादीनां साधारण्याधिकरणम् ।



विकृतसप्तदशसामिधेनीषु वर्णत्रयाधिकाराधिकरणम् ॥ ७ ॥

पुरुषकल्पेन वा विकृतौ कर्तृनियमः स्याद्यज्ञस्य तद्गुणत्वादभावादितरान्प्रत्येकस्मिन्नधिकारः स्यात् ॥ ३६ ॥ लिङ्गाच्चेज्याविशेषवत् ॥ ३७ ॥ न वा संयोगपृथक्त्वाद् गुणस्येज्याप्रधानत्वादसंयुक्ता हि चोदना ॥ ३८ ॥ इज्यायां तद्गुणत्वाद्विशेषेण नियम्येत ॥ ३९ ॥

यास्विष्टिषु अध्वरकल्पादिषु 'सप्तदश सामिधेनीरनुब्रूयादि' शत. ब्रा. १-५-२-१२'ति श्रुतम्। तासु किं वैश्यस्यैवाधिकारः? उत त्रयाणामपीति संशये दर्शपौर्णमासप्रकरणपठितेन 'सप्तदश वैश्यस्ये' तै० सं० २-५-१० ति वाक्येन साप्तदश्याङ्गत्वेन वैश्यो विधीयते कर्ता, न च प्रकृतौ साप्तदश्यमस्तीति यत्राध्वरकल्पादौ तद्विहितं, तत्रैव वैश्यविधिः। तेन वैश्यकर्तृकसाप्तदश्याङ्गत्वादध्वरकल्पादौ वैश्यस्यैवाधिकारः।

मैवं–प्रकृतौ हि श्रुतं वाक्यं ततो नोत्कर्षमर्हति।
तस्माद्वैश्यानुवादेन साप्तदश्यं विधीयते ॥ ६१ ॥
तच्च वैश्यनिमित्तत्वात्पाञ्चदश्यस्य बाधकं।
वैकृतैर्वचनैः साप्तदश्यं क्रत्वङ्गमुच्यते ॥ ६२ ॥
तदनैमित्तिकत्वेन त्रयाणां न विशिष्यते।
तस्मादध्वरकल्पादौ त्रयाणामधिकारिता ॥ ६३ ॥

इति सप्तमं वैकृतिसाप्तदश्यसामिधेनीषुवर्णत्रयाधिकाराधिकरणम्।



इति शास्त्रदीपिकायां षष्ठस्य षष्ठः पादः।

# अथ षष्ठाध्याये सप्तमः पादः।

## विश्वजिति पित्रादीनामदेयत्वाधिकरणम् ॥ १ ॥

**स्वदाने सर्वमविशेषात् ।१। यस्य वा प्रभुः स्यादितरस्याऽशक्यत्वात् ॥ २ ॥**

विश्वजिति 'सर्वस्वं ददाती' ति श्रुतम्, तत्र किं ज्ञात्यादीनामपि स्व शब्दवाच्यानां दानं? उत धनस्यैव, यत्रास्य स्वामित्वमिति संशये, सर्वेषां स्वशब्दवाच्यानां दानम्, विशेषात्, शक्य अते च पित्रादयोऽपि परविधेयाः कर्त्तुं, परस्वत्वापादनं हि दानम्, अतः पित्रादयोऽपि देयाः।

नैतदेवं, 'न हि शक्यन्ते दातुं स्वत्वत्यागपूर्वकं हि परस्वत्वापादनं दानं, न च दीयमानोऽपि पिता न पिता भवति, यत्र तु प्रभुत्वयोगेन

स्वशब्दप्रवृत्तिः, तच्छक्यं दातुं, तस्मिन् हि दत्ते पूर्वस्य स्वामित्वं निवर्तते। परस्य च स्वामित्वमुपजायते। किञ्चायं स्वशब्दोऽपि भिन्नया शक्त्याऽऽत्मात्मीयज्ञातिधनेषु वर्तते। तत्रैकस्मिन् प्रयोगेऽस्यैक एवार्थः, तत्र धनस्य दानसम्भवात्, तद्विषय एव स्वशब्दः। तस्माद्धनस्यैव दानं, न पित्रादीनाम्।

इति प्रथमं विश्वजिति पित्रादीनामदेयत्वाधिकरणम्।

—:०:—

विश्वजिति पृथिव्या अदेयत्वाधिकरणम् ॥ २ ॥

## न भूमिः स्यात्सर्वान्प्रत्यविशिष्टत्वात् ॥ ३ ॥

येयं महापृथिवी, सा देया नेति। सापि सार्वभौमस्य धनमिति-मन्यमानो दानमाह, नासौ कस्यचित् स्वं, राज्यं हि स्वविषयपरिपालन-कण्टकोद्धरणभृतिवृत्तित्वेन कर्षकादिभ्यः करादानं, दण्ड्येभ्यश्च दण्डदान-मिति—एतावान् सम्बन्धः, न स्वामित्वम्। अतो न सार्वभौमो महापृथिवीम्-दद्यात्, माण्डलिकश्च मण्डलम्।

इति द्वितीयं भूमेरदेयत्वाधिकरणम्।

—:-०-:—

विश्वजिति अश्वादीनामदेयताधिकरणम् ॥ ३ ॥

## अकार्यत्वाच्च ततः पुनर्विशेषः स्यात् ॥ ४ ॥

विश्वजित्येव 'न केसरिणो ददाती'ति हि श्रुतं। तत्र केसरिणो दानं नेति, विहितप्रतिषेधात् पक्षे दानं। पर्युदासस्त्वयम्, 'अपि तु वाक्यशेषः स्यादि' १०-८-४ त्यनेन न्यायेन। अयं च तस्यैव न्यायस्य प्रपञ्चः प्रसङ्गादिहोक्तः।

इति तृतीयं अश्वादीनामदेयताधिकरणम्।



विश्वजिति विद्यमानानामेव सर्वस्वानां दानाधिकरणम् ॥ ४ ॥

## नित्यत्वाच्चानित्यैर्नास्ति सम्बन्धः ॥ ५ ॥

'सर्वस्वं ददाती'ति किं यत्पुरुषस्योपभोग्यं स्वं कुप्याकुप्यशयनासनगवादि, तत्सर्वं ददातीति शास्त्रार्थः। ततश्च यस्यापि यन्नास्ति, सोऽपि

तदर्जयित्वा दद्यात्, उत यद्यस्य विद्यते, तत्सर्वं ददातीति संशये ? यत्सर्वं-स्वं, तद्दद्यादिति श्रुत्यर्थविधिलिप्सया दानविधिं मन्यते, चोदकेन तु दानस्य प्राप्तत्वाद्यस्य यदस्ति, स तस्मिन् द्वादशशतमात्रं दातुं प्रवृत्तः सन् सर्वं-दद्यादिति सर्वता विधीयते। किञ्चायं सर्वशब्दः प्रसिद्धस्वत्वेष्वेव सर्वेषु उपपन्नत्वान्नासिद्धस्वत्वानामाक्षिपत्यर्जनम्। तस्मान्नार्जयित्वा देयम्।

इति चतुर्थं विश्वजिति विद्यमानानामेव सर्वस्वदानाधिकरणम्।

---

विश्वजिति धर्मार्थसेवकशूद्रस्यादेयताधिकरणम् ॥ ५ ॥

शूद्रश्च धर्मशास्त्रत्वात् ॥ ६ ॥

धर्मार्थी परिचारकत्वेन यजमानमुपस्थितो यः शूद्रः, स किं देयः, नवेति, सर्वशब्दानुग्रहात्परविधेयीकरणसम्भवाच्च देयः। स्वत्वाभावादनिच्छया परवश्यत्वानभ्युपगमसम्भवाच्चादेयः, दासस्तु देय एव।

इति पञ्चमं धर्मार्थसेवकशूद्रस्यादेयत्वाधिकरणम्।

—:-०-:—

विश्वजिति दक्षिणाकाले विद्यमानानामेव सर्वस्वानां देयताधिकरणम् ॥६॥

दक्षिणाकाले यत्स्वं तत्प्रतीयेत तद्दानसंयोगात् ॥ ७ ॥

किं दक्षिणाकालात्प्रागेव प्राप्तोपयोगमपि धनमनुपयुज्य प्रयत्नेन धारयित्वा देयं। यदपि भावित्वेन निश्चितं। तदसदपि देयम्, उत यद्दक्षिणा-कालेऽवस्थितं, तदेव देयमिति संशये, सर्वशब्दानुग्रहाय भूतभाविनोरपि दानं। दक्षिणाकालीने एव सर्वत्वोपपत्तेर्न धारणप्रयुक्तिः। भाविनश्च तदानीं स्वत्वाभावादशक्यमेव दानम्।

इति षष्टं विश्वजिति दक्षिणाकाले विद्यमानानामेव सर्वस्वानामदेयताधिकरणम्।

---

विश्वजिति दक्षिणोत्तराङ्गानामनुष्ठानाधिकरणम् ॥ ७ ॥

अशेषत्वात्तदन्तः स्यात्कर्मणो द्रव्यसिद्धित्वात् ॥ ८ ॥ अपि वा शेषकर्म स्यात्क्रतोः प्रत्यक्षशिष्टत्वात् ॥ ९ ॥ तथा चान्यार्थदर्शनम् ॥ १० ॥ अशेषं तु समञ्जसमादानेन शेषकर्म स्यात् ॥ ११ ॥ नादानस्यानित्यत्वात् ॥ १२ ॥ दीक्षासु विनिर्देशादक्रत्वर्थेन संयोगस्तस्मादविरोधः स्यात ॥ १३ ॥

प्रकृतौ कर्मारम्भ एव त्रिधा यजमानेनात्मीयं धनं वचनबलाद् व्यवस्थापितम्—इदं मे भक्षार्थम्, इदं क्रत्वर्थम, इदं दक्षिणार्थमिति। तत्र यत् दक्षिणार्थं, तन्मध्ये द्वादशशत दत्तम् । इह तु किं त्रिविधमपि दातव्यं, कर्मशेषं चोत्स्रष्टव्यम् ? उत यावता क्रतुशेषं निर्वर्तते, तावच्छिष्ट्वा, अन्यत्सर्वं देयम्, उत-यद्दक्षिणार्थं निहितं, तदेव सर्वं देयमिति संशयः।

प्रत्यक्षवचनादिष्टसर्वदानविरोधतः ।
चोदकावगतं कर्म शेषं लभ्येत दुर्बलम् ॥ ६४ ॥

प्रधानत्वात्क्रतोर्नैव दानं तद्बाधनक्षमम् ।
किञ्चित्तु क्रतवे शिष्ट्वा सर्वमन्यत्प्रदीयते ॥ ६५ ॥

दक्षिणार्थेन निर्दिष्टं प्राप्तं द्रव्यमनद्य तु ।
विधेयं सर्वतामात्रं लाघवं हि तथा विधेः ॥ ६६ ॥

इति सप्तमं विश्वजिति दक्षिणादानोत्तरांगानामनुष्ठानाधिकरणम् ।

अहर्गणस्थेऽपि विश्वजिति सर्वस्वदानाधिकरणम् ॥ ८ ॥

अहर्गणे च तद्धर्मः स्यात्सर्वेषामविशेषात् ॥ १४ ॥ द्वादशशतं वा प्रकृतिवत् ॥ १५ ॥ अतद्गुणत्वात्तु नैवं स्यात् ॥ १६ ॥ लिङ्गदर्शनाच्च ॥ १७ ॥

अस्त्यष्टरात्रोऽहीनः, तस्य विश्वजित्प्रथममहः, ततोऽभिप्लवः षडहः, ततोऽभिजित्। तत्र विश्वजिति संशयः—किं द्वादशशतं दक्षिणा स्यात्, उत सर्वस्वं दक्षिणेति ?

तत्र—गणेषु द्वादशाहस्य विध्यन्तः स्थापयिष्यते ।
द्वादशञ्च शतं ज्योतिष्टोमात्तत्रातिदिश्यते ॥ ६७ ॥
विश्वजित्यपि सैव स्याद्दक्षिणा गणवर्तिनी ।
नामातिदेशप्राबल्यात्सर्वस्वं त्वेव दक्षिणा ॥ ६८ ॥

इदं च प्राप्तिमात्रपरमधिकरणं, प्राप्तं विश्वजिति सर्वस्वं बाधित्वा इतरेषां सप्तानामह्नां द्वादशशतदक्षिणानां भूयसां साधर्म्याद् द्वादशशतमेव देयम्, एकैव च तन्त्रेण सर्वेषामेकप्रयोगवर्तिनां दक्षिणा न पृथक् प्रदातव्या, तस्माद् भूयोऽनुग्रहाय द्वादशशतमेव देयम् ।

इत्यष्टममहर्गणस्थेऽपि विश्वजिति सर्वस्वदानाधिकरणम् ।

---

विश्वजिति द्वादशशतन्यूनधनस्यानधिकाराधिकरणम् ॥ ९ ॥

विकारः सन्नुभतोऽविशेषात् ॥ १८ ॥ अधिकं वा प्रतिप्रसवात् ॥ १९ ॥ अनुग्रहाच्च पादवत् ॥ २० ॥

सर्वस्वदान एव संशयः—किं यस्य द्वादशशतान्न्यूनं, सोऽपि तावन्मात्रं—सर्वस्वं दत्त्वाऽधिक्रियते ? उत यस्याधिकं, स एवेति ।

ततो न्यूनेऽधिके वापि सर्वशब्दोपपत्तितः ।
उभयोरधिकारः स्यात् न्यूनाधिकदायिनोः ॥ ६९ ॥
इदं तु प्रकृतेः प्राप्तं सर्वदानं नियम्यते ।
तत्र चानतिसिद्ध्यर्थमधिकं सर्वमीरितम् ॥ ७० ॥

ज्योतिष्टोमे हि द्वादशशतं विधाय, पश्चादुक्तं 'यद्येतावता ऋत्विजो—न नमेयुरपि, सर्वस्वेने'ति द्वादशशतादसिद्धां चानतिं ततोऽधिकमेव सर्वस्वं साधयितुं शक्नुयात्, न न्यूनम् । अतः प्रकृतौ तावद् द्वादशशताधिकमेव सर्वस्वं, यच्च प्राकृतं, तस्यैव नियममात्रमिह क्रियते, तस्मादधिकदानेनैवात्राधिकारः ।

इति नवमं विश्वजिति द्वादशशतन्यूनधनस्यानधिकाराधिकरणम् ।

---

आधानेऽपरिमितं देयमित्यनेन सङ्ख्यान्तरविधानाधिकरणम् ॥ १० ॥

अपरिमिते शिष्टस्य सङ्ख्याप्रतिषेधस्तच्छ्रुतित्वात् ॥ २१ ॥ कल्पान्तरं वा तुल्यवत्प्रसङ्ख्यानात् ॥ २२ ॥

आधाने श्रुतम् 'एका देया, षट् देया, द्वादश देयाः, चतुर्दशतिर्देया, शतं देयम्, सहस्रं देयं, अपरिमितं देय'मिति । तत्रापरिमितं देयमिति किं पूर्वोक्तैकादिपरिमाणप्रतिषेधः ? उतायमपि सङ्ख्यान्तरविधिरिति संशयः । तत्राऽवयवव्युत्पत्त्या परिमाणशून्यमुच्यते । न च परिमाणशून्यस्य दानं सम्भवति । अतः प्रकृतपरिमाणशून्यमुच्यते । ततस्तस्य प्रतिषेधः—

उच्यते । बह्वर्थवचनोऽयं समुदायप्रसिद्ध्या, सा चावयवप्रसिद्धेर्बलीयसी । न चालब्धात्मिका रूढिः, सुज्ञातपरिमाणेष्वपि बहुत्वमात्रेणापरिमितशब्दप्रयोगात् । तस्मादयमपि सङ्ख्यान्तरविशिष्टदानविधिः ।

इति दशममपरिमितशब्दस्य संख्यान्तरविधानाधिकरणम् ।



अपरिमितशब्देन सहस्राधिकस्य ग्रहणाधिकरणम् ॥ ११ ॥

अनियमोऽविशेषात् ॥२३॥ अधिकं वा स्याद्बह्वर्थत्वादितरैः सन्निधानात् ॥ २४ ॥ अर्थवादश्च तदर्थवत् ॥ २५ ॥

बहुत्वविधिरपरिमितशब्दप्रयोगादिति स्थितम् । किं तत् सहस्रान्न्यूनम्, अधिकं वा ? उताधिकमेवेति संशये, अर्वागपि बहुत्वसम्भवादनियमः ।

नैवम्—आपेक्षिको हि बह्वर्थः सहस्रापेक्षया भवेत् ।
तस्यानन्तरनिर्देशात्सहस्रादधिकस्ततः ॥ ७१ ॥

इत्येकादशमाधानेऽपरिमितशब्देन सहस्राधिकदानाधिकरणम् ।



'तदु हस्मे'त्यादिपरकृतिपुराकल्पानामर्थवादताधिकरणम् ॥ १२ ॥

परकृतिपुराकल्पं च मनुष्यधर्मः स्यादर्थाय ह्यनुकीर्तनम् ॥ २६ ॥ तद्युक्ते च प्रतिषेधात् ॥ २७ ॥ निर्देशाद्वा तद्धर्मः स्यात्पञ्चावत्तवत् ॥ २८ ॥ विधौ तु वेदसंयोगादुपदेशः स्यात् ॥ २९ ॥ अर्थवादो वा विधिशेषत्वात्तस्मान्नित्यानुवादः स्यात् ॥ ३० ॥

दर्शपौर्णमासयोः श्रुतम् 'तदु ह स्माह बर्कुर्वार्ष्णिर्माषान्मे पचते' श. ब्रा. १-१-१०ति विधिः, उतार्थवाद इति संशये विधिरर्थवत्त्वाद्वादमात्रं ह्यनर्थ-

कमित्यौदुम्बराधिकरणपूर्वपक्षे स्थितं। तमेव पूर्वपक्षं मनुष्यधर्मः स्यादिति-स्मारयित्वा, कृत्वाचिन्तयाऽधिकारश्चिन्त्यते। यदा विधिः, तदा किं वर्ष्णि-गोत्राणाम्? उत सर्वपुंसामिति। वार्ष्णिकर्तृकत्वसंस्तवात् तद्गोत्राणामेव स्यात्—

मैवं। स्तुत्यस्य विधिर्न स्तुत्युपायस्य, न चात्र वार्ष्णिकर्तृको माषपाकः स्तूयते। अन्यस्य स्तावकस्याभावात्। किन्तु वार्ष्णिकृतत्वेन कारणेन माषपाकस्य स्तुतिः। अतो माषपाकमात्रविधानात् सर्वपुंसामधिकारः स्यात्। अर्थवादो वेति कृत्वाचिन्तोद्घाटनम्।

इत्येकादशं तद्दुहस्मत्यादि परकृतिपुराकल्पानामर्थवादताधिकरणम्।

---

सहस्रसंवत्सरशब्दस्य सहस्रदिनपरताधिकरणम् ॥ १३ ॥

सहस्रसंवत्सरं तदायुषामसंभवान्मनुष्येषु ॥ ३१ ॥ अपि वा तदधिकारान्मनुष्यधर्मः स्यात् ॥ ३२ ॥ नासामर्थ्यात् ॥ ३३ ॥ सम्बन्धादर्शनात् ॥ ३४ ॥ स कुल्यः स्यादिति कार्ष्णाजिनिरेकस्मिन्न-संभवात् ॥३५॥ अपि वा कृत्स्नसंयोगादेकस्यैव प्रयोगः स्यात् ॥३६॥ विप्रतिषेधात्तु गुणान्यतरः स्यादिति लावुकायनः ॥ ३७ ॥ संवत्सरो वा विचालित्वात् ॥ ३८ ॥ सा प्रकृतिः स्यादधिकारात् ॥ ३९ ॥ अहानि वाऽभिसङ्ख्यात्वात् ॥ ४० ॥

पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः, पञ्चपञ्चाशतः पञ्चदशाः, पञ्चपञ्चाशतस्सप्तदशाः, पञ्चपञ्चाशत एकविंशाः, विश्वसृजाम्—सहस्रसंवत्सरमि' तै. ब्रा. ३-१२-९-८ ति। किमस्मिन् सत्रे ये गन्धर्वादयः सहस्रायुषः, तेषामधिकारः? उत मनुष्याणामेव, यदा मनुष्याणां, तदा किं रसायनादिसम्पादितसहस्रायुषाम, उत कुलकल्पः? उत विश्वसृजामयनं कुर्वतां सहस्रायुष्ट्वम्, अथवार्द्धतृतीयानां शतानामधिकारः? उत मासेषु संवत्सरशब्दमाश्रित्य सुखेनायं मनुष्याधिकारः? उत द्वादशरात्रिषु संवत्सर-शब्दः, उत दिवसेष्विति पक्षाः।

पूर्वपक्षः।

तत्र मनुष्याणां सहस्रायुष्ट्वासम्भवात् श्रुतिबलाद्गन्धर्वाणामधिकारः, तेषां त्वग्न्युपसंहारासामर्थ्यान्मनुष्याणामेव रसायनलब्धसहस्रायुषां। रसाय-

नस्येतावदायुःसम्पादनासामर्थ्याच्छतायुः पुरुषः' इति श्रुतेः कुलकल्पः। 'शास्त्रफलं प्रयोक्तरी' ३-७-१८ ति न्यायात्समग्रकर्मानुष्ठायिनां फलं, न विकलानुष्ठायिनाम्। अतो न कुलकल्पः। सत्रारम्भादेव तु सहसायुष्ट्वं कल्प्यतामिति। इदमप्यसम्भवादेवानुपपन्नं।

तस्मात्पञ्चपञ्चाशतः, इति यजमानाभिप्राया सङ्ख्या। एकोऽपि त्रिवृत्स्तोमकयागयुक्तः सम्वत्सरः पञ्चपञ्चाशत्सङ्ख्याकैः प्रत्येकं कर्तृभूतैः सम्बध्यमानस्तत्सङ्ख्यो भवति, तथा पञ्चदशादयोऽपीति। तेन चतुस्सम्वत्सरमिदं सत्रमर्द्ध तृतीयैर्यजमानशतैः क्रियमाणं सहस्रसम्वत्सरमिति कथ्यते। अयममपि पक्षो बुद्धावत्यन्तमनारूढः 'चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीरन्नि'ति वचनविरुद्धो दुरभ्युपगमः।

तस्मात्सङ्ख्याशब्दम्, सम्वत्सरशब्दं वा गौणमाश्रित्य, अत्र मनुष्याधिकारः समाश्रयितव्यः। तत्रापि सङ्ख्याशब्दस्य मुख्यत्वादेकार्थनिश्चयसामर्थ्याच्च न स्वार्थत्यागः। सम्वत्सरपदं तु जघन्यत्वात् सौरचान्द्रमसाद्यनेकार्थसाधारण्येनार्थनिश्चयासामर्थ्याद् गौणं भवति। तत्र 'यो मासः, स सम्वत्सरः 'इति दर्शनान्मासेषु, तत्राप्यशक्तिस्तदवस्थैव। न ह्याधानादूर्ध्वं सहस्रमासं जीवनं सम्भवति,। तस्मा 'त्सम्बत्सरप्रतिमा वै द्वादशरात्रयः'[1] इति प्रयोगात् द्वादशरात्रिषु सम्वत्सशब्दः। प्रतिमाविशेषणं चात्र सम्वत्सरशब्दः, न तस्य द्वादशरात्रिषु प्रयोगः। तस्मात् त्रिवृदादिशब्दसामञ्जस्याद्दिवसेषु सम्वत्सरशब्दः।

त्रिवृदादिपदैः स्तोमविशिष्टमहरुच्यते।
नाहःसङ्घस्ततोऽहस्सु गौणी संवत्सराभिधा॥ ७२॥

इति त्रयोदशं सहस्रसंवत्सरशब्दस्य सहस्रदिनपरत्वाधिकरणम्।

इति शास्त्रदीपिकायां षष्ठस्य सप्तमः पादः।

---

१. मै. सं. १-८-६।

# अथ षष्ठाध्याये अष्टमः पादः ।

अनाहिताग्नेरेव चतुर्होतृहोमाधिकाराधिकरणम् ॥ १ ॥

इष्टिपूर्वत्वादक्रतुशेषो होमः संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात् ॥ १ ॥ इष्टित्वेन तु संस्तवश्चतुर्होतॄनसंस्कृतेषु दर्शयति ॥ २ ॥ उपदेशस्त्वपूर्वत्वात् ॥ ३ ॥ स सर्वेषामविशेषात् ॥ ४ ॥ अपि वा क्रत्वभावादनाहिताग्नेरशेषभूतनिर्देशः ॥ ५ ॥ जपो वाऽनग्निसंयोगात् ॥ ६ ॥ इष्टित्वेन संस्तुते होमः स्यादनारभ्याग्निसंयोगादितरेषामवाच्यत्वात् ॥ ७ ॥ उभयोः पितृयज्ञवत् ॥ ८ ॥ निर्देशो वाऽनाहिताग्नेरनारभ्याग्निसंयोगात् ॥ ९ ॥ पितृयज्ञे संयुक्तस्य पुनर्वचनम् ॥ १० ॥

सन्ति चतुर्होतृसंज्ञका मन्त्राः, तैर्जपहोमाः पुरुषार्थतया विहिताः—'चतुर्होतारं प्रयुञ्जीत, चतुर्होत्रा प्रजाकामो जुहुयादि'ति । ये होमाः, ते किमाहिताग्न्यधिकाराः आहवनीये कार्याः ? उतानाहिताग्न्यधिकारा लौकिके अग्नौ स्युः, अथवोभयाधिकारा इति संशयः । तदर्थमिदं विचार्यते—'एषा वा अनाहिताग्नेरिष्टिरि'ति वचनं जपाभिप्रायमनुवादमात्रम्, अनाहिताग्नेर्वा होमेष्वधिकारप्रदर्शनपरमिति । तत्र विध्यश्रवणादनुवादो जपविषयः, इष्टिशब्दश्च जपविषय एव स्तुत्यर्थतया प्रयुक्तः । तदत्रैषा वचनव्यक्तिः—यैषाऽनाहिताग्नेः क्रिया जपात्मिका, सेष्टिरिति ।

सत्यम्, एषा वचनव्यक्तिः, इयमपि तु सम्भवति—यैषा चतुर्होतृहोमात्मिकेष्टिः, साऽनाहिताग्नेरिति, पूर्वस्यामाहिताग्न्यधिकारा होमाः । उत्तरस्यामनाहिताग्न्यधिकाराः, न चान्यतरा निर्धार्यन्ते । तस्मादुभयाधिकारा इति प्राप्ते—

उच्यते—वचनस्यार्थवत्त्वायानाहिताग्नेरधिक्रिया ।
आहत्य च तदर्थास्ते चोदिता नान्यगामिनः ॥ ७३ ॥

षष्ठीश्रुत्याऽनाहिताग्नेः शेषत्वेन गम्यं नार्थप्राप्तं कर्माहिताग्निमालम्बते । तस्मादनाहिताग्न्यधिकाराः ।

इति प्रथमं चतुर्होतृहोमेऽनाहिताग्नेरेवाधिकाराधिकरणम् ।

---

अनाहिताग्निषूपनयनहोमाधिकरणम् ॥ २ ॥

उपनयन्नादधीत होमसंयोगात् ॥ ११ ॥ वल्लौकिके वा विद्याकर्मानुपूर्वत्वात् ॥ १२ ॥ आधानं च भार्यासंयुक्तम् ॥ १३ ॥ अकर्म चोर्ध्वमाधानात्तत्समवायो हि कर्मभिः ॥ १४ ॥ श्राद्धवदिति चेत् ॥ १५ ॥ न श्रुतिविप्रतिषेधात् ॥ १६ ॥ सर्वार्थत्वाच्च पुत्रार्थो न प्रयोजयेत् ॥ १७ ॥ सोमपानात्तु प्रापणं द्वितीयस्य तस्मादुपयच्छेत् ॥ १८ ॥ पितृयज्ञे तु दर्शनात्प्रागाधानात्प्रतीयेत् ॥ १९ ॥

उपनयनाङ्गभूता माणवककर्तृकाः, आचार्यकर्तृकाश्च होमाः किमाहवनीये स्युः, उत लौकिकाग्नाविति संशये, पूर्ववद्वचनाभावादाहवनीये स्युः । माणवकार्थाश्च ते होमास्तदधिकारा अध्ययनाङ्गभूतोपनयनार्थत्वात् । अत एव च ते माणवकाग्नौ कर्तव्या इति, माणवकः प्रागुपनयनादादधीत, तदूर्ध्वं च भार्यामुद्वहेत्, या तु 'स्नात्वा भार्यामधिगच्छेदि'ति स्नानोत्तरकाला दारक्रिया, साऽपत्यार्था भविष्यतीति प्राप्ते –

आधानस्य विद्वदधिकारित्वाद्विद्यायाश्चोपनयनाधीनत्वान्नोपनयनात्प्रागाधानाधिकारसम्भवः । किञ्च कर्मार्थैरेव दारैरपत्यम्, अपत्यार्थैः कर्म सिध्यतीति, नार्थः पृथग् दारक्रियया । य एव रत्यपत्यकर्मार्थेन दारसंग्रहः– प्राप्तः, तस्यैवायं कालविधिः–'स्नात्वा भार्यामधिगच्छेदि'ति । तस्मान्न प्राग् दारसंग्रहः, तदभावे चाधानासम्भवाल्लौकिक एवाग्नौ उपनयनहोमः ।

इति द्वितीयं अनाहिताग्निषूपनयनहोमाधिकरणम् ।

—:-o-:—

अनाहितेऽग्नौ स्थपतीष्टयधिकरणम् ॥ ३ ॥

स्थपतीष्टिः प्रयाजवदग्न्याधेयं प्रयोजयेत्तादर्थ्याच्चापवृज्येत ॥ २० ॥ अपि वा लौकिकेऽग्नौ स्यादाधानस्यासर्वशेषत्वात् ॥ २१ ॥

'तया निषादस्थपतिं याजयेदि मै.सं.२,२-४' तिस्थपतीष्टिः किमाहितेष्वग्निषुस्यात् ? उत लौकिके इति संशये, प्रकृतेराहवनीयादिप्राप्तेराहवनीयादीनां चाधानाधीनत्वादसत्यपि स्थपतेराधानविधावियमेवेष्टिराधानं प्रयोजयेत् इति प्राप्ते:

उच्यते। यदा ह्याधानस्य न साक्षाद्विधिरभविष्यत्, तदा याज्ञिकलोकप्रयोगात्नवत्तं 'गार्हपत्यमादधाति, दिवाऽऽहवनीयमि' त्यादिवेदवाक्यपर्यालोचनयाऽऽधानक्रियानिमित्तत्वं पाचकादिवदाहवनीयादिशब्दानामाश्रित्य स्थपतिराहवनीयार्थमाधानमकरिष्यत्। यदा तु वसन्तादिविधानानि आधानविधायकानीति द्वितीये २-३-३ स्थितम्। तदा तद्विहिताधानजन्याग्निगतसंस्कारवाचित्वादाहवनीयादिशब्दानां स्थपतिकृतेन चाधानेनाविहितेन तत्संस्कारसिद्ध्यनवगमान्नाधानाक्षेपसम्भवः। तस्माल्लौकिके स्यात्।

इति तृतीयमनाहितेऽग्नौ स्थपतीष्ट्यधिकरणम्।

---

अनाहितेऽग्नावकीर्णिपश्वनुष्ठानाधिकरणम् ॥ ४ ॥

अवकीर्णिपशुश्च तद्वदाधानस्याप्राप्तकालत्वात् ॥ २२ ॥

'यो ब्रह्मचार्यवकिरेत्, स नैर्ऋतं गर्दभं पशुमालभेते' ति—किमयं यागः आहवनीयादिषु ? उत लौकिक इति संशयः। ब्रह्मचारिणस्त्रैवर्णिकत्वात्, विद्यावत्त्वाद्भार्याधिगमसम्भवादाधानमुपपन्नम्। अत आधायाग्निं, प्रायश्चित्ते प्रवर्तेत—

नैवम्। न ह्यस्यावकरकृतं ब्रह्मचर्यस्य विप्लवमसमाधाय, गार्हस्थ्यप्रवेशः सम्भवति, "अविप्लुतब्रह्मचर्यो गृहस्थाश्रममावसेदादि' ति विधानात्, नचापत्नीकस्याधानमस्तीति, लौकिकेऽग्नावयं पशुः, लौकिकश्चाचारात्प्राप्तः।

इति चतुर्थमनाहितेऽग्नौ अवकीर्णिपश्वनुष्ठानाधिकरणम्।

---

देवकर्मणामुदगयनादिकालताधिकरणम् ॥ ५ ॥

उदगयनपूर्वपक्षाहः पुण्याहेषु दैवानि स्मृतिरूपान्यार्थदर्शनात् ।२३।

अहनि च कर्मसाकल्यम् ॥ २४ ॥

उपनयन-चौलादीनि किं सर्वकाले स्युः, उतोदगयनादिष्विति संशये-ऽविशेषात् सर्वदैवाधिकारः। स्मृतेस्तु उदगयनादिष्वेव स्युर्दैवानि।

इति पञ्चमं दैवकर्मणामुदगयनादिकालताधिकरणम्।

पित्र्यकर्मणोऽपरपक्षादिकालताधिकरणम् ॥ ६ ॥

इतरेषु तु पित्र्याणि ॥ २५ ॥

पित्र्याणि तु श्राद्धादीनि अपरपक्षादिषु, स्मृतेरेव।

इति षष्ठं पित्र्यकर्मणोऽपरपक्षादिकालताधिकरणम्।

ज्योतिष्टोमाङ्गयाच्ञ-क्रययोर्नित्यताधिकरणम् ॥ ७ ॥

याच्ञाक्रयणमविद्यमाने लोकवत् ॥ २६ ॥ नियतं वार्थवत्त्वा-त्स्यात् ॥ २७ ॥

ज्योतिष्टोमे याच्ञाक्रयणमाम्नातं 'द्वादशरात्रीर्दीक्षितो भृतिं वन्वी-ते'ति याच्ञा, अरुणया पिङ्गाक्ष्या क्रीणाती'ति क्रयः। तत्र संशयः—किं यस्य दक्षिणाद्रव्यं नास्ति, सोमश्च, तस्येदं याच्ञाक्रयणम, उत विद्यमानेऽपीति। तत्र द्रव्यार्थं याच्ञा क्रयणमविद्यमानद्रव्यस्य स्यात्, द्रव्यवतस्त्वनर्थकं, तस्मान्न तस्य याच्ञादावधिकारः।

स्यादेवं, यदि द्रव्यनाशप्रयुक्तं स्यात्, अपूर्वप्रयुक्तं त्विदम्। अतोऽनेन विना अपूर्वमेव वैगुण्यान्नोत्पद्यते। तस्मान्नित्य याच्ञाक्रयणम्।

इति सप्तमं ज्योतिष्टोमांगयाच्ञाक्रययोर्नित्यताधिकरणम्।

ज्योतिष्टोमादिषु पयोव्रतादीनामपि नित्यताधिकरणम् ॥ ८ ॥

तथा भक्षप्रैषाच्छादनसंज्ञप्तहोमद्वेषम्म ॥ २८ ॥

'पयो ब्राह्मणस्य व्रतमि' तै. आ २-५ति भक्षः किमविद्यमाने भक्षान्तरे ? उत भक्षसद्भावेऽपि ? तथा'अग्नीदग्नीन्विहरे'ति प्रैषः किमन्यतो अनवबुद्धे

प्रैषार्थे, 'अहतं वासः परिधत्ते' इति वासोऽन्तराभावे। तथा 'यत्पशुर्मायुमकृते'ति संज्ञप्तहोमो मायुकरणे। तथा 'योऽस्मान् द्वेष्टि, यं च वयं द्विष्मः' इति मन्त्रो द्वेष्यसद्भावे? उत सर्वमिदं नित्यमिति संशये, सामर्थ्यादेषां निमित्तसद्भावेऽनुष्ठानमिति।

निमित्ताश्रवणात् सत्यपि चान्यस्मिन् नियमाद्दृष्टसिद्धेरनन्योपायत्वान्नित्यम्।

इति अष्टमं पयोव्रतादीनामनित्यताधिकरणम्।



अपररात्रे व्रतस्यानियमाधिकरणम्॥ ९॥

अनर्थकं त्वनित्यं स्यात्॥ २९॥

यदा पुनर्व्रत्यमानं पयो न जीर्यतीत्याशङ्क्यते, तदाऽपि किमवश्यं व्रतयितव्यम्।

नेत्याह। तदा हि यजमानस्य रोगोत्पत्त्या क्रतुविरोध एव सम्भाव्येत। तेन प्रधानविरोधान्न व्रतयितव्यं [ नेत्याह ] तदनित्यं स्यादिति।

इति नवमं अपररात्रे व्रतस्यानियमाधिकरणम्।



छागस्यैवाग्नीषोमीयपशुताधिकरणम्॥ १०॥

पशुचोदनायामनियमोऽविशेषात्॥ ३०॥ छागो वा मन्त्रवर्णात्॥ ३१॥ न चोदनाविरोधात्॥ ३२॥ आर्षेयवदिति चेत्॥ ३३॥ न तत्र ह्यचोदितत्वात्॥ ३४॥ नियमो वैकार्थ्यं ह्यर्थभेदाद्भेदः पृथक्त्वेनाभिधानात्॥ ३५॥ अनियमो वाऽर्थान्तरत्वादन्यत्वं व्यतिरेकशब्दभेदाभ्याम्॥ ३६॥ *न वा प्रयोगसमवायित्वात्॥ ३७॥ रूपालिङ्गाच्च॥ ३८॥ छागेन कर्माख्या रूपलिङ्गाभ्याम्॥ ३९॥ रूपान्यत्वान्न जातिशब्दः स्यात्॥ ४०॥ विकारौ नौत्पत्तिकत्वात्॥ ४१॥ स नैमित्तिकः पशोर्गुणस्याचोदितत्वात्॥ ४२॥ जातेर्वा तत्प्रायवचनार्थवत्त्वाभ्याम्॥ ४३॥

'अग्नीषोमीयं पशुमालभेते' तै. सं. ६-१-११ति—किं यः कश्चित् पशुरालब्धव्यः ? उत छाग एव ? चोदनायां सामान्यश्रवणात्, मन्त्रवर्णे च 'छागस्य वपाया मेदसोऽनुब्रूहि' तै. ब्रा. ३-६, आप. श्रौ. ति छागशब्दश्रवणात् संशयः।

तत्र—सामान्यावसिता तावच्चोदना वाक्यभेदतः।
मन्त्रस्तदविरोधेन पाक्षिको यौगिकोऽपि वा ॥ ७४ ॥

विधिस्तुत्योरेकवाक्यत्वात् प्राक् स्तुतेरपर्यवसितोऽञ्जनविधिरर्थवादगतघृतविषय एव पर्यवस्यति। मन्त्र-चोदनयोस्तु वाक्यभेदादप्रतिद्वन्द्विविधिवाक्यं पशुसामान्ये पर्यवसितं न मन्त्रानुरोधेन शक्यं विशेषे नेतुम्। मन्त्रस्तु चोदितार्थप्रकाशनात्परतन्त्रवृत्तिश्चोदनावगतं गवाश्वजातं निगमादिवशलब्धावयवयोगेन प्रकाशयिष्यति, यदा वा छागः, तदा वाप्रयोक्ष्यते। तस्मादनियमः।

उच्यते—चोदना पशुसामान्यमङ्गत्वेनाववोधयेत्।
छागेऽप्यविकलं तत्तु प्रतिव्यक्ति समाप्तितः ॥ ७५ ॥
मन्त्रः प्रकरणाम्नानान्नित्यमङ्गं प्रतीयते।
क्लृप्तया रूढिशक्त्या च यच्छागस्यैव वाचकः ॥ ७६ ॥
तेन तं तादृशं गृह्णन्विधिरात्मा विरोधिनम्।
त्रिधत्ते छागमेवाङ्गं तस्माच्छागोपसंग्रहः ॥ ७७ ॥

उक्त-वक्ष्यमाणार्थसंग्रहः।

अधिकृतिरिति सिद्धा भेद-शेष-प्रयुक्ति-।
क्रमनियमविचारैरेतया चाधिकृत्या ॥ ७८ ॥
सुविदित उपदेशोऽनन्तरं चातिदेशो-।
विकृतिषु तत ऊहो-बाध-तन्त्र-प्रसङ्गाः ॥ ७९ ॥

इति महामहोपाध्यायपार्थसारथिमिश्रविरचितायां
शास्त्रदीपिकायां षष्ठाध्यायस्याष्टमः पादः।
समाप्तश्चायमध्यायः।

—:-०-:—

# सप्तमोऽध्यायः ।

## प्रथमः पादः ।

### अथ प्रयाजादिधर्माणामपूर्वप्रयुक्तताधिकरणम् ॥ १ ॥

श्रुतिप्रमाणत्वाच्छेषाणां भेदे यथाधिकारं भावः स्यात् ॥१॥ उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैकधर्म्यं स्यात् ॥ २ ॥ चोदना शेषभावाद्वा तद्भेदाद्व्यवतिष्ठेरन्नुत्पत्तेर्गुणभूतत्वात् ॥ ३ ॥ सत्त्वे लक्षणसंयोगात्सार्वत्रिकं प्रतीयेत ॥ ४ ॥ अविभागात्तु नैवं स्यात् ॥ ५ ॥ द्व्यर्थत्वं च विप्रतिषिद्धम् ॥ ६ ॥ उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात्ततश्च कर्मभेदः स्यात् ॥ ७ ॥ यदि वाऽप्यभिधानवत्सामान्यात् सर्वधर्मः स्यात् ॥ ८ ॥ अर्थस्य त्वविभक्तत्वात्तथा स्यादभिधानेषु पूर्ववत्त्वात्प्रयोगस्य, कर्मणः शब्दभाव्यत्वाद्विभागाच्छेषाणामप्रवृत्तिः स्यात् ॥ ९ ॥ स्मृतिरिति चेत् ॥ १० ॥ न पूर्ववत्त्वात् ॥ ११ ॥ अर्थस्य शब्दभाव्यत्वात्प्रकरणनिबन्धनाच्छब्दादेवान्यत्र भावः स्यात् ॥ १२ ॥

उपदेशविचारे समाप्ते, अधुना तदधीनसिद्धिरतिदेशविचारः प्रस्तोष्यते। तदुपोद्घातत्वेन प्रथमिदं विचार्यते— ये धर्मा दर्शपूर्णमासयोः, ज्योतिष्टोमस्य च प्रकरणे समाम्नाताः प्रयाजादयः, दीक्षणीयादयश्च, ते किं सर्वयागार्थत्वेनोपदिश्यन्ते ? उत यथाप्रकरणं व्यवतिष्ठन्त इति । यदि सर्वार्थाः, ततः सौर्य-श्येनादीनामप्युपदेशत एवाङ्गलाभसम्भवान्नातिदेशविचारः-आरब्धव्यो भवति । व्यवस्थितेषु तु सौर्यादीनां साकाङ्क्षत्वादतिदेशेन धर्मसद्भावः, तद्विशेषतदूहतद्बधादिविचारार्थमुत्तरोऽध्यायगण आरब्धव्यः । तदर्थमिदं विचार्यते-किं यजिप्रयुक्ता धर्माः यज्यर्थाः प्रथमं यजिभावनोद्देशेन विहिताः सन्तः पश्चात्तत्करणिकयाऽपूर्वभावनया तद्द्वारेण सम्भन्त्स्यन्ते ? उतापूर्वप्रयुक्ता अपूर्वार्थाः अपूर्वभावनया प्रथममित्थम्भावेन अन्विताः पश्चात्करणभूतस्य यजेरनुग्राहका भवन्तीति ।

किं प्राप्तं—धर्माणां करणाङ्गत्वे विवादो नैव विद्यते ।
भावनान्वयपक्षे च तादर्थ्यं नावकल्पते ॥ १ ॥

अपूर्वभावनया हि सम्बध्यमाने करणेतिकर्त्तव्यते तुल्यकल्पे स्याताम्, न करणाङ्गत्वमितिकर्त्तव्यतायाः स्यात् । तस्मात्करणोद्देशेन विधातव्याः ।

केन पुनः करणमुद्दिश्यते ? केचिदाहुः-प्रकरणाम्नानानुमितेन वाक्येनेति । ननु तेन प्रकृतस्यैव दर्शपूर्णमासादेरुद्देशात्कथं सर्वार्थता ? उच्यते-प्रकृतस्याप्युद्देशकत्वेन यजतिरेवात्र कल्प्यः, स च स्वसामर्थ्यात्सर्वयागानुपस्थापयन्सर्वयगार्थतां कल्पयति, न चैतस्मिन्पक्षे दर्शपौर्णमासवाक्यस्य, समिदादिवाक्यानां चैकवाक्यता सम्भवति, येन सर्वैः संहत्य समिदादिविशिष्ठदर्शादिविधानाद्यागान्तरे धर्मा न स्युः। तथा सति करणस्य फलं प्रत्युपादानात्, अङ्गानि प्रति उद्देशाद्वैरूप्यं स्यात् । तस्मात्फलवाक्ये फलं प्रति यागं विधाय पर्यवसिते पृथग्वाक्यैः समिदादिभिरनुमितयज्युद्देशकशब्दयुक्तैरङ्गानि विधीयन्ते, न च प्रकरणादुद्देश्यो यजिर्विशेष्टुं शक्यते, आकाङ्क्षारूपस्य प्रकरणस्याविशेषकत्वात् । संनिधेश्च यजिश्रुतिजनिताविशेषप्रत्ययेन बाध्यमानत्वात् । तस्मात्सर्वार्था इति ।

अश्रुतकल्पनात् श्रुतकल्पने लाघवम् ।

भाष्यानुसारिणस्त्वाहुः—'दर्शपूर्णमासवाक्यमेव यजीनामुद्देशकं, न हि तत् यागोत्पत्तिपरम्, अग्नेयादिवाक्यैरेवोत्पन्नत्वात्। न च फलसंयोगार्थं, 'सर्वेभ्यो दर्शपूर्णमासौ, 'सर्वेभ्यो ज्योतिष्टोमः' इति च स्वर्गकामार्थत्वस्यापि सिद्धत्वात् । तस्मादनन्यार्थत्वादनेन फलवतो यागानुद्दिश्य धर्मा विधीयन्ते । न चोद्देश्यं दर्शपूर्णमासशब्दः, स्वर्गकामशब्दो वा शक्नोति विशेष्टुं, । तस्मादधिकृतमात्रोपलक्षणं स्वर्गकामशब्दः, दर्शपौर्णमास—ब्दश्च प्रायेण पर्वकालत्वाद्यागानामनुवादः । न च सन्निधेराग्नेयादीनामेवोद्देशः, श्रुतिजनिताविशेषप्रत्ययविरोधादित्युक्तं प्राक्, तस्माद्यजिप्रयुक्ताः धर्माः सर्वार्थाः ।

धर्माणां यागार्थत्वे हेत्वन्तरकथनम् ।

किञ्च व्रीह्यादिभिर्द्रव्यैः प्रत्यक्षं यजिर्निर्वर्त्यते, नापूर्वम् । अवघातादयोऽपि यजिनिर्वृत्तावेव व्रीह्यादीनामेवोपकुर्वन्ति । तस्मात्ते तावद्यज्यर्थाः, तत्सामान्यादितरेषु तथात्वम् । यद्यपि यजिविशेषं प्रति धर्मविधिः, यद्यपि च भावनया सम्बन्धः, तथाऽपि पारिप्लवः, तद्रूपत्वाद्यागान्तराणां, भावनान्तराणां च । यथा लोके 'वाहीकोऽयमतिथिर्यवान्नेन परिवेष्टव्यः' इत्युक्ते यद्यपि वाहीकविशेषं प्रति यवान्नं श्रुतं, तथाऽप्यन्येषामपि वाहीकानां यवान्नप्रियत्वं गम्यते, तद्वद्यजिरूपस्य व्यक्तिविशेषस्य, यजिकरणस्य च भावना-

विशेषस्योक्ता धर्मास्तद्रूपाणामन्येषामपि साधारणा इति शक्यमवगन्तुं, तस्मात्सर्वार्था धर्मा इति, अनारभ्योऽतिदेशविचार इति प्राप्ते—

अभिधीयते—प्रधानविधिवाक्यं खल्वङ्गवाक्यसमन्वितम् ।
अङ्गप्रधानसंयुक्तां विधत्तेऽपूर्वभावनाम् ॥ २ ॥
भावनान्वयतः पश्चादंशयोरार्थिकोऽन्वयः ।
ततः कर्मान्तरेऽङ्गानां प्राप्तिराशङ्क्यते कुतः ॥ ३ ॥
भावनान्वयितामात्रं नांशयोस्तुल्यकल्पना ।
अपरित्यक्तरूपत्वाद्गुणप्राधान्यसम्भवात् ॥ ४ ॥

यथा फलं भावनयामप्यन्वीयमानं फलत्वापरित्यागात्प्राधान्यं प्रतिपद्यते । तथा करणमपि करणात्मना सम्बद्धं फलं प्रति गुणत्वम्, इतिकर्त्तव्यतां प्रति प्राधान्यम् । इदमेव हि करणं यत्फलोद्देशेन प्रवृत्तकर्त्तुर्व्यापारेण फलसाधनतामापद्यते । इतिकर्त्तव्यता तु येन व्यापारविशेषेण करणस्य फलसाधनरूपत्वमुपजन्यते, सा उच्यते । तस्मान्न तुल्यकल्पत्वम् ।

न च यजिः स्वयमित्थंभावापेक्षः, नापि यागभावना, निर्ज्ञातप्रकारत्वात् । अपूर्वभावनायास्त्वनिर्ज्ञातप्रकारत्वात् तद्भावना कीदृशीति न ज्ञायते । यागेनापूर्वं कुर्यादित्ययमर्थः,—यथा व्यापृते यागादपूर्वं भवति, तथा व्याप्रियेतेति । कीदृशोऽसौ व्यापार इति भवति व्यापारविशेषापेक्षा, तद्विशेषत्वेन समिदादिव्यापारविशेषापेक्षा, तद्विशेषत्वेन समिदादिव्यापारविधानमपेक्षा-सन्निधि-योग्यत्वैरध्यवसीयते । तस्मात्प्रकृतभावनाशेषत्वात समिदादीनाम् । न पारिप्लवत्म् ।

व्रीह्यादि द्रव्यमपि फलभावनांशेन सम्बध्यते, यया हि क्रियया यागात्स्वर्गापूर्वं भवति, सा फलभावना । यागस्वरूपसम्पादनमपि तद्व्यापार एव, अनिष्फलस्य फलसाधनत्वाभावात् । अवघातादयोऽपि तत्रैव व्रीहीणां योग्यतामादधानाः भावनार्था एव । न च वाहीकयवान्नवत्साधारण्यानुमानं । लोके हि प्रमाणान्तरवशात् तथाऽवगम्यते । शब्दैकप्रमाणकेषु विशेषान्वये शब्देनावगम्यमाने पारिप्लववाक साहसमात्रं । तस्माद्यथाप्रकरणं व्यवस्थिता धर्माः। ततश्चानुपदिष्टधर्मकेषु सौर्यादिषु अतिदेशेन धर्मसद्भावादि विचारयितव्यं ।

### अतिदेशलक्षणम् ।

अन्यधर्मत्वेनावगतानां तत्संबन्धादरेण, अन्यत्र प्रदेशे प्रापणं येन व्यापारेण भवति, स अतिदेशो नाम ।

तथा चोक्तं—'प्राकृतात्कर्मणो यस्मात्तत्समानेषु कर्मसु ।
धर्मप्रदेशो येन स्यात्सोऽतिदेश इति स्मृतः' ॥ इति ॥

अत्रायमन्वयः—प्राकृतात्कर्मणो धर्मप्रदेशो येन स्यात्, सोऽतिदेशः। क्वधर्मप्रदेश इत्यपेक्षायामाह 'यस्मात्तत्समानेष्विति, यस्मात्प्राकृतादाग्नेयादेर्धर्माः प्रदिश्यन्ते तत्समानेषु कर्मसु सौर्यादिष्विति । त्रिविधश्चातिदेशः-प्रत्यक्षवचनान्नामधेयाच्चोदनालिङ्गानुमितवचनाच्चेति ।

इति प्रथमं प्रयाजादिधर्माणामपूर्वप्रयुक्तताधिकरणम् ।

—:-०-:—

समानमितरच्छ्येनेनेति श्रुत्या इषौ श्येनीयविशेषधर्मातिदेशाधिकरणम् ॥ २ ॥

समाने ऽपूर्ववत्त्वादुत्पन्नाधिकारः स्यात् ॥ १३ ॥ श्येनस्येति चेत् ॥ १४ ॥ नासन्निधानात् ॥ १५ ॥ अपि वा यद्यपूर्वत्वादितरदधिकार्थे ज्यौतिष्टौमिकाद्विधेस्तद्वाचकं समानं स्यात् ॥ १७ ॥

तत्र प्रत्यक्षवचनात्तावच्चिन्त्यते । इषावेकाहे ज्योतिष्टोमविकारे 'इषुं विष्टुतिं करोति, सप्तहं साम भवती'ति प्राकृतानां स्तोत्राणां विकारं विधाय, श्रूयते 'समानमितरच्छ्येनेने'ति । तत्र संशयः, किमयमनुवादः ? उत श्येनवैशेषिकाणामतिदेशविधिरिति ? तत्रेतरशब्दः सन्निहिवचनत्वाच्छ्येनवैशेषिकाणां चासन्निहितत्वान्न तद्वाचकः, चोदकप्राप्तास्तु ज्योतिष्टोमधर्माः, ते च श्येनेऽपि विद्यमानास्तत । त्साहृश्यमिषोरापादयन्तीति, तदपेक्षोऽयमनुवाद इति प्राप्ते—

भाष्यमतम् ।

ब्रूमः—सत्यमितरच्छब्दः सन्निहितमभिधत्ते, न तु तन्मात्रं, किन्तु पूर्वनिर्दिष्टसदृशं सन्निहितं च यद्द्वयं तदभिधत्ते, तदिह यत्सन्निहितं ज्यौतिष्टोमिकं, तत्पूर्वोक्तसदृशम् । अप्राकृतानां सप्तहादीनां पूर्वमुक्तत्वात् । यत्त्वाप्राकृतं लोहितोष्णीषादि श्येनवैशेषिकं, तद्यद्यप्यसन्निहितं, तथाऽपि साहृश्यस्तीत्यवश्यं हातव्येऽन्यतरस्मिन्, वचनार्थवत्त्वाय सन्निधिं हित्वा साहृश्यपरिग्रहेण श्येनवैशेषिकाणां वादः ।

वार्तिकमतम् ।

यद्वा चोदकप्राप्तानां विष्टुत्यादीनां विकार 'इषुं विष्टुतिमि'त्यादिना पूर्वं विहितस्तत इतरच्चोदकप्राप्तमितरशब्देनोद्दिश्य तस्य लोहितोष्णीषादि-

विकारः श्येनादतिदिश्यते। एवं सन्निहितवचनत्वम्, अर्थवत्त्वं च वचनस्य भविष्यति।

इति द्वितीयमिषौ श्येनीयविशेषधर्मातिदेशाधिकरणम्।

—:-०-:—

तृतीयं पञ्चसञ्चराधिकरणम् ॥ ३ ॥

पञ्चसञ्चरेष्वर्थवादातिदेशः सन्निधानात् ॥ १७ ॥ सर्वस्य वैकशब्द्यात् ॥ १८ ॥ लिङ्गदर्शनाच ॥ १९ ॥ विहिताम्नानान्नेति चेत् ॥ २१ ॥ नेतरार्थत्वात् ॥ २२ ॥

चातुर्मास्येषु चत्वारि पर्वाणि वैश्वदेवं, वरुणप्रघासाः, साकमेधाः, शुनासीरियश्चेति। तत्र वैश्वदेविकानामाद्यानां पञ्चानां हविषां यद् ब्राह्मणं तद्वारुणप्रघासिकेषु पञ्चस्वतिदिष्टं 'एतद्ब्राह्मणान्येव पञ्चहवींषी'ति, तत्र संशयः—किं यस्तेषामर्थवादः 'वार्त्रघ्नानि वा एतानि हवींषी'त्यादिः, तन्मात्रस्यायमतिदेशः, सैवैषां प्रशंसेति? उतार्थवादस्याङ्गविधीनां च 'नव प्रयाजाः' इत्यादीनामतिदेश इति।

पूर्वेषां ब्राह्मणं यत्तदुत्तरेष्वतिदिश्यते।
चोद्यन्ते येन वाक्येन तत्तेषां ब्राह्मणं मतम् ॥ ५ ॥

अङ्गविधिभिः स्वाङ्गान्येव विधीयन्ते, न हवींषि, सार्थवादकं तु वाक्यं तेषां विधायकमिति, भवत्यर्थवादस्य तत्सम्बन्धः, तस्मात्तन्मात्रातिदेशः।

नैवं—यद्यपि ह्यङ्गविधिभिर्हविषां न विधेयता।
तथाऽप्यस्त्येव सम्बन्धस्तत्सम्बन्ध्यङ्गचोदनात् ॥ ६ ॥

किञ्चाङ्गवाक्यैकवाक्यतामापन्नं प्रधानवाक्यं हविषां समग्राणां विधायकमिति, विधायकेनाप्यस्त्येवाङ्गविधीनां सम्बन्धः, तस्मात्सर्वेषामतिदेशः।

इति तृतीयं पञ्चसञ्चराधिकरणम्।

—:-०-:—

'एतद्ब्राह्मण' इत्यनेन एककपालैन्द्राग्नयोः सार्थवादविध्यतिदेशाधिकरणम् ।४।

एककपालैन्द्राग्नौ च तद्वत् ॥ २२ ॥

वैश्वदेवे तावद् 'द्यावापृथिव्य एककपालः, वरुणप्रघासेषु 'काय एककपालः, ऐन्द्राग्नो द्वादशकपालश्च, ततस्साकमेधेषु श्रूयते, 'ऐन्द्राग्न एकादशकपालः, वैश्वकर्मण एककपालः, इति । तत 'एतद्ब्राह्मण ऐन्द्राग्नः' एतद्ब्राह्मण एककपालः, इति श्रुतम् । तत्पूर्ववत् सार्थवादकस्य साङ्गविधिकस्य कृत्स्नकाण्डस्यातिदेशकमित्युत्तरविवक्षया प्राप्यते ।

इति चतुर्थं सार्थवादविध्यतिदेशाधिकरणम् ।

—:-o-:—

साकमेधे वारुणप्रघासिकैककपालातिदेशाधिकरणम् ॥ ५ ॥

एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमपर्यावृत्तिदर्शनादवभृथे च सकृद्धृत्वदानस्य वचनात् ॥ २३ ॥

'एतद्ब्राह्मण एककपालः' इति किं वैश्वदेविकस्यैककपालस्य ब्राह्मणमतिदिश्यते ? किं वा वारुणप्राघासिकस्येति, संशये ? वारुणप्राघासिकेऽप्राकृतम् 'वैश्वदेविकेबहु' तस्मात्तदतिदेशोऽयं बहुवचनस्य बहुफलत्वायेति प्राप्ते —

ब्रूमः—वारुणप्रघासिकस्याव्यवहितत्वा 'देतद्ब्राह्मण ऐन्द्राग्नः' इत्यनेन निःसन्दिग्धवारुणप्रघासिकब्राह्मणनिर्देशेन समभिव्याहाराद्वैश्वदेविकस्य तु व्यवहितत्वात्तद्धर्माणां च 'स्वरसामैककपालामिक्षमि'ति वक्ष्यमाणादेव न्यायाल्लाभात्तद्विषयत्वे वचनानर्थक्यप्रसङ्गात्, वारुणप्रघासिकस्यैककपालब्राह्मणस्यायमतिदेशः ।

इति पञ्चमं साकमेधे वारुणप्राघासिकैकपालातिदेशाधिकरणम् ।

इति शास्त्रदीपिकायां सप्तमस्य प्रथमः पादः



# अथ सप्तमाध्याये द्वितीयः पादः ।

अथ रथन्तरादिशब्दस्य गानविशेषार्थताऽधिकरणम् ॥ १ ॥

साम्नोऽभिधानशब्देन प्रवृत्तिः स्याद्यथाशिष्टम् ॥ १ ॥ शब्दैस्त्वर्थविधित्वादर्थान्तरेऽप्रवृत्तिः स्यात्पृथग्भावात्क्रियाया ह्यभिसंबंधः ।२। स्वार्थे वा स्यात्प्रयोजनं क्रियायास्तदङ्गभावेनोपदिश्येरन् । ३॥ शब्दमात्रमिति चेत् ॥ ४ ॥ नोत्पत्तिकत्वात् ॥ ५ ॥ शास्त्रं चैवमनर्थकं स्यात् ॥ ६ ॥ स्वरस्येति चेत् ॥७॥ नार्थाभावाच्छ्रुतेरसम्बन्धः ॥८॥ स्वरस्तूत्पत्तिषु स्यान्मात्रावर्णाविभक्तत्वात् ॥९॥ लिङ्गदर्शनाच्च ।१०। अश्रुतेस्तु विकारस्योत्तरासु यथाश्रुति ॥ ११ ॥ शब्दानां चासामञ्जस्यम् ॥ १२ ॥ अपि तु कर्मशब्दः स्याद् भावोऽर्थः प्रसिद्धग्रहणत्वाद्विकारो ह्यविशिष्टोऽन्यैः ॥ १३ ॥ अद्रव्यं चापि दृश्यते ॥ १४ ॥ तस्य च क्रिया ग्रहणार्था नानार्थेषु विरूपित्वादर्थो ह्यासामलौकिको विधानात् ॥ १५ ॥ तस्मिन्संज्ञाविशेषाः स्युर्विकारपृथक्त्वात् ॥१६॥ योनिशस्याश्च तुल्यवदितराभिर्विधीयन्ते १७ ॥ अयोनौ चापि दृश्यतेऽतथायोनिः ॥ १८ ॥ ऐकार्थ्ये नास्ति वैरूप्यमिति चेत् । १९॥ स्यादर्थान्तरेष्वनिष्पत्तेर्यथालोके ॥२०॥ शब्दानाञ्च सामञ्जस्यम् ।२१।

'कवतीषु रथन्तरं गायती' त्यत्रानेन रथन्तरशब्देन किं कवतीष्वतिदिश्यत इति परिज्ञानार्थं रथन्तरादिशब्दाः किं गीतिविशिष्टानां 'अभि त्वा-शूर नो नुमः' सा. सं. उ. १-१-११ इत्यादीनां वाचकाः? उत गीतिमात्रस्येति-चिन्त्यते। द्वितीये तु मन्त्रलक्षणं कुर्वता गीतिः सामेत्युक्तम् । न तूपपादितम् । इह त्वतिदेशविषयसिद्ध्यर्थं गीतिविषयत्वमेव न्यायेन दृढीक्रियते, तत्र गीतिविशिष्टायामृचि प्रयोगाद्दृग्वचनत्वम् । विशिष्टवचनत्वे विशेषणभूत-

गीत्यभीधानस्यावश्यकत्वात्, तदभिधाने च तत एव तदविनाभूतायामृचि प्रतिपत्तिसिद्धेरभिधानशक्तिकल्पनानुपपत्तेर्गीतिमात्रमेषामभिधेयम्। अतोऽभिवर्त्यां यो गीतिविशेषः, तस्य कवत्यादिष्वतिदेशः।

इति प्रथमं रथन्तरादिशब्दानां गानविशेषार्थताधिकरणम्।

इति शास्त्रदीपिकायां सप्तमाध्यायस्य द्वितीयः पादः ॥ २ ॥

—:-०-:—

# अथ सप्तमाध्याये तृतीयः पादः।

अग्निहोत्रादिनाम्ना धर्मातिदेशाधिकरणम्।

उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात् ॥१॥ अपूर्वे वापि भागित्वात् ॥ २ ॥ नाम्नस्त्वौत्पत्तिकत्वात् ॥ ३ ॥ प्रत्यक्षानुगुणसंयोगात्क्रियाभिधानं स्यात्तदभावेऽप्रसिद्धं स्यात् ॥४॥

इदानीं नामातिदेशः प्रस्तूयते। कुण्डपायिनामयने श्रूयते 'मासमग्निहोत्रं जुह्वती' तां. ब्रा. २५-४-१ ति। तत्र नैयमिकाग्निहोत्रात्कर्मान्तरमिति स्थिते, संशयः—किमयमग्निहोत्रशब्दः नैयमिकाग्निहोत्रधर्माणामतिदेशकः ? उत नेति ?

उभयोरविशेषेण सामानाधिकरण्यतः।
नामधेयमिदं तस्मान्न धर्मानतिदेक्ष्यति ॥ ७ ॥
एकस्य त्वभिधेयत्वे गौणत्वेनापि सम्भवात्।
नान्यस्याप्यभिधेयत्वमनेकार्थत्वदोषतः ॥ ८ ॥

न चागृह्यमाणविशेषत्वं, नैयमिकेऽग्नये होत्रमित्येवं प्रवृत्तिनिमित्तं सम्भवति। इतरस्य त्वग्निदेवत्यत्वं नावगतम्। अधर्मकश्च कौण्डपायिनः, तद्वचनत्वे सति न गौणत्वं नैयमिकस्य युज्यते, नैयमिकस्तु धर्मवान्। ततः तन्नामेदं तत्सादृश्यविधित्सयाऽन्यत्र प्रयुज्यते, सादृश्यं च धर्मनिमित्तम्। अतो धर्मातिदेशोऽयं 'मासमग्निहोत्रं जुह्वती'ति।

इति प्रथममग्निहोत्रनाम्ना धर्मातिदेशाधिकरणम्।

—:-०-:—

प्रायणीयनाम्ना धर्मानतिदेशाधिकरणम् ॥ २ ॥

अपि वा सर्वत्र कर्मणि गुणार्थैषा श्रुतिः स्यात् ॥ ५ ॥

द्वादशाहे 'प्रथममहः प्रायणीयोऽतिरात्रः। गवामयनेऽपि प्रथमेऽहनि 'वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवती'ति प्रायणीयशब्दः प्रयुज्यमानः किं द्वादशाहिकधर्मानतिदिशेत्, उत नेति संशये ? पूर्ववदतिदेशे प्राप्ते—

अभिधीयते—प्रायणीयपदं येन निमित्तेन प्रवर्तते।
प्राथम्येन तदस्त्येव गावामयनिकेऽपि नः ॥ ९ ॥
तस्मात्सिद्धनिमित्तेन श्रुत्या नामत्वसम्भवात्।
न गौणत्वेन धर्माणामतिदेशोऽवकल्पते ॥ १० ॥

इति द्वितीयं प्रायणीयनाम्ना धर्मानतिदेशाधिकरणम्।

—:-०-:—

सर्वपृष्ठशब्देन षट्पृष्ठानामतिदेशाधिकरणम् ॥ ३ ॥

विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वात् ज्योतिष्टोमिकानि पृष्ठान्यस्तिच पृष्ठशब्दः। ६ ॥ षडहाद्वा तत्र हि चोदनाः ॥ ७ ॥ लिङ्गाच्च ॥८॥ उत्पन्नाधिकारो ज्योतिष्टोमः ॥ ९ ॥ द्वयोर्विधिरिति चेत् ॥ १० ॥ न व्यर्थत्वात्सर्वशब्दस्य ॥ ११ ॥

'विश्वजित्सर्वपृष्ठो भवती' त्यत्र संशयः—किमयं सर्वपृष्ठशब्दः-अनुवादः ? उत बृहद्रथन्तरयोर्विकल्पेन प्राप्तयोः समुच्चयविधिः ? अथवा षाडहिकानां रथन्तर बृहद्वैरूपवैराजशाक्वररैवतानामतिदेश इति ? तत्र-ज्योतिष्टोमे माहेन्द्रादिषु चतुर्षु स्तोत्रेषु 'सप्तदशानि पृष्ठानी'ति पृष्ठ-शब्दप्रयोगात्सर्वेषां पृष्ठत्वं, तेषां चेह चोदकप्राप्तेः सर्वपृष्ठत्वं विज्ञातमेव विश्वजितः। तस्मादयमनुवादः।

नैवं। बृहद्रथन्तरसाधनकमाहेन्द्रस्तोत्रवचन एव पृष्ठशब्दो लिङ्गसमवायाच्चतुर्षु प्रयुक्तः, तस्मान्न तेषां पृष्ठशब्दवाच्यत्वमित्यप्राप्ता सर्वपृष्ठता चोदकेन। अतो नानुवादः। चोदकेन तु विकल्पेन प्राप्तयोर्बृहद्रथन्तरयोः पृष्ठयोः सर्वत्वं समुच्चयो विधीयते।

नैवमपि युक्तं, सर्वशब्दस्य बह्वपेक्षत्वात्, द्वयोरप्रवृत्तेः। तस्मात्षाडहिकानां पृष्ठानां ज्योतिष्टोमविकार एव विश्वजिति वचनादतिदेशः।

अत्र शंकासमाधाने ।

कः पुनर्वचनातिदेशस्यात्र सम्बन्धः ? न हि सर्वपृष्ठशब्दः षडहनामधेयं सदिह गुणवृत्त्या प्रयुक्तं, यतस्तन्निमित्तो निर्देश इति सङ्गच्छेत । सत्यमेवं, कर्मसमाधिकरणपदनिमित्तोऽयमतिदेश इति, नामतिदेशाधिकारे चिन्तितः, परमार्थतस्तु वाचनिक एवायमतिदेशः ।

इति तृतीयं विश्वजिति षाडहिकपृष्ठातिदेशाधिकरणम् ।

—:-०-:—

अवभृथनाम्ना सौमिकधर्मातिदेशाधिकरणम् ॥ ४ ॥

**तथावभृथः सोमात् ॥ १२ ॥ प्रकृतेरिति चेत् ॥ १३ ॥ न भक्तित्वात् ॥ १४ ॥ लिङ्गदर्शनाच्च ॥ १५ ॥**

वरुणप्रघासेषु श्रूयते 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ती' श. ब्रा. २-४-३-४६' ति । तत्र किमवभृथशब्देनापां व्युत्सेकं दार्शपौर्णमासिकं चोदकप्राप्तमनूद्य, तत्र तुषनिष्कासं विधीयते, अथवा सौमिकावभृथधर्मकं कर्मान्तरं विधीयत इति संशये, अपां व्युत्सेकेऽप्यवभृथशब्दप्रयोगात्तदनुवादः । ननु तत्र गौणोऽवभृथशब्दः । न चेह गौणग्रहणं न्याय्यं । तुल्यमिदं तवापि गौणत्वम् । अपि च ममानुवादे गौणः । तव तु विधौ । तस्मादपां व्युत्सेके गुणविधिः ।

सत्यं, ममापि तुल्यत्वमस्ति, तत्तु प्रमाणवत् ।
कर्मान्तरे प्रयुक्तत्वाद्, भवतस्त्वप्रमाणकम् ॥ ११ ॥
गौणत्वं न हि शब्दस्य स्वरसादवगम्यते ।
अर्थान्तरे प्रयोगे तु निश्चिते गौणता भवेत् ॥ १२ ॥

न चेहापां व्युत्सेकपरत्वेऽवभृथशब्दस्य प्रमाणमस्ति । 'यन्ती' त्यनेन तु प्रकरणान्तरन्यायेन कर्मान्तरं विधीयते, तत्र प्रयुज्यमानोऽवभृथशब्दो मुख्यावभृथसादृश्यं विदधत् तद्धर्मानतिदिशतीति न्याय्यम् ।

इति चतुर्थं अवभृथनाम्ना सौमिकधर्मातिदेशाधिकरणम् ।



वारुणप्राघासिकाभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम् ॥ ५ ॥

**द्रव्यादेशे तद्द्रव्यः श्रुतिसंयोगात्; पुरोडाशस्त्वनादेशे तत्प्रकृतित्वात् ॥ १६ ॥**

यदिदं कर्मान्तरं, तत्किं पुरोडाशद्रव्यकम् ? उत तुषनिष्कासद्रव्यकमिति विचारः। तत्रावभृथशब्देन प्रत्यक्षेण पुरोडाशादिधर्मप्राप्तेः, तद्विशिष्टकर्मविधिपरेण च तुषनिष्कासस्य वाक्यभेदाद्विधातुमशक्तेः, पुरोडाश एव द्रव्यं स्यात्।

अपूर्वकर्मविधिनाऽनेकेषामपि चोदना।
अन्यथा तुषनिष्कासपदानर्थक्यदोषतः॥ १३॥
तद्विशिष्टविधिस्तेन पुरोडाशस्य बाधनं।
श्रुत्या हि तुषनिष्कासं विशेषेण च चोद्यते॥ १४॥

अवभृथशब्देन तु गौणत्वेन सर्वावभृथधर्मसाधारणेन च पुरोडाशस्य प्राप्तिः, तस्मात्तस्य बाधः।

इति पञ्चमं वारुणप्राघासिकावभृथस्य तुषनिष्कासद्रव्यकत्वाधिकरणम्।

---

वैष्णवशब्दादातिथ्याधर्मानतिदेशाधिकरणम्॥ ६॥

## गुणविधिस्तु न गृह्णीयात्समत्वात्॥ १७॥

आतिथ्यायां 'वैष्णवो नवकपालो भवती'ति श्रूयते। तत्राश्ववालादयः केचिद्धर्मा विहिताः। राजसूये 'वैष्णवस्त्रिकपालः' इति श्रुतो वैष्णवशब्दः किमातिथ्यादिधर्मानतिदिशति? नेति संशये,अग्निहोत्रन्यायेनातिदेशं मन्वानस्योत्तरम्—

श्रुत्या वैष्णवशब्दोऽयं देवताया विधायकः।
न गौणवृत्तिमाश्रित्य धर्मानतिदिशत्यतः॥ १३॥

इति षष्ठं वैष्णवशब्दस्यातिथ्यागतधर्मानतिदेशकत्वाधिकरणम्।

---

निर्मन्थ्यादिशब्दैर्धर्म्मानतिदेशाधिकरणम्॥ ७॥

## निर्मन्थ्यादिषु चैवम्॥ १८॥

'निर्मन्थ्येनेष्टकाः पचन्ति, बर्हिषा यूपावटमवस्तृणाति, आज्येन यूपमनक्ती'ति बर्हिराज्यनिर्मन्थ्यशब्दाः पाशुकस्य निर्मन्थ्यस्य, दार्शपौर्णमासिकयोश्च बर्हिराज्ययोर्धर्मानतिदिशेयुः,नेति संशये, वैष्णवशब्दस्यानति-

देशकत्वेऽपि,इष्टित्वेन दर्शपूर्णमासधर्मलाभात् युक्तमनतिदेशकत्वम्। बर्हिरादिशब्दानां त्वनतिदेशकत्वेऽन्यतोधर्मालाभात्साकाङ्क्षा विधयः स्युः, तस्मादतिदेशका इति विशेषाशंका।

लोकतो ऽपि मन्थनादिप्रकारलाभान्न श्रुत्यर्थविधिसंभवे गौणत्वं न्याय्यम्।

इति सप्तमं निर्मन्थ्यादिशब्दानां धर्मानतिदेशकत्वाधिकरणम्।



द्वयोः प्रणयन्ति इत्यनेन सौमिकधर्मानतिदेशाधिकरणम ॥ ८ ॥

[ तत्र भाष्यगतम् ]

सौमिकं तु प्रणयनमवाच्यं हीतरत् ॥ १९ ॥ उत्तरवेदिप्रतिषेधश्च तद्वत् ॥ २० ॥ प्राकृतं वाऽनामत्वात् ॥ २१ ॥ परिसङ्ख्यार्थं श्रवणं गुणार्थमर्थवादो वा ॥ २२ ॥

चातुर्मास्येषु चत्वारि पर्वाणि। तत्र श्रूयते 'द्वयोः प्रणयन्ति, तस्माद् द्वाभ्यामेती'ति। तत्र भाष्यकारः-'सौमिकं तु प्रणयनमि'त्यादिभिः सप्तभिः सूत्रैरधिकरणद्वयं व्याचख्यौ। प्रथमं तावदिदं चिन्त्यते-किं सौमिकमिदं प्रणयनं? उत प्राकृतमिति। तत्र प्राकृतस्य चोदकप्राप्तत्वेन वचनानर्थक्यात् प्रणयनमात्रवचनोऽपि शब्दोऽर्थवत्त्वाय सौमिकधर्मवति प्रणयने लक्षणया वर्त्तते। तस्मात्सौमिकमिति प्राप्ते -

ब्रूमः—प्राकृतं स्यात्। न हि प्रणयतिशब्दः सौमिकस्य नामधेयम्। येन तदुपस्थापयेत्, प्रणयनमात्रं तु ब्रूते। तच्च चोदकत एव प्राप्तम्। तस्मात् प्राकृतस्यैवायमनुवादः। स किमर्थः? परिसंख्यार्थो वा। द्वयोः प्रणयन्ति, न चतुर्ष्विति। गुणविधानार्थो वा। परिसंख्यायास्त्रिदोषत्वात्। अर्थवादार्थो वा। तस्माद् 'द्वाभ्यामेती'ति गुणाश्रवणात्। अर्थवादस्य प्रयोजनमुत्तराधिकरणे वक्ष्यामः।

इत्यष्टमं भाष्यमतेन प्रणयनशब्देन सौमिकधर्मानतिदेशाधिकरणम्।

—:-o-:—

द्वयोः प्रणयन्ति इत्यनेन मध्यमयोर्द्वयोः प्रणयनाधिकरणम् ॥ ६ ॥

भाष्यगतेन द्वितीयं

प्रथमोत्तमयोः प्रणयनमुत्तरवेदिप्रतिषेधात् ॥ २३ ॥ मध्यमयोर्वा गत्यर्थवादात् ॥ २४ ॥ औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः ॥ २५ ॥

तत्रैवं चिन्त्यते—कतरयोरिदं प्रणयनं ? किमनियमः उत प्रथमोत्तमयोः ? उत मध्यमयोरिति? विशेषाभावादनियमः। 'न वैश्वदेवे उत्तरवेदिमुपवपन्ति, न शुनासीरीये' इति उत्तरवेदिप्रतिषेधस्य प्रथमोत्तमयोर्दर्शनात्, तयोरेवेदं प्रणयनं, प्रणयनाङ्गमुत्तरवेदिः, तद्यदि प्रथमोत्तमयोरिदं प्रणयनं स्यात् ततस्तयोरुत्तरवेदिः प्राप्नोति, प्राप्तौ सत्यां प्रतिषेधो घटते, नान्यथा, तस्मात्प्रथमोत्तमयोरिति प्राप्ते—

भाष्यमतेनसिद्धान्तः।

अभिधीयते मध्ययोः स्याद्, गत्यर्थवादवाक्यशेषात्। तस्माद् द्वाभ्यामेतीति गतिसाधनभूतयोरिदं प्रणयनमिति गम्यते, गतिसाधनत्वं च मध्यमयोः पर्वणोरूरुसंस्तवादवगतं, तस्मान्मध्यमयोरिदम्, एतदर्थवादस्य प्रयोजनं, तद्वशेन हि मध्यमयोः प्रणयनं व्यवतिष्ठते, भवतु व्यवस्थानं, किमर्थं तु प्राप्तस्य प्रणयनस्य मध्यमयोरनुकीर्त्तनं ? गुणार्थमिति ब्रूमः, अस्मिन हि प्रणयने 'उत्तरवेद्यामग्निं निदधाती'तै.ब्रा. १-२६-३ ति श्रुतम्। यदा चैतदर्थवादवशान्मध्यमयोः प्रणयनं व्यवस्थापितं,तदोत्तरवेद्यामग्निं निदधातीति, एतदपि मध्यमयोरेव स्यात,अन्यथा चतुर्ष्वपि स्यात,तस्मादुत्तरवेदिं मध्यमयोरुपसंहर्त्तुं सार्थवादकस्य प्रणयनस्य पुनःश्रवणम्। यत्तु 'न वैश्वदेव उत्तरवेदिमुपवपन्ति, न शुनासीरीये' इति। तदुपात्रवपन्तीति वचनान्तरेणाप्रकृतितुल्यं विधीयत इति पाक्षिकविहितोत्तरवेदेः प्रथमोत्तमयोः प्रतिषेधायेति, न किञ्चिदनर्थकम्।

भाष्यमतस्य वार्तिकमतेन निरासः

इदं तु व्याख्यानं वार्त्तिककारो नानुमेने। यत्तावदुक्तमर्थवादार्था पुनः श्रुतिरिति, तत् नाविधीयमानेऽर्थवादः सम्भवति। 'विधिनात्वेकवाक्यत्वादि'ति न्यायादविधिशेषस्यानर्थक्यात्, न चोत्तरवेद्युपसंहारः प्रयोजनं, तदसम्भवात। सत्यपि हि द्वयोः पर्वणोः सार्थवादप्राकृतप्रणयनानुवादे वाक्यान्तरेणाग्निनिधानानुवादेन विनियुज्यमानोत्तरवेदिश्चतुर्ष्वपि चोदकप्राप्ताग्निनिधानसम्भवात्सर्वेषु स्यात्, अपि 'चोपात्र वपन्ती'त्ययमुत्तरवेद्यु-

त्पत्तिविधिरनारभ्याधीतोपि, न वैश्वदेव उत्तरवेदिमुपवपन्ति 'न शुनासीरीये' इत्यनेन प्रथमोत्तमाभ्यां पर्यूदस्तो मध्यमयोरेव व्यवस्थितः। उत्पत्त्यपेक्षश्च विनियोग इति 'उत्तरवेद्यामग्निं निदधाती'त्ययमपि विधिर्मध्यमयोरेव व्यवतिष्ठत इति नार्थो 'द्वयोः प्रणयन्ती'त्यस्य।

प्राभाकरोक्तार्थस्य निरासः।

यस्तु प्रणयनान्तरमिदं प्रकृत्यर्थवादं समर्थयते, तस्यापि तुल्यमेवानर्थक्यं, यत्तु 'न वैश्वदेव उत्तरवेदिमुप वपन्ति, इत्येवं प्रतिषेधः, पर्युदासो वा न सम्भवतीति प्रलप्यते, तद्बालसंमोहनमात्रत्वादुपेक्षणीयं, यदि च कथञ्चिद्द्वयोः प्रणयन्तीत्यनेनोत्तरवेद्युपसंहारः सिध्यति, तत उपात्रवपन्तीत्ययमपि विनियोगापेक्षत्वाद्विनियोगव्यवस्थया मध्यमयोरेव व्यवतिष्ठते, न प्रथमोत्तमयोः, ततश्च 'न वैश्वदेव उत्तरवेदिमि'ति वचनमनर्थकं स्यात्। अस्त्विति चेत्? 'औत्तरवेदिकोऽनारभ्यवादप्रतिषेधः' इति सूत्रविरोधात्, इदं हि तत्प्रयोजनकथनार्थं सूत्रं।

अत्र वार्तिकमतम्।

तस्मात्सर्वमिदमेकमधिकरणमेवं वर्णयितव्यं। 'द्वयोः प्रणयन्ती'ति—किंप्राकृतं प्रणयनं? उत सौमिकं? उतापूर्वमिति त्रिधा संशयः, तत्र प्रणयनमात्रश्रवणात्तस्य चातिदेशतः प्राप्तेस्तस्यैवेयं पुनःश्रुतिः, परिसंख्यार्था, गुणार्था, अर्थवादार्था वा। परिसंख्याद्यसम्भवात आनर्थक्यपरिजिहीर्षया सामान्यवचनोऽपि प्रणयनशब्दः सधर्मकं सौमिकं प्रणयनं लक्षणया प्रतिपादयति, तथा चोत्तरवेदिप्रतिषेधोऽवकल्पते 'न वैश्वदेवे' इति। न चाय-'मुपात्रवपन्ती' त्यस्य प्रतिषेधः, तस्यावान्तरप्रकरणेन केवलवरुणप्रघासविषयत्वात्प्रथमोत्तमयोरप्राप्तेः प्रतिषेधानर्थक्यात्, अस्मिंश्च पक्षे प्रथमोत्तमयोरिदं सौमिकं प्रणयनमुत्तरवेदिप्रतिषेधस्य तद्विषयत्वाद्यदि च मध्यमयोः स्यात्, ततस्तद्वशेनैव मध्यमयोरुत्तरवेदिसिद्धेरुपात्रवपन्तीति अयं प्रथमोत्तमविषय एव स्यात। तयोरेव च प्रतिषेध इति व्याघातः स्यात्। तस्मात्प्रथमोत्तमयोः, सौमिकं प्रणयनं पर्युदस्तोत्तरवेदिकं विधीयते इति प्राप्ते—

अभिधीयते—न हि प्रणयतीत्येतत्सौमिकस्याभिधायकम्।
प्राकृतस्यानुवादे च वचनं स्यादनर्थकम्॥ १५॥
तस्मात्प्रणयन्तीत्येतदप्राकृतमसौमिकम्।
अपूर्वमग्नेर्नयनं वदत्याहवनीयतः॥ १६॥

यद्यपि प्रणयनमात्रं श्रुतं, 'तथाऽपि शाखान्तरे, आहवनीयाद् द्वावग्नी-प्रणयतः' इति वचनात्तदेकार्थत्वादनेन वचनेन प्राकृतप्रणयनोत्तरकालमाहवनीयादग्न्यन्तरप्रणयनं पशुबन्धवद्विधीयते, तच्च गत्यर्थवादवशान्मध्यमयोः पर्वणोर्भवति। परिसंख्यार्थमित्यादि सूत्रत्रयं त्रयाणामपि पक्षाणां यथाक्रमेण प्रयोजनकथनार्थम्। उत्तरवेदिप्रतिषेधःतूपात्र वपन्तीत्यस्य सामान्यविषयस्य पर्युदासार्थः, सामान्यविषयत्वं चास्य भाष्य एव दर्शितम्।

इति नवमं द्वयोः प्रणयन्ति इत्यनेन मध्यमयोर्द्वयोः प्रणयनाधिकरणम्।

---

स्वरसामादिशब्देन धर्मातिदेशाधिकरणम्॥ १०॥

स्वरसामैककपालामिक्षं च लिङ्गदर्शनात्॥ २६॥ चोदनासामान्याद्वा॥ २७॥

गवामयने 'स्वरसामान उक्थ्याः सप्तदश स्वरसामानः' इति, अन्यत्रापि श्रूयते 'पृष्ठः षडहः, द्वौ स्वरसामानावि'ति। किमेतौ स्वरसामानाविति गावामयनिकस्वरसामविकारा उत? न। 'तथा वैश्वदेवे पर्वणि' वैश्वदेव्यामिक्षा, द्यावापृथिव्य एककपालः' अन्यत्रापि मैत्रावरुण्यामिक्षा, वारुण एककपालः, इत्यादावेककपालामिक्षा वैश्वदेविकैककपालामिक्षाविकारा? उत नेति-संशये, स्वरसामादिशब्दानां गुणविधित्वाद्वैष्णवशब्दवदनतिदेशकत्वात् न तद्विकारत्वमिति प्राप्ते—

ब्रूमः—अनन्यगतिभ्यो लिङ्गेभ्यः स्वरसामादिचोदनाशब्दोपबृंहितेभ्यस्तद्विकारत्वं, लिङ्गानि भाष्य एव दर्शितानि।

इति दशमं स्वरसामादिशब्दानां धर्मातिदेशकत्वाधिकरणम्।

---

वासो ददातीत्यादौ वासआदिशब्दानामाकृतिनिमित्तताधिकरणम्॥ ११॥

कर्मजे कर्म यूपवत्॥ २८॥ रूपं वाऽशेषभूतत्वात्॥ २९॥

कर्मनामधेयानामग्निहोत्रादीनामुक्तमतिदेशकत्वं, यौगिकानां प्राणीयादिशब्दानां, गुणविधीनां च वैष्णवादिशब्दानां लिङ्गविशेषशून्यानां नास्त्यतिदेशनिमित्तत्वमित्युक्तं। कर्मनामवदेव संस्कारनाम्नां यूपादीनां सिद्धमेवातिदेशकत्वम्। इदानीं वासःप्रभृतीनां संस्कारनिमित्तत्वमेवास्ति,

नास्तीति चिन्त्यते। 'वासो ददाति, अनो ददाती'ति किं दानम्, तक्षणं च कृत्वा वासोऽनश्च निष्पाद्यैव दातव्यं? उत यथासिद्धमेव दातव्यमिति संशयः? गुणविधित्वात्, तत्र दान–तक्षणक्रियायां सत्यां शब्दप्रयोगात् क्रियानिमित्तो-वासःशब्दः, अनःशब्दश्च क्रियामेव दानाङ्गतया विधत्तः। तस्मात्साऽनुष्ठेया दानं कुर्वता, एवं प्राप्ते—

ब्रूमः—जातिशब्दावेतौ जात्यन्वयव्यतिरेकानुविधानाजातिस्तु क्रिया अभिव्यङ्ग्येति तदुत्तरकाले शब्दप्रयोगः, न तु शब्दः क्रियावाची, तस्मान्न क्रियातिदेशकत्वं शब्दयोः।

इत्येकादशं वासःप्रभृतिशब्दानां जातिवाचित्वाधिकरणम्।

—:-०-:—

गर्गत्रिरात्रे लौकिकोऽग्नेरुपनिधेयत्वाधिकरणम्॥ १२॥

विषये लौकिकः स्यात्सर्वार्थत्वात्॥ ३०॥ न वैदिकमर्थ-निर्देशात्॥ ३१॥ तथोत्पत्तिरितरेषां समत्वात्॥ ३२॥

'अग्निमुपनिधाय स्तुवीते' तां. ब्रा. २१–२–९ ति किमाधान-संस्कृतोऽग्निराहवनीयादिरुपनिधेयः? उत लौकिक इति संशये? संस्कृतस्य प्रयोजनापेक्षत्वात्सामान्यवचनोऽप्यग्निशब्दस्तद्विषयत्वेन गम्यमानः संस्कारमुपनिधानाङ्गत्वेनातिदिशतीति प्राप्ते—

ब्रूमः—वह्निमात्राभिधायित्वान्न संस्कारातिदेशनम्।
होमादिभिः फलापेक्षा संस्कृतानां निर्वर्त्तिता॥ १७॥

यदाहवनीये जुह्वति, गार्हपत्ये हवींषि श्रपयती'-तै. ब्रा. १–१–१० त्यादिभिराहत्य प्रयोजननिर्देशान्न प्रयोजनान्तरमाहवनीयादयोऽपेक्षन्ते, अग्निशब्दोऽपि जातिमात्रवचनत्वात्तज्जातीयं यत्किञ्चिदाक्षिपन् लोक-सिद्धमेवोपादाय कृतार्थो न संस्कृतमपेक्षते, तस्माल्लौकिक उपनिधेयः।

इति द्वादशं गर्गत्रिरात्रे लौकिकाग्नेरुपनिधेयत्वाधिकरणम्।



उपशयो यूपो भवति इत्यादौ यूपशब्दस्य संस्काराप्रयोजकताधिकरणम्।१३।

संस्कृतं स्यात्तच्छब्दत्वात्॥ ३३॥ भक्त्या वाऽयज्ञशेष-त्वाद्गुणानामभिधानत्वात॥ ३४॥

'उ[1]पशयो यूपो भवती',त्यत्र संशयः—किमुपशये यूपसंस्काराः परिव्याणादयः कार्याः, ने ति? तत्र यूपशब्दः उपशये प्रयुज्यमानस्तानतिदिशेत्। सत्यं। यदि यूपत्वं विधीयते, विधायकाभावाद्। वर्त्तमानापदेशोऽयं 'यूपो भवती'ति, तस्मादनुवादोऽयमुपशयस्तुत्यर्थो न संस्कृतिमपेक्षते, तस्माल्लौकिका यूपधर्माः केचिच्छेदनादय उपशये वचनादनुष्ठोयन्ते, तेन निमित्तेन गौणोऽयं वादः।

इति उपशये यूपधर्मानतिदेशाधिकरणम्।

---

पृष्ठैरुपतिष्ठते इत्यादौ पृष्ठशब्दस्य ऋग्द्रव्यवाचिताधिकरणम्॥१४॥

कर्मणः पृष्ठशब्दः स्यात्तथाभूतोपदेशात्॥ ३५॥ अभिधानोपदेशाद्वा विप्रतिषेधाद् द्रव्येषु पृष्ठशब्दः स्यात्॥ ३६॥

अग्नौ श्रूयते 'पृष्ठैरुपतिष्ठते' इति। 'किं पृष्ठशब्दो ज्यौतिष्टोमिकपृष्ठधर्मातिदेशकः—पृष्ठकर्मकाणि कर्माणि कुर्यादिति तानि पृष्ठसादृश्यादेव स्तुत्यात्मकानि भवन्ति ? उत पृष्ठसाधनेषु रथन्तरादिषु पृष्ठशब्दः-तैरग्नेरभिधानं चोद्यत इति।

तत्र—उपतिष्ठतिना तावदपूर्वं कर्म चोद्यते।
पृष्ठशब्दोऽपि तस्यैव विधत्ते पृष्ठतुल्यताम्॥ १८॥

उपतिष्ठतिधातुः समीपस्थितिवचनः। प्रत्ययो भावनावाचकः। तदयमर्थः-अग्निसमीपे तिष्ठन् पृष्ठसदृशैः कर्मभिः कुर्यादिति। यदि त्वभिधानं विधीयते, तदा उपतिष्ठतिः समीपस्थितिवचनः सन्नभिधानं लक्षयेत्। पृष्ठशब्दोऽपि तत्साधनमित्युभयोर्लक्षणा स्यात्। अस्मत्पक्षे पुनः पृष्ठशब्द एव धर्मलक्षणेति ज्यायानयं पक्षः।

उच्यते—जघन्यवृत्तिता पृष्ठशब्दस्येहोभयोः समा।
उपतिष्ठतिधातुश्च समीपस्थितिवाचकः॥ १९॥

न वयं धातुनाऽभिधानं लक्षयामः, किन्तु समीपस्थितिरेव धातुना अभिधीयते। सा तु समीपस्थितिरभिधानार्थेति ब्रूमहे। कथं ? मन्त्रकरणेऽर्थे-वर्त्तमानादुपपूर्वात्तिष्ठतेरात्मनेपदं भवति। समीपस्थितिश्चानेनाऽभिधीयते। तेन यथा समीपस्थितौ मन्त्रः करणं, तथा यतितव्यम्। न चाभिधानादन्यत्र-

१. यूपैकादशिन्यामिति शेषः।

साक्षान्मन्त्रः करणम् । तद्यदीयं समीपस्थितिरभिधानार्था स्यात, ततोऽस्याः करणं मन्त्रः सम्पद्यते । प्रधानाधीनं हि तदङ्गानुष्ठानं भवति । अतोऽभिधानार्थत्वम् । समीपस्थानं कुर्वन्मन्त्रः समीपस्थितेः करणमिति शक्यं वक्तुम् । अतोऽभिधानाय[1] समीपस्थितिं वदन् उपतिष्ठतिर्मन्त्रकरणार्थो भवन्नात्मनेपदं लभेतेत्यात्मनेपददर्शनादुपस्थानप्रयोजनभूतमभिधानमनुमीयते । तदयमर्थः—पृष्ठसाधनैरथन्तरादिभिः समीपे स्थित्वाऽग्निमभिदध्यादिति । तस्मादभिधानचोदनेति सिद्धम् ।

इति चतुर्दशं पृष्ठशब्दस्य मन्त्रवाचित्वाधिकरणम् ।

इति शास्त्रदीपिकायां सप्तमस्य तृतीयः पादः ।

---

# अथ सप्तमाध्याये चतुर्थः पादः ।

अथ सौर्ये चरौ इतिकर्त्तव्यताधिकरणम् ॥ १ ॥

इतिकर्तव्यताविधेर्यजतेः पूर्ववत्त्वम् ॥ १ ॥ स लौकिकः स्याद्दृष्टप्रवृत्तित्वात् ॥ २ ॥ वचनात्तु ततोऽन्यत्वम् ॥ ३ ॥ लिङ्गेन वा नियम्येत लिङ्गस्य तद्गुणत्वात् ॥ ४ ॥ अपिवाऽन्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युः ॥ ५ ॥ मिथो विप्रतिषेधाच्च गुणानां यथार्थकल्पना स्यात् ॥ ६ ॥ भागित्वात्तु नियम्येत गुणानामभिधानत्वात्सम्बन्धादभिधानवद्यथा धेनुः किशोरेण ॥ ७ ॥ उत्पत्तीनां समत्वाद्वा यथाधिकारं भावः स्यात् ॥ ८ ॥ उत्पत्तिशेषवचनं च विप्रतिषिद्धमेकस्मिन् ॥ ९ ॥ विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्त्तेत तथा हि लिङ्गदर्शनम् ॥ १० ॥ लिङ्गहेतुत्वादलिङ्गे लौकिकं स्यात् ॥ ११ ॥ लिङ्गस्य पूर्ववत्त्वाच्चोदनाशब्दसामान्यादेकेनापि निरूप्येत, यथा स्थालीपुलाकेन ॥ १२ ॥

---

१. अभिधानार्थत्वं-समीपस्थानस्यभिधानं ।

गतो नामातिदेशः । इदानीमानुमानिकेन वचनेनातिदेश उच्यते । 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्याद्युदाहरणम् । तत्र प्रथमं तावदिदं चिन्त्यते-किमत्र कुतश्चिद्धर्माः प्रदिश्यन्ते ? नेति । प्रमाणाभावादनतिदेशः, उच्यते । यागेन भावयेद् ब्रह्मवर्चसमिति भावनामितिकर्त्तव्यतापेक्षामुपदिश्य श्रुत्याद्युपदेशेन तस्या इतिकर्त्तव्यताया असमर्पणान्नूनमन्यतः सिद्धेतिकर्त्तव्यता ऽत्र शास्त्रेणाङ्गीकृतेति निश्चीयते । अस्ति चान्यत्र लौकिके पार्वणस्थालीपाकादौ, वैदिके च दर्शपूर्णमासादौ । तयोरन्यतरादिह प्रदिश्यत इति स्थिते, इह चिन्त्यते, 'लौकिकी वैदिकी वेति ।

वैदिकी हि निबद्धत्वान्नेतुं नान्यत्र शक्यते ।
लौकिकी त्वनिबद्धत्वात्सर्वत्रैवानुषज्यते ॥ २० ॥

वैदिकीतिकर्त्तव्यता प्रत्यक्षेण शास्त्रेण दर्शपूर्णमासादिषु निबद्धा नान्येन संबद्धुं शक्यते । न हि सकृत् श्रुतमितिकर्त्तव्यताब्राह्मणं दर्शपूर्णमासयोरितिकर्तव्यतां विधाय, पुनः सौर्यादावपि विदधातीति संभवति । न च साधारण्येन विधानं, प्रकरणेन व्यवस्थितत्वाद्विधानस्य । न च शास्त्रमन्तरेणेतिकर्त्तव्यतान्वयः सम्भवति । तस्मान्न वैदिकी । लौकिकी तु पार्वणाष्टकादिषु [1]बहुष्वनुवृत्ता साधारणं शास्त्रमनुमापयति । तेन सैव सौर्यादिषु स्यात् । प्रयाजादिदर्शनं तु यत्र नित्यानुवादवचनानीत्येवं परिहृतम् । तस्माल्लौकिकीति प्राप्ते—

उच्यते—वैदिकी वैदिकत्वेन सामान्येनोपतिष्ठते ।
लौकिकी त्वसमानत्वान्नोपस्थास्यत्यपेक्षिता ॥ २१ ॥

वैदिकस्य तु कर्मणः कथंभावापेक्षायां वैदिक एवेत्थंभावः शीघ्रमुपतिष्ठते, तदतिक्रमेणानुपस्थितलौकिकग्रहणमयुक्तम् ।

यद्यप्यनुमिताद्वेदाल्लौकिकोऽपि तु वैदिकः ।
प्रत्यक्षवेदविरहान्नैवासौ सदृशो मतः ॥ २२ ॥

ननु सोऽपि वेदः केषांचित्प्रत्यक्ष एव, नित्यानुमेयमूलनिराकरणात् । सत्यं । तथाऽप्यसदृश एव । कथं ? वैतानिककर्माधिकारे हि त्रयी प्रवर्तते, तन्मध्ये तु प्रसङ्गादवैतानिकं किञ्चिदुच्यते । तेन दर्शपूर्णमासादीनां, सौर्यादीनां च तदधिकारेण त्रयीप्रवृत्तिर्नामावान्तरसादृश्यमस्तीति, वैदिकस्योपस्थानम् । किञ्च सौर्यादीनि वैतानिकेऽग्नौ प्रवर्त्तन्ते, लौकिकीत्विति-

१. प्रवृत्ता ।

कर्त्तव्यता आबाराद्यौपासने कर्त्तव्या। तत्र प्रधानवैदेश्यमङ्गानामापद्येत। तस्मादपि वैदिकी। न च निबद्धत्वादसौ नान्यत्र नेतुं शक्येति मन्तव्यं, समानविधानत्वे ह्ययं दोषः स्यात्, अतिदेशेन त्वन्यत्र गतौ निबद्धत्वं गुण एव, न हि क्वचिदनिबद्धान्यत्रातिदेष्टुं शक्यन्ते, न चानुमानेन लौकिकी शक्या कल्पयितुं, गणयागादिषु तदभावेनानैकान्तिकत्वात्। तस्माद्वैदिकः—इत्थंभावः सौर्यादिष्वतिदिश्यते।

स चावघातप्रयाजादिपदार्थजन्यदृष्टादृष्टोपकारवर्गरूषितस्तेषामुपकाराणां, पदार्थानां च प्रापको भवति, तद्विधायि च शास्त्रमर्थात्सौर्यादिवाक्यशेषत्वमुपगतं भवतीत्यनेनाभिप्रायेण 'विध्यतो वा प्रवर्तेत चोदनायामि'त्युक्तम्।

अस्तु वा विध्यन्तस्यैवात्रातिदेशः, तथाऽपि प्रकृतिसंबन्धितया निरूपितरूपस्यातिदेशः, न तु यथापाठमेव शास्त्रं प्रकृतिवद्विकृतेरपि सम्भवति, यत ऊहबाधौ न स्यातामिति चोद्येत। यद्यपि ब्राह्मणमेव साक्षादतिदिष्टम्। 'एतद्ब्राह्मणा येव पञ्च हवींषी'ति,तत्राप्यन्यसंबन्धिनः सतस्तेनैव रूपेणातिदेशादूहादिसिद्धिः। यदि 'ह्यग्नये जुष्टं निर्वपामी'त्यनेन रूपेण सौर्ये प्राप्यते, ततोऽग्निपदस्य देवतापदस्य संप्रतिपन्नरूपत्वादेव देवतापदविवक्षयैव तत्पठितमग्निपदं, रूपं त्वविवक्षितमिति न शक्यमास्थातुम्। अग्निपदरूपमेव विवक्षितमित्यापद्येत, ततो न सूर्यपदं प्रक्षिप्येत, नाग्निपदं बाध्येत। अतो नोहः सिध्येत्, न बाधः। यदि तु प्रकृतौ निरूपितरूपस्य शास्त्रस्य विकृतिसम्बन्धः, तदा प्रकृतावग्निपदस्य देवतापदरूपसंप्रतिपत्तेर्देवतापदरूपमात्रं विवक्षितं, दृष्टार्थत्वात्। नाग्निपदरूपम्, अदृष्टार्थत्वात्, देवतापदाधिजिगीषया नान्तरीयकत्वादग्निपदमधीतमितिनिश्चीयते। तत्र सौर्ये तादृग्रूपमन्त्रातिदेशादग्निपदस्य चातद्रूपत्वात्स्वरूपस्य चाविवक्षितत्वात्तन्निवृत्तौ सत्यां देवतावाचिनः सूर्यपदस्य प्रक्षेपादूहबाधौ सिद्धौ भवतः, तस्माद्वैदिकातिदेशः।

इति प्रथमं सौर्यादिषु वैदिकविध्यन्तातिदेशाधिकरणम्।

—:-०-:—

गवामयने ऐमाहिकेनकर्त्तव्यतानुष्ठानाधिकरणम् ॥ ३ ॥

द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिकागमात्तदाख्यं स्यादेकाहवत् । १३ ॥ लिङ्गाच्च ॥ १४ ॥ न वा क्रत्वभिधानादधिकानामशब्दत्वम् ॥ १५ ॥ लिङ्गं सङ्घातधर्मः स्यात्तदथापत्ते र्द्रव्यवत् ॥ १६ ॥ न वार्थधर्मत्वात् सङ्घातस्य गुणत्वात् ॥ १७ ॥ अर्थापत्तेर्द्रव्येषु धर्मलाभः स्यात् ॥ १८ ॥ प्रवृत्त्या नियतस्य लिङ्गदर्शनम् ॥ १९ ॥ विहारदर्शनं विशिष्टस्यानारभ्यवादानां प्रकृत्यर्थत्वात् ॥ २० ॥

इदानीमानुमानिकवचन-नामधेययोर्बलाबलं चिन्त्यते। गवामयने- 'ज्योतिर्गौरायुरि'त्यादिसंज्ञायुक्ता यागा उत्पन्नाः। तेषां गणान्तःपातित्वात्, 'गणेषु द्वादशाहम्ये' ८-१-१७ ति द्वादशाहविध्यन्तः प्राप्तः। नामधेयाच्च ज्योतिराद्येकाहविध्यन्तः, तत्राविरुद्धा द्वयेऽपि क्रियन्ते, विरुद्धेषु किं द्वादशाहिकाः कर्त्तव्याः। चोदको बलवान्? उत नामबलीयस्त्वादैकाहिका इति संशये? विशेषाभावादनियमः।

अथवा चोदको बलवान्,फलसम्बन्धोत्तरकाला चेतिकर्त्तव्यताकाङ्क्षा, प्रयोगवाक्ये च फलसम्बन्धः, न तु तत्र नामानि श्रूयन्ते यान्यपेक्षितं विध्यन्तमतिदिशेयुः, गणसामान्यात्तु द्वादशाहिकधर्मातिदेश एव तत्रावगम्यते। यासु तूत्पत्तिचोदनासु नामानि श्रुतानि, तत्रालब्धफलत्वादसत्यामित्थंभावापेक्षायां नातिदेशः, फलसम्बन्धं तु प्रतीक्ष्य पश्चादतिदिशदपि नामधेयं पूर्वावगतगणधर्माविरोधेन प्रवर्त्तते। तस्माच्चोदको बलीयानिति प्राप्ते—

अभिधीयते—प्रत्यक्षं श्रूयते नाम चोदकस्त्वानुमानिकः।

न प्रत्यक्षविरुद्धार्थमनुमानं प्रवर्तते ॥ २२ ॥

यद्यपि फलसम्बन्धाधीनेतिकर्तव्यताऽकाङ्क्षा प्रयोगवाक्ये प्रस्तूयते, तथाऽपि प्रयोगवाक्यमुत्पत्तिचोदनावगतरूपाणि कर्माणि आलोच्य फले विनियुङ्क्ते, तानि चालोच्यमानानि संज्ञादिशिष्टान्येवालोच्यन्त इति। तन्निमित्तातिदेशः प्रत्यक्षनिमित्तत्वाच्छीघ्रं गम्यते।

किं चौत्पत्तिवाक्येष्वपि भावनास्वाभाव्याज्जायत एवापेक्षा, तस्मान्नाम बलीयः ।

इति द्वितीयं गावामयनिकज्योतिरादिषु ऐकादिकज्योतिरादि-धर्मानुष्ठानाधिकरणम् ।



उक्त—वक्ष्यमाणार्थस्य संग्रहः

वचनादभिधानतस्तथा विदितं कृत्स्नमिहातिदेशनम् ।
अनुमावचसापि सत्तया भविता तस्य विशेषचिन्तनम् ॥ २३ ॥

इति शास्त्रदीपिकायां सप्तमस्य चतुर्थः पादः समाप्तः ।
महामहोपाध्यायश्रीपार्थसारथिविरचितायां शास्त्रदीपिकायां सप्तमाध्यायश्चसमाप्तः ।



# अथ अष्टमाध्यायः ।

## प्रथमः पादः ।

### विशेषातिदेशप्रतिज्ञाधिकरणम् ।

### अथ विशेषलक्षणम् ॥ १ ॥

विध्यन्ताधिकरणे सौर्यादिषु आनुमानिकेन वचनेन वैदिकीतिकर्त्तव्यतास्तीत्युक्तम् । तस्यैवेदानीं विशेष उच्यते—कस्य विध्यन्तः क्व प्रवर्त्तत इति । प्रथमं तावदिदं चिन्त्यते—किमेकस्मिन्कर्मणि सर्वधर्मातिदेशः, उत नेति ? ननु विध्यन्ताधिकरण एव लौकिकवैदिकविध्यन्तसमुच्चयमाशङ्क्य 'मिथो विप्रतिषेधादि' त्यनेन सूत्रेण कथम्भावपेक्षायामेकेनैवेत्थम्भावपूरणान्न द्वयोः सह प्रवृत्तिरित्युक्तं ।तेन गतमेतत् ।सत्यं। समुच्चयस्तत्र निराकृतः, इह तु सर्वविध्यन्तानामेकत्र विकल्पेन प्राप्तिरिति पूर्वः पक्षः ।

उत्तरस्तु नियत एव एकस्मिन्नेकः प्रवर्त्तते, अन्यथा ह्यव्यवस्थितः शास्त्रार्थः स्यात । तस्मान्नियमेनैकस्यैव दर्शपूर्णमासादेर्विध्यन्त एकस्मिन् सौर्यादौ प्रवर्त्तते । सत्यमेवं युक्तं । कथन्त्विदमवगम्यतेऽस्य विध्यन्तोऽत्र प्रवर्त्तते, अस्य नेति ? तदभिधीयते ।

इति प्रथमं विशेषातिदेशप्रतिज्ञाधिकरणम् ।

---

### विशेषकर्म्मणो धर्मातिदेशाधिकरणम् ॥ २ ॥

### यस्य लिङ्गमर्थसंयोगादभिधानवत् ॥ २ ॥

यस्य कर्मणो लिङ्गं—चिह्नमुपस्थापकं शब्दगतम्, अर्थगतं वा यस्यां विकृतौ दृश्यते, तस्य विध्यन्तस्तस्यां प्रवर्तते । यथाऽऽग्नेयस्य सौर्ये । तथा हि—निर्वपतिः, तद्धितेन देवतानिर्देशः, एकदेवत्यत्वम्, औषधद्रव्यकत्वमित्याग्नेयचोदनया दृष्टसम्बन्धानि सौर्यवाक्ये विध्यन्तापेक्षे दृश्यमानानि तामुपस्थापयन्ति, सा च स्वार्थम्, त्र्यंशा च भावना तस्याः स्वार्थः, ततः साध्यसाधनांशाविहानपेक्षितत्वादनादृत्य, तृतीयोंऽश इत्थम्भावरूपोऽपेक्षा-तन्निधि-योग्यत्वैर्वाक्यशेषत्वेनात्र सम्बध्यते । तदयमर्थः—यथाऽऽग्नेयेन स्वर्गः कृतः, तथा सौर्येण ब्रह्मवर्चसमिति ।

एवमनेकदेवतेष्वग्नीषोमीयैन्द्राग्नविध्यन्तः, आज्यद्रव्यकेषूपांशुयाजस्य, पयोदध्यामिक्षादिषु, दैक्षपशौ च सान्नाय्यस्य, पश्वन्तरेषु दैक्षस्य, ऐकादशिनेषु सवनीयस्य, पशुगणान्तरेषु ऐकादशिनस्य, अव्यक्तेषु सोमस्य, अहर्गणेषु-सत्रेषु, अहीनेषु च द्वादशाहस्य, संवत्सरादिषु गावामयनिकस्येत्यादि द्रष्टव्यम् । एवमिह विशेषातिदेशः । उत्तरस्त्वस्यैव प्रपञ्चः ।

इति द्वितीयं सादृश्यविशेषेण विशेषकरणः धर्मातिदेशाधिकरणम् ।

सोमे ऐष्टिकधर्मानतिदेशाधिकरणम् ॥ ३ ॥

प्रवृत्तित्वादिष्टेः सोमे प्रवृत्तिः स्यात् ॥३॥ लिङ्गदर्शनाच्च ॥४॥ कृत्स्नविधानाद्वाऽपूर्वत्वम् ॥५॥ स्रुगभिघारणाभावस्य च नित्यानुवादात् ॥ ६ ॥ विधिरिति चेत् ॥ ७ ॥ न वाक्यशेषत्वात् ॥ ८ ॥ शङ्कते चानुपोषणात् ॥ ९ ॥ दर्शनमैष्टिकाना स्यात् ॥ १० ॥

अग्निहोत्रे, दर्शपौर्णमासयोः, ज्योतिष्टोमे च दोहनावघाताभिषवादीनि दृष्टार्थान्यङ्गानि निराकाङ्क्षीकरणसमर्थानि, तैश्च निराकाङ्क्षत्वादतिदेशो नास्ति । तथाऽपि सोमे दार्शपौर्णमासिकधर्मातिदेशं केनचिद्धेतुना शङ्कमानं निराकर्त्तुमिदमधिकरणं । कः पुनरसौ हेतुः ? दीक्षणीयादिष्वभृथपर्यन्तास्विष्टिषु, पशुषु च दर्शपौर्णमासविध्यन्तोऽतिदेशेन प्राप्यमाणो मनसि विपरिवर्त्तते, तन्मध्यवर्त्तित्वाच्च सोमस्य, तत्रापि तदन्वयं शङ्कते । 'तस्यैकशतं प्रयाजानुयाजाः' इति च दर्शनमवकल्पते । तस्मादिष्टिः सोमे प्रवर्तेतेति । सेयं निराक्रियते । नानपेक्षे प्रवृत्तिर्युक्ता । प्रयाजादिकं तु दीक्षणीयाद्यङ्गवर्ति वाजपेययूपन्यायेनैकशतसङ्ख्यं प्राप्तमनूद्यत इति, नास्ति सोमेऽतिदेशः ।

इति तृतीयं सोमें ऐष्टिकधर्मानतिदेशाधिकरणम् ।

—:-०-:—

ऐन्द्राग्नादौ ऐष्टिकधर्मातिदेशाधिकरणम् ॥ ४ ॥

इष्टिषु दर्शपौर्णमासयोः प्रवृत्तिः स्यात् ॥ ११ ॥

'सौर्यं चरुं निर्वपेत्यादि'दिषु निर्वपत्यादिसामान्येन दर्शपौर्णमासविध्यन्तोपस्थापनात्तस्यातिदेशः । इदं च 'यस्य लिङ्गमि'त्यस्य प्रपञ्च इति, नातीव पूर्वपक्षे यतितव्यम् । एवं उत्तरत्रापि सर्वत्र ।

इति चतुर्थमिष्टिषु दर्शपूर्णमासविध्यन्ताधिकरणम् ।

———

अग्नीषोमीयपशौ दर्शपौर्णमासिकधर्मातिदेशाधिकरणम् ॥ ५ ॥

पशौ च लिङ्गदर्शनात् ॥ १२ ॥

पशावप्यग्नीषोमीये तद्धितेन देवतानिर्देशः, आलभतिश्च दर्शपौर्णमाससादृश्यम्। इष्टावप्यालभतिर्विद्यते 'ईषामालभेते'ति, इष्यते च पशोरालम्भनादिदृष्टार्थाङ्गसिद्धयेऽतिदेशापेक्षा, तस्मात्तत्रैष्टिको विध्यन्तः।

इति पञ्चमनग्नीषोमीये पशौ दर्शपौर्णमासिकधर्मातिदेशाधिकरणम्।

---

सवनीयादिपशौ अग्नीषोमीयधर्म्मातिदेशाधिकरणम् ॥ ६ ॥

दैक्षस्य चेतरेषु ॥ १३ ॥

इतरेषु—सवनीयनिरूढादिषु पशुषु प्राणिद्रव्यकत्वसाम्याद्विशसनादिद्रव्यसंस्कारलाभाच्च दैक्षस्याग्नीषोमीयस्य विध्यन्तातिदेशाः।

इति षष्ठं सवनीयपशावग्नीषोमीयधर्मातिदेशाधिकरणम्।

---

ऐकादशिनपशौ सवनीयधर्म्मातिदेशाधिकरणम् ॥ ८ ॥

ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात् ॥ १४ ॥

ऐकादशिनेषु पशुषु सुत्याकालत्वसामान्यातिरेकाद् द्वैरशन्यदर्शनाच्च 'द्वे द्वे रशने यूपमृच्छतः' इति सवनीयस्य विध्यन्तः।

इति सप्तममैकादशिनपशौ सवनीयविध्यन्तातिदेशाधिकरणम्।

—:-०-:—

पशुगणेषु ऐकादशिनधर्मातिदेशाधिकरणम् ॥ ८ ॥

तत्प्रवृत्तिर्गुणेषु स्यात्प्रतिपशु यूपदर्शनात् ॥ १५ ॥

सौत्रामण्यादिषु पशुगणेषु गणत्वसामान्याधिक्यादैकादशिनविध्यन्तः।

इत्यष्टमं पशुगणेषु ऐकादशिनधर्मातिदेशाधिकरणम्।

—:०:—

अव्यक्तयजतौ सौमिकधर्मातिदेशाधिकरणम् ॥ ९ ॥

## अव्यक्तासु तु सोमस्य ॥ १६ ॥

'विश्वजिता यजेते' त्यादिष्वेकाहादिषु, द्वादशाहे च—किं दर्शपौर्णमासिको विध्यन्तः, ? उत सौमिक इति संशये ? विशेषाभावादनियमे प्राप्ते उच्यते । सौमिकः स्यात्, अव्यक्तत्वसामान्यात् । केयमव्यक्तता? यागार्थतया विनियुक्तदेवताविरहः, यत्र तद्धित—चतुर्थी—मन्त्रवर्णैर्यागार्थतयैव देवता-विनियुक्ता, तदव्यक्तम् । इतरत्त्वव्यक्तं । तथा विश्वजिदादयः, सोमश्च । ननु 'ऐन्द्रवायवं गृ ाती'ति तद्धितेनैव देवताऽपि सोमे विहिता ? न यागे देवताऽनेन विधीयते । किन्तु ग्रहणे, तद्गतायास्तु पश्चादार्थिको याग-सम्बन्धः न तु प्रथममेव यागान्वय इत्यव्यक्तत्वम् । अतः सोमविध्यन्तो विश्वजिदादिषु ।

इति नवममव्यक्तयजतौ सौमिकधर्मातिदेशाधिकरणम् ।

—:-०-:—

अहर्गणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ॥ १० ॥

## गणेषु द्वादशाहस्य ॥ १७ ॥

द्विरात्रादिष्वहर्गणेषु अव्यक्तत्वं, गणत्वं चाधिकं विद्यते । तस्माद् द्वादशाहविध्यन्तः । एवञ्च 'पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते' इत्यादयः-गणधर्मा लभ्यन्ते ।

इति दशममहर्गणेषु द्वादशाहिकधर्मातिदेशाधिकरणम् ।

---

संवत्सरसत्त्रेषु गावामयनिकधर्मातिदेशाधिकरणम् ॥ ११ ॥

## गव्यस्य च तदादिषु ॥ १८ ॥

संवत्सरसत्त्रेष्वादित्यानामयनप्रभृतिषु संवत्सरसत्त्रत्वसामान्यात्संवत्सरनिनयमलिप्सया च गावामयनिकविध्यन्तः ।

इति संवत्सरसत्त्रेषुगावायनिकधर्मातिदेशाधिकरणम् ।

—:-०-:—

निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणम् ॥ १२ ॥

निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् ॥ १६ ॥

'साहस्राः साद्यस्काः' इत्येकसंज्ञया युगपत्प्रस्तुत्य पश्चात्क्रमेण विहिताः यागा निकायिन इत्युच्यन्ते । तेषां प्रथमो धर्मवात्तरेषु किन्ततो धर्माः प्रवर्त्तन्ते ? उत सौमिका इति, संशये ? अव्यक्तत्वात् सौमिका इति प्राप्ते—

एकनिकायवर्त्तित्वम्, एकनामकत्वञ्चावान्तरसामान्यमधिकमस्तीति, पूर्वविध्यन्तः उत्तरेषु । तथा 'यावदस्य साहस्रस्ये' त्यादिसाहस्रादिधर्मदर्शनं पूर्वधर्मप्राप्ति दर्शयति ।

इति द्वादशं निकायिनामुत्तरेषु पूर्वनिकायिधर्मातिदेशाधिकरणम् ।

---

फलादीनामनतिदेशाधिकरणम् ॥ १३ ॥

कर्मणस्त्वप्रवृत्तित्वात्फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वात् ॥ २० ॥ प्रवृत्तौ चापि तादर्थ्यात् ॥ २१ ॥ अश्रुतित्वाच्च ॥ २२ ॥

फलं—स्वर्गः, नियमः—यावज्जीवकता, कर्ता—स्वर्गकामः, समुदायः-आग्नेयादीनां षण्णां मिथः साहित्यं । किमेते विकृतिषु मिथः प्रदिश्यन्ते, नेति संदेहः ।

तत्र प्रकृतिसम्बन्धाद्विकृतावतिदेशनं ।
प्रयाजादिवदेतेषामिति प्राप्तेऽभिधीयते ॥ १ ॥
प्रकृत्यैव निवद्धत्वाद्विकृत्या सह नान्वयः ।
न चातिदेशतः प्राप्तिरित्थंभावान्वयादृते ॥ २ ॥

कथंभावापेक्षा हि विकृतिभावना यदेव प्रकृतावित्थंभावेन गृहीतं, तदेवापेक्षते । न च फलादीनामित्थंभावेनान्वयः, फलनियमयोः पुरुषार्थत्वात् । स्वर्गकामोऽपि न कर्मार्थः । कर्मैव तदर्थमित्युक्तं स्वर्गकामाधिकरणे । तथाऽऽग्नेयादीनि षडपि तुल्यवत्फलं प्रति करणत्वेनोपदिष्टानि नान्योन्यस्याङ्गं, तेन नैकस्योपकारेऽन्यानि प्रवर्त्तन्ते, न चाप्रवर्त्तमानेषु तत्साहित्यं भवति, तस्मान्न फलादीनामतिदेशः ।

माभूदित्थंभावांशेनातिदेशः, फलापेक्षयैव विश्वजिदादिषु अश्रुतफलेषु फलमतिदिश्यतामिति चेत् ? नैवं । तद्धि फलं विकृतावतिदेशेन विधीयमान-

मङ्गमेव स्यात्, न च फलं विकृतिं प्रति विधीयते। फलमेव प्राकृतं यथावस्थितमुद्दिश्य विकृतिर्विधीयतामिति चेत्? तस्य विकृतिः साधनं भवितुमर्हति, प्रकृत्यैव स्ववाक्यावगतयाऽवरुद्धत्वात्। तस्मान्न विकृतेः प्रकृतिफलसम्बन्धः।

इति त्रयोदशं फलादीनामनतिदेशाधिकरणम्।



गुणकामानां गोदोहनादीनामनतिदेशाधिकरणम् ॥ १४ ॥

गुणकामेष्वाश्रितत्वात्प्रवृत्तिः स्यात् ॥ २३ ॥ निवृत्तिर्वा कर्मभेदात् ॥२४॥ अपि वाऽतद्विकारत्वात्क्रत्वर्थत्वात्प्रवृत्तिः स्यात् ।२५।

इह सगुणफलानि 'गोदोहनेन पशुकामस्य प्रणयेदि'ति ब्रा. २-१-५-६ त्येवमादीनि, तत्साधनभूताश्च गोदोहनादयः किं विकृतिषु प्रवर्त्तन्ते, नेति संशयः। तत्र प्रधानफलं प्रधाननिबन्धनत्वात्तस्य च विकृतिष्वप्रवृत्तेर्मा नाम प्रवर्त्तिष्ट। गुणफलं तु गुणप्रवृत्त्या प्रवर्त्तितुमर्हति। तथा हि प्रणयनं तावदतिदिश्यते, तत्साधनभूतञ्च गोदोहनमनङ्गमपि साधनत्वात् चमसवत्प्रवर्त्तते। तत्प्रवृत्त्या च तत्साध्यं फलमपि प्रवर्त्तेत। यथा प्रधानाश्रितदध्यादिसाध्यमिन्द्रियादि दध्यादेर्होमसाधनत्वेन विकृतिषु प्रवृत्तेः प्रवर्तेत।

उच्यते—न हि गोदोहनादीनामित्थंभावेन संग्रहः।
इत्थंभावातिदेशेन तेषां नातोऽतिदेशधीः ॥ ३ ॥

न हि यत्किञ्चिद्यथाकथञ्चिदपि प्रकृतेः साधनं, तत्सर्वमतिदिश्यते। कथंभावापेक्षा हि विकृतिचोदना सादृश्योपस्थापितां प्रकृतिचोदनामालोच्य तस्यास्त्र्यंशायाः साध्यसाधनांशावनाकाङ्क्षितत्वादनादृत्य, तृतीयमित्थंभावांशं वाक्यशेषत्वेन गृह्णाति। तत्र यत् प्राकृत्यां चोदनायामित्थंभावरूपेणागृहीतं, प्रमाणान्तरेण कथंचित्साधनभावमुपनीतं गोदोहनादि, तस्य कः प्रसङ्गः।

विकृतौ माभूदतिदेशः। प्रणयनस्यत्वाश्रयभूतस्य विकृतावपि सद्भावात्, तदाश्रितं गोदोहनमपि पुरुषः कामनावशात्प्रयुङ्क्तामिति चेत्? न। वैगुण्यात्। अतिदिष्टस्याङ्गभूतस्य चमसस्य विना शास्त्रेण पुरुषेच्छामात्रेण युक्तो बाधः। तद्बाधे हि वैगुण्यं स्यात्। अवैगुण्ये तु भवतु कामस्यापि प्रवृत्तिः। यथाह भाष्यकारः, 'गोदोहने प्रवर्तमाने तदाश्रितः कामोऽपि प्रवर्तितुमर्हति'

शा. भा. पृ. १५६७ इति। किञ्च यद्दर्शपौर्णमासापूर्वसाधनभूतं प्रणयनं, तदेवाश्रयः, तादृशस्यैव प्रकृतत्वात्। न च विकृतौ तादृगस्ति। तस्मादाश्रयाभावादपि न गोदोहन-तत्फलयोः प्रवृत्तिः।

इति चतुर्दशं गुणकामानां गोदोहनादीनामनतिदेशाधिकरणम्।

---

सौर्ये चरावभिमर्शनद्वयस्य विकल्पाधिकरणम् ॥ १५ ॥

एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् ॥ २६ ॥

सौर्य आग्नेयविकार इति वक्ष्यते। आग्नेयश्च पौर्णमास्यमावास्याकालयोरुत्पन्न उभयसंज्ञः। तेन चतुर्होत्रा, पञ्चहोत्रा च तस्य कालद्वयेऽभिमर्शनम्। तत्र सौर्ये मन्त्रद्वयं किं पौर्णमास्यमावास्याकालयोर्व्यवस्थया प्रयोक्तव्यम्? उताव्यवस्थयेति।

व्यवस्था प्रकृतौ दृष्टा प्राप्यते विकृतावपि।
प्रकृतावार्थिकी त्वेषा विकृतौ नातिदिश्यते ॥ ४ ॥

चतुर्होत्रा पौर्णमासीम्, पञ्चहोत्रा'मावास्यामि'ति समुदायद्वारेण मन्त्रयोरुपदेशः, प्रकृतत्वात्। न कालद्वारेण, तस्याप्रकृतत्वात्। अतः समुदायद्वयवर्त्तिन आग्नेयस्यैव मन्त्रावङ्गम्, एकार्थत्वाच्च विकल्प्येते। तत्र पौर्णमासीकाले पौर्णमासिकैर्हविरन्तरैः सहाभिमृश्यमानमाग्नेयमविरोधाच्चतुर्होत्राभिमृष्टम्, एवममावास्याकाले पञ्चहोत्रा, न तु कालकृता व्यवस्थात्र शास्त्रार्थः। तस्माद्विकृतावव्यवस्था।

इति पंचदशं सौर्येऽभिमर्शनस्यविकल्पाधिकरणम्।

---

सौर्ये चरावाग्नेयधर्म्मातिदेशाधिकरणम् ॥ १६ ॥

लिङ्गसाधारण्याद्विकल्पः स्यात् ॥ २७ ॥ ऐकार्थ्याद्वा नियम्येत पूर्ववत्त्वाद्विकारो हि ॥ २८ ॥ अश्रुतित्वान्नेति चेत् ॥ २९ ॥ स्याल्लिङ्गभावात् ॥ ३० ॥ तथा चान्यार्थदर्शनम् ॥ ३१ ॥

'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिरि' ८-१-११ त्युक्तम्। तत्र षण्णामाग्नेयादीनां कस्य क्व प्रवृत्तिः? विशेषाभावादनियमः। सादृश्यविशेषात्त्वेक-

देवत्ये सौर्यादावेकदैवत्यस्याग्नेयस्य प्रवृत्तिः । अनेकदेवतेषु अग्नीषोमीयैन्द्राग्नयोः, आज्यादिद्रव्यकेषु उपांशुयाजादेः । कथं पुनरेकदेवत्यत्वमाग्नेयसौर्ययोः ? वाक्यशेषादिति दर्शितं भाष्ये भा. पृ.१६०० ।

इति षोडशं सौर्यचरौ आग्नेयविध्यन्तातिदेशाधिकरणम् ।

हविर्देवतयोः सन्निपाते हविःसामान्यस्य बलीयस्त्वाधिकरणम् ॥ १७ ॥

विप्रतिपत्तौ हविषा नियम्येत कर्मणस्तदुपास्यत्वात् ॥ ३२ ॥ तेन च कर्मसंयोगात् ॥ ३३ ॥ गुणत्वेन देवताश्रुतिः ॥ ३४ ॥

ऐन्द्रे पुरोडाशे किं देवतासामान्यात् सान्नाय्यविध्यन्तः ? उत हविःसामान्यादौषधविध्यन्त इति संशये, तथाऽऽग्नेये पयसि देवतासामान्यादौषधस्य, हविःसामान्याद्वा सान्नाय्यस्येति देवतासामान्य-हविःसामान्ययोः किं बलीय इति चिन्त्यते । विशेषाभावादनियमः । प्रथमश्रुतत्व-प्राधान्याभ्यां वा देवतायाः प्राबल्यं मन्वानस्य ।

उत्तरं—हविषस्त्याज्यमानत्वात्प्रत्यासत्तिर्हि कर्मणि ।
उद्देश्यमात्ररूपत्वाद्देवताऽऽरादुपस्थिता ॥ ५ ॥

यच्च प्रत्यासन्नं तेनैवोपस्थितं विध्यन्तमासाद्य निराकाङ्क्षं कर्म न बहिरङ्गभूतदेवतोपस्थापितमपेक्षते । यद्यपि प्रातिपदिकार्थत्वाद्देवता मुख्या, तथाऽपि तत्स्वरूपवेलायामाकाङ्क्षाविरहादनतिदेशः, कर्मविध्युत्तरकालं तु प्रत्यासत्तेर्हविसामान्यं बलीयः । प्राधान्यन्तु देवताया नवमे निराकरिष्यते । किं चौषधे सान्नाय्यधर्माः, तत्र चौषधधर्माः सर्वे बाध्येरन्, असम्भवात्, । यथायथन्तु प्राप्तौ, न कस्यचिद्बाधः, तस्माद्धविःसामान्यं बलीयः ।

इति सप्तदशं द्रव्यसादृश्यस्य प्राबल्याधिकरणम् ।

शतकृष्णलाख्यहिरण्ये औषधधर्म्मातिदेशाधिकरणम् ॥ १८ ॥

हिरण्यमाज्यधर्मस्तेजस्त्वात् ॥ ३५ ॥ धर्मानुग्रहाच्च ॥ ३६ ॥ औषधं वा विशदत्वात् ॥ ३७ ॥ चरुशब्दाच्च ॥ ३८ ॥ तस्मिंश्च श्रपणश्रुतेः ॥ ३९ ॥

कृष्णलचरौ आज्योषधयोः कस्य विध्यन्तः स्यात् ? उज्ज्वलसामान्यादाज्यस्य, 'विशदत्वादौषधवाचिचरुशब्दसंयोगाच्च तद्धर्माः।

इत्यष्टादशं हिरण्ये औषधधर्मातिदेशाधिकरणं।

मधूदके उपांशुयाजाज्यधर्मातिदेशाधिकरणम् ॥ १९ ॥

मधूदके द्रव्यसामान्यात्पयोविकारः स्यात् ॥ ४० ॥ आज्यं वा वर्णसामान्यात् ॥ ४१ ॥ धर्मानुग्रहाच्च ॥ ४२ ॥ पूर्वस्य चाविशिष्टत्वात् ॥ ४३ ॥

'दधि, मधु, घृतं, धानाः, तण्डुला उदकमि'त्यत्र मधूदकयोः पयः प्रवर्त्तेत, उताज्यमिति संदेहे, स्वाभाविकद्रवत्वसामान्यात्पयः, । नैवम्। असत्यपि च स्वाभाविकद्रवत्वेऽग्निसंयोगादाज्येऽपि द्रवत्वसद्भावाद्वर्णसामान्याधिक्यात् पयोधर्माणां च दोहनादीनामसम्भवादुत्पवनादीनाञ्च सम्भवात् आज्यविध्यन्तः।

वर्णसाम्यस्य चाधिक्याद् द्रवत्वस्याविशेषतः।
अनुग्रहाच्च धर्माणामाज्यधर्मं मधूदकम् ॥ ६ ॥

इत्येकोनविंशं मधूदके उपांशुयाजाज्यधर्मातिदेशाधिकरणम्।

इति शास्त्रदीपिकायामष्टमस्य प्रथमः पादः ॥ १ ॥

# अथ अष्टमाध्याये द्वितीयः पादः

ऐहिकसोत्रामण्योरैष्टिकधर्मातिदेशाधिकरणम् ॥ १ ॥

वाजिने सोमपूर्वत्वं सत्रामण्यां च ग्रहेषु ताच्छब्द्यात् ॥ १ ॥ अनुवषट्काराच्च ॥ २ ॥ समुपहूय भक्षणाच्च ॥ ३ ॥ क्रयणश्रपणपुरोरुगुपयामग्रहणासादनवासोपहनञ्च तद्वत् ॥ ४ ॥ हविषा वा नियम्येत तद्विकारत्वात् ॥ ५ ॥ प्रशंसा सोमशब्दः ॥ ६ ॥ वचनानीतराणि ॥ ७ ॥ व्यपदेशश्च तद्वत् ॥ ८ ॥ पशुपुरोडाशस्य च लिङ्गदर्शनम् ॥ ९ ॥

१ विशदम्-विभक्तावयवमिति भक्ष्येण मिश्रीकरणमित्यत्र हरदत्तः।

वाजियागे, सौत्रामण्यङ्गभूतेषु किं सौमिको विध्यन्तः ? उतैष्टिकः- इति संदेहे, 'सोमो वै वाजिनं, सुरा सोमः' इत्यसोमे सोमः शब्दस्तद्धर्माति-देशार्थो अग्निहोत्रशब्दवत् । तस्मात्सौमिकः ।

प्रशंसार्थस्त्वयं सोमशब्दः, न विधानार्थः, विध्यश्रवणात् । तद्धविः-सामान्यादैष्टिके वाजिने, पयोविध्यन्तः, सुराग्रहेषु चौषधः ।

इति प्रथममैष्टिकसौत्रामण्योरैष्टिकधर्मातिदेशाधिकरणम् ।

—:-०-:—

पशौ सांनाय्यधर्मातिदेशाधिकरणम् ॥ २ ॥

पशुः पुरोडाशविकारः स्याद्देवतासामान्यात् ॥१०॥ प्रोक्षणाच्च ॥ ११ ॥ पर्यग्निकरणाच्च ॥१२॥ सान्नाय्यं वा तत्प्रभवात् ॥१३॥ तस्य च पात्रदर्शनात् ॥ १४ ॥

पशावग्नीषोमीये दर्शपौर्णमासयोः प्रवृत्तिरित्युक्तं । तत्र देवता सामान्यदग्नीषोमीये पुरोडाशः प्रवर्त्तते, हविःसामान्यमपि पुरोडाशेनैव विद्यते, द्वयोरपि घनत्वात् ।

सान्नाय्यं वा प्रवर्तते, हविसामान्यात् । सान्नाय्यं हि पशुतः प्रभवति, पशुरपि पशुप्रभवः, संबन्धित्वाच्च पशुसान्नाय्ययोः पशुः प्रतीतः सान्नाय्य-मुपस्थापयति, सान्नाय्यपात्रं चोखा पशौ दृश्यमाना तत्प्रकृतित्वं सूचयति ।

इति द्वितीयं पशौ सान्नाय्यधर्मातिदेशाधिकरणम् ।

—:-०-:—

पशो पयोधर्मातिदेशाधिकरणम् ॥ ३ ॥

दध्नः स्यान्मूर्तिसामान्यात् ॥ १५ ॥ पयो वा कालसामान्यात् ॥ १६ ॥ पश्वानन्तर्यात् ॥ १७ ॥ द्रवत्वं चाविशिष्टम् ॥ १८ ॥

तत्रापि दध्नो विकारः स्यात्, घनत्वसामान्वात् । पयसो वा तद्धि साक्षात्पशुप्रभवं, दधि तु तद्व्यपेतं, पशुरपि साक्षात्पशुप्रभवः, गतिमत्त्वं च पशु-पयसोस्तुल्यं, तदधिकं दधितः पयसः ।

इति तृतीयं पशौ पयोधर्मातिदेशाधिकरणम् ।

—:-०-:—

आमिक्षायां पयोधर्म्मातिदेशाधिकरणम् ॥ ४ ॥

आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् ॥ १९ ॥ एकं वा चोदनैकत्वात् ॥ २० ॥ दधिसङ्घातसामान्यात् ॥ २१ ॥ पयो वा तत्प्रधानत्वाल्लोकवद्दध्नस्तदर्थत्वात् ॥२२॥ धर्मानुग्रहाच्च ॥२३॥

आमिक्षायागः सान्नाय्यविकार इत्यसंदिग्धं। दध्नः, पयसो वेति-चिन्त्यते।

दधि क्षीरं च संसृष्टमामिक्षेत्यभिधीयते।
उभयोश्च रसस्तस्यां दृश्यतेऽतो द्वयात्मिका ॥ ७ ॥
विशेषाग्रहणात्तस्मादुभयोर्विकृतिर्भवेत् ।
तप्ते पयसि वाक्ये तु सप्तम्या गुणतः पयः ॥ ८ ॥
दधि द्वितीयानिर्द्देशात्प्रधानं तेन सा पदं।
दध्येव प्रतिनिर्द्दिश्य तेन बध्नाति देवतां ॥ ९ ॥
दध्येवातो हविस्तस्मात्सायंदोहविकारता।

सिद्धान्तः।

पयसस्तु प्रधानत्वं तत्र कर्मसमाप्तितः ॥ १० ॥
दध्ना हि नीयमानेन तदेव व्याप्यते पयः।
कर्मतोऽपि प्रधानत्वं तस्य स्यात्संप्रदानवत् ॥ ११ ॥
सर्वनाम्ना परामर्शस्तस्यैवातोऽवकल्पते।
यदेव दधिसंयोगाद्घनीभूतमतो हविः ॥ १२ ॥
तस्यैव देवतायोग आमिक्षाऽपि तदेव नः।
प्रातर्दोहविकारत्वमामिक्षायास्ततः स्थितम् ॥ १३ ॥

इति चतुर्थमामिक्षायां पयोधर्मातिदेशाधिकरणम्।

—:-o-:—

द्वादशाहे सत्राहीनयोर्व्यवस्थया धर्मातिदेशाधिकरणम् ॥ ५ ॥

सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ २४॥ अपि वा यजति श्रुतेरहीनभूतप्रवृत्तिः स्यात्प्रकृत्या तुल्यशब्दत्वात् ॥ २५ ॥ द्विरात्रादीनामैकादशरात्रादहीनत्वं यजतिचोदनात् ॥ २६ ॥ त्रयोदशरात्रादिषु सत्रभूतस्तेष्वासनोपायिचोदनात् ॥ २७ ॥ लिङ्गाच्च ॥ २८ ॥

'गणेषु द्वादशाहस्ये'त्युक्तं । द्विविधाश्च गणाः-सत्राणि, अहीनाश्च । द्वादशाहोऽप्युभयात्मा तस्योभयविधस्याप्यनियतात्मना सर्वत्र प्रवृत्तिः, विशेषाभावात् ।

सत्रस्यैव तु सत्रेषु प्रवृत्तिः सत्रसाम्यतः ।
तथाऽहीनेष्वहीनस्य सुसदृकत्वादिति स्थितम् ॥ १४ ॥

इति पञ्चमं द्वादशाहे सत्राहीनयोर्व्यवस्थया धर्मातिदेशाधिकरणम् ।

पञ्चदशरात्रादिषु सत्रधर्मातिदेशाधिकरणम् ॥ ६ ॥

अन्यतरतोऽतिरात्रत्वात्पञ्चदशरात्रस्याहीनत्वं' कुण्डपायिनामयनस्य च' तद्भूतेष्वहीनत्वस्य दर्शनात् ॥ २९ ॥ अहीनवचनाच्च ॥ ३० ॥ सत्रे वोपायिचोदनात् ॥ ३१ ॥ सत्रलिङ्गं च दर्शयति ॥ ३२ ॥

पञ्चदशरात्रस्य, कुण्डपायिनामयनस्य च किं सत्रविकारत्वं ? उत-अहीनविकारत्वमिति चिन्त्यते, तदर्थं च किमनयोरहीनत्वं, उत सत्रत्वमिति विचार्यते ।

तत्रोपर्यतिरात्रत्वाद् द्विरात्रादिवदेतयोः ।
अहीनत्वम्भवेन्नैवमासनोपायचोदनात् ॥ १५ ॥
सत्रसंज्ञांतकाण्डे च समाम्नातमिदं द्वयं ।
तस्मात्सत्रमतः सत्रविध्यन्तोऽत्र प्रवर्तते ॥ १६ ॥

इति षष्टं पञ्चदशरात्रादौ, गवामयनेच सत्रधर्मातिदेशाधिकरणम् ।

इति शास्त्रदीपिकायामष्टमस्य द्वितीयः पादः ॥ २ ॥

# अथ अष्टमाध्याये तृतीयः पादः ।

शुचिदैवते आग्नेयस्य, आग्नावैष्णवे च आग्नीषोमीयस्य धर्मातिदेशाधिकरणम् ॥ १ ॥

हविर्गणे परमुत्तरस्य देशसामान्यात् ॥ १ ॥ देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् ॥ २ ॥

आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्सारस्वतञ्चमरुम्, हिस्पत्यं-चरुमि' मै.सं.२-१-४ति । तत्र सन्देहः किं प्रथमस्याग्नेयविध्यन्तः, तृतीयस्याग्नीषोमिविध्यन्तः, उत विपरीतमिति । स्थानसामान्यात् प्रथम–तृतीययोः प्रथमतृतीयविध्यन्तप्राप्तौ

उच्यते—प्रथमस्य द्विदेवत्यत्वादाग्नीषोमीयविध्यन्तः, तृतीयस्य चैकदैवत्यत्वादाग्नेयविध्यन्तः, देवतासामान्यमुत्पत्तिवेलायामेव शीघ्रं गम्यते, स्थानसामान्यं तु न्यायापेक्षत्वाद्विलम्बितत्वाद् दुर्बलं, तस्माद्देवतासामान्यात्प्रथमतृतीययोस्तृतीयस्य प्रथमविध्यन्तः ।

इति प्रथमं शुचिदैते आग्नेयस्य, आग्नावैष्णवे आग्नीषोमीयस्य धर्मातिदेशाधिकरणम् ।



जनकसप्तरात्रे त्रिवृत्स्वहःसु द्वादशाहधर्मातिदेशाधिकरणम् ॥ २ ॥

गणचोदनायां यस्य लिङ्गं तदावृत्तिः प्रतीयेताग्नेयवत् ॥३॥ नानाहानि वा सङ्घातत्वात्प्रवृत्तिलिङ्गे, न चोदनात् ॥ ४ ॥ तथा चान्यार्थदर्शनम् ॥ ५ ॥

जनकसप्तरात्रे श्रूयते 'चत्वारि त्रिवृत्यहान्यग्निष्टोममुखानी'ति । तत्र किमेषु पार्ष्णिकस्याद्यस्याह्नस्त्रिवृतो विध्यन्तश्चतुर्ष्वप्यावर्त्तते ? उत त्रिवृदादीनां चतुर्णामपि प्रवृत्तिश्चतुषु क्रमेणेति संशये ? पूर्ववत्संघातसामान्यस्य च दुर्बलत्वात्, त्रिवृत्त्वसामान्येनैवाद्यस्यैव प्रवृत्तिः ।

नैवमिह सह चोदितानां संघातोऽपि शाब्दः, त्रिवृत्त्वमपि, तत्र संघातसामान्यं प्रधानगतं तदङ्गभूतस्तोत्रीयागतात् त्रिवृत्त्वात्बलीय इति, तद्वशेन

चतुर्णामपि पृष्ठ्याद्यानां चतुर्षु प्रवृत्तिः, एवं 'चाग्निष्टोममुखानी'त्येष वादो युज्यते, आद्यस्याग्निष्टोमत्वात् । अन्यथा सर्वेषामग्निष्टोमत्वं स्यात्, तत्राग्निष्टोममुखानीति न घटते ।

इति द्वितीयं जनकसप्तरात्रे त्रिवृत्स्वहस्सु द्वादशाहधर्मातिदेशाधिकरणम् ।

—:-o-:—

## षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् ॥ ३ ॥

**कालाभ्यासेऽपि बादरिः कर्मभेदात् ॥ ६ ॥ तदावृत्तिं तु जैमिनिरह्नामप्रत्यक्षसङ्ख्यत्वात् ॥ ७ ॥**

षड्त्रिंशद्रात्रे श्रूयते 'षडहा भवन्ति, चत्वारो भवन्ती'तां.ब्रा.१०-३-११ति। तत्र विचार्यते—किमेतेषु चतुर्विंशत्यामहःसु द्वादशाहिकस्य दशरात्रविध्यतस्य प्रवृत्तिः ? उत षडहस्यैव चतुरावृत्तिरिति ।

तत्र—चतुर्विंशतिरेतानि चत्वारः षडहा इति ।
चोद्यन्तेऽहानि तेनैषु द्वादशाहः प्रवर्तते ॥ १७ ॥

उच्यते चतुर्विंशतिसंख्योऽत्र गणः साक्षान्न चोद्यन्ते ।
चतुःसंख्यैस्तु षडहैरनुमानेन गम्यते ॥ १८ ॥

चतुःसंख्यास्तु षडहाः प्रत्यक्षेणैव चोदिताः ।
तस्मात्षडहविध्यन्तः शीघ्रमत्रावगम्यते ॥ १९ ॥

इति तृतीयं षट्त्रिंशद्रात्रे षडहधर्मातिदेशाधिकरणम् ।

---

## संस्थागणेषु द्वादशाहिकधर्म्मातिदेशाधिकरणम् ॥ ४ ॥

**संस्थागणेषु तदभ्यासः प्रतीयेत कृतलक्षणग्रहणात् ॥ ८ ॥**

**अधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्यादभिधानस्य तन्निमित्तत्वात् ॥९॥**

'शतोक्थ्यं भवति, शतातिरात्रं भवति' इति श्रुतं । तत्र संशयः—किं ज्योतिष्टोमस्य शतकृत्वोऽभ्यासः ? उत द्वादशाहप्रवृत्तिरिति । तत्रोक्थ्यादिशब्दानां ज्योतिष्टोमनामत्वं मन्वानस्तमेव दूरस्थमप्यनूद्य शताभ्यास उपादेयो गुणो विधीयत इति मन्वानस्तस्यैवाभ्यासमाह ।

संस्थानिमित्तास्त्वेते न क्रतोः कस्यापि वाचकाः ।
सन्निध्यभावतः संस्थाविशिष्टगणचोदना ॥ २० ॥

तस्माद्द्वादशाहविध्यन्तः ।

इति चतुर्थं संस्थागणेषु द्वादशाहधर्मतिदेशाधिकरणम् ।

---

शतोक्थ्यादौ ज्योतिष्टोमात् स्तोत्रोपचयाधिकरणम् ॥ ५ ॥

गणादुपचयस्तत्प्रकृतित्वात् ॥ १० ॥ एकाहाद्वा तेषां समत्वात्स्यात् ॥ ११ ॥

'शतोक्थ्यं भवती'त्यत्र द्वादशाहिको दशरात्रो दशकृत्वः प्रवर्तते- इत्युक्तं, तस्मिंश्च दशरात्रेऽभितो द्वावग्निष्टोमौ । तत्र शतोक्थ्ये प्रतिदशकं द्वावग्निष्टोमौ उक्थ्यसंस्थया वर्द्धयितव्यौ । तत्रागम्यमानेषूक्थ्यस्तोत्रेषु संशयः—किं द्वादशाहिकोक्थ्यस्तोत्रविकारास्तेषु हि केचिद्विशेषाः प्राकृतेभ्यः स्तोत्रेभ्यो विद्यन्ते ? उत ज्योतिष्टोमोक्थ्यविकारा इति ? तत्र द्वादशाहविकारत्वादस्य गणस्य तदीयेषूक्थ्याहस्सु यान्युक्थ्यस्तोत्राणि, तद्विकारत्वमेवास्मिन्नागन्तूनामुक्थ्यस्तोत्राणां युक्तं ।

नैतद्युक्तं । ज्योतिष्टोमे ह्युक्थ्यस्तोत्राणामुत्पत्तिः । द्वादशाहे त्वतिदेशप्राप्तानां तेषामेव विशेषा विहिताः । यत्र चोत्पत्तिः, तत एवागमनं युक्तं, न यत्रातिदिष्टानि । न हि भिक्षुको भिक्षुकान्तरं याचितुमर्हति सत्यन्यस्मिन्नभिक्षुके, तस्माज्ज्यौतिष्टोमिकानामेवोक्थ्यादीनां प्रवृत्तिः ।

इति पञ्चमं शतोक्थ्यादौ ज्योतिष्टोमात् स्तोत्रोपचयाधिकरणम् ।

---

गायत्रमेतदहर्भवति इत्यादावुत्पत्तिगायत्रीणामतिदेशाधिकरणम् ॥६॥

गायत्रीषु प्राकृतीनामवच्छेदः, स्यधिकारात्सङ्ख्यात्वादग्निष्टोमवदव्यतिरेकात्तदाख्यत्वम् ॥ १२ ॥ तन्नित्यवच्च पृथक्सतीषु तद्वचनम् ॥ १३ ॥ न विंशतौ दशेति चेत् ॥ १४ ॥ एकसंख्यमेव स्यात् ॥ १५ ॥ गुणाद्वा द्रव्यशब्दः स्यादसर्वविषयत्वात् ॥ १६ ॥ गोत्वच्च समन्वयः ॥ १७ ॥ संख्यायाश्च शब्दवत्त्वात् ॥ १८ ॥

इतरस्याश्रुतत्वाच्च ॥१९॥ द्रव्यान्तरेऽनिवेशादुक्थ्य लोपं स्यात् ॥ अशास्त्रलक्षणत्वाच्च ॥२१। उत्पत्ति नामधेयत्वाद्; भक्त्या पृथक्-सतीषु स्यात् ॥ २२ ॥ वचनमिति चेत् ॥२३॥ यावदुक्तम् ॥२४॥ अपूर्वे च विकल्पः स्याद्यदि सङ्ख्याविधानम् ॥ २५ ॥ ऋग्गुण-त्वान्नेति चेत् ॥ २६ ॥ तथा पूर्ववति स्यात् ॥ २७ ॥ गुणावेशश्च सर्वत्र ॥२८॥ निष्पन्नग्रहणान्नेति चेत् ॥२९॥ तथेहापि स्यात् ॥३०॥ यदि वाऽविशयेनियमः प्रकृत्युपबन्धाच्छब्देष्वपि प्रसिद्धः स्यात्॥ ३१॥ दृष्टः प्रयोग इति चेत् ॥ ३२ ॥ तथा शरेष्वपि ॥ ३३ ॥ भक्त्येति चेत् ॥ ३४ ॥ तथेतरस्मिन् ॥३५॥ अर्थस्य चासमाप्तत्वान्न तासामे-कदेशे स्यात् ॥ ३६ ॥

बृहस्पतिसवे प्रकृतितो ज्योतिष्टोमात् गायत्र-त्रैष्टुभादिषु नानाछन्दस्सु-प्राप्तेषु छन्दोऽन्तराणि व्युदस्य गायत्री नियता 'गायत्रमेतदहर्भवती'ति। तत्र संशयः-किं त्रिष्टुबादिष्वेव चोदकप्राप्तेषु अक्षरलोपं कृत्वा गायत्री संपादयितव्या ? उत दाशतयीभ्य उत्पत्तिगायत्र्य आनेतव्या इति ? तत्र संख्यामात्रवाचकत्वाद् गायत्रीशब्दस्य प्राकृतीष्वेव चोदकप्राप्तास्वक्षरलोपो-न विरुध्यते। तस्मात्तास्वेवाक्षरलोपः। तथा च 'तिस्रोऽनुष्टुभः, चतस्रो-गायत्र्यः' च इत्याद्युपपद्यते।

अत्रोच्यते—संख्यामात्राभिधायित्वे सर्वत्रैव प्रसज्यते।
मन्त्रान्तरे घटादौ च तस्मात्संख्यान्वितामृचम् ॥ २१ ॥
अष्टाक्षरैस्त्रिभि पादैर्युक्तामभिदधात्यसौ।
तिस्रोऽनुष्टुभ इत्यत्र गौणः शब्दो न मुख्यतः ॥ २२ ॥

तस्मादुत्पत्तिगायत्र्य आनेयाः। पूर्वाधिकरणे उपचयश्चिन्तितः। तत्प्रसङ्गादपचयोऽयं चिन्तितः।

इति षष्टमुत्पत्तिगायत्रीणामतिदेशाधिकरणम्।

इति शास्त्रदीपिकायामष्टमाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

# अथाऽष्टमाध्याये चतुर्थः पादः ।

दर्विहोमशब्दस्य कर्म्मनामधेयताधिकरणम् ॥ १ ॥

दर्विहोमो यज्ञाभिधानं होमसंयोगात् ॥ १ ॥ स लौकिकानां स्यात्कर्त्तुस्तदाख्यत्वात् ॥ २ ॥ सर्वेषां वा दर्शनाद्वास्तुहोमे ॥ ३ ॥ जुहोतिचोदनानां वा तत्संयोगात् ॥४ । द्रव्योपदेशाद्वा गुणभिधानं स्यात् ॥ ५ ॥ न लौकिकानामाचारग्रहणत्वाच्छब्दवतां चान्यार्थ-विधानात् ॥६॥ दर्शनाच्चान्यपात्रस्य ॥ ७ ॥ तथाग्निहविषोः ॥८॥ उक्तश्चार्थसम्बन्धः ॥ ९ ॥

प्रपञ्चितेऽतिदेशे, ह्यपवादविवक्षया दर्विहोमा हृदयमागताः । तत्प्रसङ्गेन च 'यदेकया जुहुयाद्दर्विहोमं कुर्यादि' तै. सं. ३-२-१ त्यर्थवादगतो दर्विहोमशब्दो हृदयमागतः किं गुणविधिः, नामधेयं वा, नामापि लौकिकानामेव, उत्त वैदिकानामपि ? किं यज्युत्पत्तीनामपि, किं वा जुहोत्युत्पत्तीनामेवेति प्रसङ्गाच्चिन्त्यते। तत्र होमशब्दसंयोगात्तस्य च कर्मवचनत्वात्तत्प्रधानत्वाच्च समासस्य कर्मनामत्वं ।

तत्र लौकिकानां स्थालीपाकादीनां कर्त्तरि दार्विहोमिकशब्दप्रयोगात्तेषां स्यात्, वैदिकेऽपि वस्तुहोमे प्रयोगाद्धोमत्वाविशेषाच्च वैदिकानामपि । तत्र यज्युत्पत्तीनामपि 'चतुरवत्तं जुहोती' त्यादिना होमत्वापत्तेस्तेषामपि । न यागस्य होमत्वापत्तिः, यागात् कर्मान्तरं प्रोक्षणादिवत्संस्काररूपं विधीयते। अतो जुहोत्युत्पत्तीनामेवाग्निहोत्रादीनां नाम स्यात् । यत्तु गुणविधित्त्वमाशङ्कितं, तच्चोद्यमात्रं । तत्र तत्प्रख्यन्यायसिद्धमेवोत्तरमुपसंहृतम् ।

इति प्रथमं दर्विहोमस्य कर्मनामधेयताधिकरणम् ।

---

दर्विहोमस्यापूर्वताधिकरणम् ॥ २ ॥

तस्मिन्सोमः प्रवर्त्तेताव्यक्तत्वात् ॥ १० ॥ न वा स्वाहाकारेण संयोगाद् वषट्कारस्य च, निर्देशात्तन्त्रेतेन, विप्रतिषेधात् ॥ ११ ॥ शब्दान्तरत्वात् ॥ १२ ॥ लिङ्दर्शनाच्च ॥ १३ ॥ उत्तरार्थस्तु,

स्वाहाकारो, यथा साप्तदश्यं, तत्राविप्रतिषिद्धा पुनः प्रवृत्तिर्लिङ्ग-दर्शनात्पशुवत् ॥ १४ ॥ अनुत्तरार्थो वाऽर्थवत्त्वादानर्थक्याद्धि स्योपरोधः स्यात् ॥ १५ ॥ न प्रकृतावपीति चेत् ॥ १६ ॥ उक्तं समवाये पारदौर्बल्यम् ॥ १७ ॥ तच्चोदना वेष्टेः प्रवृत्ति-त्वाद्विधिः स्यात् ॥ १८ ॥ शब्दसामर्थ्याच्च ॥ १९ ॥ लिङ्ग-दर्शनाच्च ॥ २० ॥ तत्राभावस्य हेतुत्वाद्गुणार्थे स्याद-दर्शनम् ॥ २१ ॥ विधिरिति चेत् ॥ २२ ॥ न वाक्यशेषत्वाद्-गुणार्थे च समाधानं नानात्वेनोपपद्यते ॥ २३ ॥ येषां वाऽपरयोर्हो-मस्तेषां स्यादविरोधात् ॥ २४ ॥ अ. लिङ्गाद्वा शेषहोमयोः ॥२४॥ तत्रौषधानि चोद्यन्ते; तानि स्थानेन गम्येरन् ॥ २५ ॥ लिङ्गाद्वा शेषहोमयोः ॥ २६ ॥ सन्निपाते विरोधिनामप्रवृत्तिः प्रतीयेत, विध्युत्पत्तिव्यवस्थानादर्थस्यापरिणेयत्वाद् वचनादतिदेशः स्यात् ॥ २७ ॥

प्रासङ्गिकं परिसमाप्य, किं दर्विहोमाः पूर्ववन्तः ? उतापूर्वा ? इति विचार्यते । तत्राश्रुतेतिकर्तव्याकत्वात्, अव्यक्तत्वाच्च सौमिको विध्यन्तः प्रवर्तेत, यागत्वेन होमत्वेनात्यन्तविसदृशत्वात्। होमानामेवाग्निहोत्र-नारिष्टा-दीनां धर्मवतां सद्भावान्न तदतिक्रमेण सोमयागाश्रयणं युक्तम् । अस्तु तर्हि तत्प्रकृतित्वमेव । नैवं । नारिष्टाङ्गभूतानामिध्मादीनां त्र्यम्बकहोमेष्वभाव-हेतुदर्शनात् । लिङ्गान्तराणि च दर्शितानि दर्विहोमानापूर्वत्वं सूचयन्ति, तस्मादपूर्वाः ।

संक्षेपविस्तारकः सापवादः सदृक्त्वानुमानात्तथा नामधेयात् ।
अधीताच्च वाक्यात्प्रसिद्धोऽतिदेशः करिष्यामहेऽतः परन्तूहचिन्ताम् ॥ २३ ॥

इति द्वितीयं दर्वीहोमानामपूर्वताधिकरणम् ।

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायामष्टमाध्यायस्य चतुर्थः पादः समाप्तः ॥ ४ ॥

समाप्तोऽष्टमोऽध्यायः ॥

---

# अथ नवमोऽध्यायः

## प्रथमः पादः

अग्निहोत्रादिषूक्तानां धर्माणामपूर्वप्रयुक्तत्त्वाधिकरणम् ॥ १ ॥

**यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ॥ १ ॥**

सिद्धेऽतिदेशे, अधुनाऽतिदिष्टानां पदार्थानां मन्त्र-साम-संस्काराणां-द्वारान्तरसम्बन्धनिमित्तोऽन्यथाभावात्मक ऊहश्चिन्त्यते । तस्य चातिदिष्टविषयत्वादतिदेशोत्तरकालमारम्भः, । अतिदेशाधीनत्वमेव दर्शयितुं सप्तमाद्यसिद्धमपूर्वप्रयुक्तत्वं धर्माणामनेन सूत्रेण स्मारयति । यजिप्रयुक्तत्वे हि पारिप्लवा धर्माः सर्वत्रोपदिष्टा नान्यथा कर्त्तुं शक्यन्ते । अपूर्वप्रयुक्तत्वे तु प्रतिप्रकरणं व्यवस्थिता धर्माः दशमाद्यन्यायेन कार्यमुखेनातिदिष्टा युक्तं यदूहं भजन्ते, तस्मादूहविवक्षयाऽपूर्वप्रयुक्तिः स्मारिता । तदीयौ पूर्वोत्तरपक्षौ तत्रैव प्रदर्शिताविति, नेह प्रदर्श्येते ।

भाष्योक्तं वर्णकम् ।

तथाऽन्यदिह चिन्त्यते—किमवघातमन्त्रादयो विवक्षितव्रीह्यग्न्यादिद्वारा-अपूर्वस्योपकुर्वन्ति ? उताविवक्षिततत्स्वरूपाः साधनविशेषमात्रद्वारेति । स्वरूपविवक्षायां हि तदभावान्नीवारादिषूहो न स्यात्, अविवक्षितत्वे तु नीवारादावपि साधनविशेषसद्भावात्सिध्यत्यूहः । ननु साधनस्यापि दार्शपौर्णमासिकस्य द्वारत्वात् विकृतौ च तदभावात्कथमूहः ?

प्रभाकरोक्तसमाधानस्य निरासः ।

यस्यापूर्वस्यावघातोङ्गं तदीयं साधनं द्वारमिति चेत् ? तथा सत्यौषधाज्यसान्नाय्यानां धर्मसङ्करः स्यात्, त्रयाणामपि प्रदेयसाधनत्वात् । अथाऽऽग्नेयादिद्वारभेदेन साधनत्वभेदाद् व्यवस्था, ततो विकृतौ तद्द्वाराभावादवघातादेरप्रवृत्तिः ।

उच्यते—अवहतैरपूर्वं कुर्यादितिशास्त्रार्थः । साधनप्रयुक्तिपक्षे तद्वत्कुर्यादित्यतिदेशो—अवहतैः कुर्यादित्यर्थो भवति । तस्मात्सिध्यति विकृताव-

वघातः, तेन यस्यापूर्वस्यावघातोऽङ्गमित्यादि कुशकाशावलम्बनमनर्थकम्, यदि परं धर्मसाङ्कर्याय स्यादित्यास्तां तावत्।

एवं 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामि त्यत्र 'अगन्म सुवः, सुवरगन्मे'त्यत्र चाऽवहन्तिस्वरूपं,स्वर्गस्वरूपञ्च संस्कार-मन्त्रयोरपूर्वार्थयोर्द्वारम्,उतापूर्वसम्बन्धिविशेष इति तुल्यो विचारः। तत्र व्रीह्यादीनां श्रुतानामविवक्षाकारणाभावात्, तद्द्वारेणैवापूर्वार्थत्वं, साधनरूपस्यावर्जनीयत्वात्। अन्यथाऽवघातादेरानर्थक्यात्तन्मात्रमेव विवक्षितमिति सिद्धान्तः।

संक्षेपेणोक्तस्यार्थस्य विस्तरेण वर्णनम्।

तदेतदिह संक्षिप्तमुपरितनैस्त्रिभिरधिकरणैः प्रपञ्चयिष्यते। सेयं द्वितीयस्य वर्णकस्यैका व्याख्या। तथाऽन्यापि। सप्तमाद्ये हि यज्यर्थत्वे पि धर्माणामपूर्वविशेषनिमित्ततामात्रेण व्यवस्थासिद्धेर्नैकान्ततोऽपूर्वार्थत्वं-व्युत्पादनीयम्। इह त्वपूर्वार्थत्वमन्तरेणोहासिद्धेरपूर्वार्थत्वम्प्रतिपाद्यते। यजिस्वरूपार्थत्वे हि तुल्यन्यायत्वादवघातादीनां व्रीह्यादिस्वरूपार्थत्वं स्यात्, तदभावाच्च नीवारादावूहो न स्यादिति।

धर्माणामपूर्वार्थत्वमत्रैव व्युत्पाद्यमिति भाष्यस्यापरं व्याख्यानम्।

तस्यैवापरा व्याख्या, सप्तमाद्ये साधारण्येनापूर्वार्थत्वम्, इह त्वारादुपकारकाणामपूर्वार्थत्वम्प्रकरणात्स्यात्। सन्निपातिनान्तु श्रुत्यादिसंयुक्तव्रीह्याद्यर्थत्वावगमात् न तत्प्रयुक्तत्वमित्याशङ्क्य, तेषामपि व्रीह्यादिस्वरूपपर्यवसायिनामानर्थक्यात्तद्द्वारेणापूर्वार्थतेति प्रतिपाद्यते। तदेतेषु त्रिष्वपि पक्षेषु अथवेत्यादिभाष्यन्तन्त्ररत्न एवास्माभिर्व्याख्यातम्।

अधिकाशंकानिरासेनाऽपूर्वार्थत्वव्युत्पादनमिति विचारान्तरस्य निर्देशः।

अथवाऽन्यामित्यादिना भाष्येण पुनर्वर्णकान्तरमारब्धं। तदुच्यते-सप्तमाद्ये अपूर्वार्थत्वं सिद्धम्, इह तु किमपूर्वार्थानां धर्माणां यजिर्निमित्तम्? उतानिमित्तम्, अथापूर्वमेवेति चिन्त्यते। नन्वनिमित्तावृत्तिः, कादाचित्कत्वात्, येन विचार एव न स्यात्, तत्रापूर्वस्यासाध्यत्वान्निमित्तता न युक्ता, तस्माद्यजिरेव निमित्तं, तत्तुल्यन्यायत्वाच्चावघातादीनामपि व्रीह्यादिस्वरूपमेव निमित्तमिति, तदभावान्नीवारादिषु न स्यादिति प्राप्ते—

ब्रूमः—यजेस्तावन्निमित्तत्वं न केनचिदिहोच्यते।
अपूर्वस्यापि तन्नोक्तमर्थात्तस्य निमित्तता॥ १॥

साध्यं हि साधनानुष्ठाने निमित्तम् । अनिष्पन्नमपि मनसि साध्यतया विपरिवर्तमानम् । तस्मादपूर्वार्था धर्माः, तन्निमित्तश्च । विकृत्यपूर्वमपि तेषां धर्माणामतिदेशेन साध्यमवगतं तत्साधनभूतनीवाराद्यङ्गत्वेनावघातादीननुष्ठापयतीति सिध्यत्यूहः ।

इति भाष्योक्तवर्णकत्रयसहितं प्रथमं धर्माणामपूर्वप्रयुक्तत्वाधिकरणम् ।

---

## प्रोक्षणादिसन्निपत्योपकारकस्यापूर्व्व-
## प्रयुक्तत्वाधिकरणम् ॥ २ ॥

संस्कारे युज्यमानानां; तादर्थ्यात्तत्प्रयुक्तं स्यात् ॥ २ ॥ तेन त्वर्थेन यज्ञस्य संयोगाद्धर्मसंबन्धस्तस्माद्यज्ञप्रयुक्तं स्यात्संस्कारस्य तदर्थत्वात् ॥ ३ ॥

पूर्वाधिकरणे धर्माणामपूर्वार्थत्वं सप्तमाद्यसिद्धं स्मारितं । तत एव च द्रव्यसंस्कारोऽपि तत्प्रयुक्त इति संक्षेपतः प्रतिज्ञामात्रेणोक्तम् । इदानीं तु तदेव श्रुत्यादिविरोधान्न सम्भवतीत्याशङ्क्योपपाद्यते । तत्रेह वाक्यसंयुक्तानां, 'फलदेवतयोश्चे'त्यत्र लिङ्गसंयुक्तानां, 'द्रव्य-संख्या-हेतुसमुदायमि'त्यत्र श्रुतिसंयुक्तानामपूर्वार्थत्वम्प्रतिपाद्यते । दर्शपूर्णमासयोः श्रूयते 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति, प्रोक्षिताभ्यां दृषदुपलाभ्यां पिनष्टी'ति । तत्र-प्रोक्षितशब्देन विशेषणप्रधानेन तृतीयान्तेनान्यसाधनभूतयोरुलूखल–मुसलयोः, दृषदुपलयोश्च संस्कारकं गम्यमानं प्रोक्षणं यत्तयोः साध्यम्, तदर्थमित्यविवादम् । इदन्तु चिन्त्यते—यत्तयोर्हन्तिपिषिसाधनत्वं तदर्थं सत्प्रोक्षणं हन्तिपिष्यर्थम्, उत ? यदपूर्वसाधनत्वं, तदर्थत्वादपूर्वार्थमिति ।

तत्र—अवहन्तिश्रुतेस्तावदवघातः प्रतीयते ।
तत्साधनत्वमेवातस्तृतीयातोऽवगम्यते ॥ २ ॥
सामानाधिकरण्याच्च प्रोक्षणं तद्विशेषणम् ।
एवं हन्त्यर्थताऽपूर्वशेषत्वं प्रक्रियावशात् ॥ ३ ॥

न च वाक्यसंयुक्तस्य प्रकरणमीष्टे, हन्तिपिषिद्वारेणाऽपूर्वार्थत्वात् । उभयमविरुद्धमिति चेत् ? न । उभयान्वयासम्भवात् । न हि प्रकरणाधीतत्वमात्रेण प्रकृतार्थता सम्भवति, किं तर्हि प्रकृतेनैकवाक्यतां कल्पयित्वा । न चावहन्तिपदेन, प्रधानवाक्येन च युगपदेकवाक्यता सम्भवति । तत्रान्यतरेऽवहातव्ये, प्रकरणं बाधित्वा हन्तिनैवान्वयमध्यवस्यामः । न च प्रोक्षणस्यानर्थक्यम्,

हन्तेरपूर्वार्थत्वात्। तदर्थमपि प्रोक्षणमपूर्वस्योपकरोत्येव। यथाऽऽग्नानमग्निद्वारेण क्रतूनामुपकारकमपि क्रतुविधिभिर्न गृह्यते, तथा प्रोक्षणमपूर्वार्थस्य हन्तेरङ्गमपि तत्स्वरूपपर्यवसायित्वेन विधीयमानं न क्रतुविध्येकवाक्यत गच्छति। यच्च प्रधानवाक्यशेषभूतं, तदेव विकृतिष्वतिदिश्यते। ततश्चावघातः क्रत्वङ्गत्वादतिदिश्यते, न प्रोक्षणम्, अतच्छेषत्वात्। अवघातस्तु गच्छन्स्वाङ्गभूतं प्रोक्षणमपकर्षतीति कृत्वा, विकृतिषु प्रोक्षणमनुष्ठीयते। नखनिर्भिन्ने तु चरावववघाताभावान्न प्रोक्षणस्याकर्षणमस्तीति, न नखेषु प्रोक्षणमूहितव्यम्। अथाप्यवघातद्वारेण क्रत्वङ्गम्प्रोक्षणं, तथाऽपि तत्स्वरूपमेव द्वारमिति, तदभावान्नखेषु नास्ति प्रोक्षणमिति प्राप्ते—

अभिधीयते—अवघातावसायं सत्प्रोक्षणं स्यादनर्थकम्।
विनापि प्रोक्षणं हन्तेः रूपनिष्पत्तिदर्शनात्॥ ४॥
तद्द्वारेण त्वपूर्वार्थं भवन्नानर्थकं भवेत्।
न हि तेन विना तस्य निष्पत्तिरवगम्यते॥ ५॥

तेनावघातमात्रेण प्रयोजनानवाप्तेर्वाक्यसंयुक्तमप्यवघातमतिक्रम्य अपूर्वार्थितां प्रकरणादर्थ्यते। न च तदेकवाक्यतामन्तरेण तादर्थ्यं सम्भवति। न च हन्तिना, अपूर्वेण च पृथक् पृथगेकवाक्यता संभवति—प्रोक्षिताभ्यां हन्ति, प्रोक्षिताभ्यामपूर्वं भावयेदिति। वाक्यं हि तथा भिद्येत। तस्मादेवं द्रष्टव्यं—हन्तेर्द्वे रूपे हन्तिरूपं,तण्डुलनिर्वृत्तिप्रणाड्या चापूर्वजननव्यापारविशेषता,तत्र-वाक्यात्प्रोक्षणं प्रति प्राधान्यमापद्यमानोऽवघातः श्रौतस्य स्वरूपस्यान्यथाऽपि सम्भवात्, तेनात्मना प्राधान्यासम्भवादपूर्वजननव्यापारात्मना प्राधान्यं—प्रतिपद्यते। तद्रूपस्य विना प्रोक्षणेन निष्पत्त्यनवगमात्तत्स्वरूपप्रतिपत्तिपरश्च हन्तिशब्दः। एवमुलूखलमुसलयोरपि द्रष्टव्यम्। स्वरूपं, हन्तिसाधनरूपं च विनापि प्रोक्षणं सम्भवतीति यत्तयोर्हन्तिशब्दावगतापूर्वव्यापारविशेषं प्रति साधनत्वं, तेनात्मना प्रोक्षणसंस्कार्यत्वं गम्यते। तदेष वाक्यार्थः—येन व्यापारेण तण्डुलनिर्वृत्तिप्रणाड्याऽपूर्वं क्रियते, तं व्यापारम्प्रोक्षितेन साधनेन कुर्यादिति। तत्र नखनिर्भिन्ने चरौ दलनस्यावघातवत्तण्डुलनिष्पत्तिप्रणाड्याऽपूर्वजननव्यापारत्वात्, नखानाञ्च तत्साधनत्वात् प्रोक्षणं सिध्यति। नन्वेवमवहन्तिशब्दः, उलूखलमुसलशब्दौ च लक्षणावृत्त्या स्युः। सत्यम्। आनर्थक्याद्वरं लक्षणा। तस्मादपूर्वप्रयुक्तं प्रोक्षणम्।

वर्णकान्तरं [दीक्षणीयावाङ्नियमाधिकरणम्]

एवं वा 'यावत्या वाचा कामयेत, तावत्या दीक्षणीयायामनुब्रूयादि'

श्रा. श्रौ. १०–१–४ ति श्रुतः स्वरविशेषः किं ज्योतिष्टोमापूर्वप्रयुक्तः ? उत दीक्षणीयापूर्वप्रयुक्त इति विचारः।

तत्र—फलवत्परमापूर्वं तच्छेषत्वं ततो भवेत।
स्वापूर्वं क्रतुशेषत्वान्न स्वयं फलवद्यतः ॥ ५ ॥
फलवच्छेषता युक्ता न तु निष्फलशेषता।
तस्मात्तत्साधने रूपे स्वरभेदो विधीयते ॥ ६ ॥

उच्यते—एवमाश्रीयमाणे हि भवेल्लक्षितलक्षणा।
स्वापूर्वे लक्षणामात्रं तस्मात्तच्छेषता वरम् ॥ ७ ॥
तच्छेषत्वेऽपि धर्मस्य नानर्थक्यं प्रसज्यते।
तस्याप्यदृष्टरूपत्वात्फलापूर्वोपयोगतः ॥ ८ ॥

फलवत्परमापूर्वोपयोगित्वाद्यजमानसंस्काररूपं दीक्षणीयापूर्वं फलवदेव, न तादर्थ्येऽप्यानर्थक्यम्। अदृष्टरूपत्वाच्च तद्रूपस्य विना धर्मैरवघातादिवत्सिद्ध्यनवगमात्सम्भवति प्रयोजकत्वमिति, तादर्थ्यमेव युक्तम्। दीक्षणीया हि केनात्मना धर्मं गृह्णातीत्यपेक्षायां स्वापूर्वसाधनत्वं शीघ्रम् गम्यते. तद्द्वारन्तु परमापूर्वसाधनत्वं विलम्बितं, तस्मादत्रान्तरापूर्वप्रयुक्ताः एवंजातीयकाः।

एतेन प्रोक्षणाद्यङ्गानामुत्पवनादीनान्तज्जन्यव्रीह्यादिसमवेतापूर्वप्रयुक्तत्वं व्याख्यातम्। आरादुपकारकप्रयाजाद्यङ्गानान्तदपूर्वप्रयुक्तत्वम्—

संस्कारोऽपि ह्यदृष्टत्वादपूर्वमिति गीयते।
प्रयाजापूर्ववत्तस्मादुभयं स्यात्प्रयोजकम् ॥ ९ ॥

इति वर्णकसहितं द्वितीयं प्रोक्षणस्यापूर्वप्रयुक्तत्वाधिकरणम्।

---

फलदेवतासम्बद्धमन्त्रयोप्यपूर्वप्रयुक्तताधिकरणम् ॥ ३ ॥

## फलदेवतयोश्च ॥ ४ ॥ न चोदनातो हि तादृगुण्यम् ॥ ५ ॥

'अगन्म सुवः, सुवरगन्म, अग्नेरहमुज्जितिमनूज्जेषमि' तै. २–६ तिदर्शपूर्णमासप्रकरणपठितौ मन्त्रौ किं स्वर्गस्वरूपाग्निस्वरूपप्रयुक्तौ ? उत यद्दर्शपूर्णमासापूर्वसाध्यं स्वरूपं फलस्य, अग्नेश्च तदीयदेवतास्वरूपं, तच्छेषौ सन्तौ मन्त्रावपूर्वप्रयुक्ताविति।

तत्र स्वर्गादिशेषत्वं भवेल्लिङ्गेन मन्त्रयोः।
फलस्यादृष्टरूपत्वात्प्रधानत्वाच्च सर्वतः ॥ १० ॥

अग्न्यादेर्याच्यमानस्य फलदायित्वसम्भवात् ।
तादर्थ्यमेव मन्त्रस्य युक्तं नापूर्वशेषता ॥ ११ ॥
सत्यं फलस्य सर्वस्मात्प्राधान्यं न तु तावता ।
मन्त्रस्तद्रूपशेषः स्यादानर्थक्यप्रसङ्गतः ॥ १२ ॥

न हि मन्त्रेण प्रकाशितमात्रं फलं भवतीति प्रमाणमस्ति, तेन क्रतुमतिलङ्घ्य स्वर्गार्थत्वं तावन्मन्त्रस्यानाशङ्क्यं । प्रकरणाम्नानात्प्रकृतक्रतुशेषः संस्कारद्वारेण फलार्थः स्यात । ततश्च क्रत्वपूर्वप्रयुक्ततामेवापद्यते । न हि क्रत्वङ्गन्तदपूर्वातिलङ्घनेन फलं यावन्नेतुं युक्तम् । एवमग्न्यादेरपि फलदायित्वे सत्यपि मन्त्रेण प्रकाशितमात्रात्फललाभो निष्प्रमाणक एवेति, क्रत्वन्वयित्वेनैव प्रकाश्यत्वमङ्गीकर्त्तव्यम् । तस्मादेवं वक्तव्यं,-मन्त्रप्रकाशितफलदेवतः क्रतुः स्वापूर्वं साधयतीति । ततश्च विकृतौ फलान्तरवत्या 'मगन्म ब्रह्मवर्चसम्, ब्रह्मवर्चसमगन्म, सूर्यस्याहमुज्जितिमनज्जेषमित्यूहनीयम् । तथासति प्रकृतिवत्कृतं भवतीति ॥

इति तृतीय फलदेवतासंबद्धयोर्मन्त्रयोरपूर्वप्रयुक्तत्वाधिकरणम् ।

---

देवताधिकरणम् ॥ ४ ॥

देवता वा प्रयोजयेदतिथिवद्भोजनस्य तदर्थत्वात् ॥ ६ ॥ आर्थपत्याच्च ॥ ७ ॥ ततश्च तेन सम्बन्धः ॥ ८ ॥ अपि वा शब्दपूर्वत्वाद्यज्ञकर्मप्रधानं स्याद्; गुणत्वे देवताश्रुतिः ॥९॥ अतिथौ तत्प्रधानत्वमभावः कर्मणि स्यातस्य प्रीतिप्रधानत्वात् ॥ १० ॥

एवं तावत्फलदायित्वेऽपि न देवतायाः प्रयोजकत्वं स्वरूपेणेत्युक्तम्, इदानीं तु नास्याः फलदायित्वं, नापि प्राधान्यमिति प्रतिपाद्यते । सर्वपूर्वोक्ताक्षेपेणेदमारभ्यते, अपूर्वापह्नवात् । तदिहैतद्विचार्यते—किं यागो देवताराधनार्थः, अस्याश्चाराधितायाः फलम् ? उतापूर्वद्वारं यागस्य साधनत्वमिति ।

तत्र—इन्द्रादेः संप्रदानत्वात्कर्मणोऽपि प्रधानता ।
यागः पूजा तदङ्गं स्यादतिथेर्भोजनं यथा ॥ १३ ॥

कर्मकारकं हि क्रिययेप्सिततमम्प्रधानम्, तेनापि व्याप्यमानं संप्रदानं-ततोऽपि प्रधानं, संप्रदानं च देवता, तस्मात्प्रधानं, यागश्च देवतापूजा, सा च-

लोके पूज्यमानार्था अतिथिभोजनादिवत्, अतो देवताराधनार्थो यागः, सा चाराधिता फलमाराधयित्रे ददातीति युक्तम् । एवञ्च लौकिकप्रसिद्धपदार्थस्वभावो नातिक्रान्तो भवति । अवश्यं च यागस्यापि फलसाधनत्वं केनचिद् द्वारेणाश्रयितव्यं, स्वरूपस्य भङ्गुरत्वात । तत्र रात्रिसत्रन्यायेन वाक्यशेषमन्त्रवर्णाद्यवगता देवतातृप्तिरेव द्वारमिति कल्पयितुं युक्तं । न त्वत्यन्ताप्रतीतापूर्वकल्पनं । श्रूयते हि "तृप्त एवैनमिन्द्रः प्रजया पशुभिश्चस्तर्पयती" तै. सं. २-६-४-२ति 'दधत्पोषं रयिं मयि' तै.सं. १-३ इति शब्दवगम्यत्वाच्च देवताप्रसादस्य स एवापूर्ववद्धर्मिणां प्रयोजकः, फलसाधनं चेत्येवं प्राप्ते—

ब्रूमः—यागस्यैत्र पदश्रुत्या फलसाधनतोच्यते ।
देवतायाश्च तादर्थ्यं तन्निर्वृत्त्युपयोगतः ।। १४ ।।
यागश्च साध्यरूपत्वात्साधनत्वेन देवताम् ।
गृह्णाति सिद्धरूपा च देवता तस्य साधनम् ।। १५ ।।

प्रत्ययाभिहिता हि भावना पुरुषार्थं भाव्यमपेक्षमाणा पदगतमपि यागमयोग्यत्वादुपेक्ष्य, वाक्यादुपनीतं स्वर्गादि गृहीत्वा, तस्य साधनमाकाङ्क्षन्ती समानपदश्रुत्युपनीतं यागमविरोधात्करणं गृहीत्वा, इत्थम्भावापेक्षायां द्रव्यदेवतं भूतं भव्ययागनिर्वर्तनसमर्थं तादर्थ्येन गृह्णन्ती देवतां यागार्थां करोति, न च प्रागवगतं देवतायाः फलार्थत्वं, येन तदाराधनाय यागविधिः स्यात् । एवं शब्देन तावत् यागात्फलं गम्यते ।

यत्त्वतिथिवदित्युक्तं, युक्तं तत्र प्रमाणान्तराद्भोजनस्य तादर्थ्यावगमात् । अपि च तत्रापि नातिथिर्भोजयितुः फलं ददाति प्रीयमाणोऽपि । नह्यसौ स्वर्गादिप्रदानायेष्टे । तस्माद यागवद्भोजनादेव फलम् । एवं विशिष्टसम्प्रदानकदानेऽपि । तथा यागेऽपि । यद्यपि देवता विग्रहवती प्रतिगृह्य भुक्त्वा तृप्यति प्रसीदति च, तथापि यागादेव फलं । विग्रहवती चानित्या स्यात्ततश्च नित्यवेदविषयत्वं न स्यात् । सत्यपि विग्रहे प्रत्तस्य हविषो देवताया भोगः प्रत्यक्षविरुद्धोऽशक्योऽभ्युगन्तुं । न चाभुञ्जाना प्रसीदतीति युक्तम् ।

अत एवाप्रतिपन्नापूर्वत्यागेन देवताप्रसादादेव फलमित्येतदपि निरस्तं । न हि तस्याः प्रसादस्संभवतीत्युक्तम् । यत्त्वस्याः यागसाधनद्वारा फलनिर्वृत्त्युपयोगित्वं, तदभिप्रायादेवदेवतायाः फलदायित्ववादः, सेनापतिना ग्रामो दत्त इत्यादिवत् । तत्तन्मन्त्रार्थवादेतिहासतुराणेष्वपि देवतानामपि तपश्चरण—क्रत्वनुष्ठानब्रह्मास्त्रादिमन्त्रतश्च समीहितसिद्ध्यनुकीर्तनात्कर्मणः एव फलं गम्यते, । मन्दधियस्तु श्रद्धालवस्तात्पर्यमजानाना भ्राम्यन्तु नाम ।

किञ्च स्तेग-मण्डूकादीनां तिरश्चाम्, अचेतनानां चौषधि-वनस्पतीनाम्, अश्वानां गवां च हनुदन्तानाम्, अश्वरूपाणाञ्च कृष्णश्वेतादीनाम्, अश्वचरितानां चेङ्कार-शकृत्करणादीनां देवतात्वेन होमेषु श्रूयमाणानां को नाम फलदायित्वं श्रद्दधीत।

किञ्च सैवाग्निहोत्रदेवता दध्ना पूज्यमानेन्द्रियं ददाति, पयसा पशुमिति, को हेतुरन्यदतो वस्तुस्वभावात्, यावकभोजनानशनादिभिश्च किमिति देवतास्तृप्यन्ति, किमिति वा सुरापानादिभिः कुप्यन्ति, येनाभ्युदयं प्रत्यवायञ्च कुर्वन्ति कर्त्तुः। अथैवमादिषु कर्मण एवापूर्वद्वारं फलं, तथा सर्वत्रास्तु। तस्मादपूर्वप्रयुक्ता धर्माः।

इति चतुर्थं देवताधिकरणम्।

---

प्रोक्षणादीनामपूर्वप्रयुक्तत्वाधिकरणम् ॥ ५ ॥

द्रव्यसङ्ख्याहेतुसमुदायं वा श्रुतिसंयोगात् । ११ ॥ अर्थकारिते च द्रव्येण न व्यवस्था स्यात् ॥१२॥ अर्थो वा स्यात्प्रयोजन मितरेषामचोदनात्तस्य च गुणभूतत्वात् ॥ १३ ॥ अपूर्वत्वाद्व्यवस्था स्यात् ॥ १४ ॥ तत्प्रयुक्ते च धर्मस्य सर्वविषयत्वम् ॥ १५ ॥ तद्युक्तस्येति चेत् ॥ १६ ॥ नाश्रुतित्वात् ॥ १७ । अधिकारादिति चेत् ॥ १८ ॥ तुल्येषु नाधिकारः स्यादचोदितश्च सम्बन्धः; पृथक् सतां यज्ञार्थेनाभिसम्बन्धस्तस्माद्यज्ञप्रयोजनम् ॥ १९ ॥

वाक्यसंयुक्तानां, लिङ्गसंयुक्तानां चापूर्वप्रयुक्तिर्व्याख्याता। यत्त्वत्यन्तवलीयस्या श्रुत्या संयुक्तं, तस्य प्रकरणादपूर्वार्थत्वमत्यन्तान्याय्यमिति मन्यमानान्प्रति श्रुतिसंयुक्तानामपि अपूर्वार्थता प्रतिपाद्यते। अथवा स्वरूपातिक्रमेण साधनसम्बन्धे सूत्रादिष्वतिप्रसङ्गमाशङ्क्य निराक्रियते। दर्शपूर्णमासयोः श्रूयते 'व्रीहीन्प्रोक्षती'ति। तत्र संशयः—किं व्रीहिद्रव्यप्रयुक्तं प्रोक्षणम्? उतापूर्वप्रयुक्तमिति। यदव्रीहिपदाभिधेयं स्वरूपं, तन्मात्रपर्यवसितं प्रोक्षणं विधीयते, तन्मात्रं च क्रत्वङ्गम्? उत यत्तेषां साधनरूपं 'व्रीहिभिर्यजेते'त्यनेनावगतं, तेन प्रोक्षणं सम्बध्यते—प्रोक्षितैर्यजेतेति। स्वरूपपरत्वे प्रधानविधिविशेषणत्वाभावादतद्विशेषणस्य तद्विकारेष्वतिदेशाभावान्न प्रोक्षणस्य विकृतिष्वतिदेशः, व्रीहिमात्रं त्वतिदिश्यते, तदतिविष्टं स्वाङ्गभूतं प्रोक्षण-

मनुष्ठापयतीति विकृतिष्वपि सत्सु व्रीहिषु प्रोक्षणं स्यादेव। नीवारादिभिस्तु विनिर्वर्त्तितेषु व्रीहिषु प्रोक्षणमुद्देशादिदेशयोरभावान्नीवारादिष्वननुष्ठेयं भवति। यदा तु साधनविशेषद्वारेण प्रधानविधेरेव विशेषणं प्रोक्षणं, तदाऽयमर्थः—प्रोक्षितैर्व्रीहिभिः साध्यमानेन यागेनापूर्वं कुर्यादिति। ततः नैवारहविष्कायां भावनायां तद्वच्छब्देन प्राकृतभावनेत्थंभावे सकलेऽतिदिश्यमाने नीवारैर्व्रीहिमात्रे निर्वर्तितेऽन्यस्य तद्रूपस्यैवावस्थानान्नीवाराणां च व्रीहिस्थाने निवेशादेषोऽर्थो भवति—प्रोक्षितैर्नीवारैर्यजेतेति। ततश्च नीवारेषु प्रोक्षणं सिद्धं भवति।

तथा 'त्रीन्परिधीनि' तै. सं. १-१-५ ति मन्त्रः किं त्रित्वसंख्याप्रयुक्तः? उतापूर्वीयपरिधीयत्ताप्रकाशनार्थः सन्नपूर्वप्रयुक्त इति। इदं तु लिङ्गविनियोगत्वादिहानुदाहरणम। अतिप्रसङ्गनिराकरणपक्षे तु भवत्येवोदाहरणम्। तथा 'चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्राऽमावास्यामि' आ. प. श्रौ. २-११-५ ति अभिमर्शनं पौर्णमास्यामावास्यासमुदायप्रयुक्तम्? उतापूर्वप्रयुक्तमिति।

तथा चातुर्मास्येषु श्रूयते 'शूर्पेण जुहोति, तेन ह्यन्नं क्रियते' श. प. ब्रा. २-२-४-२३ इति। किमन्नकरणप्रयुक्तो होमोऽन्नकरणानां शूर्पदर्वीपिठरादीनामङ्गम्? उताराढुपकारकोऽपूर्वार्थ इति विचारः। ननु तृतीयानिर्देशादिह द्रव्यस्य न तत्संस्कारार्थता होमस्य शङ्कितव्या। उच्यते-'तेन ह्यन्नं क्रियते' इति हेतुनिर्देशोऽयं हिशब्दश्रुत्या गम्यते। व्याप्यश्च हेतुर्भवति, प्रधानं चाङ्गेन व्याप्यते, नाङ्गं प्रधानेन, यत्र प्रधानं तत्राङ्गं, यत्राङ्गं, न तत्र प्रधानं। तस्माद्धेतुश्रुत्या व्याप्यत्वेन धूमवदवगम्यमानमन्नकरणं प्राधान्येनावसीयत इति, होमस्तदर्थ इत्याशङ्का।

तत्र श्रुतिबलीयस्त्वाद् व्रीह्यादिद्रव्यशेषता।
प्रक्रियाऽवगताऽपूर्वशेषत्वस्यावबाधिनी ॥ १६ ॥
व्रीह्यादिरूपशेषरूपत्वे सत्यानर्थक्यमापतेत् ।
प्रोक्षणस्य विनाऽप्यस्मात्तत्स्वरूपस्य सिद्धितः॥ १७ ॥
तस्मात्साधनरूपं यद्व्रीहीणां शास्त्रचोदितम्।
तेन रूपेण संबन्धः, प्रोक्षणादेर्विधीयते ॥ १८ ॥

शक्नुवन्ति व्रीहयः शास्त्रान्तरावगतमात्मीयमपूर्वसाधनत्वं, हवीरूपत्वञ्च लक्षणया ऽवगमयितुं, तेनात्मना प्रोक्षणं गृह्णन्ति, हवीरूपस्य च विवक्षितत्वान्नातिप्रसङ्गः। यदि पुनरेकेनैव वाक्येन संस्कारः, द्रव्यञ्च विधीयते-प्रोक्षितैर्व्रीहिभिर्यजेतेति, तदापि किं सिध्यति साधनरूपान्वयः?

प्रोक्षणस्य सुतरां सिध्यतीति ब्रूमः। न हि तत्र व्रीहिसंबन्धः प्रोक्षणस्य। साधनत्वेनैवोपदिश्यमानं द्रव्यं सस्कारेण, व्रीहित्वेन च विशेष्यत इति व्यक्तः साधनसम्बन्धः। अयं हि तत्रार्थः—व्रीहिजातीयम्प्रोक्षणसंस्कृतं च यत्, तेन यजेतेति। ततश्च यवनीवारादिषु विरोधाद्व्रीहिसाधनत्वे निर्वर्तितेऽपि, प्रोक्षितसाधनता न निवर्त्तत इति, सिद्धं तत्रापि प्रोक्षणम्।

यत्र तर्हि संस्कारवाक्ये द्रव्यं निर्दिश्य, सर्वनाम्ना च तद् द्रव्यं परामृश्य यागे विनियुज्यते 'तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षे'ति। तत्र कथं? तत्रापि यद्यपि न प्राक पयसः साधनत्वं विदितं,नापि संस्कारवेलायां-गम्यते, तथाऽपि भाविविनियोगावगम्यसाधनत्वापेक्ष एवायं संस्कारविधिः, अन्यथाऽनर्थक्यात्। ननु साधनत्वं पूर्वानवगतं कथं पयसा लक्षयितुं शक्यते, न पदं प्रवृत्तिवेलायामेव स्वार्थं हित्वा साधनविशेषं लक्षयित्वा संस्कारान्वयं-प्रतिपादयतीति ब्रूमः, किं तर्हि प्रथमं पयश्शब्दः स्वार्थस्य संस्कारान्वयितारूपं वाक्यार्थं प्रतिपादयति, तद्रूपस्य च कार्यान्तरौपयिकतामन्तरेणानुपपत्तेस्तदाकाङ्क्षायामुपरितनेन वाक्येन संस्कारविशिष्टस्यैव पयसस्तच्छब्दपरामृष्टस्य कार्ये विनियोगः क्रियते। तदर्थञ्च पूर्वं विहितः संस्कार इति-पश्चादवगम्यते। तदयमर्थः—दध्यानयनसंस्कृतं पयो वैश्वदेवमिति। न ह्यवश्यं। पूर्वलक्षित एव साधनरूपे संस्कारा विधातव्याः, साधनरूपार्थाः संस्काराइत्येतावन्नः, प्रतिपाद्यं,। तच्चेवंविधेऽप्रयत्नेनैव सिध्यति, श्रुत्यैव संस्कारस्य साधनरूपान्वयात्, व्रीहीनित्यादिकन्तु लाक्षणिकं रूपम्।

नन्वेवं श्रुत्यर्थस्यैव पयसः संस्कारात्कथं लक्षणावाचोयुक्तिः ? सत्यं। व्रीहि-पयःप्रभृतीनां द्रव्याणामेव संस्कारः, स तु साधनरूपसिद्धयर्थः, न स्वरूपसिद्धयर्थः। तत्तु रूपमशाब्दमित्येतावता लक्षणावाचोयुक्तिः। तच्च रूपं यवेषु, नीवारादिषु चाविशिष्टमिति, तत्रापि प्रोक्षणादयः सिद्धा भवन्ति। तस्मात्सर्वेषामेव भूतभव्याविनियोगानां द्रव्यादीनां संस्कारा अपूर्वभावना-शेषभूतास्तद्विकृतिषु प्राकृतार्थकरेषु द्रव्यान्तरेषूहितव्याः। शूर्पहोमस्तु तृतीयानिर्दिष्टद्रव्यकरणकत्वादारादुपकारक इति, दूरापास्तं तस्य द्रव्य-प्रयुक्तत्वम्। अन्नकरणत्वं त्वर्थवादः, न हेतुरित्युक्तम्।

इति पञ्चमं प्रोक्षणादीनामपूर्वत्वप्रयुक्तत्वाधिकरणम्।



अग्निष्टोमे उपांशुत्वस्य प्राचीनपदार्थप्रयुक्तत्वाधिकरणम् ॥ ६ ॥

देशबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात्तस्य च तत्र भावात् ॥ २० ॥ यज्ञस्य वा तत्संयोगात् ॥ २१ ॥ अनुवादश्च तदर्थवत् ॥ २२ ॥ प्रणीतादि तथेति चेत् ॥ २३ ॥ न यज्ञस्याश्रुतित्वात् ॥ २४ ॥ तद्देशानां वा सङ्घातस्याचोदितत्वात् ॥२५॥

ज्योतिष्टोमे श्रूयते 'त्सरा वा एषा यज्ञस्य, तस्माद्यत्किंचित्प्राचीनमग्नीषोमीयात्, तेनोपांशु चरन्ती' मै०सं०३-८-२ ति[1]। तत्र संशयः—किमिदमुपांशुत्वं सोमयागस्य यः प्राग् भागः, तद्धर्मः सन्परमापूर्वप्रयुक्तं, ततश्च विकृतिषु तद्भागारम्भके अप्राकृतेऽपि पदार्थं ऊहितव्यम् ? उताग्नीषोमीयात्पशोर्ये प्राचीनाः पदार्थादीक्षणीयादयः तेषां धर्मः, तदवान्तरापूर्वप्रयुक्तम्। ततश्चाप्राकृते पदार्थे यूपावटस्तरणबर्हिधर्मवन्नोहितव्यमिति । तत्र वाग्यमनवदवान्तरापूर्वप्रयुक्तत्वे प्राप्ते ।

पूर्वपक्षोऽभिधीयते । यज्ञस्येति शब्दः प्राचीनशब्दस्य विशेषणं व्यवहितोऽपि प्रवृत्तिविशेषकरत्वं विधिविशेषणशेषत्वे स्यात्, त्सराशब्दविशेषणत्वे हि अप्रवृत्तिविशेषकरः स्यात् । तस्माद्यज्ञस्य यत्प्राचीनं, तदुपांश्विति सम्बन्धः । ततश्च यज्ञभागधर्मता, प्राचीनशब्दोऽपि देशं निमित्तीकृत्य वर्तमानो पदार्थेषु वर्त्तते । तथा च सति प्रथमं देशे वर्तितुमर्हति, तदतिक्रमे कारणाभावात्तद्धर्म एवोपांशुत्वं । वाग्यमनन्तु यज्ञसयोगाभावादवान्तरापूर्वप्रयुक्तं । तदिदमुक्तं 'प्रणीतादि तथेति चेत् ? न यज्ञस्याश्रुतत्वादि'ति ।

अथवाऽनेन सूत्रद्वयेनाधिकरणान्तरं प्रकृताधिकरणसिद्धान्तस्य दृष्टान्तसिद्धयर्थं तदीयपूर्वपक्षन्यायेन च, पूर्वपक्षं वक्तुमन्तरार्गभिणीन्यायेन विचार्यते । दर्शपूर्णमासयोः श्रूयते 'यज्ञं तनिष्यन्तावध्वर्युयजमानौ वाचं यच्छतः, यदध्वर्युयजमानौ वाचं यच्छतः तत्प्रजापतिभूयं गतौ यज्ञं तन्वाते, तस्मात्प्रणीताः प्रणेष्यन्वाचं यच्छती'ति । तत्रायं वाग्यमः—किं परमापूर्वप्रयुक्तः ? उतावान्तरापूर्वयुक्त ? इति संशयः । किं यज्ञभागधर्मोऽयं परमापूर्वप्रयुक्तः ? उत प्रणीताप्रणयनादूर्ध्वं हविष्कृदाह्वानात्प्राग्ये पदार्थाः प्रोक्षणादयस्ततदपूर्वप्रयुक्ता इति । यज्ञसंयोगाद् यज्ञार्थत्वे प्राप्ते—

ब्रूमः—यज्ञस्यात्र विस्तारेण संबन्धोः, न वाग्यमविषयविशेषणत्वं यज्ञस्य यो भागस्तत्र वाग्यम इति, किं तर्हि यज्ञन्तनितुं वाचं यच्छेदिति

१—तदुपाशु चरन्तीति वैदिकानां पाठः ।

वाग्यमः-इति। वाग्यमश्च प्रणिधानेनाविकलानुष्ठानार्थोऽङ्गं। तदङ्गैरपि चाविकलैर्यज्ञस्य विस्तारो भवतीत्युपपन्नोऽङ्गार्थत्वेऽपि यज्ञसंयोगः। अतस्तद्देशानां पदार्थानां साक्षादवैकल्यकरणेनोपकुर्वन्वाग्यमस्तदङ्गमेव स्यात्। भाष्येऽपि 'हविष्कृता वाचं विसृजति' प्रथमं यदुक्तमित्यादिना नात्र यज्ञशब्दः श्रूयते-इत्यन्तेन। तत्प्रत्यनुभाषणत्वेन तत्परिहारत्वेन सूत्रद्वयं व्याख्याय,'नन्वित्यादिनाऽन्तरागर्भिणीत्वेन व्याख्यातम्। एवं हि स्थितादुत्तरमित्यादि भाष्यमुपपद्यते, नान्यथा। तत्र नन्वित्यादिना पूर्वव्याख्योक्तयज्ञसंयोगाभावाक्षेपेणान्तरागर्भिणीत्वेन पूर्वपक्षमाह यज्ञसंयोगोऽत्राप्यस्तीति। 'उच्यते इत्यादिना सिद्धान्तं दर्शितवान। स्थितादुत्तरमुच्यते—यज्ञशब्दोऽत्र त्सराशब्दविशेषणम्, अव्यवधानात्। न प्राचीनशब्दस्य विशेषणं, व्यवधानात्। अपि च भागस्यैकत्वाद्यत्किञ्चिदित्यनेकापेक्षः शब्दो नावकल्पते, तस्मादग्नीषोमीयात्प्राचीनानामङ्गानामुपांशुत्वम्।

इति षष्टमुपांशुत्वस्य पदार्थधर्माधिकरणम्।

---

इष्टाकासु सकृद्विकर्षणप्रोक्षणानुष्ठानाधिकरणम् ॥ ७ ॥

अग्निधर्मः प्रतीष्टकं सङ्घातात्पौर्णमासीवत् ॥ २६ ॥ अग्नेर्वा स्याद्द्रव्यैकत्वादितरासां तदर्थत्वात् ॥ २७ ॥ चोदनासमुदायात्तु पौर्णमास्यां तथात्वं स्यात् ॥ २८ ॥

अग्नौ श्रूयते 'हिरण्यशकलैरग्निं प्रोक्षती'ति किं प्रोक्षणं सकृदेव स्यात्, उत प्रतीष्टकं भेदेनेति। यदीष्टकातिरिक्तोऽवयव्यग्निशब्दाभिधेयः, ततः सकृत्। अथेष्टका एव संहता अग्निधारणार्थेन स्थापिता अग्निशब्देनाभिधीयन्ते, ततस्तदर्थं प्रोक्षणं प्रतीष्टकं। यत्रैकावयवाकर्षणेनावयवान्तरमाकृष्यते, सन्धिश्च न दृश्यते, तत्रैव देवदत्त-घटादौ अवयव्यभ्युपगम्यते। न चेहैकेष्टकाकर्षणेऽन्यासामाकर्षणं। सन्धिश्चात्र पुरीच्छन्नानामपीष्टकानामनुमानेन दृश्यते। तस्मान्नास्त्यवयवी। पक्वामसंयोगे च न द्रव्यान्तरारम्भः इति काश्यपीयाः वै. द.। तस्मादिष्टकार्थं प्रोक्षणं प्रत्येकं स्यात्।

नैवम्। एकबुद्धिरेव हि देशकालादिभेदेऽपि अबाधितावयविद्रव्यसाधनी। सा चेहापि विद्यते। वृक्षादिषु चावयविसद्भावेऽप्याकर्षणं न दृष्टमित्यतन्त्रं तत्। अवयविसद्भावेऽपि सन्धिदर्शनं च पटादावनैकान्तिकं। तस्मात्प्रत्यक्षबलात्

पक्वामसंयोगेऽप्यस्त्याग्न्यवयवीति, तस्येदं प्रोक्षणं सकृदेव कर्त्तव्यम्। पूर्वाधिकरणे ग्रह्यज्यभ्याससमुदायात्मकज्योतिष्टोमप्रयुक्तिर्विचारिता, समुदायप्रसङ्गात् प्रोक्षणं विचार्यत इति, प्रासङ्गिकी सङ्गतिः।

इति सप्तममिष्टकासु सकृद्विकर्षण-प्रोक्षणानुष्टानाधिकरणम्।

---

उत्तमान्यानामह्नां पत्नीसंयाजसंस्थाधिकरणम् ॥ ८ ॥

पत्नीसंयाजान्तत्वं सर्वेषामविशेषात् ॥ २९ ॥ लिङ्गाद्वा प्रागुत्तमात् ॥ ३० ॥ अनुवादो वा दीक्षा यथा नक्तं संस्थापनस्य ॥ ३१ ॥ स्याद्वाऽनारभ्य विधानादन्ते लिङ्गविरोधात् ॥३१॥

द्वादशाहे श्रूयते 'पत्नीसंयाजान्तान्यहानि सन्तिष्ठन्ते, न बर्हिरनुपहरति, असंस्थितो हि तर्हि यज्ञः' इति। तत्र संशयः–किं सर्वेषामह्नां पत्नीसंयाजान्तत्वम्? उतोत्तमवर्जमिति।

तत्राविशेषात्सर्वेषां पत्नीसंयाजसंस्थितिः।
असंस्थावचनं गौणं यज्ञस्य चिरसंस्थितेः ॥ १९ ॥

स्यादेतत्। 'असंस्थितो हि तर्हि यज्ञः' इति यज्ञस्यासंस्था पत्नीसंयाजान्तत्वे हेतुः, सा च नोत्तमे अहनि। तस्माद्धेतुवशात्पूर्वेषामेव स्यात्। अथाप्ययमर्थवादः, तथाऽपि वाक्यशेषवशादेवान्त्यवर्जं पत्नीसंयाजान्तता व्यवस्थाप्यते, अञ्जनमिव घृत इति।

नैवम्। असंस्थितशब्दस्य चिरसंस्थाभिप्रायत्वेनोपपत्तेर्नाविशेषप्रवृत्तो विधिः सङ्कोचमर्हति। यथा लोके यश्चिरेण भुङ्क्ते, तत्र वक्तारो भवन्ति–नास्य भोजनं परिसमाप्यत इति, तथेहापि दीर्घकालोऽसौ यज्ञो न सन्तिष्टते इति यावत्। अतो लाघवार्थं पत्नीसंयाजात् परं शेषं लुप्यते, समग्रानुष्ठाने ह्यतिविलम्बः स्यादित्येतावानभिप्रायः। तस्मात्सर्वेषां पत्नीसंयाजान्ततेति प्राप्ते—

ब्रूमः—अपेक्षितविधानाय प्रागुत्तममयं विधिः।
मुख्यत्वसम्भवाद्वाक्यशेषस्य न च गौणता ॥ २० ॥

द्वादश यागाः सह कर्त्तव्याः। तत्र पूर्वमहःकस्मिंश्चित्पदार्थे व्यवस्थाप्य, परमुपक्रमितव्यं, तत्र कुत्र पदार्थे अवस्थानमित्यपेक्षायां। पत्नीसंयाजान्तानि-

पूर्वंपूर्वाण्यहानि कृत्वा, उत्तरमुत्तरमारभेतेत्येवं विधीयमाने, अपेक्षितविधिः भवति। चोदकश्च न बाध्येत, शेषलोपस्तु चोदकबाधेनानपेक्षितश्च विधीयेत। तस्मादयमर्थः—पत्नीसंयाजान्तान्यहानि सर्वाणि कृत्वा हारियोजानाद्यहः शेषं तन्त्रेण सर्वेषामुपरिष्ठादनुष्ठेयमिति। तस्मात्प्रागुत्तमात्पत्नीसंयाजान्तता। तथा चासंस्थितशब्दो ऽपि मुख्यो भवति, अविशेषप्रवृत्तो अपि हि विधिर्वाक्यशेषस्य मुख्यत्वाय विशेषे स्थाप्यते, किमुत यदा तस्यापि न्यायादेव विशेषविषयत्वं। कः पुनरूहोपयोगश्चिन्तायाः? पूर्वपक्षे विकृतिषु नोहः, सिद्धान्ते द्विरात्रादिषु द्वादशाहविकारेषु यदन्त्यमहर्द्वितीयं, तृतीयं वा, तत्प्रकृतौ पत्नीसंयाजान्तमपि अनुष्ठितमूहित्वा, सकलमनुष्ठीयते।

इत्यष्टमं द्वादशाहे उत्तमाहर्वर्जं पत्नीसंयाजान्तत्वाधिकरणम्।



'त्रिःप्रथमामन्वाह' इत्यादिषु स्थानधर्मताधिकरणम्॥ ९॥

अभ्यासः सामिधेनीनां प्राथम्यात्स्थानधर्मः स्यात्॥ ३२॥

दर्शपूर्णमासयोः सामिधेनीः पञ्चदश विधाय, एकादशर्चः पठित्वा, 'त्रिःप्रथमामन्वाह, त्रिरुत्तमाम्, ताः पञ्चदश सम्पद्यन्ते' तै.सं.२-५-७-१ इति श्रुतं। तत्र संशयः—किमयं त्रिरभ्यासः प्राथम्यलक्षितायाः ऋचः प्रवोवाजीयायाः धर्मः तत्कार्यार्थः। ततश्च यत्र तत्रस्था प्रवोवाजीया त्रिरभ्यसितव्या? उत—प्रथमस्थानधर्मः, तत्स्थानगतकार्यप्रयुक्तः। ततश्च प्रवोवाजीयाया अन्यापि याविकृतिषु प्रथमं पठ्यते, साऽप्यूहेन त्रिरभ्यसितव्येति।

तत्र स्त्रीलिङ्गनिर्देशादाद्याऽनेनाभिधीयते।
तस्या एव त्रिरभ्यासम्बन्धोऽत्र विधीयते॥ २१॥
उच्यते—श्रुत्या प्रथमशब्देन प्राथम्यमभिधीयते।
ऋक् तु लक्षणयोच्येत तस्मात्प्राथम्यधर्मता॥ २२॥

प्राथम्यैकार्थसमवेतस्त्रिरभ्यासो विधीयते-यत्प्रथममुच्यते तत्त्रिरिति, तच्च प्राथम्यमृगाश्रयत्वेनैव प्राप्तं, 'गुणवचनानाञ्च शब्दानामाश्रयतोलिङ्गवचनानि भवन्ती' वा, ति नित्यानुवादः स्त्रीलिङ्गनिर्देशः। न च प्राथम्यसम्बद्धपदमात्रस्य, पादमात्रस्य वा त्रिरभ्याससम्बन्धसम्भवान्न नित्यानुवादत्वं-

स्त्रीलिङ्गस्येति मन्तव्यम्। ऋच एव कार्यसमर्थाया वचनस्य प्राप्तत्वात्। 'ताः पञ्चदश सम्पद्यन्त' इति च वादात्। तस्मात्स्थानधर्मः।

इति नवमं त्रिरभ्यासस्य स्थानधर्मताधिकरणम्।

---

वृत्ति—भाष्यमतद्वयसहितमन्वारम्भणीयेष्टेः सकृदनुष्ठानाधिकरणम् ॥१०॥

इष्ट्यावृत्तौ प्रयाजवदावर्तेताऽऽरम्भणीया ॥ ३४ ॥ सकृद्वाऽऽरम्भसंयोगादेकः; पुनरारम्भो यावज्जीवप्रयोगात् ॥ ३५ ॥

वृत्तिकारमतेनाधिकरणम्

दर्शपूर्णमासप्रकरणेऽन्वारम्भणीया अम्नाता, 'आग्नावैष्णवमेकादशकपालं निर्वपेद्दर्शपूर्णमासावारप्स्यमानः, सरस्वत्यै चरुं, सरस्वते चरुमि'ति। सा किं दर्शपूर्णमासावृत्तावावर्त्तेत ? उत सकृदेवादौ स्यादिति संशयः।

आवृत्तौ हि प्रधानानामङ्गावृत्तिरसंशया।
दर्शाद्यङ्गमियन्तस्मादावर्त्तेत प्रयाजवत् ॥ २३ ॥

उच्यते—आरम्भद्वारकं त्वेतदङ्गं साधारणश्च सः।
तस्य साधारणत्वेन सापि साधारणी भवेत् ॥ २४ ॥

आरप्स्यमानसंयोगादारम्भाङ्गमिष्टिः, न साक्षाद्दर्शपूर्णमासाङ्गम्। आरंभश्चेदं मया कर्त्तव्यमित्यध्यवसायः। स च सर्वप्रयोगसाधारणः। सर्वो ह्यग्नीनाधायैवमध्यवस्यति यावज्जीवं मया दर्शपूर्णमासौ पर्वणि पर्वणि कर्तव्याविति। तस्मादारम्भसाधारण्यात्तदङ्गभूताऽन्वारम्भणीयाऽपि साधारणी, न प्रतिप्रयोगमावर्त्तनीया—इति।

भाष्यमतेनाधिकरणम्।

एवं वृत्तिकारमतेनाधिकरणं व्याख्याय, तत्रापरितोषाद् व्याख्यानन्तरं भाष्यकारेण कृतं। कस्य हेतोरपरितोषः ? नाध्यवसायवचनोऽयमारम्भशब्दः, प्रथमप्रवृत्तिवाची हि लोके प्रसिद्धः। यद्यपि चाध्यवसायवाची स्यात्, तथापि यद्यदा कार्यमुपस्थितं, तस्यैव तदाऽध्यवसायः, न च यावज्जीविकाः प्रयोगा युगपदुपस्थिताः, नह्ययमेकः प्रयोगोऽभ्यस्तरूपः, पूर्वकालीनन्तु जीवनं दर्शानुष्ठाने निमित्तं। तस्मिन्नागते नैमित्तिकं समाप्तं कृत्वा चरितार्थे पुरुषे पुनस्ताद्दशनिमित्तवशात् नैमित्तिकमापतितमिति, पुनः क्रियते।

यथैकस्मिन्पुत्रे जाते वैश्वानरीं निरुप्य, पुत्रान्तरजन्मन्यपि पुर्निर्वपति, ताहृगेतत्। तस्मात्प्रतिप्रयोगमध्यवसायभेदात्तदङ्गमारम्भणीयाऽऽप्यावर्तेतेति-तत्सिद्धान्तसिद्धिरिति ।

वार्तिकमतेनाधिकरणम् ।

तस्मादेवं व्याख्यायते—किं प्रथमस्याग्न्यन्वाधानात्मकस्य पदार्थस्याङ्ग-मियं? उत दर्शपूर्णमासावारम्भमाणस्य प्रथमं प्रवर्तमानस्य पुरुष-स्याङ्गमिति ?

तत्र—पुरुषार्थत्वपक्षे हि फलक्लृप्तिः प्रसज्यते ।
तेनान्वाधानशेषः स्यात्स ह्यारम्भोऽनयोर्यतः ॥ २५ ॥
तस्याऽऽवृत्तौ तदङ्गत्वादेषाप्यऽऽवृत्तिमश्नुते ।
प्रधानवशवर्तित्वादेवं प्राप्तेऽभिधीयते ॥ २६ ॥
न खल्वारम्भशब्देन पदार्थः कश्चिदुच्यते ।
यदेव ह्यप्रवृत्तस्य कर्त्तुराद्यं प्रवर्तनम् ॥ २७ ॥
तत्रायं वर्त्तते शब्दस्तद्योगात्तु पदार्थधीः ।
आरमप्स्यमानशब्दस्तत्कर्त्तुश्श्रुत्यैव वाचकः ॥ २८ ॥
लृट्प्रत्ययोऽपि श्रुत्यैत्र तदर्थस्याभिधायकः ।
आद्या प्रवृत्तिरेकैव बह्वृचो नैकस्य कर्मणः ॥ २९ ॥

प्रथमप्रवृत्तिविषयतया ह्यन्वाधानमनेन प्रतिपाद्यते, न श्रुत्या । न च—श्रुतिसम्भवे लक्षणा युक्ता । तस्मान्नाग्न्यन्वाधानेन सम्बन्धः । दर्शारम्भकर्त्तुः पुरुषस्य शानचाऽभिहितस्य संस्कारिकेयम्, आरम्भार्थतया लृट्प्रत्ययेन क्रियार्थायां क्रियायामुपपदे विहितेनेयं प्रतिपाद्यते । अतो न पुरुषार्थत्वेऽपि फलकल्पना । न चैकस्य कर्मणो बह्वयः प्रथमप्रवृत्तयः सम्भवन्ति, किं त्वेकैव । ननु द्वितीयादीनपि प्रयोगानसावारभत एव ? सत्यं, प्रयोगानारभते, न तु दर्शपूर्णमासावारभते । दर्शपूर्णमासारम्भाङ्गं त्वियं । प्रथमप्रवृत्तिश्चारम्भः; न च द्वितीयादि प्रयुञ्जानः प्रथमं प्रयुङ्क्ते इति शक्यते वक्तुं । तस्मादा-रम्भाङ्गत्वात्, तस्य चावृत्त्यभावादारम्भणीया नावर्तते ।

इति दशमं वृत्ति-भाष्यमतद्वयसहितमन्वारम्भेष्ट्यधिकरणम् ।

निर्वापमन्त्रे सवित्रादिशब्दानामनूहाधिकरणम् ॥ ११ ॥

**अर्थाभिधानसंयोगान्मन्त्रेषु शेषभावः स्यात्तत्राचोदितमप्राप्तं; चोदिताभिधानात् ॥३६॥ तत श्चावचनं तेषामितरार्थं प्रयुज्यते ॥३७॥**

दर्शपूर्णमासयोर्निर्वापमन्त्रः 'देवस्य त्वा सवितुः प्रसवे, अश्विनोर्बाहुभ्यां, पूष्णो हस्ताभ्यामग्नये जुष्टं निर्वपामी' तै. सं. १. १.४–२ ति । तत्र सवित्रश्विपूषशब्दाः किं समवेतदेवताप्रकाशनार्थाः, ततश्च विकृतावूहितव्याः ? उतासमवेतवचना निर्वापविशेषणमात्रार्था नोहितव्या इति ?

तत्र दृष्टार्थतालाभाद्देवतावाचिता भवेत् ।
निर्वापस्य प्रशंसार्थाः सन्तोऽदृष्टार्थतामियुः ॥ ३० ॥
सवित्रादिपदैस्तस्मादग्न्यादिरभिधीयते ।
अग्निना वा विकल्प्येत सविता मान्त्रवर्णिकः ॥ ३१ ॥
उत्पत्तौ तद्धितोक्तेन न मन्त्रोक्तो विकल्प्यते ।
वैषम्यान्न सवित्रादिपदमग्नेश्च वाचकम् ॥ ३२ ॥
मन्त्रवावचानि चैतानि भिद्येरन् प्रतिदैवतम् ।
जुष्ट–निर्वापशब्दौ च भजेतामनुषङ्गिताम् ॥ ३३ ॥
सर्वश्च निर्वपाम्यन्त एकमन्त्रः प्रतीयते ।
जुष्टादिः सकृदाम्नातो न सहेतानुषञ्जनम् ॥ ३४ ॥

तस्मान्निर्वापमेवैते प्ररोचयितुमनुष्ठानकाले प्रशंसितुं प्रकाशयन्तीति नोहितव्याः ।

इति एकादशं निर्वापमन्त्रे सवित्रादिपदानामनूहाधिकरणम् ।

---

अग्नये जुष्टमिति मन्त्रे अग्निशब्दस्य विकृतावूहाधिकरणम् ॥ १२ ॥

**गुणशब्दस्तथेति चेत् ॥ ३८ ॥ न समवायात् ॥ ३९ ॥**

तस्मिन्नेव मन्त्रे 'अग्नये जुष्टं निर्वपामी'त्यग्निशब्दोऽपि किमसमवेतवचनो नोहितव्यः ? उत समवेतवचन ऊहितव्य इति ।

तत्रायं समवेतोऽग्निरस्मिन् कर्मणि यद्यपि ।
मन्त्रे त्वत्राग्निशब्दो न समवेताभिधायकः ॥ ३५ ॥

जुष्टमिति भूतकालनिर्देशादग्निना यत्सेवितं, तदुच्यते । न च निर्वापवेलायामग्निना सेवितं द्रव्यं । तस्माज्जुष्टशब्दस्तावदसमवेतवचनः, तद्विशेषणं चाग्निपदम् । अतोऽसमवेतवचनं सवित्रादिपदवत्प्रशंसार्थं कीर्तितमित्यनूहः ।

उच्यते–नात्र जुष्टस्य निर्वापो मन्त्रेणानेन कथ्यते ।
निर्वापकरणात्त्वत्र कीर्त्यते जुष्टभावना ॥ ३६ ॥

नायमर्थः —यज्जुष्टम्, तस्य निर्वापं करोमीति । किं तर्हि निर्वापेणाग्नये-जुष्टं करोमीति । यथा जुष्टं भवति, तथा करोमीत्यर्थः । तस्मात्समवेतवचनत्वादग्निशब्दस्योहः ।

सूत्रस्थगुणशब्दस्य गौणार्थशब्दपरतया वर्णकम् ।

'एवं वा । यस्तु मुख्यवृत्त्या समवेतं न वदति, यथा 'धान्यमसि धिनुहि-देवानि' तै. सं. १-१-६-१० ति तण्डुलेषु धान्यशब्दस्सतुषद्रव्यवचनः, स-किमसमवेतवचनत्वानूह्यः ? उतोह्य इति संशये, ? समवेतप्रकाशनासामर्थ्याद-दृष्टार्थोऽय तस्मादनूह्यः ।

लक्षणया तु प्रकृतिवदुपचाराद्विकृतिं प्रकाशयन्नादृष्टार्थः कल्पयितुं-न्याय्यः । तस्मात्तण्डुलानेव प्रकृतिशब्देन 'शालयो भुज्यन्त' इतिवत्प्रकाशयतीति, तरसमये हविषि शाक्त्यानाभयने 'मांसमसी'त्यूहितव्यम्, अर्थिकी च प्रकृतौ धान्यशब्दाम्नानाल्लक्षणा । न तु सैव विवक्षिता, विकृतौ लक्षणाकारणा-भावान्मुख्य एव मांसशब्दः प्रयोक्तव्यः, न मृगशब्दः ।

वर्णकसहितद्वादशमग्निशब्दस्योहाधिकरणम् ।

---

इडोपह्वानमन्त्रे यज्ञपतिशब्दस्यानूहाधिकरणम् ॥ १३ ॥

चोदिते तु परार्थत्वाद्विधिवद्विकारः स्यात् ॥ ४० ॥ विकार-स्तत्प्रधाने स्यात् ॥ ४१ ॥

दर्शपूर्णमासयोरिडानिगदे श्रुतम्, 'उपहूता मनुष्याः, ये यज्ञपतिं वर्धा-नि' ३-५-१२-२ ति । किमेतत् यज्ञपतिवृद्धिप्रकाशनेन प्रोत्साहकरणेन तत्स-स्कारार्थं सदनेकयजमानकेषु कर्मसूहितव्यम् ? उतेडास्तुत्यर्थो यज्ञपतिशब्दो-नोहितव्य इति ?

इडामन्त्रैकवाक्यत्वादिडास्तुत्यर्थता भवेत् ।
स्वामिवृद्ध्यर्थता त्वस्य सामर्थ्येनावगम्यते ॥ ३७ ॥
वाक्याच्च बलवल्लिङ्गं दृष्टं चेह प्रयोजनम् ।
उत्साहकरणात्स्तुत्यामदृष्टार्थत्वमापतेत् ॥ ३८ ॥

यजमानेषु बहुषु सर्वसंस्कारसिद्धये ।
ऊहो यज्ञपतीन्वर्द्धानित्येवं प्राप्त–उच्यते ॥ ३९ ॥

प्रत्यक्षादेव वचनादिडोपह्वानशेषता ।
कृत्स्नस्य निगदस्योक्ता तन्मध्यापतितं ततः ॥ ४० ॥

न पृथग् भवितुं शक्तमतः स्तुत्यर्थता वरं ।
वृद्धिप्रकाशने कल्प्यं लिङ्गेन विनियोजनम् ॥ ४१ ॥

यच्छब्देन च पारार्थ्यं वृद्धेः श्रुत्याऽभिधीयते ।
लिङ्गादपि ततो वृद्धेर्न स्वार्थेन प्रकाशनं ॥ ४२ ॥

सत्रेषु चैकयजमानवृद्धिप्रकाशनेनेडास्तुतिसिद्धेर्नोहः । यत्र पुनर्यजमानस्य प्राधान्यं, न पारार्थ्यं । यथा सूक्तवाके, आयुराशास्तेऽयं यजमानः, इति, तत्र भवत्येवोहः । तदिदमुक्तं 'विकारस्तत्प्रधाने स्यादि'ति । तदिदं-पूर्वस्य परार्थग्रहणस्य प्रत्युदाहरणार्थं सूत्रम् ।

प्रत्युदाहरणत्वेन व्याख्यातस्य अधिकरणान्तरत्वेन व्याख्यानम् ।

अथवाऽधिकरणान्तरं । सूक्तवाके 'अयं यजमान आयुराशास्ते' इति–यजमानशब्दः, किं सत्रेषूहितव्यः, नेति । प्रहरणाङ्गत्वात्सूक्तवाकस्य तद्गतमायुरादिकीर्तनं यज्ञपतिवृद्धिवत्स्तुत्यर्थम् । अतो नोहः ।

उच्यते—सर्वाण्येतानि आयुरादीनि श्रुतिविनियुक्तसकलसूक्तवाककरणत्वान्यथानुपपत्त्या प्रस्तरप्रहरणस्य फलानि कल्प्यन्ते । क्रियाम्, तत्सम्बन्धि वा प्रकाशयतो मन्त्रस्य करणताऽवकल्पते। तस्मात्प्रहरणसाध्यम्-यजमानफलप्रकाशनमस्य कार्यम् । सत्रेषु यस्यैव यजमानस्य फलं नोच्यते, तस्यैव न सूक्तवाकः करणं स्यात्, न च फलं प्राप्नुयात् । तस्मादूहः ।

इति त्रयोदशं भाष्योक्तमधिकरणान्तरम् ।

---

सुब्रह्मण्याह्वाननिगदे हरिवच्छब्दस्यानूहाधिकरणम् ॥ १४ ॥

असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत ॥ ४२ ॥ कर्माभावादेवमिति चेत् ॥ ४३ ॥ न परार्थत्वात् ॥ ४४ ॥

ज्योतिष्टोमे देवताप्रकाशनार्थः सुब्रह्मण्यानिगदः'इन्द्र आगच्छ, हरिव आगच्छे' षड्व. ब्रा० १–१ त्यादिः । सोऽग्निष्टुत्यतिदिष्टः, तत्र 'अग्नेयी-

सुब्रह्मण्ये'ति वचनादिन्द्रपदस्थानेऽग्निपदं निक्षिप्यते। हरिवदादिशब्दा अपि-किमूहितव्याः ? नेति संशयः। तदर्थं च किं समवेतवचनाः, नेति ? तत्र 'पूर्व-पक्षापरपक्षौ वा इन्द्रस्य हरी 'इत्यादिभिरेते गुणा इन्द्रे सन्तीति गम्यते, सन्ति-चेत्स्वगुणद्वारेणेन्द्रमेव प्रकाशयितुममीषामुच्चारणं दृष्टार्थं भवति। तेना-ग्निरपि स्वगुणद्वारेण प्रकाश्यत इति, हरिवदादिशब्दानपोद्धृत्य रोहिताश्वा-ला. श्रौ. सू. ३-३-६ दिशब्दा ऊहितव्या इति प्राप्ते—

ब्रूमः—सत्स्वेतेषु गुणेष्वेवं तत्सद्भावे तु न प्रमा।
वाक्यशेषास्त्वदुक्ता ये स्तुतिमात्रपरा हि ते ॥ ४३ ॥

तस्माददृष्टार्थमेवाविद्यमानैरेव गुणैः सम्बद्धेन्द्रः प्रकाश्यत इति, अग्निरपि तैरेव गुणैः संम्बद्धव्य इत्यनूहः।

एवं वेति भाष्योक्तं वर्णकान्तरं।

एवं वा। अथवेदमन्यदुदाह्रियते। ज्योतिष्टोमे एकहायन्या मन्त्रः 'तस्यै-शृतं, तस्यै दधीत्यादिः। स साद्यस्के त्रिवत्सेऽतिदिष्टः किमूहितव्यः, नेति-संशये ? यद्यप्येकहायन्यवस्थायां न विद्यन्ते, शृतादयः, तथापि भावित्वेनापि तावत्सम्भवद्भिः स्वगुणैरेकहायन्येव प्रकाश्यते, दृष्टार्थत्वात्। त्रिवत्से तु अभावादूहः।

नैतदेवं। कर्माङ्गभूतायामेकहायन्यवस्थायां तावन्न सन्त्येव। भावित्व-मपि नैकान्तिकम्, मरणसम्भवात्। अतो यथाकथंचित्प्ररोचनार्थं कीर्त्यन्ते। तावच्च साण्डेऽपि सम्भवति, साण्डादपि या गौर्जनिष्यते, तस्या एतेऽवाप्य-मानाः साण्डादेवावाप्ता भवन्तीति। तस्मादनूहः।

इति चतुर्दशं वर्णकसहितं सुब्रह्मण्यानिगदे हरिवदादिशब्दानामनूहाधिकरणम्।

---

सारस्वत्यान्मेष्यामध्रिगुवचनानूहाधिकरणम् ॥ १५ ॥

लिङ्गविशेषनिर्देशात्समानविधानेष्वप्राप्ता; सारस्वती स्त्रीत्वात् षश्वभिधानाद्वा; तद्धि चोदनाभूतं पुंविषयं; पुनः पशुत्वम् ॥४६॥ विशेषो वा तदर्थनिर्देशात् ॥ ४७ ॥ पशुत्वं चैकशब्द्यात् ॥ ४८ ॥ यथोक्तं वा सन्निधानात् ॥ ४९ ॥

ज्योतिष्टोमे सवनीयाः पशवः 'आग्नेयमजमग्निष्टोम आलभेत, ऐन्द्राग्न-मुक्थ्ये द्वितीयम्,ऐन्द्रं वृष्णिं षोडशिनि तृतीयं, सारस्वतीं मेषीं चतुर्थीमतिरात्रे' मै० सं० ३-९-५ इति। तत्र पशुधर्मा यदा सर्वेषां साधारणाः, तदा-किमध्रिगुवचनं मेष्यां भवति, उत नेति संशये, प्रकरणाविशेषात् 'प्रास्मा अग्निं भरते' तै० ब्रा० ३-६-६१ ति पुंलिङ्गस्यास्मैशब्दस्य नियतलिङ्ग-पशुशब्दाभिधेयपशुत्वाभिप्रायेण प्रास्मै पशव इत्येवं स्त्रियामप्युपपत्तेर्लिङ्ग-विरोधाभावात्, तस्यामपि स्यादध्रिगुवचनमिति प्राप्ते—

अभिधीयते—पशुशब्दश्रुतावेवं भवेन्न त्विह स श्रुतः।
तस्मात्प्रयोगकाले यदपरोक्षतया स्थितम् ॥ ४४ ॥
द्रव्यं तत्र प्रयुक्तोऽयं पुंल्लिङ्गं वदितुं क्षमः।
न स्त्रीद्रव्यमतो मेष्यामशक्तेर्न प्रवर्त्तते ॥ ४५ ॥

तेन सामानविध्यपूर्वपक्षेऽध्रिगोर्मेष्यामप्रवृत्तिः, सिद्धान्ते त्वग्निषोमीयार्थत्वाद्धर्माणामतिदेशेन पश्वन्तरगमनादूहेन प्रवृत्तिः।

इति पञ्चदशं सारस्वत्या मेष्यामध्रिगुवचनस्यानूहाधिकरणम्।

—:-o-:—

यज्ञायज्ञीये गिराशब्दस्य स्थाने इरापदस्यैव कर्तव्यताधिकरणम् ॥ १६ ॥

आम्नातादन्यदधिकारे, वचनाद्विकार स्यात् ॥ ५० ॥ द्वैधं वा तुल्यहेतुत्वात्सामान्याद्विकल्पः स्यात् ॥ ५१ ॥ उपदेशाच्च साम्नः ॥ ५२ ॥ नियमो वा श्रुतिविशेषादितरत्सप्तदश्यवत् ॥५३॥

साम्नामिदानीमूहमारिप्समानस्तदुपोद्घातं चिन्तयति। तानि ह्यक्षरान्तरेषु समाम्नातानि अक्षरान्तरेषूह्यन्ते। तत्रेह गिरापदगीतेरिरापदे-स्थानापत्त्या प्राप्तिं वक्तुं, स्थानापत्तिमेव चिन्तयति। ज्योतिष्टोमे यज्ञायज्ञीये श्रूयते 'न गिरा गिरेति ब्रूयात्, ऐरं कृत्वोद्गेयमि' तां० ब्रा० २-६-१० ति। किमिरापदस्य गिरापदस्थानापत्तिः पाक्षिकी-गिरापदम्, इरापदं वा प्रयोक्तव्यम्? उत नियता स्थानापत्तिः, इरापदमेव प्रयोक्तव्यमिति।

'तत्रेरापदमात्रं वचनेन विधीयते, नोद्गानसम्बन्धः,स्तोत्रसम्बन्धो वा। प्रकरणात्तु स्तोत्राङ्गता भवति, तदङ्गभूतस्य च तत्साधनभूतयज्ञायज्ञीयगानसम्बन्धः प्राप्त एवानूद्यते, ततश्च काल्पनिकमेव स्तोत्राङ्गत्वम्,

गानसम्बन्धश्च । गिरापदस्यापि चास्त्येव काल्पनिकमङ्गत्वमिति, अविशेषादुभयोर्विकल्पः ।

नैतदेवम् । इरापदस्य हि प्रकरणसनाथया श्रुत्याऽग्निष्टोमस्तोत्रसाधनभूतोद्गानसम्बन्धित्वेन विधीयमानस्य श्रुत्या गानसम्बन्धः, प्रकरणाच्च स्तोत्राङ्गत्वं । गिरापदस्य तु प्रगाथैकवाक्यतया गानसम्बन्धः स्यात, क्रमाच्च स्तोत्राङ्गत्वं । स्तोत्रक्रमेण हि ज्योतिष्टोमप्रकरणे पठ्यमानासु ऋक्षु यज्ञायज्ञीयप्रगाथोऽग्निष्टोमस्तोत्रक्रमे पठ्यत इति, तदेकदेशस्य गिरापदस्यापि क्रमात्तदङ्गत्वं, क्रमाच्च प्रकरणं बलीयः । श्रुतिश्च वाक्यात् बलीयसी ।

अपि च गिरापदस्याम्नानमात्रं, न विधिः। इरापदं तु प्रत्यक्षविहितम्, अतोपि बलवत् । ननु च 'यज्ञायज्ञीयेन स्तुवीते'ति प्रत्यक्षमेव यज्ञायज्ञीयंस्तोत्राङ्गत्वेन विहितं । सत्यं । साम्नः प्रत्यक्षम्, ऋचस्त्वनुपपत्त्या कल्प्यम्, एतदेव हि साम्नः स्तुतिसाधनत्वं—यदगुणाभिधानपराणामृगक्षराणामभिव्यक्तिः । 'यज्ञायज्ञीयेन स्तुवीतेत्यस्यायमर्थः—यज्ञायज्ञीयाभिव्यक्तैर्ऋगक्षरैः स्तुवीतेति । तत्रापि समाम्नानसिद्धाक्षराभिव्यक्तिरेव सति सम्भवेऽङ्गीकरणीया, नान्यकल्पनं युक्तमिति, यज्ञायज्ञीयप्रगाथस्यैवायं स्तुतौ विनियोगः—इति प्रकल्प्यते । तत्रापि सर्वपदानां साधारण्येन विनियोगः, न विशेषतो-गिरापदस्यैव । इरापदस्य तु साक्षाद्विशेषरूपेण विनियोग इति बलवत्ता ।

इति षोडशं यज्ञायज्ञीये गिरापदस्थाने इरापदस्य कर्तव्यत्वाधिकरणम् ।

---

## इरापदस्य प्रगीतताधिकरणम् ॥ १७ ॥

अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशः स्यात् ॥५४॥ यत्स्थाने वा तद्गीतिः स्यात्पदान्यत्वप्रधानत्वात् ॥ ५५ ॥ गानसंयोगाच्च ॥ ५६ ॥ वचनमिति चेत् ॥ ५७ ॥ न तत्प्रधानत्वात् ॥ ५८ ॥

नियतमिरापदमिति स्थिते, किं तदप्रगीतं प्रयोक्ष्यम् ? उत प्रगीतमिति-संशयः ।

तत्र—न प्रगाणं भवेत्कस्मादप्रगीतस्य चोदनात् ।
प्रगीता तद्धितोत्पत्तावायीरीयं प्रसज्यते ॥ ४६ ॥

यदि तावदैरमिति स्वार्थे तद्धितः, तत इरां कृत्वोद्गेयमित्येतावानर्थः-स्यात् । अप्रगीतात् खल्विरापदादयन्तद्धितः, प्रगीतात्तु तदुत्पत्तौ 'वृद्धं तालव्यं

प्रथमस्वरं चे'त्येवमिकारस्यायीभावे सति 'वृद्धाच्छः' इति छप्रत्ययोत्पत्तेरायीरीयिमिति रूपं स्यात्। ऐरमिति रूपमप्रगीताद्रुत्पत्तौ सिध्यति। तस्मादप्रगीतस्यैवोपदेशादप्रगाणं स्यात्। अथापि विकारार्थोऽयन्तद्धितः, तथाऽपि-प्रगाणाप्रगाणयोरुभयोरप्यक्षरविकारत्वादन्यतरावधारणप्रमाणमन्यन्मृग्यम्। ततश्चेरापदे विहिते यत्प्राप्तं प्रगाणमप्रगाणं वा तस्यैवायमनुवाद इत्यापद्यते। तद्विधिना चाप्रगाणमेव प्राप्तं, तथाभूतस्योपदेशात्। तस्मादप्रगाणम्—

उच्यते—गिरापदस्य यत्स्थानं तत्र हीदं विधीयते।
इरापदमतस्तस्य या गीतिस्तां लभेत तत्॥ ४७॥

सत्यमप्रगीतात्तद्धितः, न त्वप्रगाणं विधीयते। पदान्तरविधिपरं हीदंवाक्यं नाप्रगाणं, प्रगाणं वा स्पृशति, तत्तु पदान्तरं गिरापदस्थाने विहितंस्थानापत्त्या तद्गीतिं लभमानं न केनचिद्वार्यते। यज्ञायज्ञीयसाध्या हि स्तुतिः, समस्तञ्च साम यज्ञायज्ञीयं, नैकदेशविकलं। तत्र गिरापदे पदान्तरोपदेशान्निवृत्तेर्यस्तद्गतो गीत्यंशः, स गेयमपेक्षते, इरापदमपि सामसाध्यस्तुतौ सामसंस्कार्यतामन्तरेण साधनीभवितुमशक्तं संस्कारकं सामांशमपेक्षते, तयोर्नष्टाश्वदग्धरथवत्सम्बन्धः*। तस्मात्प्रगीतं प्रयोक्तव्यम।

इति सप्तदशमिरापदस्य प्रगीतताधिकरणम्।

इति शास्त्रदीपिकायां नवमस्य प्रथमः पादः।

## अथ द्वितीयः पादः।

### गीतीनां सामनामताधिकरणम्॥ १॥

सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम्॥ १॥ तदुक्तदोषम्॥ २॥

सामशब्दः, तद्विशेषवचनाश्च रथन्तरादिशब्दा न प्रगीतस्य मन्त्रस्यवाचकाः, किन्तु गीतिमात्रस्यैवेति सप्तमे यदुक्तं, तदेवेदमुत्तरविवक्षयास्मार्यते।

एवं वेतिभाष्योक्तं वर्णकान्तरम्।

एवं वा। योऽयमूहो नाम ग्रन्थविशेषश्छन्दोगैः पठ्यते, 'कया नश्चित्रा' आभुवो वा' इत्यादिः, स किं नित्यः, अथानित्यो वा—पौरुषेयः, अपौरुषयो-वेति।

कर्तृस्मरणाभावादध्यायानध्यायाद्याचाराच्छुश्रूषाराधितगुरुमुखाच्च प्रतिपत्तेर्वेदत्वप्राप्तौ—

उच्यते—ऊहसमाख्यानादनित्यत्वं, न ह्यध्ययनसिद्धस्योहत्वं घटते। किञ्च 'यद्योन्यां तदुत्तरयोर्गायती'त्यतिदेशवचनाद्योनावध्ययनसिद्धस्योत्तरयोरनुष्ठानावगमात् पौरुषेयत्वं विस्पष्टं। न हि तिसृष्वप्यधीतस्य 'यद्योन्यां तदुत्तरयोरि'ति वादो घटते, कर्तुस्तु अस्मरणमनादरादप्युपपद्यते। न ह्यत्र पुरुषप्रत्ययाधीनमनुष्ठानं, वचनादेवोत्तरयोर्गानसिद्धेः, ऋक्सामानाञ्च पृथक पृथक् वेदत्वात्। सत्यपि संसर्गस्य पौरुषेयत्वेऽध्यायाद्यादरः। तस्मात् पौरुषेयत्वान्न्याय्यं संगृह्य, अन्याय्यं त्यक्तव्यमिति न्यायतः कीदृशमनुष्ठानं भवतीति चिन्तनीयम्।

इति प्रथमं वर्णकसहितं सामशब्दादीनां गीतिवाचित्वाधिकरणम्।



सामनः ऋक्संस्कारकर्मताधिकरणम् ॥ २ ॥

कर्म वा विधिलक्षणम् ॥ ३ ॥ तद्गुद्रव्यं वचनात्पाकयज्ञवत् ॥ ४ ॥ तत्राविप्रतिषिद्धो द्रव्यान्तरे व्यतिरेकः प्रदेशश्च ॥५॥ शब्दार्थत्वात्तु नैवं स्यात् ॥ ६ ॥ परार्थत्वाच्च शब्दानाम् ॥ ७ ॥ असम्बन्धश्च कर्मणा शब्दयोः पृथगर्थत्वात् ॥ ८ ॥ संस्कारश्च प्रकरणेऽग्निवत्स्यात् प्रयुक्तत्वात् ॥ ९ ॥ अकार्थत्वाच्च शब्दानामप्रयोगः प्रतीयेत ॥ १० ॥ आश्रितत्वाच्च ॥ ११ ॥ प्रयुज्यत इति चेत् ॥ १२ ॥ ग्रहणार्थं प्रतीयेत ॥ १३ ॥

सामानि किमृचं प्रति प्रधानभूतानि? उत तत्संस्कारार्थानि-गुणभूतानीति विचारः? तत्राकर्मकालप्रयोगात् प्राधान्यं, संस्कारार्थत्वे ह्यक्षराभिव्यक्तिरेषां कार्यं स्यात्, सा च कर्मकाल एवोपयुज्यत इति, अकर्मकाले प्रयोगो न स्यात्। ननु वचनादकर्मकाले गानं भविष्यति 'गर्भाष्टमे वर्षे उपनयीत, श्रावण्यां पौर्णमास्यामुपाकृत्य स्वाध्यायमधीयीते' आ० ध० प्र० १-३-१ ति'। एवं तर्ह्यदृष्टार्थतैव बलादापद्यते। न ह्यकर्मकाले प्रयुक्तं साम कर्मौपयिकीमभिव्यक्तिमलं भवति कर्त्तुम्। अथादृष्टरूपः संस्कारः, ततोऽकर्मकाले संस्कृतानां कर्मकाले पुनः संस्कारोऽनर्थक इति, ऋतुमध्ये सामानि न

प्रयुज्येरन् । अथाकर्मकाले, प्राधान्यं, कर्मकाले तु संस्कारः, तदाऽर्धवैशसम्* । तस्मात्प्रधानकर्म साम, बर्हिःप्रयोगः फलार्थः, क्रतुमध्ये तु क्रतोराराद्दुपकारक इति प्राप्ते—

उच्यते—अक्षराणामभिव्यक्तिः साम्नां दृष्टं प्रयोजनम् ।
अक्षरैश्चाप्यभिव्यक्तैः स्तुतिः क्रत्वङ्गचोदिता ॥ ४८ ॥
एवं दृष्टे फले लब्धे नादृष्टफलकल्पना ।
ननु चाविनियुक्तत्वादक्षराणां न संस्क्रिया ॥ ४९ ॥
सक्तूनामिव होमेन नैवं दृष्टफलत्वतः ।
प्रयोजनं न सक्तूनां दृश्यते श्रूयतेऽपि वा ॥ ५० ॥

यथोक्तं भाष्यकारेण 'न होमसंस्कृतानां सक्तूनामन्यत् प्रयोजनं श्रूयते, नापि दृश्यते' भा० पृ० ३३५ इति । दृश्यते त्वक्षराणां प्रयोजनमिति वैषम्यं। प्रयोजनवत्त्वं संस्कार्यत्वे हेतुः, न विनियोगः । तथाच ग्रहणावेक्षणसम्मार्जनानामविनियुक्तानामपि मन्त्रप्रकाशनसंस्कार्यत्वमिष्टम्। अपि चोत्तराग्रन्थे- क्रत्वर्थेन स्तोत्रक्रमेणर्चां पाठादस्त्येव विनियोगः । तस्मात्संस्कारकर्माणि सामानीति । यत्त्वकर्मकाले गानं, वाचनिकं तच्छिक्षार्थतया रथहस्त्यादियोगवत्[1] ।

इति द्वितीयं साम्नामृक्संस्कारकर्मताधिकरणम् ।

---

तृचे प्रत्यृचं कृत्स्नसाम्नः समापनाधिकरणम् ॥ ३ ॥

**तृचे स्याच्छ्रुतिनिर्देशात् ॥१४॥ शब्दार्थत्वाद्विकारस्य ॥१५॥ दर्शयति च ॥ १६ ॥ वाक्यानां तु विभक्तत्वात्प्रतिशब्दं समाप्तिः स्यात्संस्कारस्य तदर्थत्वात् ॥ १७ ॥ तथा चान्यार्थदर्शनम् ॥ १८ ॥ अनवानोपदेशश्च तद्वत् ॥ १९ ॥ अभ्यासेनेतराः श्रुतिः ॥ २० ॥**

'एकं साम तृचे क्रियते स्तोत्रीयमि'ति श्रूयते। तत्र संशयः-किं व्यासज्य तिसृषु गानं ? उत प्रत्यृच परिसमाप्तमिति । तदर्थञ्च विचार्यते- किमिदं त्रित्वं सामनिर्वृत्त्यङ्गं ? उत स्तोत्राङ्गमिति ।

तत्र—साम क्रियते इत्येवं सामनिर्वृत्तिरुच्यते ।
तामुद्दिश्य ऋचां त्रित्वसङ्गत्वेन विधीयते ॥ ५१ ॥

प्रधानभूतानामप्यृचामार्थिकं सामसाधनत्वमस्त्येवेति, तद्गतस्य त्रित्वस्य युक्तमेव सामाङ्गत्वं । वचनबलाच्च प्रतिप्रधानावृत्तिं बाधित्वा, व्यासज्य गेयम् ।

---

१—यथा शिल्पी शिक्षार्थं रथहस्त्यादिकं भूमौ लिखति. तद्वदित्यर्थः ।

न हि प्रत्यृचं गीयमानस्य त्रित्वमङ्गं संपादितं भवति। क्रियत इत्यनेनाभ्यासलक्षणा च स्यात् प्रत्यृचं गाने। तस्माद् व्यासज्येति प्राप्ते—

उच्यते—स्तोत्रीयस्य हि साम्नोऽत्र तृचसम्बन्ध उच्यते।
स्तोत्रसाधनभूतं च स्तोत्रीयमिति भण्यते॥ ५२॥
साम्नः स्तोत्राङ्गभावश्च स्तोत्रसाधनसंस्कृतेः।
स्तोत्रसाधनता चर्चां प्रत्येकं न तु संघशः॥ ५३॥

यदि त्रित्वसम्पादनाय व्यासज्य गीयते, ततो 'रथन्तरं पृष्ठं भवति' 'यज्ञायज्ञीयेन स्तुवीते'त्यादिभिर्यत्साम्नां स्तोत्रसाधनत्वं विहितं, तन्न घटते। स्तोत्रसाधनभूतशब्दाभिव्यक्त्या च साम्नः स्तोत्राङ्गत्वं। वाक्यं च स्तुतिबुद्धेः साधनं, न वाक्यसमुदायः। तस्मात्प्रत्यृचं गेयम्। एवं च त्रित्वंसामाङ्गत्वेनाघटमानं स्तोत्रसाधनपरिच्छेदेन विधीयमानं स्तोत्रस्यैवाङ्गत्वेनविधीयते। तद्विधानेन प्राप्तं तिसृषु गानं 'तृचे क्रियते' इत्यनेनानूद्यते। अनुवादत्वाच्च करोतेरभ्यासलक्षणा न दोषः।

इति तृतीयं तृचे कृत्स्नस्य साम्नः प्रत्यृचं समापनाधिकरणं।

---

समास्वेव तिसृषु ऋक्षु गानाधिकरणम्॥ ४॥

तदभ्यासः समासु स्यात्॥ २१॥ लिङ्गदर्शनाच्च॥ २२॥

तिसृषु प्रत्येकं गीयमानं किमनियमेन समासु, विषमासु वा गेयम्? उत समच्छन्दस्कास्वेवेति संशये? विशेषाश्रवणादनियमः। संशर[1]—विलेशपरिहाराय तु समास्वेव स्यात्।

इति चतुर्थं समास्वेव गानाधिकरणं।

---

उत्तरयोर्गायतीत्यत्र उत्तराग्रन्थसमधीतयोरेव ऋचोर्ग्रहणाधिकरणम्॥ ५॥

नैमित्तिकं तूत्तरात्वमानन्तर्यात्प्रतीयेत॥ २३॥ ऐकार्थ्याच्च तदभ्यासः॥ २४॥

'यद्योन्यां गायति, तदुत्तरयोर्गायती'त्यत्र संशयः—किं योन्युत्तरयोः, उत्तराग्रन्थाधीतयोर्वा गेयं? उतोत्तराग्रन्थाधीतयोरेवेति। तत्रोत्तराशब्दस्य

---

१. संशरः—साम्नो हिंसा। विलेशः—साम्नो अल्पीभावः।

सम्बन्धिशब्दत्वाच्चैव योनेः परतः पठिता, सैवोत्तरा। ततश्च योनिपाठापेक्षया रथन्तरयोनेः परतो बृहद्योनेः पठितत्वात्तस्यां गानम्। उत्तराग्रन्थे तु रथन्तरस्य योनेः परतो 'न त्वा वामन्यो दिव्यः' सा. सं. उ. १-१-११- इत्यस्याः पाठात्तस्यां गानम्। अतो विकल्पः। द्वयोरपि रथन्तरयोन्यपेक्षयोत्तरत्वादिति प्राप्ते—

ब्रूमः। यद्यप्ययं सम्बन्धिशब्दो लोके, तथाऽप्युत्तराग्रन्थे संज्ञारूपेण प्रसिद्धः। तत्र संज्ञाशब्दस्यान्यानपेक्षवृत्तित्वात्सापेक्षवृत्तेः सम्बन्धिशब्दाद्बलीयस्त्वं। प्रकरणपाठाच्चोत्तराग्रन्थः क्रत्वङ्गं। तस्मादुत्तराग्रन्थाधीतास्वेव गेयम्।

भाष्योक्तं त्रैशोकसाम्न उत्तरयोर्बृहत्योर्गानवर्णकम्।

एवं वा। द्वादशाहे 'पार्ष्ठिकं चतुर्थमहः, एकविंशः शोडशी—वैराजं-सामे'ति श्रुतं। तत्र च' त्रैशोकं नाम ब्रह्मसामातिजगतीषु स्तुवत' इति- श्रूयते। तच्चातिजगत्यामुत्पन्नं, 'विश्वाः पृतना 'इति। उत्तरे द्वे बृहत्यौ' नेमिं नयन्ति चक्षसे'त्याद्ये। तत्र तृचे गाने क्रियमाणे, संशयः—किमतिजगत्यौ द्वे- आनीय समासु गानम्, ? उत बृहत्यावेवादाय विषमासु गानमिति संशरविले* शपरिहारार्या 'अतिजगतीषु स्तुवते इति चातिजगतीवहुत्वानुग्रहाय समासु गानम्। बृहत्योस्तूत्तराग्रन्थपठितयोः क्रत्वर्थत्वात् तत्परित्यागे तयोरानर्थक्यादेकविंशसम्पत्तये च एकैकस्यामृचि सप्तकृत्वोऽभ्यस्यमानायामभ्यासापेक्षयाऽतिजगतीबहुत्वादनुवादसरूपस्य वर्त्तमाननिर्देशस्योपपत्तेर्विषमासु- गानम्।

इति पञ्चमं भाष्योक्तवर्णकसहितं समास्वेव गानाधिकरणम्।



बृहतीपङ्क्त्योरेव प्रग्रथनेन रथन्तरस्य गानाधिकरणम् ॥ ६ ॥

प्रागाथिकं तु ॥ २५ ॥ स्वे च ॥ २६ ॥ प्रगाथे च ॥ २७ ॥ लिङ्गदर्शनाव्यतिरेकाच्च ॥ २८ ॥

ज्योतिष्टोमे बृहद्रथन्तरे बृहत्योरुत्पन्ने 'अभित्वा शूर नो नुमः, त्वामिद्धिहवामहे' इति, तयोः पङ्क्ती उत्तरे 'नत्वा वामन्यो दिव्यो न पार्थिवः, स त्वं नश्चित्रे'ति। तत्र श्रूयते 'न वै बृहद्रथत्तरमेकंछन्दो, यत् तयोः पूर्वा- बृहती। ककुभावुत्तरे' तां. बा. ७-७-५ इति। तत्र किं पङ्क्ती परित्यज्य,

द्वे ककुभावानेतव्ये, उत योनिमुत्तराञ्च प्रग्रथ्य ककुभावुत्तरे सम्पादनीये-इति संशयः। तत्र प्रग्रथनेन मुख्यककुप्संपत्त्यभावात् अक्षरसामान्यमात्रेण गौणत्वापत्तेः, तृचगानस्य च त्रयमन्तरेणासामञ्जस्यादन्यासां ककुभामानयनम्—

उच्यते—प्रगाथस्मरणात्प्रगाथसमाख्यानात्पङ्क्तेश्चोत्तरात्वेन पाठस्यात्यन्तानर्थक्यापातात् 'पादं पुनरारभते' इति च दर्शनात्, तृचगानस्य च सामान्येन विहितस्यात्र प्रगाथेऽप्यत्यन्तदोषाभावात्प्रग्रथनम्।

द्वितीयं वर्णकम्।

एवं वा। रौरव-यौधाजये बार्हते तृचे भवतः, तयोश्च पूर्वा बृहती, उत्तरा विष्टारपङ्क्तिरि'ति तत्रापि पूर्ववदुत्पत्तिबृहत्यावानीय तृचसम्पादनं, उत पठितयोरेव प्रग्रथनमिति संशये। तत्रैव विशेषतः 'तृचे भवतः' इति तृचश्रवणादन्यागमनं, प्रगाथस्मरणसमाख्योत्तरापाठलिङ्गदर्शनैस्तु प्रग्रथनम्।

तृतीयं वर्णकम्।

एवं वा। श्यावान्धीगवे आनुष्टुभे तृचे भवत 'इतयोः पूर्वानुष्टुप्, उत्तरे द्वे गायत्र्यौ, तत्राप्य'न्ययोरनुष्टुभोरागमनं, पठितानामेव वा प्रग्रथनेनानुष्टुप्त्रयं संपाद्यमिति विचारः। लिङ्गान्तरप्रदर्शनार्थं त्विदं व्याख्यान्तरं, न तु काचिदधिका शङ्काऽस्ति।

चतुर्थं वर्णकम्।

एवं वा। गवामयने श्रूयते 'चतुःशतमैन्द्रा बार्हताः प्रगाथाः' इति, तत्र किं तिसृषु ऋक्षु गानं? उत द्वयोर्द्वयोः प्रग्रथनेनेति संशये? तृचप्रापिचोदकानुग्रहाय तिसृषु स्यात। प्रग्रथने हि न समञ्जसं तृचत्वम्, असति प्रग्रथने, कथं प्रगाथवचनम् 'ऐन्द्रा बार्हता प्रगाथाः' इति। ऋक्प्रग्रथनाभिप्रायमिति ब्रूमः। प्रथमे तृचे गीत्वा, तस्मात्तृचादेकैकामृचमुपादाय, अपरे द्वे ऋचौ-गृहीत्वा गीयते, पुनरप्येवं, तथा सति तृचगानं प्रगाथशब्दश्चोभयमनुगृहीतम्भवति।

नैतदेवम्। 'अन्या अन्या ऋचो भवन्ती' ति वचनान्नैकस्यामृचिद्विर्गानं सम्भवति। तस्माद् द्वयोः प्रग्रथनम्।

इति षष्टं भाष्योक्तवर्णकचतुष्टयसहितं प्रग्रथनेन राथन्तरस्य गानाधिकरणम्।

गीतिसम्पादकानामक्षरविकारादीनां विकल्पाधिकरणम् ॥ ७ ॥

अर्थैकत्वाद्विकल्पः स्यात् ॥ २९ ॥

छान्दोग्ये तलवकारादिसहस्रसामशाखागतानां गीतिप्रकाराणामेकार्थत्वाद्युगपत्प्रयोगासम्भवात्तदनुरोधेन च सामावृत्तेरन्याय्यत्वात्सिद्ध एव विकल्पः सामप्रसङ्गाद्विस्पष्टीकाराय दर्शितः ।

इति सप्तमं गीतिसंपादकानां विकाराणां विकल्पाधिकरणम् ।



ऋचा स्तुवते साम्ना स्तुवते इति विधिना साम्नैव स्तवनविधानाधिकरणम् ॥८॥

अर्थैकत्वाद्विकल्पः स्यादृक्सामयोस्तदर्थत्वात् ॥ ३० ॥ वचनाद्विनियोगः स्यात् ॥ ३१ ॥

क्वचिद्विकृतिविशेषे कानिचिदप्राकृतानि स्तोत्राणि विहितानि । तेषां च न प्रकृतितः किञ्चित्साधनं प्राप्नोति, प्राकृतानां गायत्ररथन्तरादिसाम्नां प्राकृतीषु बहिष्पवमानादिस्तुतिषु निबद्धानामप्राकृतेषु प्राप्त्यभावात् । तेन तानि साकाङ्क्षाणि । तत्रेदं श्रूयते—'यदृचा स्तुवते, तदसुरा अन्ववायन् । यत्साम्ना स्तुवते, तदसुरा नान्ववायन्, य एवं विद्वान् साम्ना स्तुवीते'ति । तत्र ऋग्ग्रहणमप्रगीतऋक्परं, प्रगीतायाः सामोपदेशेनैव सिद्धत्वात् । साम्ना ह्यक्षराभिव्यक्तिद्वारैव स्तुतिः क्रियते, न साक्षात् । तेन 'साम्ना स्तुवीते'ति सामाभिव्यक्तैर्ऋगक्षरैः स्तुवीतेत्यर्थः । एवं चेदमप्रगीतपरमृक्पदं । तत्र संशयः—किमृचा, साम्ना वा स्तोतव्यम् ? उत साम्नैवेति । द्वयोर्वचनाद्विकल्पप्राप्तौ—

उच्यते । साम्नामुपसंहारे विस्पष्टप्रशंसावचनेन विधेयत्वावगमात् ऋक्कीर्त्तनमसुरागमनिन्दया सामप्रशंसार्थं । तस्मात्साम्ना स्तोतव्यम् ।

एवं वा । सामवेदे किञ्चित्प्रकृत्य 'अयं सहस्रमानव' इतीयं प्रगीतापि पठिता, अप्रगीतापि । तत्र श्रूयते 'अयं सहस्रमानवः' इत्येतयाऽऽहवनीयमुपतिष्ठते' इति । तत्र प्रगीतया, अप्रगीतया वोपस्थातव्यम् ? उत प्रगीतयैवेति विचारे, विशेषाभावादनियमः । अप्रगीतायाः प्रगानार्थ एव पाठः । न ह्यनवधारितस्वरूपायां सुखं गानं सम्भवति । प्रगीता त्वनन्यार्था । तेन सा प्रयोजनमपेक्षमाणा क्रतुना गृह्यते । उपस्थाने च विनियुज्यते । एतयेति सर्वनाम्ना परामृश्यते । तस्मात्प्रगीतैव ग्राह्या ।

एवं वा। सामप्रसङ्गान्मन्त्राणां स्वरश्चिन्त्यते। मन्त्रा हि क्वचित्त्रैस्वर्येणाधीताः, क्वचिच्चातुःस्वर्येण। तत्र कर्मसु किन्त्रैस्वर्यं-चातुःस्वर्ययोः-समुच्चयः, विकल्पो वा। अथोभयहानेनैकश्रुत्या प्रयोग इति संशयः। तत्र समुच्चय इत्युपक्रममात्रं, गीत्युपायवन्निरस्तत्वात् तद्वदेव तु विकल्प इति—पूर्वः पक्षः—

तानो यज्ञकर्मणी पा० सू० १-२-३४ ति स्मृत्यनुमिताद्वचनादेकश्रुत्यम्। अर्थावगमार्थंतु स्वराध्ययनं, स्वरविशेषाधीनत्वादर्थविशेषाणां। 'बहुव्रीहौ प्रकृत्या पूर्वपद मि' पा. सू. ६-१-२ त्यादिवचनात्। तस्मात्तानेन प्रयोगः।

इत्यष्टमं वर्णकद्वयसहितं प्रगीतायास्तोत्रसाधनत्वाधिकरणम्।



रथन्तरमुत्तरयोर्गायतीत्यादौ उत्तरावर्णवशेन गानाधिकरणम्॥ ९॥

समप्रदेशे विकारस्तदपेक्षः स्याच्छास्त्रकृतत्वात्॥ ३२॥ वर्णे तु बादरिर्यथाद्रव्यं द्रव्यव्यतिरेकात्॥ ३३॥

उपोद्घातं समाप्य, प्रकृतमिदानीं साम्नामूहं विचारयति। 'रथन्तरमुत्तरयोर्गायती'त्यादिभिः ऋगन्तरे गीयमानानि किमूहितव्यानि? उत नेति। यदि योनिवर्णवशेन गानं, यस्मिन् प्रदेशे योनावायीभावः, तस्मिन्नेवासत्यपि संध्यक्षरे उत्तरयोरायीभावः, ततो नोहः। अथ तूत्तरावर्णवशेन गाने यस्मिन् प्रदेशे संध्यक्षरवशेन योनावायीभावो योनौ, ततः प्रदेशान्तरे यत्र संध्यक्षरम् तत्रायीभावः, तत्र ऊहः। किं प्राप्तं? योनिवर्णवशेन। कुतः? योनावेकारं निवर्त्य, अकार ईकारश्चोच्चारितः। तत उत्तरयोरपि तद्भागपतितं वर्णं निवर्त्याकारेकावुच्चार्यौ। किं च नात्र कार्यमुखेन साम्नः प्राप्तिः। रथन्तरादिस्वरूपस्यैवातिदेशात् तेन दशमाद्यपूर्वपक्षन्यायेन सामस्वरूपमुत्तरयोः प्रापितमविकृतस्वरूपमेव सत्प्राकृतमप्राकृतं दृष्टमदृष्टं वा कार्यं कुर्यात्। तस्मान्नोहः साम्नामिति प्राप्ते—

ब्रूमः—यदि ह्येकारं लुप्त्वा ऽवर्णेवर्णावुच्चारितौ, ततो भवेत्, यथा भवानाह। न त्वेतत्। किं तर्हि? एकारो नाम न वर्णान्तरम्। अवर्णेवर्णौ संहतावेकभावमापन्नावायीभावेन विश्लेषितौ दर्शितौ। प्रत्यक्षं ह्यवर्णेवर्णावेकारे प्रत्यभिज्ञायेते। तस्मादुत्तरयोरप्येकार एव यत्र तत्रस्थोऽप्यायीभावेन-

विश्लेषणीयः। एवमृगक्षराभिव्यक्त्या स्तोत्रं साम्ना संपाद्यते, नान्यथा। यद्यपि च सामस्वरूपस्यातिदेशः, तथाऽपि स्तोत्रसाधनतयाऽतिदिश्यते, 'एकं साम तृचे क्रियते स्तोत्रीयमि'ति वचनात्। स्तोत्रसाधनता चाक्षराभिव्यक्तिद्वारा। न च सन्ध्यक्षरादन्यस्यायीभावः क्रियमाणोऽक्षराभिव्यक्तिं करोति। एवं सर्वत्र। तस्माद्योनिवर्णवशेन गानादस्त्यूहः साम्नाम्।

इति नवममुत्तरावर्णवशेन गानाधिकरणम्।

उत्तरयोः स्तोभातिदेशाधिकरणम् ॥ १० ॥

स्तोभस्यैके द्रव्यान्तरे निवृत्तिमृग्वत् ॥ ३४ ॥ सर्वातिदेशस्तु सामान्याल्लोकवद्विकारः स्यात् ॥ ३५ ॥ अन्वयं चापि दर्शयति ॥ ३६ ॥ निवृत्तिर्वाऽर्थलोपात् ॥ ३७ ॥ अन्वयो वार्थवादः स्यात् ॥ ३८ ॥

सामातिदेशे किं स्तोभानामतिदेशो अस्ति, नेति संशये सामभ्यो-भिन्नत्वात्स्तोभानामृगक्षराणामिव नातिदेशः, भिन्नानामपि गीतिकाल-परिच्छेदकत्वेन सामाङ्गत्वात् तदतिदेशादेवातिदेशः। सामानि हि योनौ-येनांशेनाक्षराण्यभिव्यञ्जयन्ति, तेन दृष्टमेव स्तुतेरुपकारं कुर्वन्ति, स्तोभाक्ष-राभिव्यक्तिनिर्वर्त्येन त्वंशेन स्तुत्यौपयिकमेवादृष्टं कुर्वन्ति। तद्यदि स्तोभाः-नातिदिश्येरन्, तन्निर्वर्त्यस्य गीत्यंशस्य लोपात्, तत्कृतोपकारस्य हान्या वैगुण्यं स्यात्। तस्मादतिदिश्येरन्। ऋगक्षराणां तु प्रधानत्वान्न सामवशादतिदेशः।

इति दशममुत्तरयोस्स्तोभातिदेशाधिकरणम्।

स्तोभलक्षणाधिकरणम् ॥ ११ ॥

अधिकं च विवर्णं च जैमिनिः स्तोभशब्दत्वात् ॥ ३९ ॥

प्रसङ्गात्स्तोभलक्षणमुच्यते-यदृगक्षरेभ्यो अधिकं विवर्णं च किंचित्, तत्स्तोभशब्देनोच्यते*।

इत्येकादशं स्तोभलक्षणाधिकरणम्।

नीवारादिषु प्रोक्षणावघातानुष्ठानाधिकरणम् ॥ १२ ॥

धर्मस्यार्थकृतत्वाद्, द्रव्यगुणविकारव्यतिक्रमप्रतिषेधे, चोदनानुबन्धः, समवायात् ॥ ४० ॥

प्रकृतौ व्रीह्यादिषु श्रुताः प्रोक्षणावघातादयो न तत्स्वरूपप्रयुक्ताः-तन्मात्रपर्यवसायिनः, किं तु 'व्रीहिभिर्यजेते'त्यादिविहितसाधनविशेषद्वारेणापूर्वभावनार्थाः, । तथा हि 'आग्नेयोऽष्टाकपालः' इति पुरोडाशद्रव्यकोऽग्निदेवत्यो यागो विहितः, तदनुवादेन व्रीहयो विहिताः पुरोडाशप्रकृतित्वम्प्रतिपद्यन्ते । तदयमर्थः व्रीहिभिः पुरोडाशं कृत्वा तेन यजेतेति । ततःपुनराह यैर्यजेत, तान्व्रीहीन्प्रोक्षति । ततश्च—सर्वैरुपसंह्रियमाणैरयमर्थःसम्पद्यते प्रोक्षणसंस्कृतैरवघातवितुषीकृतैश्च व्रीहिभिः पुरोडाशं कृत्वा, तेन यजेतेति । अयमेव वाक्यार्थ पारमार्थिकः, व्रीह्यादिवाक्यार्था अस्यैवोपायभूताः पदार्थस्थानीयाः । एवं चेदाग्नेयादिभावनायाः शेषभूतः प्रोक्षणादीत्थंभावस्तद्विकारेष्वतिदेशेन नीयते । तत्र नैवारे चरौ पुरोडाशस्थाने चरोर्निवेशात्, व्रीहिस्थाने च नीवारनिवेशात् इतरस्य समस्तस्य यथाऽतिदेशमवस्थानात् 'नैवारं चरुं निर्वपेदाग्नेयवदि'त्यस्य श्रुतानुमितैकदेशनिष्पन्नस्य नैवारचरुविधेरयमर्थो भवति—प्रोक्षितैरवघातवितुषीकृतैर्नीवारैश्चरुं कृत्वा तेन यजेतेति । तेन व्रीह्यादिस्थानापन्नेषु नीवारादिषु सिद्ध ऊहः ।

स्थानापत्तिसिद्ध्यर्थमिदमधिकरणमिति वर्णनम् ।

स्थानापत्तिस्तु कथमवगम्यते—इदमस्य प्राकृतस्य कार्ये वर्त्तते, इदमस्येति ? तत्प्रदर्शनार्थमिदमधिकरणं । तत्र पूर्वपक्षवादी नीवारमध्वशननखपरिधीरापदानां व्रीहिषडहोलूखलमुसलयूपगिरापदस्थानापत्तौ प्रमाणमपश्यन्न तेषु तद्धर्मा भवन्तीति मन्यते—

सिद्धान्तस्तु—नीवाराणां तावत्प्रत्यक्षमेव व्रीहिकार्ये तण्डुलनिर्वृत्तौ सामर्थ्यं, सामर्थ्यानुसारी च शब्द इति नैवार इति तद्धितो विकारार्थ इतिनिश्चीयते । चरुश्च देवतासंयोगात् पुरीडाशस्थानापन्न इति, तत्प्रकृतिभूताःनीवारा व्रीहिस्थानापन्ना भवन्ति ।

तथा—मध्वशनं षडहाभावे तत्कार्यस्य साधनापेक्षायां विधीयमानं कार्यापेक्षं सत् षडहकार्यमेवावलम्बते । इदं च षडहाभावे मध्वशनं विधीयते इति कृत्वा चिन्तितं । तेनाभावे विधिरपि कार्यापत्तौ प्रमाणं ।

तथा 'नैर्ऋतश्चरुर्नखावपूतानामि'ति किं नखैरवपनमन्यतस्तुषविमोचनात्-अतो नखानामुलूखलमुसलकार्यापत्तिः। 'परिधौ पशुं नियुञ्जीते'ति तु विस्पष्टमेव यूपकार्ये नियोजने परिधिर्विधीयते। तथा यत्प्रतिषिध्य यद्विधीयते 'न गिरागिरेति ब्रूयादैरं कृत्वोद्गेयमिति; तस्यापि तत्कार्यापत्तिः। गिरापदेऽपि हि निवृत्ते तत्कार्यं साधनमपेक्षते, इरापदमपि विधीयमानं कार्यापेक्षं गिरापदकार्येण साधनापेक्षेण सम्बध्यत इति, गिरापदस्थानापन्नमिरापदं तत्संस्कारिकां गीतिं लभते।

इति द्वादशं नीवारादिषु प्रोक्षणाघाताद्यनुष्ठानाधिकरणम्।

---

परिधौ यूपधर्म्मानुष्ठानाधिकरणम् ॥ १३ ॥

तदुत्पत्तेस्तु निवृत्तिस्तत्कृतत्वात् स्यात् ॥ ४१ ॥ आवेश्येरन् वाऽर्थवत्त्वात्संस्कारस्य तदर्थत्वात् ॥ ४२ ॥ आख्या चैवं तदावेशाद्विकृतौ स्यादपूर्वत्वात् ॥ ४३ ॥

परिधौ पुनराक्षेपः। नीवारादयो हि कार्यार्थतया विधीयमाना युक्तं यत्कार्यार्थान् व्रीहिधर्मान् लभन्ते, परिधिः पुनरग्निपरिधानार्थेनोत्पन्नः, न नियोजनार्थेन, परिधानार्थं एव तु तस्मिन् वचनात्पशुर्नियुज्यते। प्रकृतौ च कार्यार्था धर्मास्तच्छेषभूते साधनेऽनुष्ठिता नाशेषभूते परिधौ भवितुमर्हन्ति, यूपोत्पत्त्यर्थाश्च परिव्याणादयः। न चेह यूपोऽस्ति, अयूप एव हि परिधौ खलेवाल्यामिव यूपधर्माः कर्तव्या इति प्राप्ते—

ब्रूमः—यद्यपि परिधानार्थेन परिधिरुत्पादितः, तथाऽपि नियोजने विनियोगात्पुराडाशकपालस्येव तुषोपवापशेषत्वमस्त्येव। यद्यपि तादर्थ्यं नास्ति, तथापि नियोजनसाधनत्वात्साधननिवेशिनो धर्मान् लभेतैव। न हि तादर्थ्यप्रयुक्तधर्माः, किन्तु साधनत्वप्रयुक्ताः। 'व्रीहिभिर्यजेत, यूपे पशुं बध्नाती'त्यादिभिर्हि साधनत्वेन विधीयमाना व्रीह्यादयो धर्मैः प्रोक्षण-परिपरिव्याणादिभिः सम्बध्यन्ते। तादर्थ्यं तु सदप्यशाब्दं न धर्मान्वयं भजते। न चोपयुज्यते तादर्थ्यं, धर्माणां कार्यं गच्छतां तत्साधनमेव द्वारमपेक्षितम्, अस्ति च परिधेरपि साधनत्वं, न च यूपाख्यमेकं किञ्चिदस्ति, यदुत्पत्त्युपयोगिनः परिव्याणादयः परिधौ लुप्तार्थाः स्युः। छेदनादिविधयो हि सर्वे परस्परानपेक्षाः काष्ठगतं दृष्टं, अदृष्टं वा यथायथं कार्यं गमयन्ति।

सर्वाणि च तानि कार्याणि च नियोजनस्याङ्गं। तत्र परिधावसम्भवतां-छेदनादीनां लोपेऽपि, सम्भवन्तः परिव्याणादयो न लोपनीयाः। खलेवाल्यामपि अञ्जन-परिव्याणादयो भवन्त्येवेति वक्ष्यते,तस्मात्परिधौ यूपधर्माः कर्त्तव्याः।

इति त्रयोदशं परिधौ यूपधर्मानुष्ठानाधिकरणम्।



शतादौ प्रणीताधर्मानुष्ठानाधिकरणम् ॥ १४ ॥

परार्थेन त्वर्थसामान्यं संस्कारस्य तदर्थत्वात् ॥ ४४ ॥ क्रियेरन् वाऽर्थनिर्वृत्तेः ॥ ४५ ॥

अभ्युदयेष्ट्यां दधि–शृतयोः किं प्रणीताधर्माः कर्त्तव्याः, नेति? चिन्तायां, प्रणीताकार्ये अपणे तयोः परिधेरिव नियोजने विनियोगाभावादकरणम्। उत्पवनादीनामसत्यपि विनियोगे, अर्थादपि तावत्साधनत्वमस्तीति, साधननिवेशिनो धर्माः कर्त्तव्याः।

इति चतुर्दशं दधिशृतयोः प्रणीताधमानुष्टानाधिकरणम्।



बृहद्रथन्तरयोर्धर्मव्यवस्थाधिकरणम् ॥ १५ ॥

एकार्थत्वादविभागः स्यात् ॥ ४६ ॥ निर्देशाद्वा व्यवतिष्ठेरन् ॥ ४७ ॥

ज्योतिष्टोमे बृहद्रथन्तरे पृष्टसाधनत्वेन विहिते। तयोर्धर्माः 'रथन्तरे प्रस्तूयमाने सम्मीलयेत्' तां. ब्रा. ८. ८. १५ 'बृहति प्रस्तूयमाने समुद्रं मनसाध्यायेदि'त्यादयः। किमुभयेऽपि धर्माः उभयत्र कर्त्तव्याः? उत यथाश्रुतीति-संशये।

उभयोरेककार्यत्वात्कार्यसाधनगोचराः।<br>
धर्माः द्वयोर्द्वयेऽपि स्युर्व्रीहिधर्मा यवेष्विव ॥ ५४ ॥

ननु चान्यथा रथन्तरेण स्तुतिः साध्यते शूरादिप्रकारेण, अन्यथा–च बृहता चित्रादिप्रकारेण। तेन साधनभावप्रकारभेदात् साधननिवेशिनोधर्मा न सङ्कीर्यन्ते। यथा व्रीहिधर्माः स्रुवादिष्वेककार्येष्वपि न संभवन्ति, कारकभेदात्, एवमिहापि।

नैतदेवं। यदेव हि 'रथन्तरं पृष्ठं भवती'ति शास्त्रविहितं साम्नोऽक्षराभिव्यञ्जकत्वेन साधनत्वं, तेनांशेन सम्मीलनादिधर्माः सम्बध्यन्ते। साधनविधिना हि सम्बध्यमाना धर्मविधयो यदेव विधौ विवक्षितं साधनरूपं, तेनैव सम्बध्यन्ते। शूरादिप्रकारभेदस्तु अविवक्षितो वस्तुस्वभावकृतो न धर्मव्यवस्थायां हेतुर्भवितुमर्हति। किं चायमभिव्यज्यमानानामृचां भेदः यच्छूरादिरूपता, साम्नोस्त्वक्षराभिव्यक्तयात्मकमेकरूपमेव साधनत्वं। तस्मात्सङ्कर एवात्र युक्तो व्रीहियवादिधर्माणामिव संमीलनादीनामिति प्राप्ते—

ब्रूमः—साम्नोर्व्यवस्थया यस्मान्निर्देशो मीलनादिषु।
तस्मान्न सङ्करो युक्तो न त्वेवं प्रोक्षणादिषु॥ ५५॥

व्रीहिग्रहणं कारकविशेषोपलक्षणमिति कृत्वा, यवेष्वपि प्रोक्षणादयः क्रियन्ते। तदिहापि यदि रथन्तरग्रहणं साधनमात्रोपलक्षणं स्यात्, तत् एकमेव रथन्तरं, बृहद्वा सर्वधर्मविधिषु गृह्येत। यतस्तु क्वचिद्रथन्तरं, क्वचिच्च बृहद्गृह्यते। तन्नूनमिह रथन्तरादिस्वरूपमपि विवक्षितमतिगम्यते। तस्माद्व्यवस्था।

किं च नानयोरेककार्यत्वम्, अन्यद्धि पृष्ठं रथन्तरेण साध्यते, अन्यच्च बृहता। ननु 'पृष्ठैःस्तुवते' इति वाक्योत्पन्नपृष्ठानुवादेन बृहद्रथन्तरयोर्विधानादेककार्यत्वमनयोः। नैवं। यदि 'पृष्ठैः स्तुवते' इत्युत्पत्तिः स्यात्, तत् उत्पत्तिगतया बहुत्वसङ्ख्यया बहूनि पृष्ठानि स्युः। तत्र सप्तमे यत्सूत्रभाष्यकाराभ्यां ज्योतिष्ठोमे पृष्ठबहुत्वं नास्तीत्युक्तं, तद्विरुध्येत। तस्मात् 'रथन्तरं पृष्ठं भवती'ति रथन्तरविशिष्टं पृष्ठं विधीयते। पृष्ठशब्दस्य स्तुतिवाचित्वं वाक्यशेषाद्, गुणवाक्यैश्चावगम्यते। तस्माद्भिन्नस्तोत्रसाधनत्साम्नोस्तन्निबन्धनानां धर्माणामाज्यौषधादिधर्माणामिव व्यवस्थासिद्धिः। स्तोत्रयोश्चादृष्टार्थत्वात्, प्रयाजादेरिव नैकार्थ्यम्। नानाकार्ययोश्च स्तोत्रयोर्वचनवशाद्विकल्पः। तस्मान्न धर्मसङ्करः।

इति पञ्चदशं बृहद्रथन्तरयोर्व्यवस्थाधिकरणम्।



कण्वरथन्तरे बृहद्रन्तरधर्मसमुच्चयाधिकरणम् ॥ १६ ॥

भाष्यमतं

स्वाकृते तद्विकाराद्विरोधाद्व्यवतिष्ठेरन् ॥ ४८ ॥

वैश्यस्तोमे श्रूयते 'कण्वरथन्तरं पृष्टं भवती'ति। तत्र संशयः- किं कण्वरथन्तरं बृहद्रथन्तरयोः स्थानापन्नं कार्यप्रयुक्तान् रथन्तरधर्मान्, बृहद्धर्मांश्च गृह्णद्विकल्पेन गृह्णाति ? उत समुच्चयेनेति।

विकल्प एव तेषां स्यात् प्रकृतावसमुच्चयात्।
मिथोऽनपेक्षैस्तैर्धर्मैः प्रकृतौ साधिता स्तुतिः ॥ ५६ ॥

उच्यते—पृथक्निर्देशसामर्थ्याद्व्यवस्था प्रकृतौ कृता।
इदं त्वप्राकृतं साम द्वयोः कार्ये विधीयते ॥ ५७ ॥

तच्च द्वयोरपि कार्यं कुर्वद्धर्मानपि समुच्चयेन गृह्णातीति भाष्यकारः।

वार्तिकमतं

वार्तिककारस्तु विकल्पमेव मन्यते। तथा हि—यद्यपि तावत्प्रकृतावेकैव पृष्ठस्तुतिर्धर्मणां प्रयोजिका, तथाऽपि तेषां सामद्वारत्वात्, साम्नोश्च वैकल्पिकत्वाद्धर्माणां च पृथक्निर्देशेन व्यवस्थितत्वात्, केचिद्धर्मा रथन्तररूपसाधनद्वारेण स्तुत्यपूर्वं साधितवन्तः, केचिद्बृहद्रूपसाधनद्वारेण, एवमेव विकृतावप्यतिदेशेन कदाचिद्रथन्तरं स्वधर्मयुक्तं पृष्ठसाधनं, कदाचिद्बृहत्। एवं प्राप्ते—

कण्वरथन्तरं तयोः कार्ये विहितमपि यथाप्राप्तयोः कार्ये विधानात्कदाचिद्रथन्तरकार्य, कदाचिद्बृहत्कार्ये विहितम्भवति। न सर्वदा द्वयोः कार्ये। ततश्च कदाचित्कस्यचिद्धर्मान् गृह्णाति, न सर्वदा सर्वान्। स्तुतिरपि प्रकृतावन्योन्यनिरपेक्षैर्धर्मैः साधिता, विकृतावपि न समुच्चयमपेक्षते, किमुत-यदा द्वे स्तुती प्रकृतौ वचनाद्विकल्पेनानुष्ठिते, विकृतावपि तथैव प्राप्ते। तयोश्च वचनाद्विकल्पेनानुष्ठीयमानयोः साधनत्वेन विधीयमानं कण्वरथन्तरमन्यतरधर्मान् गृह्णातीति व्यक्तमेतत्। तस्माद्विकल्पः ॥

इति षोडशं कण्वरथन्तरे धर्मसमुच्चयाधिकरणम्।

—:-o-:—

द्विसामके बृहद्रथन्तरधर्मयोर्व्यवस्थाधिकरणम् ॥ १७ ॥

उभयसाम्नि चैवमेकार्थापत्तेः ॥ ४८ ॥ स्वार्थत्वाद्वा व्यवस्था स्यात्प्रकृतिवत् ॥ ५० ॥

यत्र बृहद्रथन्तरयोः प्रकृतितो विकल्पे प्राप्ते, समुच्चयो विधीयते 'संसवे उभे कुर्यादि' तां. ब्रा. २-३-५ त्यादौ। तत्र किमुभयोरथन्तरधर्माः, उभयोश्च बृहद्धर्माः कर्त्तव्याः ? उत रथन्तरे रथन्तरधर्माः, बृहति च बृहद्धर्मा एवेति संशये, द्वाभ्यामपि संहत्यैकस्य कार्यं साध्यत इति, द्वयोरपि द्वयधर्मप्राप्तौ—

उच्यते—यद्येकैकस्य कार्ये द्वयं विधीयेत, ततः स्यादेवं।

चोदकेन विकल्पेन प्राप्तयोः पृष्ठयोरिह।
स्वधर्मयुक्तयोरेव समुच्चयविधिस्त्वयम् ॥ ५८ ॥

एवं हि समुच्चयमात्रविधानाल्लाघवम्, अत्प्राकृतकार्यता च-साम्नोर्न कल्पिता भविष्यति। तस्मात्प्रकृतिवदिहापि धर्मा व्यवस्थिताः।

इति सप्तदशं द्विसामके बृहद्रथन्तरयोर्व्यवस्थाधिकरणम्।

---

सौर्यादिषु पार्वणहोमाद्यनुष्ठानाधिकरणम् ॥ १८ ॥

पार्वणहोमयोस्त्वप्रवृत्तिः; समुदायार्थसंयोगात्तदभीज्या हि ॥ ५१ ॥ कालस्येति चेत् ॥ ५२ ॥ नामकरणत्वात् ॥ ५३ ॥ मन्त्रवर्णाच्च ॥ ५४ ॥ तदभावेऽग्निवदिति चेत् ॥ ५५ ॥ नाधिकारिकत्वात् ॥ ५६ ॥

'स्रुवेण पार्वणौ होमौ जुहोती'ति तद्धितश्रुत्या पर्वदैवत्यौ होमौ किं विकृतिष्वतिदेश्येते, नेति संशयः। तदर्थमिदं विचार्यते—किं पर्वशब्दः-कालवचनः कालोऽस्य देवता, तस्य चासंस्कार्यत्वादाराादुपकारकौ होमौ ? उताग्नेयादिसमुदायवचनः-समुदायदैवत्यौ होमौ तत्संस्कारार्थाविति।

तत्र—काले शब्दस्य मुख्यत्वात्कालाभीज्येह मन्यते।
पणातेर्दानकर्मत्वात्कर्मण्यपि च मुख्यता ॥ ५९ ॥

पृणातेर्दानकर्मणः पर्वशब्दः। स च दीयतेऽस्मिन्नित्यधिकरणव्युत्पत्त्या-कालेऽपि मुख्यः। भावव्युत्पत्त्या कर्मण्यपि। तत्र प्रकरणात्सामवायिकत्व-लाभाच्च कर्मवचनमङ्गीकृत्य तत्संस्कारार्थतां होमयोरध्यवस्यामः। तेषां च कर्मणां तन्त्रेणाभिहितानामग्नीषोमयोरिव व्यासक्तं देवतात्वं, नैकैकशः। तेन समुदायस्य देवतात्वात्, तस्य च विकृतिष्वभावादतद्विकारत्वाच्च-सौर्यादेः, तत्र होमयोरप्रवृत्तिः। समुदायिविकारा हि सौर्यादयः, न समुदाय-विकाराः।

इत्यष्टादशं पार्वणहोमयोर्विकृतावननुष्ठानाधिकरणम्।

---

दर्शपूर्णमासयोर्होमद्वयस्यव्यवस्थाधिकरणम् ॥ १९ ॥

## उभयोरविशेषात् ॥ ५७ ॥ यदभीज्या वा तद्विषयौ ॥ ५८ ॥

किमेतौ होमावुभावप्युभयोः पौर्णमास्यमावास्ययोः कर्त्तव्यौ, उत-विभज्य पौर्णमास्यां पौर्णमासीदेवत्यौ। अमावास्यायाममावास्यादेवत्यौ। इति। तत्र प्रकरणाविशेषादुभावप्युभयत्रेत्याशङ्क्य, संस्कार्यवशत्वात् संस्का-राणां सूक्तवाकन्यायेन निष्कर्षः। तेनैव च न्यायेन गतत्वान्नेदमधिकर-णान्तरं, पूर्वस्यैव तु प्रयोजनसूत्रद्वयमिदम्। 'उभयोरविशेषात्, यदभीज्या-तद्विषयावि'ति। ऊहसिध्यर्थमवान्तरकार्यनिरूपणं प्रस्तुतमिति, तत्प्रसङ्गात्पा-र्वणयोरवान्तरकार्यं निरूपितम्।

इत्येकोनविंशं होमद्वयस्य व्यवस्थाधिकरणम्।

---

समिदादीनां यागनामधेयताधिकरणम् ॥ २० ॥

## प्रयाजेऽपीति चेत् ॥ ५९ ॥ नाचोदितत्वात् ॥ ६० ॥

'समिधो यजति, तनूनपातं यजती' श. ब्रा. २-६-१-१. त्यत्रापि किं—कर्मसम्बन्धिनः समिदादीन् देवतात्वेनोद्दिश्य, तत्संस्कारार्थं यागविधानम्? उतारादुपकारकयागविधानमिति संशये, पूर्ववत्सामवायिकत्वलिप्सया-संस्कारविधिः, द्वितीया च देवताऽभिधानेसमर्थैव, 'विष्णुं यजती'त्यादिदर्शना-दिति प्राप्ते—

ब्रूमः—उद्देशपूर्वकस्त्यागो यजिना ह्यभिधीयते ।
त्यागे च नास्ति कर्मत्वं देवतायाः कथंचन ॥ ६० ॥

उद्देशांशगतं तु कर्मत्वं च यागेऽप्युपचर्य 'विष्णुं यजती'त्यादिनिर्देशः, न चेह विधावुपचारो युक्तः, यागास्त्विह केवला विधीयन्ते, तेषां च श्रुत्यादिभिः कार्यविशेषानवगमात् प्रकरणेनाराडुपकारकत्वम् । समिदादिशब्दास्तु मन्त्रवर्णप्राप्तदेवतां निमित्तीकृत्य नामधेयानि । देवता एव वानुवदन्ति । न चानुवादे उपचारो दोषः, तस्मादाराडुपकारकाः प्रयाजाः ।

इति विंशं प्रयाजानामाराडुपकारकत्वाधिकरणम् ।

इति शास्त्रदीपिकायां नवमस्य द्वितीयः पादः ॥

## अथ तृतीयः पादः ।

विकृतौ मन्त्रगतव्रीह्यादिशब्दानामूहाधिकरणम् ॥ १ ॥

**प्रकृतौ यथोत्पत्ति वचनमर्थानांतथोत्तरस्यां; ततौ तत्प्रकृतित्वादर्थे चाकार्यत्वात् ॥ १ ॥ लिङ्गदर्शनाच्च ॥ २ ॥**

मन्त्राणामिदानीमूहश्चिन्त्यते 'अग्नये जुष्टं निर्वपामी'तै. सं. १-१-४-२ ति 'व्रीहीणां मेध सुमनस्यमानः', तै. ब्रा. ३-७-५ इत्येतौ मन्त्रौ किं सौर्यादिषु, नीवारादिषु च ऊहितव्यौ ? उत नेति संशये ।

प्रकृतौ यादृशो मन्त्रश्चोदकेन हि तादृशः ।
प्राप्यते विकृतौ तस्मान्नोहस्तत्रावकल्पते ॥ ६१ ॥

ननु कार्यद्वारेण मन्त्राः प्राप्यन्ते, कार्यञ्चापूर्वीयदेवताप्रकाशनं,नाग्निस्वरूपप्रकाशनमित्युक्तं 'फलदेवतयोश्चे ९-१-४'त्यत्र । तस्मादिहापि सूर्य एव प्रकाशयितव्यः, न चाग्निपदं तत्प्रकाशने समर्थमिति, सूर्यपदं प्रक्षेप्तव्यम् ।

उच्यते—सत्यं । सूर्य एव प्रकाश्यः, स तु चोदकप्राप्तेनाग्निपदेनैव गुणवृत्त्या प्रकाश्यते । तद्यथा 'ऐन्द्या गार्हपत्यमुपतिष्ठते' मै.सं.३-२-४ इतिवचनादिन्द्रपदेनैव गुणवृत्त्या गार्हपत्य उपस्थीयते, तथेहापि प्राकृतस्यैवाग्नि-

पदयुक्तस्य मन्त्रस्य सूर्यप्रकाशनाय चोदकेन विनियुक्तत्वात्, तेनैव सूर्यं-प्रकाशयिष्यामः, अन्यथाऽर्थवशेन, मन्त्राणामन्यथाभावकरणे गार्हपत्य-वशादैन्द्रोऽपि मन्त्र ऊहितव्यः स्यात्। तस्मादेतावानेव मन्त्राणामन्यथाभावः-यत्प्रकृतावग्निः प्रकाशितः, विकृतौ सूर्य इति । न तु पठितपदोद्धारः, पदा-न्तरप्रक्षेपश्च युक्त इति प्राप्ते—

अभिधीयते—प्रकृतौ यादृशं रूपं मन्त्राणां हि विवक्षितम् ।
तादृगेवातिदेष्टव्यं विकृतौ नाविवक्षितम् ॥ ६२ ॥

प्रकृतावग्निपदं न स्वरूपविवक्षया पठितमग्निपदयुक्तो मन्त्रः कथं-नाम स्यादिति । यदि ह्येवं भवेत्, ततस्तेनैव यथा कथंचित्प्रकाश्येत सूर्यः, देवतावाचिपदविवक्षया त्विदं पठितं देवतावाचिपदयुक्तो मन्त्रः कथं नाम-स्यादित्येवमभिसन्धायाग्निपदं पठितं । तस्यैव प्रकृतौ देवतावाचित्वात् । अवश्यं हि देवतापदयुक्तमन्त्रमधिजिगांसमानैरग्निपदमेवाध्येतव्यम् । अतः-तद्रूपविवक्षयाऽग्निपदं पठितं, तथा सति दृष्टार्थं भवति । स्वरूपविवक्षायां-त्वदृष्टार्थतैव स्यात् । एवं च विकृतावपि देवतावाचिपदयुक्तमन्त्रप्रयोग एव-कर्त्तव्यः । न चाग्निपदस्य ताद्रूप्यमस्ति । अतः सूर्यपदप्रक्षेपः ।

एवं—व्रीहिपदमपि हविःप्रकृतिद्रव्यवाचिपदाभिप्रायं, न स्वरूपाभिप्राय-मिति, नीवारादिषूहसिद्धिः । बहुषु तद्वाचिषु सत्सु व्रीह्यादिपदमेव पठितं । ततो नियमादृष्टमात्रं कल्प्यते अवघातादिवत् । स्वरूपं त्वपूर्वीयसाधन-विशेषवाचिपदविवक्षया प्रयुक्तं, दृष्टार्थत्वात् । तस्मादूहः । ऐन्द्री तु स्वरूपे-णैव गार्हपत्ये विनियुज्यत इति वैषम्यम् ।

इति प्रथमं सौर्यादिविकृतौ मन्त्रगताग्न्यादिशब्दानामूहाधिकरणम् ।



पौण्डरीकेषु बर्हिःषु स्तरणमन्त्रस्योहाधिकरणम् ॥ २ ॥

जातिर्नैमित्तिकं यथास्थानम् ॥ ३ ॥ अविकारमेकेऽनार्ष-त्वात् ॥ ४ ॥ लिङ्गदर्शनाच्च ॥ ५ ॥ विकारो वा तदुक्ते हेतुः ॥ ६ ॥ लिङ्गं मन्त्रचिकीर्षार्थम् ॥ ७ ॥ नियमो वोभयभागि-त्वात् ॥ ८ ॥

क्वचिच्छ्रूयते 'पौण्डरीकाणि बर्हींषि भवन्ती'ति। प्रकृतावस्ति बर्हिर्मन्त्रः, 'दर्भैः स्तृणीत हरितैरि'ति। तत्र दर्भशब्दस्थाने पुण्डरीकपदमूहितव्यं, पूर्वेणैव न्यायेन। हरितपदस्थानेऽपि किं रक्तपदमूहितव्यं, नेति संशयः? दर्भशब्देनैव सिद्धे प्रकाशने हरिताभिधानमदृष्टार्थं प्रकृतौ, तस्माद्विकृतावपि हरितपदमेवादृष्टार्थमभिधातव्यमित्यनूहः—

स्यादेवं, यद्यदृष्टार्थं स्यात्, अनेनापि तु गुणद्वारेण स्तरणद्रव्यमेव प्रकाश्यते, अर्थाभिधानपरत्वात् मन्त्राणाम्। अतः पुण्डरीकाण्यपि स्वगुणद्वारेण प्रकाशयितुं रक्तपदं प्रयोक्तव्यम्।

इति द्वितीयं मौद्गचरौ हरितपदस्थाने रक्तपदोहाधिकरणम्।



अग्नीषोमीयपशौ लौकिकयूपस्पर्शप्रायश्चित्ताधिकरणम् ॥ ३ ॥

लौकिके दोषसंयोगादपवृक्ते हि चोद्यते; निमित्तेन प्रकृतौ स्यादभागित्वात् ॥ ६ ॥

प्रासङ्गिकमिदमधिकरणं। 'यद्येकं यूपमुपस्पृशेत्, एष ते वायो इति—ब्रूयात्, यदि द्वौ, एतौ ते वायू इति, यदि बहून्, एते ते वायवः' 'इत्यादि वाक्यं लिङ्गदर्शनत्वेन पूर्वाधिकरणे प्रस्तुतं। तत्रेदं विचार्यते किं वैदिके यूपोच्छ्रयणादिविषये स्पर्शे प्रायश्चित्तम्? उत लौकिके? उतोभयत्रेति। विशेषाश्रवणादनियमः। प्रकरणात्फलकल्पनापरिहाराच्च वैदिक एवेति-प्राप्ते—

उच्यते—दोषनिर्हरणायेदं प्रायश्चित्तं विधीयते।
दोषश्च प्रतिषिद्धे स्यात्प्रतिषेधश्च लौकिके॥ ६३ ॥

'यूपो वै यज्ञस्य दुरिष्टमामुञ्चते, तस्माद्यूपो नोपस्पृश्यः, मै. सं. ३-९-४ इति प्रतिषिद्धय, पश्चादिदमुच्यते 'यद्येकमुपस्पृशेदि'त्यादि। प्रतिषेधश्च रागप्राप्ते लौकिके, वैदिकस्य विहितत्वेन प्रतिषेधानर्हत्वात् प्रतिषेध्यानुष्ठाने प्रत्यवायोत्पत्तेः प्रतीकारापेक्षायां प्रायश्चित्तविधिरपेक्षितार्थो भवति। तस्माल्लौकिके प्रायश्चित्तम्।

इति तृतीयं लौकिकयूपस्पर्शे प्रायश्चित्ताधिकरणम्।



द्विपशुके एकवचनान्त-बहुवचनान्तयोर्द्विवचनान्तेनोहाधिकरणम् ॥ ४ ॥

अन्यायस्त्वविकारेण, दृष्ट प्रतिघातित्वादविशेषाच्च तेनास्य ॥ १० ॥ विकारो वा तदर्थत्वात् ॥ ११ ॥ अपि त्वन्यायसम्बन्धात्प्रकृतिवत्परेष्वपि यथार्थं स्यात् ॥ १२ ॥ यथार्थं त्वन्या यस्याचोदितत्वात् ॥ १३ ॥ छन्दसि तु यथादृष्टम् ॥ १४ ॥

अग्नीषोमीयपशवेकवचनान्तः पाशमन्त्रः 'अदितिः पाशं प्रमुमोक्त्वेतमि'ति, तथा बहुवचनान्तोऽपि 'अदितिः पाशान्प्रमुमोक्त्वेतानि' मै०सं० १-२-१५ति तयोरग्नीषोमीये निवेशमुपरितनेऽधिकरणे वक्ष्यति। तयोर्द्विपशुकेषु 'मैत्रं श्वेतमालभेत' वारुणं कृष्णमि'त्यादिषु चोदकेन प्राप्तयोर्भवति-संशयः -- किमेकवचनान्तस्याप्रवृत्तिः ? बहुवचनान्तस्यानूहेन प्रवृत्तिः, उत-बहुवचनान्तस्याप्रवृत्तिरेकवचनान्तस्यैवोहेन प्रवृत्तिः, अथवोभावपि यथा-यथमहेनानूहेन च प्रवर्त्तेते, किं वोभयोरपि द्विवचनेनोहितयोः प्रवृत्तिरिति। तत्रैकवचनस्य समवेताभिधायित्वेन विकृतावपि द्विसंख्यां वक्तुं विकारः-स्याद्। बहुवचनस्य त्वेकस्मिन्नसमवेताभिधायित्वेन निर्देशमात्रार्थत्वाद् विकृतावपि तथैव सम्भवादनूहः। न चाविकारसम्भवे विकारो युक्तः, तस्मादेकवचनान्तस्याप्रवृतिः, इतरस्य त्वविकारेण प्रयोग इति प्रथमः पक्षः।

सकलाभिधानसम्भवे विकलाभिधानमन्याय्यं, तस्मात्संख्याविशिष्ट-पाशप्रकाशनार्थमेकवचनान्तस्योहितस्य प्रवृत्तिः, बहुवचनान्तस्य त्वविवक्षित-संख्याकपाशमात्रप्रकाशनेनासमग्राभिधानत्वादप्रवृत्तिरिति द्वितीयः पक्षः।

द्वयोरपि चोदकेन प्राप्तयोर्यथायथमूहेनानूहेन च विकल्पेन प्रयोगः इति तृतीयः। गृह्णीम एतद्द्वयोः प्रवृत्तिरिति, न तु बहुवचनस्यानूहः। तदपि द्वयोरसाधुत्वादूहितव्यं। प्रकृतावेकस्मिन् पाशे छन्दसि बहुवचनस्य प्रयुक्तत्वात्तथैवाङ्गीकृतं। न त्वेवं द्वयोः प्रयोगः छन्दसि दृष्टः। तस्मात्स्वायत्ते-शब्दप्रयोगे सत्यसाधुप्रयोगासम्भवात् द्विवचनं प्रक्षेप्तव्यं। तस्मादुभयोरूहः-इति सिद्धान्तः।

इति चतुर्थं द्विपशुकयेगे एकवचन-बहुवचनान्तयोद्विवचनान्तेनोहाधिकरणम्।

पाशाधिकरणम् ॥ ५ ॥

विप्रतिपत्तौ विकल्पः स्यात्तत्समत्वाद् गुणे त्वन्यायकल्पनैकदेशत्वात् ॥ १५ ॥ प्रकरणविशेषाच्च ॥ १६ ॥ अर्थाभावातु नैवं स्याद्, गुणमात्रामितरत् ॥ १७ ॥ द्यावोस्तथेति चेत् ॥ १८ ॥ नोत्पत्तिशब्दत्वात् ॥ १९ ॥

पशावग्नीषोमीये पाशमन्त्रावेकवचन-बहुवचनान्तौ। तत्र बहुवचनान्ते- संदेहः—किं प्रकृतावेवाग्नीषोमीये निविशते ? उत बहुपाशकेषु पशुगणेषूत्कृष्यत इति। एकस्मिन बहुवचनस्यासमर्थत्वादुत्कर्षे प्राप्ते—

अभिधीयते—प्रकृत्यर्थस्य पाशस्य विभक्त्यर्थस्य कर्मणः।
उभयोः प्रकृतौ भावान्नोत्कर्षोऽस्याऽवकल्पते ॥ ६४ ॥

पाशप्रातिपदिकार्थान्वितं विभक्त्यभिहितं कर्मकारकं प्रकृतावपि पाशकर्मकोन्मोचनाभिधानेन सम्भवन्नोत्कर्षं सहते। संख्यामात्रं त्वसम्भवदपि गुणत्वान्न प्रातिपदिकं, प्रधानभूतं कारकं वाऽलमुत्क्रष्टुम्। अविवक्षिता चेह संख्या, पाशकर्माभिधानमात्रेण व्यवहारसिद्धेः। अतो निर्देशमात्रार्थं बहुवचनं। कर्ममात्रं तत्र विवक्षितम्। अतोऽपि न संख्यावशेन मन्त्रोत्कर्षः। बहुवचनस्यत्वेकस्मिन् प्रयोगेऽवयवबहुत्वाभिप्रायेण छान्दसः।

इति पञ्चमं पाशाधिकरणम्।



दर्शपूर्णमासयोर्द्विपत्नीके प्रयोगे पत्नीं सन्नह्येतिमन्त्रस्यानूहाधिकरणम् ॥५॥

अपूर्वे त्वविकारोऽप्रदेशात्प्रतीयेत ॥ २० ॥

दर्शपूर्णमासयोः 'पत्नीं संनह्ये तै० सं० १–५–४ ति मन्त्रः किमेकद्विबहुपत्नीकेषु प्रयोगेषु सर्वेष्वविकारेण प्रयोक्तव्यः। उत द्विबहुपत्नीकप्रयोगयोर्द्विवचनबहुवचनाभ्यामूहितव्य इति संशयः। तत्रैकपत्नीके समवेताभिधायित्वसम्भवान्नैकवचनमन्याप्यनिगदम्। तस्माद द्वित्वबहुत्वयोरूहः।

नैतदेवं। यद्येकपत्नीप्रयोगाभिप्रायमाम्नानं स्यात्, तत एकवचनस्य समवेतसंख्याभिधानरूपस्य सम्प्रतिपन्नत्वात्समवेतसंख्याभिधानमिह विवक्षितम्, एकवचनरूपन्त्वविवक्षितमिति कृत्वा, द्विपत्नीके, बहुपत्नीके च प्रयोगे समवेतसंख्याभिधानार्थमूह्येत, सर्वप्रयोगाणां तु समानविधानत्वात्-

अभिप्रायेणेदमाम्नातं द्वयोर्बह्वीषु चैकवचनस्य सम्प्रतिपत्त्यभावान्न समवेतसंख्याभिधानरूपेण प्रयुक्तमिति शक्यमध्यवसातुम्। निर्देशमात्रार्थमेकवचनमदृष्टार्थं चैकत्वमभिधातुं प्रयुक्तमित्यापद्यते। ततश्च द्विबहुपत्नीके प्रयोगे एकवचनमेव प्रयोक्तव्यमित्यविकारः। न चैकवचनानुरोधेनैकपत्नीप्रयोगे मन्त्रः,नान्यत्रेति वक्तव्यं। पाशवत्प्रातिपदिकबलेन सर्वत्र प्रवृत्तेः संख्यायाश्चाऽविवक्षितत्वेनानेकपत्नीकात्प्रयोगान्मन्त्रं व्यावर्त्तयितुमसमर्थत्वात्। तस्मात्सर्वत्राविकारेण प्रयोगः।

इति षष्टं द्विबहुपत्नीके प्रयोगे पत्नीं सन्नह्येति मन्त्रस्यानूहाधिकरणम्।



द्विपत्नीके विकृतियागेऽपि पत्नीं सन्नह्येति मन्त्रस्यानूहाधिकरणम् ॥ ७ ॥

## विकृतौ चापि तद्वचनात् ॥ २१ ॥

विकृतौ पत्नीशब्दः किं द्विपत्नीक-बहुपत्नीकप्रयोगयोरूहितव्यः, नेति– संशये, प्रकृतौ द्वयोः, बह्वीषु च पत्नीषु एकवचनाम्नानसामर्थ्यात्तत्प्रयुक्तम्। विकृतौ त्वाम्नानाभावात् द्विबहुत्वयोरेकवचनमसाधुत्वान्न प्रयोक्तव्यम्। तस्मादूहः –

नैवम्। निर्देशमात्रार्थमदृष्टार्थं चैकवचनं, न तत्समवेतसंख्याभिधानार्थमित्युक्तम्। अतो विकृतावपि तथैव कर्त्तव्यमित्यनूहः। न चासाधुत्वम्, द्वित्व-बहुत्वयोरेकवचनस्य छान्दसत्वात्। पाशे तु द्वयोर्बहुवचनप्रयोगस्य–छान्दसत्वाभावादसाधुत्वं स्यादिति विशेषः।

इति सप्तमं विकृतौ पत्नीमन्त्रस्यानूहाधिकरणम्।



सवनीयपशूनामग्नीषोमीयसमानविधानत्वे प्रास्मै-
अग्निमिति मन्त्रे अनूहाधिकरणम् ॥ ८ ॥

## अध्रिगुः सवनीयेषु तद्वत्समानविधानाश्चेत् ॥ २२ ॥

तृतीयेऽध्याये संस्थापशवः समानविधाना इति पूर्वपक्षे समानविधानत्वं यदुक्तम्, तस्येदं प्रयोजनं पूर्वाधिकरणसिद्धमनेन सूत्रेण कथ्यते। यदा–

समानविधानाः, तदोक्थ्य-षोडश्यादिषु द्विबहुपशुकेऽपि सवनीयगणे प्रवर्त्तमानः 'प्रास्मै' इत्यध्रिगुप्रैषगत एकवचनान्तः शब्दः पत्नीशब्दवदेव नोहितव्यः। विकारपक्षे तूहितव्यः। ननु समानविधानत्वे यथा 'प्रास्मै' इति पुँल्लिङ्ग-निर्देशात्सारस्वत्यामप्रवृत्तिः, तथैकवचननिर्देशात् द्विबहुष्वप्रवृत्तिः स्यात्।

नैवम। पुँल्लिङ्गस्य मेष्यामत्यन्तासम्भवात् युक्ता निवृत्तिः, एकवचनन्तु प्रतिव्यक्तिगतैकत्वाभिप्रायेण गणेऽपि सम्भवात् नात्यन्तानुपपन्नं। पाशानिति बहुवचनमिवावयवाभिप्रायेणैवोपपन्नमिति नेतव्यम्। अपि च 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्यामि.' पा. सू. १-२-५८ ति बहुषु चैकवचनं स्मर्यते। अतोऽपि न वचनयोरनुपपत्तिः। लिङ्गं त्वन्यलिङ्गे अत्यन्तानुपपन्नमिति वैषम्यम्।

इत्यष्टमं सामानविध्यपक्षेऽध्रिगुप्रैषस्यानूहाधिकरणम्।

---

नीवाराणां व्रीहिप्रतिनिधित्वे मन्त्रे व्रीहिशब्दस्यानहाधिकरणम् ॥ ९ ॥

प्रतिनिधौ चाविकारात् ॥ २३ ॥ अनाम्नानादशब्दत्वमभावाच्चेतरस्य स्यात् ॥ २४ ॥ तादर्थ्याद्वा तदाख्यं स्यात्संस्कारैरविशिष्टत्वात् ॥ २५ ॥ उक्तं च तत्त्वमस्य ॥ २६ ॥

श्रुतस्य द्रव्यस्यापचारे नीवारादिषु प्रतिनिहितेषु 'व्रीहीणां मेधस्सुमनस्यमानः' इति व्रीहिशब्दः किमूह्येत, नेति संशये, नीवारादिषु व्रीहिशब्दस्यासामर्थ्यादूहप्राप्तौ—

उच्यते—यदि नीवारा व्रीहिवत्साधनं भवेयुः, ततस्तत्प्रकाशनार्थं नीवारपदं प्रक्षिप्येत। न त्वेवं, किं तर्हि ? नीवारगता ये व्रीह्यंशाः, ते अत्र साधनमित्युक्तं। ते च व्रीहिगता इव नीवारगता अपि व्रीहिशब्देनैव शक्यन्ते प्रकाशयितुमिति, अविकारेण प्रयोगः।

इति नवमं व्रीहिशब्दस्यानूहाधिकरणम्।

---

द्विपशुयागे सूर्यं चक्षुर्गमयतादिति मन्त्राणामनहाधिकरणम् ॥ १० ॥

संसर्गिषु चार्थस्यास्थितपरिमाणत्वात् ॥ २७ ॥ लिङ्गदर्शनाच्च ॥ २८ ॥

ज्योतिष्टोमे अग्नीषोमीये पशावध्रिगुप्रैषः । तत्र संसर्गिणोऽर्थाश्चक्षुरादयः 'सूर्यं चक्षुर्गमयतादि' तै. ब्रा. ३-६-६ त्यादयः । ते द्विबहुपश्वादिषु पशुगणेषु किं द्विवचन-बहुवचनाभ्यामूहितव्यः, नेति संशये, संसर्गिणांतेजःप्रभृतीनां स्वतः सङ्ख्याव्यवहाराभावात् औपाधिको भेदव्यवहारः । तदिह चक्षुःशब्दस्य तेजोवचनत्वादसति स्वतः सङ्ख्याभाक्त्वे अधिष्ठानापेक्षत्वे च तयोर्द्वित्वेन द्विवचनप्रसङ्गात् पशूपाधिकमेकवचनम् । अस्यशब्देन पशोरुपात्तत्वात्तदौपाधिकमेव विज्ञायते । अतः पशुभेदेन पशुसङ्ख्यावशेनोहः इति प्राप्ते—

उच्यते—अधिष्ठानान्निर्गतं तेजः प्रदीपप्रभावदेकीभवतीति तदभिप्रायादेकवचनं, न त्वौपाधिकम् । न चाधिष्ठानाभिप्रायश्चक्षुशब्दः, तयोः सूर्यगमनासम्भवात् द्वित्वात्तयोरेकवचनानुपपत्तेः । तस्मान्निर्गततेजोऽभिप्रायं । बहूनामपि च पशूनां सन्निहितानि निर्गतानि चाक्षुषाणि तेजांसि अनेकप्रदीपप्रभावदेकीभवन्ति । तस्मादनूहः ।

इति दशमं सूर्यं चक्षुर्गमयतादिति मन्त्रेऽनूहाधिकरणं ।

---

द्विपशुयागे अध्रिगुप्रैषे एकधेत्यस्य शब्दस्याभ्यासाधिकरणम् ॥ ११ ॥

एकधेत्येकसंयोगादभ्यासेनाभिधानं स्यादसर्वविषयत्वात् ।२६। अविकारी वा बहूनामेककर्मवत् ॥ ३० ॥ सकृत्त्व चैकध्यं स्यादेकत्वात्त्वचोऽनभिप्रेतं तत्प्रकृतित्वात्परेष्वभ्यासेनैव विवृद्धावभिधानं स्यात् ॥ ३१ ॥

तत्रैव 'एकधाऽस्य त्वचमाच्छ्यतादि'ति श्रुतं । तत्रैकधाशब्दः पशुगणेषु किमविकारेण प्रयोक्तव्यः, ? उताभ्यासेन विकर्त्तव्य इति संशयः । तदर्थमिदं विचार्यते, किं प्रकृतौ येन प्रकारेणाभिधानं कृतं, तेनैव प्रकारेण विकृतावपि कर्त्तव्यं, उतान्यथापि सम्भवतीति, ? तत्र यद्यपि प्रकृतावे-

कत्वात् त्वचः साहित्याभिधानं न सम्भवतीत्येकप्रयत्नसाध्यत्वम् एकधा-शब्देनोक्तं। नावयवश आच्छ्यतात्, किं त्वेकधा–एकेन प्रयत्नेनेति। तथापि विकृतावार्षचोदकानुग्रहाय बह्वीनान्त्वचान्देशतः, कालतो वा साहित्यम् 'एकधा गाः प्रापयती' तिवदभिदधदविकारेणैव त्वगाच्छेदनं प्रकाश-यिष्यतीति प्राप्ते—

ब्रूमः—प्रकृतौ यस्य शब्दस्य यादृशोऽर्थो निरूपितः।
तादृगेवातिदेशेऽपि स हि कार्यपरो यतः॥ ६५॥

कार्यप्रधानो ह्यतिदेशः, न शब्दस्वरूपपरः। तेन प्राकृतमेकप्रयत्नसा-ध्यत्वं प्रत्येकं त्वचामभिधातुमेकधा, एकधेत्येवमभ्यसितव्यम्।

इत्येकादशमेकधाशब्दस्याभ्यासाधिकरणम्।

---

द्विपश्वादिपशुविकृतौ मेधपतिशब्दस्य देवतानुसारेणोहाधिकरणम् ॥१२॥

मेधपतित्वं स्वामिदेवतस्य समवायात्सर्वत्र च प्रयुक्तत्वात्त-स्यान्यायनिगदत्वात्सर्वत्रैवाविकारः स्यात् ॥ ३२॥ अपि वा द्विसमवायोऽर्थान्यत्वे यथासङ्ख्यं प्रयोगः स्यात् ॥ ३३॥ स्वामिनो यैकशब्द्यादुत्कर्षो देवतायां स्यात्; पत्न्या द्वितीयशब्दः स्यात् ॥ ३४॥ देवता तु तदाशीष्ट्वात्सम्प्राप्तत्वात्स्वामिन्यनर्थिका स्यात् ॥ ३५॥ उत्सर्गाच्च भक्त्या तस्मिन्पतित्वं स्यात् ॥ ३६॥ उत्कृष्येतैकसंयुक्तौ द्विदेवते संभवात् ॥ ३७॥ एकस्तु समवाया-त्तस्य तल्लक्षणत्वात् ॥ ३८॥ संसर्गित्वाच्च सस्मात्तेन विकल्पः स्यात् ॥ ३९॥ एकत्वेऽपि न गुणाऽपायात् ॥ ४०॥

तत्रैव श्रुतम्, 'उपनयत मेध्या दुरः' 'आशासाना मेधपतिभ्यां मेधमि'ति। केषांचित्तु 'मेधपतये मेधमि' ति। तत्र चतुर्थे संशयः—किमुभयोर्विकृति-ष्वविकारः? उत द्विवचनस्य देवतापर ऊहः? एकवचनस्य तु यजमान-परः? अथवोभयोर्यजमानपर एव, अथवोभयोरपि देवतापर ऊह इति? तत्र मेधपतिशब्देन मेधस्य पशोः स्वामी यजमानः, देवताभूतौ चाग्नीषोमौ-

उभयेऽप्यभिधीयन्ते, तेन द्विवचनमेकवचनं चोभयमप्यन्याय्यनिगदम् । तस्मादनूह इति प्रथमः पक्षः ।

सम्भवत्यर्थवत्त्वे नान्याय्यनिगदता युक्ता, तस्माद् द्विवचनान्तो-देवतावचनः, तेनासौ देवताविवृद्धावूहितव्यः, एकवचनान्तस्तु स्वामिवचनः-स्वामिविवृद्धाविति द्वितीयः ।

एकोऽयं मन्त्रः शाखाभेदेन किंचिद्भिन्नः समाम्नातः । तत्र यजमानपरत्वे मेधपतये यो मेधः,तमाशासाना इति सम्बन्धः, देवतापरत्वे मेधपतिभ्यामाशासाना इति, नेदमेकस्य वाक्यस्य वचनव्यक्तिद्वयं सम्भवति । तस्मादुभाभ्यामपि यजमानस्य देवताया वा नियमेनाभिधानं । तत्र देवतापरत्वे सत्यग्नीषोमयोर्द्वित्वात् एकवचनमनुपपन्नं, यजमानपरत्वे तु द्विवचनं पत्न्यभिधानपरत्वेनावकल्पते, तस्मात्स्वामिपरावुभावपि स्वामिवशादूहितव्याविति तृतीयः ।

सिद्धान्तस्तु—मेधमाशासाना इत्युक्ते किमर्थमाशासाना इत्यपेक्षा भवति, तत्र मेधपतिभ्यामाशासाना इत्यपेक्षितार्थपूरणाय सम्बध्यते । न च यजमानायाशास्यते, तस्यैव हि स देवताभ्यां आशास्यते । तस्माद्देवतावचनः। एकवचनन्तर्हि कथम्? अग्नीषोमयोरुभयोर्व्यासक्तं देवतात्वं, तेन देवतात्मना तयोरेकत्वात्तदभिप्रायम्, अग्नीषोमौ देवते इति द्विवचनं त्वधिष्ठानापेक्षम्, तेन द्विवचनम्, अधिष्ठानसङ्ख्यावशात् । एकवचनं च देवतासङ्ख्यावशाद्विकृतिषूहितव्यमिति ।

इति द्वादशं विकृतौ मेधपतिशब्दस्य देवतानुसारेणोहाधिकरणम् ।



बहुदेवत्यपशावपि एकवनान्तमेधपतिशब्दस्य विकल्पाधिकरणम् ॥ १३ ॥

**नियमो बहुदेवते विकारः स्यात् ॥ ४१ ॥ विकल्पो वा प्रकृतिवत् ॥ ४२ ॥**

वैश्वदेवादिषु बहुदेवत्येषु पशुषु द्विवन्निगदस्य मेधपतिशब्दस्योहोऽसन्दिग्धः । एकवन्निगदेऽपि तद्वदेवोहः, एकवचनान्तता तु निवर्तते ? उताविकारेण प्रवर्तत इति चिन्तायामेकवचनस्य बहुत्वसामर्थ्यादूहः ।

देवतारूपैकत्वात्तु प्रकृतिवदनूह इति पूर्वाधिकरणप्रयोजनमात्रमिदमधिकरणम् । न तु किंचित्प्रतिपाद्यमस्ति ।

यद्वोत्तराधिकरणोपोद्घातत्वेन पूर्वाधिकरणसिद्धमेवानुकीर्त्तितम् ।

इति त्रयोदशमैकादशिन्यामेकवचनान्तमेधपतिशब्दस्योहाधिकरणम् ।

---

ऐकादशिन्याम् एकवचनान्तमेधपति–शब्दस्योहाधिकरणम् ॥ १४ ॥

अर्थान्तरे विकारः स्याद्देवतापृथक्त्वादेकाभिसमकायास्यात् ॥ ४४ ॥

'आग्नेयः कृष्णग्रीवः, सारस्वती मेषी, बभ्रुः सौम्यः' इत्यादिषु पशुगणेषु किमेकवन्निगदस्याविकारः? उत विकारेण प्रयोग इति संशये, गणाभिप्रायेण पूर्ववदनूहं मन्वानस्योत्तरम् ।

देवतात्मन एकत्वादविकारः पुरोदितः ।
तद्रूपस्य तु भिन्नत्वे को नामोहं निवारयेत् ॥ ६६ ॥

इति चतुर्दशं विकृतौ मेधपतिशब्दस्य देवतानुसारेणोहाधिकरणम् ।

॥ इति शास्त्रदीपिकायां नवमस्य तृतीयः पादः ॥

---

# अथ चतुर्थः पादः ।

षड्विंशतिरस्य वङ्क्रय इत्यादौ समस्योहाधिकरणम् ॥ १ ॥

षड्विंशतिरभ्यासेन पशुगणे; तत्प्रकृतित्वाद्गुणस्य; प्रविभक्तत्वादविकारे हि; तासामकार्त्स्न्येनाभिसम्बन्धो; विकारान्न समासः स्यादसंयोगाच्च सर्वाभिः ॥ १ ॥ अभ्यासेऽपि तथेति चेत् ॥ २ ॥ न गुणादर्थकृतत्वाच्च ॥ ३ ॥ समासेऽपि तथेति चेत्

॥४॥ नासम्भवात् ॥५॥ स्वामिश्च वचनं; प्रकृतौ तथेह स्यात् ॥६॥ वङ्क्रीणान्तु प्रधानत्वात्समासेनाभिधानं स्यात्; प्रधानन्यमध्रिग्रोस्तदर्थत्वात् ॥ ७ ॥ तासां च कृत्स्नवचनं ॥ ८ ॥ अपि त्वसन्निपातित्वात्पत्नीयदाम्नातेनाभिधानं स्यात् ॥ ९ ॥ विकारस्तु प्रदेशत्वाद्यमानवत् ॥ १० ॥ अपूर्वत्वात्तथा पत्न्याम् ॥ ११ ॥ आम्नातस्त्वविकारात्सङ्ख्यासु सर्वगमित्वात् ॥ १२ ॥ सङ्ख्या त्वेवं प्रधानं स्याद्वङ्क्रयः पुनः प्रधानम् ॥ १३ ॥ अभ्यासो वाऽविकारात् स्यात् ॥१४॥ अनाम्नातवचनमवचनेन हि; वङ्क्रीणां स्यान्निर्देशः ॥१५॥ पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात्; तस्मात्समासशब्दः स्यात् ॥ १६ ॥

तत्रैव 'षड्विंशतिरस्य वङ्क्रयः' इति श्रुतम् । तद्धि अश्वादिषु पशुगणेषु चोदकप्राप्तं पञ्चधा संदिह्यते—किं 'षड्विंशतिरस्ये'त्युभयपदाभ्यासः, उताविकारेण प्रयोगः ? उत षड्विंशतिपदमेकवचनं द्विवचन—बहुवचनाभ्यामूहितव्यं ? अथवाऽस्येत्येतत्पदमभ्यसितव्यम् ? आहोस्वित्सर्वपशुगताः-वङ्क्रीः समस्य, तासामियत्ता वक्तव्येति । तत्र षड्विंशतिसङ्ख्याया, अस्यपदाभिधेयस्य च पशोर्यः सम्बन्धः, तत्प्रधानमिदं वाक्यं । ततः प्रतिपशु तत्सम्बन्धं प्रकाशयितुं षड्विंशतिपदं, अस्यपदं चाभ्यसनीयम् । अयमेवात्र-प्रधानतः पूर्वपक्षः । इतरे तु सम्भवमात्रेणोपन्यस्य दूष्यन्ते ।

तत्र द्वितीयः पक्षः—प्रकरणभूतोऽयमदृष्टार्थो मन्त्रः । तस्मादविकारः ।

तृतीयस्तु—यद्यप्यकरणः, तथाऽपि शमितॄणामन्यूनावदानोद्धरणाय पार्श्वयोः साकल्यं स्मारयन्दृष्टार्थ एव । तत्र षड्विंशतिसङ्ख्या प्राधान्येन प्रकाश्या, तेन द्वयोः पश्वोः षड्विंशति सङ्ख्ये प्रकाशयितुं षड्विंशती अनयोः-वङ्क्रय इति । ननु षड्विंशतिशब्दे सङ्ख्याप्रधाने सङ्ख्येयेषु वङ्क्रिषु षष्ठी-स्यात् । सत्यं । यथा सिद्धान्ते वङ्क्रीणां प्राधान्ये सङ्ख्याशब्दस्य लक्षणया सामानाधिकरण्यम्, तथा सङ्ख्याप्राधान्ये वङ्क्रिशब्दो लक्षणया सङ्ख्यासामानाधिकरण्यं प्रतिपत्स्यते ।

चतुर्थस्तु—पशुप्रधानमिदं, स हि चोदितः । सङ्ख्या त्वचोदिता । तस्मात्-षष्ठ्यन्ताभिधेयः पशुरेवात्र प्रधानं । तद्विशेषणं सङ्ख्या, वङ्क्रयश्च । षड्-

विंशतिवङ्क्रिकोऽयं पशुरिति। ततश्चैकैकं पशुं भेदेन प्रकाशयितुमस्य-पदमभ्यसितव्यम्।

सिद्धान्तस्तु—वङ्क्रीयत्ता प्रकाश्येह पार्श्वसंकल्पसिद्धये।
ता इति प्रतिनिर्देशादपि तासां प्रधानता॥ ६७॥

वङ्क्रयोऽत्र प्रधानम्। ता एव षड्विंशतिशब्देनेयत्तया प्रकाश्यन्ते। 'अन्यूनयोः पार्श्वयोरवद्यतो'ति वचनात्। यद्यपि पशुश्चोदितः, तथाऽप्यसौ हृदयादिद्वारेणैव साधनं, न साक्षादिति, १०·७-१ वक्ष्यामः। तस्माद् वङ्क्रयः प्रधानं, तथा च 'ताः अनुष्ठ्योच्यावयतादि'ति तासामेवोत्तरत्र प्रतिनिर्देशः, उद्धरणं चोच्यते। पशुप्राधान्ये हि तमिति स्यात्। सङ्ख्याप्राधान्ये तामिति। तस्माद्वङ्क्रीयत्तापरत्वात्समस्याभिधानम्।

ननु यद्यपि वङ्क्रीयत्तापरमिदं, तथाऽपि प्रतिपशु भेदेन वङ्क्रीणामुद्धरणात् भेदेनैव पशोर्वङ्क्रय इयत्तया वक्तव्या इति, षड्विंशतिपदाभ्यासः-एव न्याय्यः, [1]तथा च 'आश्वलायनादयो यज्ञसूत्रकारा मन्यन्ते। नेति भगवान्-जैमिनिः। स हि मन्यते—यथैव प्रकृतौ द्वयोः पार्श्वयोस्त्रयोदशसु वङ्क्रिषु पृथक् पृथगुद्ध्रियमाणास्वपि समस्तानामेवेयत्तोक्ता 'षड्विंशतिरस्य' वङ्क्रयः' इति। तथा विकृतिष्वप्युद्धारभेदमतन्त्रीकृत्य प्रयोगसमवेतसमस्त-वङ्क्रीयत्ता मन्त्रेण प्रकाशयितव्या। तस्माद् द्विपञ्चाशदनयोर्वङ्क्रयः, अष्ट-सप्ततिरेषां वङ्क्रय इत्येवं समस्याभिधानमेव न्याय्यम्।

इति प्रथमं षड्विंशतिरस्य वंक्रय इत्यस्य समस्योहाधिकरणम्।

---

चतुस्त्रिंशद्वाजिन इत्यनेन आश्वमेधिकसवनीयाश्वस्य चतुस्त्रिं-शद्वङ्क्रिरूपविशेषवचनविकल्पाधिकरणम्॥ २॥

अश्वस्य चतुस्त्रिंशत्तस्य वचनाद्वैशेषिकम्॥ १७॥

अश्वमेधे श्रूयते 'अश्वः, तूपरोः, गोमृगः, ते प्राजापत्याः' इति। तस्याश्वस्य चतुस्त्रिंशद्वङ्क्रयः, तत्र वैशेषिको मन्त्रः पठितः।

चतुस्त्रिंशद्वाजिनो देवबन्धोर्वङ्क्रीरश्वस्य स्वधितिः समेती' ऋ·सं·२-३-१०ति। तत्रेदं वचनमामनन्ति 'न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयादिति।

१· 'एकधा षड्विंशतिरिति द्विर्द्विर्बहूनामि' आश्व. श्रौ. सू. ति।

तत्र भाष्यकारः—'अश्वस्य चतुस्त्रिंशद्' इत्येवमादिसूत्रपञ्चकमेकाधिकरणत्वेन व्याख्यातवान्। वार्त्तिककारस्तु-एतत्सूत्रं पृथक्कृत्य प्राप्तिसूत्रत्वेन, अधिकरणान्तरत्वेन च व्याख्यातव्यमित्युक्तत्वान्। तत्राधिकरणान्तरमेवं द्रष्टव्यं। वैशेषिक्याः ऋचः प्रतिषेधोऽयं 'न चतुस्त्रिंशदिति ब्रूयादि' ति उत्तराधिकरणे वक्ष्यति। इदं त्वत्र चिन्त्यते—किं निषिद्धमपि वैशेषिकं पक्षे स्यात् ? उत सर्वदा प्राकृतमेवेति। तत्र पाठप्राप्तं वैशेषिकं गिरापदवत् प्रत्यक्षवचनबलान्नित्यवद्-बाधितत्वात्प्राकृतमेवाध्रिगुवचनमिरापदवत्सर्वदा वक्तव्यमिति प्राप्ते—

ब्रूमः—इरापदं हि प्रत्यक्षेण वचनेन गिरापदस्थाने विहितं युक्तं-यत्पाठप्राप्तं वैशेषिकं गिरापदं बाधते। तस्मिन् बाधितेऽनुवाद एव गिरापद-प्रतिषेधः। न त्वेवमिह 'षड्विंशतिरित्येव ब्रूयादि' त्येतत् एवकारोपहतविधि-शक्तित्वात्प्राकृतस्य विधौ समर्थम्। अतोऽत्र न चतुस्त्रिंशदित्येवं प्रतिषेधं विधत्ते। तस्मिंश्च प्रतिषिद्धे 'षड्विंशतिरित्येव ब्रूयादि' ति चोदकप्राप्तानुवाद एव। न त्वेवं गिरापदप्रतिषेधादिरापदं प्राप्नोति, येनानूद्येत। तस्यापि विधौ वाक्यभेदः, तेन तत्रेरापदविधिरेव वाक्यार्थः। इह तु प्रतिषेध एव-विधेयः। स च प्राप्तिपूर्वकः, प्राप्तिश्च न शास्त्रमन्तरेण सम्भवतीत्यतः, अवश्यं वैशेषिकवचनस्य प्रापकं प्रकरणपाठानुमितं वाक्यं लाघवाय काम-मङ्गीक्रियताम्। अङ्गीकृते चास्मिन्नुभयोर्विधि—प्रतिषेधयोः शास्त्रत्वावि-शेषाद्विकल्पः,। तस्माद्वैशेषिकवचनमपि कर्त्तव्यम्।

इति द्वितीयमश्वमेधीयाश्वस्य चतुस्त्रिंशन्मन्त्रस्य विकल्पाधिकरणम्।



## आश्वमेधिकसवनीयाश्वस्य 'न चतुस्त्रिंशदिति ब्रूयात्' इत्यनेन-समस्ताया एव ऋचो निषेधाधिकरणम्॥ ३॥

**तत्प्रतिषिध्य प्रकृतिर्नियुज्यते सा चतुस्त्रिंशद्वाच्यत्वात्॥ १८॥ ऋग्वा स्यादाम्नातत्वादधिकल्पश्च न्यायः॥ १९॥ तस्यां तु वचनादैरवत्पदविकारः स्यात्॥ २०॥ सर्वप्रतिषेधो वाऽसंयोगा-त्पदेन स्यात्॥ २१॥**

तत्रैव संशयः—किमश्वस्य पठितमेव, 'चतुस्त्रिंशद्वाजिनः', इति वैशेषिकं-कर्त्तव्यम्? उत प्राकृतमपि। यदाऽपि प्राकृतं, तदापि किं तूपर—गोमृगयोः,

अश्वस्य च समस्य वचनं-षडशीतिरेषां वङ्क्रय इति, उत तूपर-गोमृगयोः सामासिकं वचनं कृत्वा, अश्वस्य 'षड्विंशतिरस्य वङ्क्रयः' इत्येवमयथार्थमध्रिगुवचनं कर्त्तव्यमिति । तत्र 'न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयादि'त्यनेन पठितायामेवर्चि गिरापदवत् चतुस्त्रिंशदिति पदं प्रतिषिध्य, षड्विंशतिपदमिरापदवन्निक्षिप्यते । न त्वयं समस्ताया ऋचः प्रतिषेधः, तस्मात् सैव षड्विंशतिपदयुक्ता वक्तव्येति । चोदकप्राप्ताध्रिगुवचनस्य, निवृत्तिरिति प्राप्ते—

उच्यते—एवकारोपबद्धत्वान्न षड्विंशतिचोदना ।
चतुस्त्रिंशन्निषेधे च नानुवादोऽस्य सम्भवी ॥ ६८ ॥
ऋच एव निषेधोऽतस्तथा सति च चोदकात् ।
प्राप्तं षड्विंशतिरिति ब्रूयादित्यनुकीर्त्यते ॥ ६९ ॥

'न चतुस्त्रिंशदिति ब्रूयात्, षड्विंशतिरित्येव ब्रूयादि'त्येकमिदं वाक्यं। तेनैकोऽत्र विधिः, इतरोऽनुवादः । तत्र यदीरापदवत्षड्विंशतिर्विधीयेत, ततः-चतुस्त्रिंशत्प्रतिषेधो गिरापदप्रतिषेधवदनूद्येत । न त्वत्र षड्विंशतिपदमिरापदवच्छक्यं विधातुम्, एवकारोपबन्धात्, एवकारार्थविशेषणं हि ब्रूयादिति, न स्वयं विधिक्षमम् एवकारार्थश्च निवृत्तिः। तस्मात् षड्विंशतिपदव्यतिरिक्तस्य निवृत्तिरिह विधीयते । 'एवं कृत्वोद्गेयमि'ति तु शक्नोति विधातुमितिविशेषः । तेन चतुस्त्रिंशत्प्रतिषेधोऽत्र विधीयते । तद्यदि पदमात्रं प्रतिषिध्येत, न षड्विंशतिपदमनुवदितुं शक्यते, प्राप्त्यभावात्, न हि पठितायामृचि चतुस्त्रिंशत्पदे प्रतिषिद्धे, षड्विंशतिपदस्य प्राप्तौ प्रमाणमस्ति । तस्मात्समस्ताया ऋचः प्रतिषेधः । तथा सति 'षड्विंशतिरित्येव ब्रूयादि'ति चोदकप्राप्तत्वात्सम्भवत्यनुवादः । शक्नोति च चतुस्त्रिंशदिति प्रतीकग्रहणेनर्चं प्रतिषेद्धुं, गिरापदेन त्वनाद्यत्वात् ग्रहणं न शक्यमिति, वैषम्यं ।

द्वितीयपूर्वपक्ष-सिद्धान्तौ ।

द्वितीयपूर्वपक्षवादी त्वाह-प्राकृतेऽपि वचने क्रियमाणे 'षड्विंशतिरिति-ब्रूयादि'ति वचनादेव वक्तव्यमश्वे न समस्य वचमेनमिति । तदिदं मन्दं । न ह्यनेन षड्विंशतिपदं विधीयते, चतुस्त्रिंशन्निषेधपरत्वाद् वाक्यस्य । तद्विधौ वाक्यभेदात् । एवशब्दोपबन्धाच्चाशक्यमिदं विधातुमित्युक्तं ।

तस्मादेष वाक्यार्थः—न चतुस्त्रिंशदिति पठितं ब्रूयात्, किन्तु यथाप्राप्तमध्रिगुवचनमेवेति । तस्मात्समस्य वचनं, पक्षे च वैशेषिकमृग्वचनम् ।

इति तृतीयमश्वस्य चतुस्त्रिंशद्वङ्क्रिरूपविशेषवचनाधिकरणम् ।

---

अग्नीषोमीयपशावुरूकशब्देन वपाभिधानाधिकरणम् ॥ ४ ॥

वनिष्ठुसन्निधानादुरूकेण वपाभिधानम् ॥ २२ ॥

'वनिष्टुमस्य मा राविष्ट उरूकं मन्यमानाः' इति किमुरूकशब्देनोलूकस्याभिधानं, तत्सादृश्यबुद्ध्या वनिष्ठोर्लवनं प्रतिषिध्यते ? उत वपाभिधानम्—उरूकशब्दः, वपोद्धरणकाले वपां मन्यमाना वनिष्टुं मा राविष्टेति । तत्र रलयोरेकत्वादुलूकाभिधाने प्राप्ते—

ब्रूमः—न तावद्वनिष्ठोर्लवितव्यस्य लवनं शक्यं निषेद्धुं, सादृश्यबुद्धिनिषेधस्यादृष्टार्थत्वात् । तस्मादवयवव्युत्पत्त्या वपाभिधानम् । [1]दर्शिता चावयवव्युत्पत्तिर्भाष्ये । वपोद्धरणकाले सन्निधानाद्भ्रान्त्या वनिष्टोर्लवनं प्रसक्तमाशङ्क्य तन्निवारणार्थं वचनं दृष्टार्थं भवति । तस्माद्वपाभिधानमिति, वपाविवृद्धावूहः ।

इति चतुर्थमुरूकशब्देन वपाभिधानाधिकरणम् ।

---

अध्रिगौ प्रशसा बाहू, इत्यत्र प्रशसाशब्दस्य प्रशंसापरत्वाधिकरणम् ॥ ५ ॥

प्रशसाऽस्यभिधानम् ॥ २३ ॥ बाहुप्रशंसा वा ॥ २४ ॥

'प्रशसा बाहू कृणुतादि'ति किं प्रशसेति तृतीयान्तमस्यभिधानम्, असिना बाहू छेत्तव्याविति, उत द्वितीयाद्विवचनस्याकारादेशे च्छान्दसे चौकारलोपे कृते प्रशंसावचनोऽयमिति । तत्र प्रशासशब्दस्यासौ प्रसिद्धत्वात्तद्वचनं मन्यते ।

---

१. उरुशब्दो विस्तीर्णवाची, कशशब्दो भेदोवाची, तस्यैकदेशः, कशब्दः ।

न तु स्वधितिसाधने छेदने शक्यमसेः करणत्वं प्रकाशयितुं । मान्त्रवर्णिकद्रव्यकल्पनायां चातिगौरवम् । तस्मात् प्रशंसावचनत्वं । प्रशस्तौ बाहू-कृणतादविकलावित्यर्थः । एवं दृष्टार्थता भवति । तस्माद् बाहुविवृद्धावहः ।

इति पञ्चमं प्रशसाशब्दस्य प्रशंसावाचित्वाधिकरणम् ।



अध्रिगौ 'श्येनमस्य वक्षः' इत्यादौ श्येनादिशब्दानां
कात्स्न्र्यवचनाधिकरणम ॥ ६ ॥

श्येन-शला-कश्यप-कवषोरुस्रेकपर्णेष्वाकृतिवचनं प्रसिद्धसन्निधानात् ॥ २५ ॥ कात्स्न्र्यं वा स्यात्तथाभावात् ॥ २६ ॥ अध्रिगोश्च तदर्थत्वात् ॥ २७ ॥

'श्येनमस्य वक्षः कृणतादि'ति । श्येनसदृशमित्यर्थः । तत्र संशयः–किं सादृश्यमेवात्र विवक्षितम् ? उत साकल्यमिति । तत्र सादृश्यमेव 'अमीपिष्टपिण्डाः सिंहाः क्रियन्तामि'तिवत् विधीयते । तेन वक्ष उद्धृत्य कर्तनाद्युपायेन पक्षचरणचञ्च्वादिसम्पादनेन श्येनसंस्थानं कर्त्तव्यं ।

नैतद् युक्तम् । अदृष्टार्थताप्रसङ्गात् । कर्तने च वक्षसो वैकल्यावधविविनाशः स्यात् । अतः साकल्यमत्र विधीयते । अविकलं हि वक्षः श्येनसदृशं भवति । तदनेन प्रकारेणावैकल्यमेवोच्यते, दृष्टार्थत्वात् । एवं-शला दोषणी-कश्यपे वासो, कवषोरु, स्रेकपर्णा ष्टीवन्ते'त्यपि साकल्यमेव ।

इति षष्ठं श्येनादिशब्दानां कात्स्न्र्यवाचित्वाधिकरणम् ।



दर्शार्थोद्धृताग्निलोपे प्रायश्चित्तरूपज्योतिष्मत्या अननुष्ठानाधिकरणम् ॥७॥

प्रासङ्गिके प्रायश्चित्तं न विद्यते; परार्थत्वात्तदर्थो हि विधीयते ॥२८॥

अग्निहोत्रे श्रूयते 'अग्नये ज्योतिष्मते पुरोडाशमष्टाकपालं निर्वपेद्यस्याग्निरुद्धृतोऽग्निरहुतेऽग्निहोत्र उद्वायेदि'तै.सं.२-३-४'ति।तत्र संशयः-यदा दर्शार्थेनोद्धृतोऽग्निरग्निहोत्रकाले उद्वाति, किं तदा ज्योतिष्मतीष्टिः कर्तव्या, नेति । तदर्थमिदं विचार्यते–किमग्निविशिष्टोद्वाननिमित्तमिदं कर्माग्निहोत्रस्यारादुप-

कारकम् ? उतोद्वानव्याप्ताग्निनिमित्तं तस्यैवाग्नेरुत्पादकं सामवायिकमिति ।

कि प्राप्तम्—उद्वायेदिति लिङ्श्रुत्या धात्वर्थस्य निमित्तताम् ।
वदत्यग्नेस्तु वाक्येन तस्मादारादुपक्रिया ॥ ७० ॥

यदा हि वाक्यगम्याग्निनिमित्तत्वतिरस्कारेण पदश्रुत्योद्वानस्य-निमित्तता, तत उद्वानस्य क्रत्वनङ्गत्वेनासंस्कार्यत्वात्, अग्नेस्तु विशेषणत्वेन कार्यान्वयाभावात् आरादुपकारकत्वमेवेति, निमित्तस्य च प्रकरणेन विशेषणासम्भवाद्दर्शार्थस्याप्युद्धृतस्याग्नेरुद्वाने सञ्जातं निमित्तमिति, कर्त्तव्येष्टिरिति प्राप्ते—

ब्रूमः—उद्वानस्याग्नियुक्तस्य नित्यत्वान्न निमित्तता ।
न च तस्याग्निना व्याप्तिः कदाचिदपि विद्यते ॥ ७१ ॥

अग्निसम्बन्धस्तावदुद्वानपर्यायस्य विनाशस्यावयवशः सर्वदा विद्यमानो-न निमित्तं भवति, न च विनाशस्य चिन्तितनिमिषितादिषु सर्वदा वर्त्तमान-स्याग्निना वा व्याप्तिः सम्भवति;यो निमित्तं स्यात् । उद्वानपरीतस्य त्वग्नेर्निमित्तता युक्ता । कादाचित्की हि तेनाग्नेर्व्याप्तिः, नतु सदातनी । यद्यप्यग्नेरुद्वानसबन्धो नित्यः, तथापि व्याप्तिरनित्या । तेनाग्निरेव चोद्वानव्याप्तो-निमित्तं । तस्योद्वानपरीतस्य कार्यायोग्यस्योत्पत्त्यर्थेयमिष्टिरग्निहोत्राङ्गम् । अग्निहोत्रार्थस्य चाग्नेरुद्धृतस्योद्वातस्योत्पादनं कुर्वती अग्निहोत्राङ्गं स्यात्, नान्यार्थस्य । तस्माद्दर्शार्थेनाग्नावुद्धृत उद्वाने नैतत्प्रायश्चित्तम् ।

इति सप्तमं प्रायश्चित्तरूपज्योतिष्मत्या अननुष्ठानाधिकरणम् ।



धार्य्योद्वाने प्रायश्चित्तरूपज्योतिष्मत्यननुष्ठानाधिकरणम् ॥ ८ ॥

धारणे च परार्थत्वात् ॥ २९ ॥ क्रियार्थत्वादितरेषु कर्म स्यात् ॥ ३० ॥

इदमाम्नायते 'धार्यो गतश्रिय आहवनीयः' इति । तत्र यदा ध्रियमाणोग्निरग्निहोत्रकाले उद्वाति, तदा किमिष्टिः कार्या ? उत नेति संशये,

अग्निहोत्रार्थ उद्वाते प्रायश्चित्तमिदं श्रुतं ।
धार्यस्य चास्ति तादर्थ्यं सर्वार्थं धार्यते ह्यसौ ॥ ७२ ॥

सर्वकर्मणां धार्यमाणोऽग्निः प्रत्येकमङ्गम् । अतोऽग्निहोत्रार्थताऽप्यस्तीति, तदुद्वाने कर्तव्येष्टिः ।

नैवम्—अन्यार्थमुद्धृतो ह्येष गतश्रीत्वेन धार्यते ।
धारणस्य निमित्तं तन्नोद्धारस्याश्रुतत्वतः ।।

न हि गतश्रीत्वेन पुरुषस्याग्न्युद्धरणं श्रुतं, येनोद्धरणम्, उद्धृतोवाऽग्निः-सर्वार्थः स्यात्, किं तु धारणमात्रं, तेन यदा यं कञ्चित्कर्मविशेषमधिकृत्य-अग्निमुद्धरति, तदा तस्य धारणमात्रं गतश्रीत्वेन करोति, यस्मिश्च कर्मण्युप-सम्प्राप्तेऽग्निरुद्धतः, तदर्थमेवोद्धरणम् । उद्धृतश्चाग्निस्तदर्थ एव निमित्तव-शाद्धार्यमाणः प्रसङ्गादग्निहोत्रस्योपकरोतीति, न तदुद्वाने प्रायश्चित्तम् ।

इत्यष्टमं धार्याग्निनाशे योतिष्मतीष्टेरननुष्ठानाधिकरणम् ।

—:-०-:—

दर्शार्थस्योद्धरणस्यामन्त्रकत्वाधिकरणम् ।। ९ ।।

न तूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात् ।। ३१ ।।

दर्शोपक्रमेऽग्न्युद्धरणे क्रियमाणे किमग्निहोत्राङ्गभूत उद्धरणमन्त्रः, 'वाचा त्वा होत्रे'त्यादिः प्रयोक्तव्यः, ने ति संशयः ।

तत्र—दर्शार्थेऽप्युद्धृते वह्नावग्निहोत्रं प्रवर्त्तते ।
साधनत्वप्रयुक्तश्च धर्मो नाङ्गमपेक्षते ।। ७३ ।।

तेनाग्निहोत्रानङ्गभूतेऽप्युद्धरणे तदुपकारकत्वमात्रेण यागार्थयोर्दधि-पयसोः प्रणीताधर्मा इव कर्त्तव्य एव मन्त्रः कालमनादृत्य । कालस्य गुण-त्वेनासम्भवेऽपि मन्त्रस्य लोपोऽन्याय्यः ।

अथवोद्धरणमप्येतदग्निहोत्रस्याप्यङ्गमकालेऽपि क्रियमाणम्, अन्यथा-ऽग्निहोत्रस्य प्रणयनलोपाद्वैगुण्यं स्यादिति प्राप्ते—

उच्यते—काले खल्वनुपादेये प्राप्ते कर्म विधीयते ।
साङ्गं तस्मात्तु कालात्प्राङ्नाधिकारोऽस्ति कर्मणि ।। ७४ ।।

अनधिकारिणा च क्रियमाणं निष्फलं स्यात् । तस्मान्नाप्राप्ते काले-ऽग्निहोत्राङ्गमुद्धरणम्; तन्मन्त्रो वा कर्तव्यः ।

इति नवमं दर्शार्थस्योद्धरणस्यामन्त्रकत्वाधिकरणम् ।



प्रायणीयचरौ प्रदानधर्माणामनुष्ठानाधिकरणम् ॥ १८ ॥

प्रदानदर्शनं श्रपणे तद्धर्मभोजनार्थत्वात्संसर्गाच्च मधूदकवत् ॥ ३२ ॥ संस्कारप्रतिषेधश्च तद्वत् ॥ ३३ ॥ तत्प्रतिषेधे च तथाभूतस्य वर्जनात् ॥ ३४ ॥ अधर्मत्वमप्रदानात्प्रणीतार्थे; विधानादतुल्यत्वादसंसर्गः ॥ ३५ ॥ परो नित्याऽनुवादः स्यात् ॥ ३६ ॥ विहितप्रतिषेधो वा ॥ ३७ ॥ वर्जने गुणभावित्वात्तदुक्तप्रतिषेधात्स्यात्कारणात्केवलाशनम् ॥ ३८ ॥ व्रतधर्माच्च लेपवत् ॥ ३९ ॥ रसप्रतिषेधो वा पुरुषधर्मत्वात् ॥ ४० ॥

'आदित्यः प्रायणीयः पयसि चरुरि'त्यत्र संशयः--किमेतत् पयश्चरुणातुल्यं तद्देवतासम्बन्धि प्रदेयद्रव्यत्वेन विधीयते। ततश्च प्रदेयधर्मैर्वत्सापाकरणादिभिः संबध्यते ? उत चरोरेव श्रपणार्थं प्रणीताकार्ये विधीयते, नप्रदेयधर्मान् लभेतेति।

तत्र—चरोर्देवतया योगं पयसा चरुसङ्गतिं।
विदधद्भिद्यते वाक्यमर्थद्वयविधानतः ॥ ७५ ॥

द्रव्यद्वयविशिष्टदेवतासम्बन्धविधौ त्वेकार्थविधानं। तस्मात्पयःप्रातिपदिकार्थोऽपि देवतासम्बन्धो,सप्तम्यर्थस्तु सह श्रपणादर्थसिद्धोऽनूद्यते अभ्युदितेष्टिवत इति प्राप्ते—

ब्रूमः—चरुणाऽऽधारभूतेन पयसा च विशेषितः।
द्रव्यदैवतसम्बन्ध एकार्थोऽत्र विधीयते ॥ ७६ ॥

'पयस्यादित्यश्चरुरित्युभयविशिष्टद्रव्यदेवतासम्बन्धविधान्नास्ति वाक्यभेदः। तत्र चरुः प्रथमानिर्द्देशाद्धविः, पयस्तु सप्तमीनिर्द्देशादाधारत्वेनसम्बध्यते। एवमवाक्यभेदे सति, सप्तमीनिर्देशस्याविवक्षामङ्गीकृत्य, तुल्यकल्पफलत्वमयुक्तमभ्युपगन्तुं। तस्मान्न पयसि प्रदेयधर्माः।

इति दशमं प्रायणीयचरौ प्रदानधर्माणामननुष्ठानाधिकरणम्।

---

अभ्युदयेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानाधिकरणम् ॥ ११ ॥

अभ्युदये दोहापनयः स्वधर्मास्यात्प्रवृत्तत्वात् ॥ ४१ ॥ शृतोपदेशाच्च ॥ ४२ ॥

अभ्युदयेष्टावपि 'ये स्थविष्ठाः, तानिन्द्राय प्रदात्रेदधंश्चरुं येऽणिष्ठाः, तान्विष्णवे शिपिविष्टाय शृते चरुःमि'ति दधिशृतयोः सप्तमीनिर्देशात्पूर्ववत्प्रदेयध र्मा न कर्तव्या इति प्राप्ते—

तत्रोच्यते—नापूर्वकर्मविधानादृतेऽनेकार्थविधिः सम्भवति । न चेहापूर्वकर्मविधिः । किन्तु पूवप्रवृत्तदर्शकर्मणि निमित्ते पूर्वमेवापनीतानां हविषां देवतान्तरसम्बन्धमात्रं विधीयत इति स्थितं षष्ठे ६-५-१ । तद्यदि तण्डुलानां देवतान्तरसम्बन्धे दधि-शृतयोश्च प्रणीतार्थे विधिः स्यात्, ततः प्राप्ते कर्मणि अनेकार्थविधानाद्वाक्यं भिद्येत । तस्मात्प्रदेयत्वेनैव प्रवृत्तयोर्दधि-शृतयोर्देवतान्तरसंयोगमात्रं तण्डुलवद्विधीयत इति, कर्त्तव्याः प्रदेयधर्माः ।

इत्येकादशमभ्युदयेष्टौ दधि-श्रृतयोः प्रदेयधर्मानुष्ठानाधिकरणम् ।



पशुकामेष्टौ दधिशृतयोः प्रदेयधर्माननुष्ठानाधिकरणम् ॥ १२ ॥

अपनयो वार्थान्तरे विधानाच्चरुपयोवत् ॥ ४३ ॥ लक्षणार्था शृतश्रुतिः ॥ ४४ ॥

'यः पशुकामः स्यात्, सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्, ये मध्यमातः, तान् विष्णवे शिपिविष्टाय शृते चरुं, ये स्थविष्ठाः,नानिन्द्राय प्रदात्रेदधंश्चरुमि'ति श्रुतं । तत्राभ्युदयेष्टितुल्यश्रुतित्वात्तद्वदेव दधिपयसोः प्रदेयत्वं मन्वानः प्रदेयधर्मान्मन्यते ।

अपूर्वकर्मविधानादप्राप्तप्रदानयोर्दधिपयसोः सप्तम्या श्रपणार्थमादित्यचरुपयोवद्विधानमित्यकर्त्तव्याः प्रदेयधर्माः ।

इति द्वादशं पशुकामेष्टौ दधिश्रृतयोः प्रदेयधर्माननुष्ठानाधिकरणम् ।



ज्योतिष्टोमे श्रपणानां प्रदेयधर्माननुष्ठानाधिकरणम् ॥ १३ ॥

श्रयणानां त्वपूर्वत्वात्प्रदानार्थे विधानं स्यात् ॥ ४५ ॥ गुणो-वा श्रयणार्थत्वात् ॥ ४६ ॥ अनिर्देशाच्च ॥ ४७ ॥ श्रुतेश्च तत्प्र-धानत्वात् ॥ ४८ ॥ अर्थवादश्च तदर्थवत् ॥ ४६ ॥ संस्कारं प्रति भावाच्च तस्मादन्यप्रधानम् ॥ ५० ॥

ज्योतिष्टोमे श्रूयते 'पयसा मैत्रावरुणं श्रीणाति' मै. सं. ४-५-८ सक्तुभिर्मन्थिनमि' ४-६-३ त्यादि । तत्र संशयः-किं पयःप्रभृतयः प्रदेयत्वेन सोमवद्विधीयन्ते, ततश्च प्रदेयधर्माः क्रयादयः कर्त्तव्याः ? उत सोमसंस्कारार्थ-त्वेन विधानादकर्त्तव्या इति ? तत्र पयसा सोमस्य मिश्रणं श्रूयते । किमर्थं ? कथं नु नाम सोमे प्रदीयमाने पयोऽपि प्रदीयेतेति । एवं हि यागनिर्वृत्तिः-इष्टमेव प्रयोजनं । सोमसंस्कारार्थत्वे तु अदृष्टार्थता स्यादिति, एतावता प्रदेयत्वं मन्यते ।

द्वितीयया प्रधानत्वं सोमस्यात्रावगम्यते ।
तृतीयया च तादर्थ्यं पयसः प्रतिपाद्यते ॥ ७७ ॥
श्रुतेश्चादृष्टसंस्कारकल्पना नैव दुष्यति ।
तस्मात्प्रदेयधर्माणां न पयःप्रभृतौ क्रिया ॥ ७८ ॥

इति त्रयोदशं सोमे श्रपणानां प्रदेयधर्माननुष्ठानाधिकरणम् ।



अश्वमेधे 'ईशानाय परस्वते' इत्यनेन यागान्तरविधानाधिकरणम् ॥ १४ ॥

पर्यग्निकृतानामुत्सर्गे तादर्थ्यमुपधानवत् ॥ ५१ ॥ शेषप्रतिषेधो वाऽर्थाभावादिडान्तवत् ॥५२॥ पूर्ववत्त्वाच्च शब्दस्य संस्थापयतीति चाप्रवृत्ते नोपपद्यते ॥ ५३ ॥ यज्ञहेतुत्वात्प्रतिषेधे संस्काराणामकर्म स्यात्तत्कारितत्वाद्यथा प्रयाजप्रतिषेधे ग्रहणमाज्यस्य ॥५४॥ क्रिया वा स्यादवच्छेदादकर्मसर्वहानं स्यात् ॥ ५५ ॥

अश्वमेधे 'ईशानाय परस्वत आलभते' मै. सं. ३-१४-१० इति प्रकृत्य-श्रूयते 'पर्यग्निकृतानारण्यानुत्सृजती'ति । तत्र सन्देहः-कि'मीशानायाऽऽलभते'

इत्यालम्भमात्रं विधीयते। तेषां चालब्धानां पर्यग्निकरणविशिष्ट उत्सर्गः-त्यागः पर्यग्निकरणवाक्येन विधीयते? उतेशानायेति यागविधिः, पर्यग्निकृतानारण्यानुत्सृजतीति, तत्रैव गुणविधिरिति।

तत्र सत्यपि देवतासंयोगे न यागविधिः, आलम्भमात्रं तु विधीयते। यागविधित्वे सति पर्यग्निकरणवाक्ये न किञ्चिद्विधेयं लभ्येत। न तावदुत्सर्गः, यागविधिनैव प्राप्तत्वात्। न पर्यग्निकरणं, चोदकप्राप्तत्वात्। न पर्यग्निकरणोत्तरकालमुत्सर्गः,तस्यापि प्राप्तत्वात्। न पर्यग्निकरणानन्तर्यं, आनन्तर्यशब्दाभावात्। न च क्लृप्तोपकारपर्यग्निकरणविधानादपूर्वत्वम्। न ह्यत्र पर्यग्निकरणं विधीयते, सिद्धवदुपसर्जनीभूतपर्यग्निकरणनिर्देशात्। न च पर्यग्निकरणान्ताङ्गरीतिविधिः, प्राप्तत्वादेव। न च ततः परेषां पदार्थानां प्रतिषेधः, प्रतिषेधकशब्दाभावात्। न च पर्यग्निकरणकाले 'उत्सृजती'तिविधिः, कालस्याशाब्दत्वात्, कालविधौ तु कालान्तरं निवर्तेत, नाङ्गान्तराणि, तत्र चोदकप्राप्तसमस्ताङ्गयुक्त उत्सर्गः पर्यग्निकरणकाले कथमनुष्ठातुं शक्येत। तस्मादालम्भमात्रं देवतोद्देशेन पूर्ववाक्ये विधीयते—परस्वतां। उत्तरवाक्ये तेषामुत्सर्गः पर्यग्निकरणविशिष्टश्चोद्यते।

उच्यते—विना यागेन न द्रव्यं देवतान्वयमृच्छति।
द्रव्यदैवतसंयोगादतो यागो विधीयते॥ ७९॥

ईशानायेति देवतात्वं गम्यमानमशक्यमपह्नोतुं। तच्च न कथंचिद्यागमन्तरेणालम्भमात्रादुपपद्यते। अतो यागविधिः। विहिते च तस्मिन् यदि पर्यग्निकरणवाक्यस्य विधेयं न लभ्यते, ततोऽनुवादो भवतु। न चैतावता देवतासम्बन्धज्ञानमप्रमाणीकर्तुं शक्यं। न च नास्ति विधेयम्, अपूर्वतापरत्वात्। क्लृप्तोपकारप्राकृतपर्यग्निकरणाङ्गरीतिर्विधीयते। तया प्रत्यक्षविहितया निराकाङ्क्ष ईशानप्रयोगवचनो न चोदकमपेक्षते। तस्माद्यागविधिः। उत्तरं तु तत्रैव गुणविधिः।

इति चतुर्दशमीशानवाक्ये यागान्तरविधानाधिकरणम्।

---

आज्येन शेषं संस्थापयतीत्यनेन कर्मान्तरविधानाधिकरणम्॥ १५॥

आज्यसंस्था प्रतिनिधिः स्याद् द्रव्योत्सर्गात्॥ ५६॥ समाप्तिवचनात्॥ ५७॥ चोदना वा कर्मोत्सर्गादन्यैः स्यादविशिष्ट-

**त्वात् ॥५८॥ अनिज्यां च वनस्पतेः; प्रसिद्धाऽन्तेन दर्शयति ॥५९॥ संस्था तद्देवतात्वात् स्यात् ॥ ६० ॥**

'त्वाष्ट्रं पात्नीवतमालभेते' तै. सं. ६-६-६ ति प्रकृत्य 'पर्यग्निकृतं पात्नीवतमुत्सृजती'ति श्रुतं। तत्र पुनः श्रूयते 'आज्येन शेषं संस्थापयती'ति। तत्र संशयः–किं पूर्वस्मिन्नेव कर्मणि पशोरुत्सृष्टस्य स्थाने प्रतिनिधित्वेनाज्यं विधीयते? किं वा कर्मान्तरविधिरिति। तत्र शेषशब्दात्,संस्थापयतिशब्दाच्च तत्रैव प्रतिनिधिविधिः, न कर्मान्तरं, देवतान्तराभावात्।

ननु पर्यग्निकरणान्ताङ्गरीतिविधानमित्युक्तं पूर्वाधिकरणे। ततश्च तथैव निराकाङ्क्षस्य न शेषमस्ति। उच्यते—पूर्वाधिकरणे यागविधिरालभतिरित्युक्तं। तदिह मृष्यामहे, पर्यग्निकरणान्ताङ्गरीतिनैराकाङ्क्ष्यं तु न मृष्यामहे, शेष-संस्थापयतिशब्दानुपपत्तेः। किं तु यागस्यैव पशुनोपक्रान्तस्य चोदकप्राप्तेऽग्नीषोमीयविध्यन्तेऽनुष्ठीयमाने पर्यग्निकृतावस्थायामुत्सर्गः—परित्यागः पशोर्विधीयते। तस्मिन्नुत्सृष्टे साकाङ्क्षस्य कर्मशेषस्याज्येन संस्थापनं विधीयते। कर्मान्तरस्य ह्यनुपक्रान्तस्य स्वरूपमेव वक्तव्यं, न समापनं। शेषशब्दस्य चानुपपत्तिः। तस्मात्पूर्वत्रैव प्रतिनिधिराज्येनेति प्राप्ते—

ब्रूमः–न प्रतिनिधिः सम्भवति। तथा हि-यदि पशोस्त्यागमात्रं क्रियेत, तत उत्पत्तिवाक्यविहितदेवतासम्बन्धो नानुष्ठितः स्यात्। तत्रैव देवतासम्बन्धविधिरप्रमाणं स्यात्। असति च देवतासम्बन्धे यागविधित्वं न स्यात्, प्रत्यक्षयजयश्रवणात्। असति च यागे अग्नीषोमीयविध्यन्तस्याप्राप्तेः पर्यग्निकृतोत्सर्गः, शेषसंस्थापनं चोभयमप्यनुपपन्नम्। अथ देवतामुद्दिश्योत्सृज्येत, ततः पशुसाधनके यागे पशुनैव मुख्येन साधिते, किमर्थः प्रतिनिधिः, देवतोद्देशेन चोत्सर्ग उत्पत्तिवाक्यसिद्धत्वान्न पर्यग्निकरणवाक्येन विधातव्यः। तस्मात्पूर्वाधिकरणोक्तन्यायेन पर्यग्निकरणान्ताङ्गरीतिविधानात्तयैव निराकाङ्क्षस्य पूर्वस्य कर्मणः समाप्तत्वान्न शेषमस्ति। यस्याज्येन संस्थापनमुच्येत। तस्मात्कर्मान्तरविधिरेवायमिति।

न च देवताभावः प्रकृतपात्नीवतपदानुषङ्गात्। इह संस्थापयतीति प्रत्ययार्थेन भावनया आज्यप्रातिपदिकार्थोऽनुषक्तदेवतापदयुक्तः सम्बध्यते। तदयमर्थः–पात्नीवतमाज्यं कुर्यादिति। शेष-संस्थाशब्दौ च सादृश्यात्पूर्वो हि यागः पत्नीवद्देवत्यः पर्यग्निकरणमात्रे संस्थापितः सशेष इव

तदनन्तरं चाज्ययागः पत्नीवद्देवत्य एव क्रियमाणस्तत्रैव शेषसमापनमिव भवति। याऽप्याज्यप्रातिपदिके तृतीया, साऽपि संस्थासम्बन्धानुवाद एव। प्रातिपदिकार्थमात्रन्तु देवतासम्बन्धित्वेन विधीयत इति, सिद्धं कर्मान्तरत्वम्।

इति पञ्चदशमाज्येनेति वाक्येन कर्मान्तरविधानाधिकरणम्।

उक्त—वक्ष्यमाणयोरर्थयोस्संग्रहः।

प्राकृतार्थपतितान्यकार्यतो मन्त्र-साभविषये च संस्कृतौ।
एवमूहविधिरत्र चिन्तितो बाधचिन्तनमतः करिष्यते ॥ ८० ॥

इति श्रीपार्थसारथिमिश्रकृतौ शास्त्रदीपिकायां नवमाध्यायस्य चतुर्थः पादः समाप्तः ॥

इति नवमोऽध्यायस्समाप्तः।



# अथ दशमोऽध्यायः

## प्रथमः पादः ।

### विकृतौ लुप्तार्थानां प्राकृतानां बाधाधिकरणम् ॥ १ ॥

विधेः प्रकरणान्तरेऽतिदेशात्सर्वकर्म स्यात् ॥ १ ॥ अपि वाऽभिधानसंस्कारद्रव्यमर्थे क्रियते तादर्थ्यात् ॥ २ ॥ तेषामप्रत्यक्षशिष्टत्वात् ॥ ३ ॥

नवम-दशमयोरध्याययोस्संगतिकथनम् ।

ऊहे सिद्धेऽतिदिष्टानां बाधाभ्युच्चयचिन्तया ।
इयत्ता दशमेऽङ्गानां विकृतिष्वभिधीयते ॥ १ ॥

अतिदिष्टपदार्थविषयत्वाद्बाधस्याप्यूहवदतिदेशोत्तरकालमारम्भः । ननूहबाधयोर्न मिथो हेतुहेतुमत्ता, ऊहो नाम प्राकृतस्य प्रयोगस्यान्यथाभावः । न च तदधीनो बाधः । कृष्णलेषु ह्यवघातस्य बाधः, न च तत्रोहोऽस्ति, अननुष्ठानात्, । न ह्यननुष्ठीयमानस्य प्रयोगविकारोऽस्ति, । यत्र चोहो नीवारादौ, न तत्र बाध इति विषयभेदान्न तयोरन्योन्यहेतुहेतुमत्ता । यत्र हि द्रव्यान्तरे,देवतान्तरे वा प्राकृतप्रयोजनमस्ति, तद्विषय ऊहः । यत्र तु नास्ति, तत्र बाधः । सत्यमेवं । तथाऽप्यूहस्य पदार्थगतरूपान्तरात्मकत्वेन पदार्थप्रत्यासत्तेस्तत्प्राप्तिचिन्तानन्तरं चिन्ता कृता । बाधस्तु तन्निवृत्त्यात्मकः-पश्चाच्चिन्त्यते ।

प्राभाकरसम्मतसंगतिनिरासेन स्वमतेन संगतिवर्णनम् ।

तत्र प्रथमन्तावदिदं चिन्त्यते—किं सर्वं प्राकृतं विकृतौ कर्त्तव्यं, उतक्लृप्तप्राकृतप्रयोजनं न कर्त्तव्यमिति । तदर्थमिदं विचार्यते-किं प्राकृतमङ्गजातम्, अङ्गशास्त्रं बा स्वरूपेणैवानादृतप्रयोजनं विकृतावतिदिश्यते-सौर्येण भावयेत्कथम् ? आग्नेयस्य यान्यङ्गानि, तानि कृत्वेति ? उत पदार्थकार्याणि यानि दृष्टादृष्टरूपाणि तद्वत्तासम्पादनाय य आग्नेयादिगतो व्यापारः, सोऽतिदिश्यते—सौर्येण भावयेत्, कथं ? यथाऽऽग्नेयेन, तथेति ।

पूर्वोत्तरपक्षयोः प्रयोजनवर्णनम् ।

तत्र पूर्वस्मिन्पक्षेऽतिदेशावगताङ्गभावानां प्राकृतप्रयोजनानादरेण विकृतावेव यथासम्भवं दृष्टादृष्टप्रयोजनकल्पनात् स्वयं दितेऽपि बर्हिषि लवन-

मदृष्टार्थतया कर्त्तव्यमिति, नास्ति बाधः। उत्तरत्र तु प्राकृतस्य लवनकार्यस्य दृष्टस्य स्वयंदिते बर्हिष्यभावेनानतिदेशाल्लवनस्वरूपस्य चानतिदेशान्न-कर्त्तव्यं लवनमिति, सिध्यति बाधः।

तत्रोपदेशवदतिदेशोऽपि पदार्थपूर्वक एव युक्तः, उपदेशानुरूपत्वात्त-स्येति मन्वानः सर्वं कर्त्तव्यं, न तु किंचिद्बाधितव्यमित्याह।

सिद्धान्तस्तु—अपेक्षाऽऽसत्तियोग्यत्वैरुपकारातिदेशनम्।
तदभावात्पदार्थानामतिदेशो न कल्प्यते ॥ २ ॥

यागेन भावयेदिति हि यथा यागः फलसाधनं भवति, तथा व्याप्रिये-तेत्यर्थः। कथमिति ? केन व्यापारेण यागः फलसाधनतामापद्यत इत्येवं यागस्य फलसाधने व्यापारविशेषोऽपेक्षितः, न तु व्यापारमात्रं, येनाव-घातादिव्यापारः स्वरूपेणातिदिश्येत। अवघात-प्रयाजादिजन्यदृष्टादृष्टोप-कारसंपादनं तु भवति यागस्य फलसाधनसामर्थ्यजनने व्यापारः। तस्माद-पेक्षावशादुपकारसम्पादनस्यैवातिदेशः, न पदार्थानां।

तथा—सन्निधिरपि तस्यैव, वैकृतं वाक्यं चोदनासामान्येन प्राकृतं-प्रधानवाक्यमुपस्थापयति। तच्च वाक्यं स्वार्थमुपस्थापयति। तस्य च स्वार्थोंऽशत्रययुक्ता भावना। तत्र साध्य-साधनांशावनपेक्षितत्वादनादृत्य-तृतीयोंशो गृह्यते, स चाङ्गजन्योपकारसंपादनात्मा, नाङ्गस्वरूपाणि।

तथा—कथमाकाङ्क्षापूरणयोग्यताऽपि यागगतव्यापारस्यैव, नाङ्गानां। तस्मादपेक्षा—सन्निधि-योग्यत्वैः कार्याणामेवात्र पदार्थविशिष्टानामतिदेशः, न पदार्थस्वरूपाणामपेक्षाद्यभावात्। एवं शास्त्रस्वरूपाणाम्। एवं च विशिष्ट-कार्यातिदेशादार्थिको विशेषणानां पदार्थानामतिदेशः। ततश्च यस्यां विकृतौ-यत्प्राकृतं कार्यं न सम्भवति, तस्यां तस्यासम्भवेनानतिदेशान्न तद्वशेन पदार्थ-प्राप्तिः। स्वरूपस्य नास्त्येवातिदेशः। तदिदमुक्तं 'तस्मात् लुप्तप्राकृतप्रयोजनं-न चोदकश्चोदयतो' शा. भा. १८०१ ति।

कृष्णलचरावववघातस्यांगत्वमस्ति; द्वारलोपादनुष्ठानं-
न भवतीति प्रभाकरमतस्योपन्यास-निरासौ

यस्तु पदार्थाननुरक्तं तदुपलक्षितमुपकारस्य स्वरूपमतिदिश्य, तस्य जनकापेक्षायां पदार्थानामपि पुनर्विकृत्यपूर्वेण तादर्थ्यादन्वयमिच्छति। तन्मते लुप्तप्राकृतद्वाराणामपि तादर्थ्याविगमात्तदुपपत्तये द्वारान्तरं परि-कल्प्याऽनुष्ठानं स्यात्। पदार्थापोहेन च स्वरूपमतिदिशता किं तत्स्वरूप-

मतिदेष्टव्यं ? न तावत्प्रकृत्युपकारव्यक्तिर्विकृतौ शक्या कर्त्तुं । तादृश-स्तूपकारोऽतिदिश्येत । तादृक्त्वं च न दर्शपूर्णमाससम्बन्धितया, न हि-विकृतौ तत्सम्बन्धिता सम्भवति, तेन प्रयाजादिमत्तयैव तादृक्त्वमिति-तादृग्रूपातिदेशोऽर्थसिद्ध एव । पदार्थानामतिदेशोऽपि विशिष्टविधिनेव विशेषणानां विधिरिति, व्यर्थः पृथक्पदार्थातिदेशः । स्यान्मतं–कारणभेदे–कार्यभेदस्यावश्यंभावाद्यत्प्रयाजाद्यधीनमुपकारान्तराद् व्यावृत्तं सर्वेषु दर्श-पूर्णमासोपकारेष्वनुवृत्तमुपकाररूपं, तदतिदिश्यत इति । तथाऽपि तत एव प्रयाजादिप्राप्तिः सिध्येत् । न हि तस्य तस्मादन्यत उत्पत्तिसम्भवः, कारण-भेदे कार्यभेदादिति त्वयैवोक्तत्वात् । तस्मादनर्थकोऽयं पदार्थातिदेशः केवल-मूहबाधविघाताय स्यादित्यास्तां तावत् ।

त्रिध्यन्ताधिकरणविरोधपरिहारः ।

ननु सप्तमे विध्यन्तातिदेश इत्युक्तं, विध्यन्तश्च ब्राह्मणम् । अतः-कथमिह शास्त्रातिदेशो निराक्रियते । उच्यते—कार्यातिदेशादार्थिको यः शास्त्रातिदेशः, तदभिप्रायन्तत् । अपि च विध्यन्तशब्देन प्राकृतस्य प्रधान-विधेर्योऽन्तिमोंऽशः, स उच्यते । न च 'समिधो यजति, व्रीहीनवहन्ती' ति-प्रत्यक्षश्रुतमात्रं प्रधानवाक्यस्य शेषः, किं तर्हि ? कल्पितकार्यवाचिशब्दसहित-मीदृशस्यैवातिदेशः * । ईदृशस्य च कृष्णलचरावतिदेशासम्भवात्सिद्धो बाधः। तस्माल्लुप्तार्थानां प्रकृतिवत्कुर्यादित्येतावन्मात्रालोचनया झटिति प्राप्ति-मवगतामपि भ्रान्तीकृत्य तदव्यतिरिक्ताङ्गविषयमतिदेशशास्त्रमुपसंह्रियते । तेन 'स्वयं दितं बर्हिर्भवती'त्यादौ लवनादयः, तन्मन्त्राः, तत्साधनभूताश्च-परश्वादयो न प्रवर्तन्ते ।

भाष्योक्तं कृष्णलचराववघातस्य बाधाधिकरणम् ।

एवं वा–'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' तै.सं.२-३-२ इति श्रूयते । तत्रावघातः कर्त्तव्यो नेति संशये, चरुशब्दोऽचरौ चरुधर्मविधा-नार्थः । तेन लुप्तार्थोऽप्यवघातो वचनाच्छ्रपणवत्कर्त्तव्य इति विशेषशङ्कां विनाऽप्यवघातेनालुप्तार्थैरेव धर्मैः, वैशद्येन वा उपपन्नश्चरुशब्दो नावघातं-प्रापयितुमलं । श्रपणं तु 'घृते श्रपयती'त्याहत्य विधानात्क्रियत इति-वषस्यम् ।

द्वितीयं वर्णकम् ।

[ यत्रार्थलोपोनिश्चितः, तत्परतया व्याख्याय, यत्रार्थलोपस्सन्दिग्धः, तत्परतया व्याख्यानम् । ]

एवं वा–'वैश्वदेवं चरुं निर्वपेद् भ्रातृव्यवान्,तं बर्हिषदं कृत्वा शम्यया'

स्फ्येन च व्यूहेत्, इदमहममुञ्चासुं च व्यूहामीति, यं द्विष्यात्, तं ध्यायेत्, यदधोऽवमृज्येत, यच्च स्फ्य आश्लिष्येत्, तद्विष्णव उरुक्रमायाऽवद्यती'मै. सं. २-२-५-ति श्रूयते। तत्र संशयः किं—वैश्वदेवदेवतावाहनकाले विष्णोरावाहनं कर्त्तव्यं, नेति। तत्र चोदकप्राप्तेः कर्त्तव्यम्। कथं पुनश्चोदकप्राप्तिः? न हीयं देवता प्राकृत्याःकस्याश्चिद्देवतायाः कार्ये वर्त्तते, किं त्वप्राकृतकार्येयम्। अतोऽस्याः यूपावपटस्तरणबर्हिषीव वर्हिर्धर्मा नावाहनं प्राप्नोति। सत्यं। वैश्वदेविकचोदकेन न प्राप्नोति, स्वयमेव त्वयं वैष्णवयाग औषधद्रव्यकत्वाच्चाग्नेयविकारः, तत्र वैश्वदेविकतन्त्रमध्यपातात्तर्वाण्यङ्गानि प्रसङ्गेनोपकुर्वन्तीति, न पृथक् क्रियन्ते। आवाहनं त्वकृतार्थत्वात्कर्त्तव्यमिति प्राप्ते—

ब्रूमः। नैमित्तिकविधेर्निमित्तापेक्षित्वान्निमित्तस्य स्फ्याश्लेषादेरवश्यंभावाभावेन, देवताऽऽवाहनकाले निश्चयासम्भवादनिश्चितसद्भावमुरुक्रमयागविधानं नावाहनं प्रयोक्तुं क्षमम्। अविहितं चावाहनं कृतमपि निष्फलमेव। तस्मान्न कर्त्तव्यम्।

इति वर्णकद्वयसहितं प्रथमं विकृतौ लुप्तार्थानां
प्राकृताङ्गानां बाधाधिकरणम्।

---

दीक्षणीयादिषु आरम्भणीयाबाधाधिकरणम्॥ २॥

इष्टिरारम्भसंयोगादङ्गभूतान्निवर्तेतारम्भस्य प्रधानसंयोगात्॥४॥

दर्शपूर्णमासयोरारम्भणीया श्रुता। सा विकृतिष्वपि कर्त्तव्येति द्वादशे वक्ष्यते। सा किं सोमाङ्गभूतासु दीक्षणीयादिषु कर्त्तव्या, नेति विचारः।

कर्तव्या चोदकप्राप्तेरिति प्राप्तेऽभिधीयते।
अङ्गभूतास्वियं लुप्तद्वारत्वान्न प्रवर्तते॥ ३॥
आरप्स्यमानपुरुषसंस्कारार्थेयमिष्यते।
नारम्भो दीक्षणीयादेः प्रधानारम्भसिद्धितः॥ ४॥

आरम्भद्वारेणारम्भणीया प्रकृतावङ्गमासीत्, अतो विकृतिष्वपि तद्द्वारैव प्राप्तिः, न चाङ्गभूतासु दीक्षणीयादिष्विष्टिष्वात्मीय आरम्भोऽस्ति। ज्योतिष्टोमे तावन्न कर्त्तव्या, तस्यापूर्वत्वात्। दीक्षणीयादेश्च तस्यामवस्थायामप्राप्तावसरत्वात्, ज्योतिष्टोमे च प्रवृत्तोऽर्थादङ्गेष्वपि प्रवृत्तो भवति।

प्रथमं च प्रवर्तनमारम्भः । तेन प्रधानार्थेनैवारम्भेणाङ्गानामारब्धत्वात् न तेषां पृथगारम्भोऽस्ति । तदभावाच्च तद्द्वाराऽऽरम्भणीया लुप्तार्थत्वान्न कर्त्तव्या ।

इति द्वितीयं दीक्षणीयादिष्वारम्भणीयाबाधाधिकरणम् ।

अनुमत्यादीष्टिषु आरम्भणीयाबाधाधिकरणम् ॥ ३ ॥

प्रधानाच्चान्यसंयुक्तात्सर्वारम्भान्निवर्त्तेतानङ्गत्वात् ॥ ५ ॥

अथ यत्रैष्टिकानि, अन्यानि च कर्माणि समप्रधानान्येकफलसाधनत्वेन चोदितानि यथा राजसूये । तत्र किमैष्टिकेष्वारम्भणीया स्यात्, न वेति । पूर्वाधिकरणे प्रधानविषयारम्भः, नाङ्गानामित्युक्तम् । स इह सर्वेषां प्रधानत्वादिष्टीनामप्यस्त्यारम्भः । तेनालुप्तार्थत्वादारम्भणीया कर्त्तव्येति प्राप्ते–

ब्रूमः— प्रकृतौ हि यदङ्गमारम्भणीया, तद्विषय आरम्भो द्वारं 'दर्शपूर्णमासावारप्स्यमानः' इति वचनात् । इह त्विष्टि-पशु-सोमानामेकप्रयोगभाजामेकः सर्वेषु व्यासक्त आरम्भो नेष्टिभिर्व्यपदेष्टुं शक्यते अग्निषोमीयहविरिवाग्निना, तेनात्रापीष्टीनामात्मीयारम्भाभावाल्लुप्तार्थैवारम्भणीया ।

इति तृतीयं राजसूयान्तर्गतानुमत्यादिष्वारम्भणीयाबाधाधिकरणं ।

आरम्भणीयायां आरम्भणीयाबाधाधिकरणम् ॥ ४ ॥

तस्यां तु स्यात्प्रयाजवत् ॥ ६ ॥ न वाऽङ्गभूतत्वात् ॥ ७ ॥ एकवाक्यत्वाच्च ॥ ८ ॥

किमारम्भणीयायामारम्भणीया कर्त्तव्या, नेति संशयः । नन्वङ्गभूतेयं दर्शपूर्णमासयोः । अतो दीक्षणीयादिवदस्यां न कर्त्तव्या । तस्माद्गतार्थमेतत् । उच्यते—सत्यमङ्गभूता, तथाऽपि पृथगारम्भा भवति । न प्रधानारम्भेण सिद्ध्यति, न ह्यस्यां वेलायामारब्धौ दर्शपूर्णमासौ । तयोरारप्स्यमानयोरेषा विहिता, यदि चारब्धौ भवेतां, तत आरम्भणीयैव न कर्त्तव्या । सा हि कर्त्तारमारम्भयोग्यं कर्त्तुं क्रियते । तौ चेदारब्धौ, किमर्था सा । तस्मादारप्स्यमानयोर्दर्शपूर्णमासयोः क्रियमाणेयं पृथगारम्भा भवतीत्यलुप्तार्थत्वादस्यामारम्भणीया कर्तव्या । मैवम् । अशक्याऽसावतिदेष्टुं । सा हीदानीं विधीयते, न तस्या दर्शपूर्णमासाङ्गत्वं ज्ञातं, यच्च प्रकृतावज्ञातं, न तद्विकृतावतिदेष्टुं

शक्यं । तदेतदेकमेव वाक्यमविहितवद्दर्शपूर्णमासयोरेतां विदधाति, विहितत्वच्चातिदिशतीति न कथंचिदवकल्पते । तस्मात्तद्व्यतिरिक्तेतिकर्तव्यतातिदिश्यते ।

इति चतुर्थमारम्भणीयायामारम्भणीयाबाधाधिकरणम् ।

---

खलेवाल्यां यूपाहुतिबाधाधिकरणम् ॥ ५ ॥

कर्म च द्रव्यसंयोगार्थमर्थाभावान्निवर्तेत; तादर्थ्यं श्रुतिसंयोगात् ।९।

साद्यस्के श्रूयते 'खलेवाली यूपो भवती'ति । प्रकृतौ चास्ति यूपाहुतिः- 'यूपमच्छेष्यता होतव्यमि'ति । सा किं खले वाल्यां कर्त्तव्या, नेति संशये, अतिदेशप्राप्तेः कर्त्तव्येति प्राप्ते—

लुप्तार्थत्वादकर्त्तव्येत्याह । कथं ? 'यूपमच्छेष्यता होतव्यमि'ति— छेदनार्थो होमः । न च खले वाल्यां छेदनमस्ति । स्वदेशावस्थितायामेवतस्यां पशुर्बध्यते । अतस्तत्र न यूपाहुतिः कर्तव्या ।

इति पञ्चमं खलेवाल्यां यूपाहुतिबाधाधिकरणम् ।

---

खलेवाल्यां स्थाण्वाहुतिबाधाधिकरणम् ॥ ६ ॥

स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयेत ॥ १० ॥ अपि वा शेषभूतत्वात्संस्कारः प्रतीयेत ॥ ११ ॥ समाख्यानं च तद्वत् ॥ १२ ॥ मन्त्रवर्णश्च तद्वत् ॥ १३ ॥

तत्रैव—'स्थाण्वाहुतिं जुहोती'ति । सा किं यस्मिन् कस्मिँश्चित्स्थाणावारादुपकारकत्वेन कर्तव्या सती खले वाल्यामपि स्यात्, किं वा यूपाव्रश्चनस्थाणौ कर्तव्या तद्द्वारेण यूपस्यैव संस्कारार्था सती खलेवाल्यामाव्रश्चनस्थाण्वभावेन लुप्तार्थत्वादकर्त्तव्येति विचारे, यूपवियोजिते स्थाणौ क्रियमाणा तद्द्वारेण न शक्नोति यूपस्योपकर्त्तुं, तस्मादारादुपकारिका खलेवाल्यां कर्त्तव्येति प्राप्ते —

ब्रूमः—आव्रश्चनस्थाणोः सन्निधानात्तद्द्वारेण च संस्कारत्वे संभवति, आरादुपकारत्वानुपपत्तेर्यूपसंस्कारार्थेयं वियोजितेऽपि स्थाणौ यूपीयोऽया-

वित्येवं क्रियमाणा शक्नोत्येव यूपस्योपकर्त्तुं । देवदत्तधारिताया इव स्रजः-शुचिदेशनिधानं देवदत्तस्य । यद्यपि चादृष्ट एव संस्कारः, तथाऽपि संस्कारत्वमेव सम्बद्धोपकारित्वलाभादसम्बद्धोपकारिण आराद्रुपकाराज्ज्यायः । तस्मात् खलेवाल्यां न कर्त्तव्या ।

इति षष्ठं खलेवाल्यां स्थाण्वाहुतिबाधाधिकरणम् ।

---

उत्तमप्रयाजस्य संस्कारकर्मताधिकरणम् ॥ ७ ॥

प्रयाजे च तन्न्यायत्वात् ॥ १४ ॥ लिङ्गदर्शनाच्च ॥ १५ ॥

अस्ति दर्शपूर्णमासयोरुत्तमः प्रयाजः 'स्वाहाकारं यजती' तै.सं.२-६-१ ति । स किमाराद्रुपकारकः ? उताज्यभागादिषु वक्ष्यमाणानामग्न्यादिदेवतानां संस्कार इति । तदर्थमिदं विचार्यते-किं 'स्वाहाकारं यजती'ति देवताविधिः, उत नामधेयं ? स्वाहाग्निं, स्वाहा सोममि'त्यादिमन्त्रवर्णाद्देवताविधिरिति ।

तत्र—वचनाद्देवतालाभे न मन्त्रात्कल्पनं क्षमम् ।
तस्याश्चानुपयोगित्वान्नवेदाराद्रुपक्रिया ॥ ५ ॥

न हि वचनविहितदेवतासम्भवे, स्वाहाऽग्निं, स्वाहा सोममि'त्यादिना तत्कल्पना युक्ता । न चाऽयं मन्त्रः करणत्वेन श्रुत्या विधीयते, यतस्तद्गतानामग्न्यादीनां देवतात्वं कल्प्येत । क्रम-प्रकरणविनियोज्यो ह्यसौ । न चाविज्ञातसामर्थ्यस्ताभ्यां विनियोक्तुं शक्यते । न चाग्न्यादिप्रतिपादकस्य मन्त्रस्याविज्ञातदैवत्ये यागे सामर्थ्यमवगम्यते । तेन वाचनिकं देवताविधानमाश्रित्य तत्रैवाग्न्यादिशब्दानां मातृशब्दवद्रूढ्या कथंचिद्वृत्तिरङ्गीकर्त्तव्या । अतो न मान्त्रवर्णिकी देवतेत्याराद्रुपकारकः । किं च न चायं स्वाहाकारो मन्त्रवर्णाच्छक्यते कल्पयितुं । तेन स्वाहाकारदेवताकयागविधानमिदं । न च स्वाहाकाराख्या देवताऽन्यत्रोपयोगिनी, या संस्क्रियेत । तस्मादाराद्रुपकारकमिदं कर्मेति प्राप्ते—

उच्यते-न देवताविधौ शक्तिर्द्वितीयान्तस्य विद्यते ।
न च यागविधौ क्षीणो विधत्ते देवतां विधिः ॥ ६ ॥

न ह्येकार्थविधिसम्भवेऽनेकार्थविधिर्युक्तः । सम्भवति चात्र यागमात्रविधानं स्वाहाकारशब्दस्य, 'स्वाहाऽग्निमि'त्यादिमन्त्रसम्बन्धेन नामधेयत्व-

सम्भवात। करणत्वं च क्रमसहितात्प्रकरणाल्लभ्यते मन्त्रस्य। न चासामर्थ्यं निश्चितं, येन विनियोगो न स्यात्। सम्भवति च यागे देवताप्रतिपादकस्य मन्त्रस्य प्रकाशनसामर्थ्यं। यदि यागोऽयं न स्यात, यदि यागोऽपि वा देवतान्तरयुक्तः स्यात्, ततोऽग्न्यादिवचनस्य मन्त्रस्यासामर्थ्यं निश्चीयेत। न त्वेतदस्ति।

तस्माद्योग्यताऽस्तीत्यविहतो विनियोगः। न च द्वितीयान्तस्य देवताविधौ सामर्थ्यं लभ्यते, मन्त्रवर्णाद्देवताविधिरिति वचनादगत्या देवताविध्याश्रवणं। मन्त्रे चाज्यभागादिषु वक्ष्यमाणा देवता यथाक्रमेण संकीर्त्यमानाः प्रत्यभिज्ञायन्त इति, तासां स्मरणं दृष्टमेव प्रयोजनमिति, नादृष्टार्थत्वकल्पना। तस्माद्विकृतिषु सौर्यादिष्वग्न्यादिपदानि लुप्तार्थत्वान्निवर्त्तन्ते।

इति सप्तममुत्तमप्रयाजस्य संस्कारकर्मत्वाधिकरणम्।



अग्नियागस्याराद्उपकारकताधिकरणम् ॥ ८ ॥

तथाऽऽज्यभागाग्निरपीति चेत् ॥ १६ ॥ व्यपदेशाद्देवतान्तरम् ॥ १७ ॥ समत्वाच्च ॥ १८ ॥

दर्शपूर्णमासयोराज्यभागौ प्रकृत्य श्रूयते 'आज्यभागावग्नीषोमाभ्यां यजती'ति। योऽयमाग्नेय आज्यभागः, स किं प्रधानदेवताया अग्नेः संस्कारः, उदाराद्उपकारक इति? पूर्वेण न्यायेन संस्कारत्वे प्राप्ते—

उच्यते—निगदेष्वावाहनादिषु 'अग्निमग्न आवह, सोममावह, अग्निमावहे'त्येवमग्निशब्दस्य द्विःपाठाद्देवतान्तरं गम्यते, सोमाच्च पूर्वं पठ्यमानोऽग्निस्ततः परभाविनः प्रधानाग्नेरन्य इति गम्यते। विधिवाक्ये 'चाग्नीषोमाभ्यां यजती'त्येकेन पदेनाग्निः सोमश्च विधीयते, तत्र स्पष्टमेव यागं प्रति गुणत्वं सोमस्य, अन्यत्र देवतात्वाभावात्। तद्यद्यग्निः प्रधानं स्यात्, ततो वैरूप्यं स्यात्, सोमापेक्षयाऽऽज्यभागावित्युद्दिश्याग्नीषोमाभ्यामित्युपादेयम्, अग्न्यपेक्षया तद्विपरीतमिति वचनव्यक्तिभेदात्। तस्मादग्निरपि यागाङ्गत्वेन विधीयते। यागस्तु प्रधानकर्माऽऽराद्उपकारकः। तेन सौर्यादिषु नाग्निर्निवर्तते। अग्नीषोमीयादिविकारेष्वप्याग्नेयाज्यभागोऽतिदिश्यते।

इत्यष्टममाग्नेयाज्यभागस्याराद्उपकारकत्वाधिकरणम्।



पशुपुरोडाशयागस्य देवतासंकारकताधिकरणम् ॥ ७ ॥

पशावपीति चेत् ॥ १६ ॥ न तद्भूतवचनात् ॥ २० ॥ लिङ्ग-दर्शनाच्च ॥ २१ ॥ गुणो वा स्यात्कपालवद्गुणभूतविकाराच्च ॥ २२ ॥ अपि वा शेष भूतत्वात्तत्संस्कारः प्रतीयेत; स्वाहाकार-वदङ्गानामर्थसंयोगात् ॥ २३ ॥ व्यृद्धवचनं च विप्रतिपत्तौ तदर्थ-त्वात् ॥२४॥ गुणेऽपीति चेत् ॥२५। नासंहानात्कपालवत् ॥ २६ ॥ ग्रहाणां च सम्प्रतिपत्तौ तद्वचनं तदर्थत्वात् ॥ २७ ॥ ग्रहाभावे तद्वचनम् ॥२८॥ देवतायाश्च हेतुत्वे प्रसिद्धं तेन दर्शयति ॥२९॥ अविरुद्धोपपत्तिरर्थापत्तेः, श्रुतवद् गुणभूतविकारः स्यात् ॥ ३० ॥ स द्व्यर्थः स्यादुभयोः श्रुतिभूतत्वाद्विप्रतिपत्तौ; तादर्थ्याद्विकारत्व-मुक्तं; तस्यार्थवादत्वम् ॥ ३१ ॥ विप्रतिपत्तौ तासामाख्याविकारः स्यात् ॥ ३२ ॥ अभ्यसो वा प्रयाजवदेकदेशोऽन्यदेवत्यः ॥ ३३ ॥

अग्नीषोमीये पशौ पशुपुरोडाशः—'अग्नीषोमीयस्य वपया प्रचर्याग्नी-षोमीयं पशुपुरोडाशमनुनिर्वपती' तै सं. ६-३ १० ति। स किं पशोरारादुप-कारकः? उत पशुदेवतासंस्कार इति सन्देहे, ? पशौ, पशुपुरोडाशे चोभ-यत्रापि तद्धितनिर्देशाद्विशेषणभूता देवता गुणत्वेन गम्यते। न च गृह्यते-विशेषः, पशोर्देवताऽङ्गं, पुरोडाशे विपरीतमिति। उभयत्राप्यूपवैव देवतो-पादीयत इति, न संस्कारत्वम्। 'आ सोमं वहन्त्यग्निना प्रतितिष्ठन्ती' मै. सं ३-३-४ ति वाक्यशेषाल्लता सोमः, प्रणीयमानोऽग्निश्च पशौ देवता। पुरोडाशे तु न नियोगतस्तावेवेति प्रमाणमस्ति। तस्मादारादुपकारकः-पशुपुरोडाशः।

नैवं—दृष्टे स्मरणसंस्कारे सति नादृष्टकल्पना।
पशुधर्मैश्च सन्दंशात्तदङ्गत्वं सुनिश्चितम् ॥ ८ ॥

ज्योतिष्टोमाङ्गं हि पशुर्न पुरोडाशे संस्कारार्थत्वेन शक्यः शङ्कितुं। पुरोडाशस्तु पशुधर्ममध्ये विधीयमानस्तदङ्गं संस्तद्गतदेवतासंस्कारेण दृष्टेनोपकुर्वन्नादृष्टार्थतामवलम्बते। अतो नाऽगृह्यमाणविशेषत्वं। तेन यैव

पशोर्देवता, लता वा अन्या वा, सैव पुरोडाशेन संस्कर्त्तव्येति, विकृतिषु देवतान्तरवतीऽग्नीषोमौ निवर्तेते ।

इति नवमं पशुपुरोडाशयागस्य देवतासंस्कारकत्वाधिकरणम् ।

—:-०-:—

सौर्यं चरुं निर्वपेदित्यत्र चरुशब्दस्यौदनवाचिताधिकरणम् ॥ १० ॥

चरुर्हविर्विकारः स्यादिज्यासंयोगात् ॥ ३४ ॥ प्रसिद्धग्रहणत्वाच्च ॥ ३५ ॥ ओदनो वाऽन्नसंयोगात् ॥ ३६ ॥ न द्व्यर्थत्वात् ॥ ३७ ॥ कपालविकारो वा विशयेऽर्थोपपत्तिभ्याम् ॥ ३८ ॥ गुणमुख्यविशेषाच्च ॥ ३९ ॥ तच्छ्रुतौ चान्यहविष्ट्वात् ॥ ४० ॥ लिङ्गदर्शनाच्च ॥ ४१ ॥ ओदनो वा प्रयुक्तत्वात् ॥ ४२ ॥ अपूर्वव्यपदेशाच्च ॥ ४३ ॥ तथा च लिङ्गदर्शनम् ॥ ४४ ॥

'सौर्यं चरुं निर्वपेदि'त्यत्र संशयः—किं स्थालीवचनश्चरुशब्दः, उत ओदनवचन इति ? यदाऽपि स्थालीवचनः, तदापि किं स्थाली कपालविकारः हविःश्रपणार्था ? उत पुरोडाशस्य हविषो विकारः प्रदेयेति ? तत्र स्थाल्यां लोकप्रसिद्धेस्तद्वचनत्वं, यस्तु याज्ञिकानामोदने प्रयोगः, स स्थालीसम्बन्धाल्लाक्षणिकः । न च विपरीतं सम्भवति, ओदनमात्रे प्रयोगाभावात् । येऽपि तस्यौदनवचनत्वं मन्यन्ते, तेऽपि न तन्मात्रं वाच्यमाहुः, कपाले, कटाहे वा श्रपितस्यौदनस्य तद्वाच्यत्वानभ्युपगमात् । तथा चोपरितनेऽधिकरणे वक्ष्यामः, तेन स्थालीसम्बन्धनिमित्त एवौदनेऽपि चरुशब्द इति, विशेषणत्वात्स्थाल्येवाऽभिधेया । सा चानदनीया हविष्ट्वायोग्या । श्रपणयोग्यता तु प्रसिद्धैव, तस्मात्स्थाली चरुः, कपालविकारश्च । सौर्यमिति स्थाल्यां श्रपितस्य हविषः सूर्यसम्बन्धात्स्थाल्येवाऽभिधीयते । 'तस्येदमि' पा. सू. ४-३-१२० ति तद्धितो भविष्यतीत्येकः पक्षः ।

गृह्णीम एतत्स्थाली चरुरिति । स तु हविर्विकारः, सौर्यमिति देवतासंयोगात् । देवतातद्धितो ह्ययम् । अन्यथा याग एवायं न स्यात् । वचनाच्चानदनीयेनापि कृष्णलादिनेव यागः क्रियेत, तस्माद्धविर्विकार इति द्वितीयः ।

सत्यं । चरुर्हविर्विकारः, न तु स्थाल्यां चरुशब्दः, किन्त्वोदने । चरुशब्दस्य वेदे, याज्ञिकप्रयोगे चौदनवचनत्वावधारणात् । वेदे तावदादित्यः प्रायणीयश्चरुरित्युक्त्वा, 'अदितिमोदनेने'ति पश्चादनुवादादोदनवचनत्वं-

तत्र तावद्वाक्येऽवगम्यत इत्युक्तं 'शास्त्रस्था वा तन्निमित्तत्वादित्यत्र मी. द. २-३-६ । ततश्चानेकार्थत्वमन्याय्यमिति, सर्वत्रैवोदनवचनत्वं । याज्ञिकाश्च अनवस्रावितान्तरूष्मपक्वौदने चरुशब्दमुपचरन्ति । तेषां च शब्दैकगम्यधर्माधर्मव्यवहारिणां शब्दार्थाविप्लवे तात्पर्यातिशयात्पृथग्जनेभ्यः प्रत्ययिततरत्वात्स एव शब्दार्थः । पाकविशेषनिमित्तश्चौदने चरुशब्दः । न च स्थालीमन्तरेण स पाको निर्वर्तत इति कृत्वा, स्थाल्यादरः, न तु तावता स्थालीवचनत्वं । तस्मादोदनेन हविर्विक्रियते ।

इति दशमं सौर्यचरावोदनेन प्राकृतहविर्बाधाधिकरणम् ।

---

सौर्यचरोः स्थाल्यामेव पाकाधिकरणम् ॥ ११ ॥

**स कपाले प्रकृत्या स्यादन्यस्य चाश्रुतित्वात् ॥ ४५ ॥ एकस्मिन्वा विप्रतिषेधात् ॥ ४६ ॥ न वाऽर्थान्तरसंयोगादपूपे; पाकसंयुक्तं धारणार्थं चरौ भवति; तत्रार्थात्पात्रलाभः स्यादनियमोऽविशेषात् ॥ ४७ ॥ चरौ वा लिङ्गदर्शनात् ॥ ४८ ॥**

स एष चरुः किं कपाले पक्तव्यः ? उत यत्र क्वचित् ? उत स्थाल्यामिति संशयः । चोदकप्राप्तेः कपाले स्यात्, नन्वष्टत्वपरिच्छिन्नं कपालं चोदकेन प्राप्नोति, न च चरुरष्टसु कपालेषु शक्यः पक्तुं । सत्यमष्टत्वं प्राप्यते, तत्त्वसम्भवान्निवर्त्तते, न तु तन्निवृत्त्या कपालमपि निवर्तितुमर्हति । तस्मात्कपाले स्यात् ।

नैवम् । अप्राकृतकार्यत्वात् । प्रकृतौ हि कपालोष्मणा हविः पाको निर्वर्तते, चरुस्तूदकगतोष्मणा पक्तव्यः, तत्र कपालमुदकधारणार्थमुपादीयमानमप्राकृतकार्यं स्यादिति, न चोदकानुग्रहः । तस्माद्यत्र क्वचित्पक्तव्यः- इति प्राप्ते—

ब्रूमः—स्थाल्यामेव स्यात् । तस्य हि चरुत्वनिमित्तः पाको निर्वर्तते, नान्यत्र । तस्मात्स्थाल्यां स्यात ।

यद्योदनवचनेऽपि चरुशब्दे स्थाल्यामेव पाकः, ततः पूर्वाधिकरणे स्थाली कपालविकार इति पक्षस्य ओदनेन हविर्विक्रियत इति पक्षस्य च कोऽनुष्ठाने विशेषः ? उभयथाऽपि स्थाल्यां पक्वस्य हविष्ट्वादित्याशङ्क्य ।

इत्येकादशं सौर्यचरोः स्थालीपाकाधिकरणम् ।

---

सौर्यचरौ पेषणाभावाधिकरणम् ॥ १२ ॥

तस्मिन्पेषणमनर्थलोपात्स्यात् ॥ ४९ ॥ अक्रिया वा अपूपहेतुत्वात् ॥ ५० ॥ पिण्डार्थत्वाच्च संयवनम् ॥ ५१ ॥ संवपनं च तादर्थ्यात् ॥ ५२ ॥ सन्तापनमधः श्रपणात् ॥ ५३ ॥ उपधानं च तादर्थ्यात् ॥ ५४ ॥ पृथुश्लक्ष्णे चाऽनपूपत्वात् ॥ ५५ ॥ अभ्यूहश्चोपरिपाकार्थत्वात् ॥ ५६ ॥ तथा च ज्वलनम् ॥ ५७ ॥ व्युद्धृत्याऽऽसादनं च प्रकृतावश्रुतित्वात् ॥ ५८ ॥

सूत्रैः प्रयोजनमुच्यते । स्थाल्या हि कपाले निर्वर्त्तितेऽपि चोदकप्राप्तः पुरोडाश एव श्रपितो हविः स्यात्, ततश्च पेषणसंयवनोपधानादीनि कर्त्तव्यानि स्युः, सिद्धान्ते त्वोदने तेषामर्थलोपादकरणम् ।

अधिकरणान्तरम्

एवं प्रयोजनसूत्राणि व्याख्याय,पुनरधिकरणान्तरत्वेन व्याख्यातवान्, यो नाम चरावपि सम्भवादवघातवत्पेषणादीनि कर्त्तव्यानीति मन्यते, तस्य बुद्धिर्मन्दविषन्यायेन व्यावर्त्यते, प्रयोजनप्रयुक्तत्वात्तेषां, चरौ च तदभावादकरणं पेषणसंयवनोपधानादीनाम् । उपधानं तु याज्ञिकाः कपालोपधानकाले तेनैव मन्त्रेण स्थाल्याः कुर्वते, न च स्थाली कपालकार्ये वर्तते, उदकधारणार्थत्वात् । अत उपधानस्य व्यावृत्त्या आसादनमप्राकृतत्वान्न चोदकेन प्राप्यते ।

इति द्वादशं सौर्यचरौ पेषणबाधाधिकरणम् ।

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां
दशमाध्यायस्य प्रथमः पादः ॥ १ ॥

---

## अथ दशमाध्याये द्वितीयः पादः

कृष्णलेचरौ पाकानुष्ठानाधिकरणम् ॥ १ ॥

कृष्णलेष्वर्थलोपादपाकः स्यात् ॥ १ ॥ स्याद्वा प्रत्यक्षशिष्टत्वात्प्रदानवत् ॥ २ ॥

कृष्णलचरौ पाकानुष्ठानाधिकरणं ॥ १ ॥

'प्राजापत्यं घृते चरुं निर्वपेच्छतकृष्णलमायुष्कामः' तै. सं. २-३-२ इत्यत्र संशयः—किं कृष्णलेषु पाकः कर्त्तव्यः, नेति ? लुप्तार्थत्वादकर्त्तव्यः । ननु 'घृतेऽश्रपयती'ति वचनात्कर्तव्यः । न । अशक्यत्वात् । रूपरसादीनां पूर्वेषान्तिरोभावः, अपूर्वाणां च प्रादुर्भावः-पाकः । असौ न कृष्णलेषु सम्भवति । तस्मादकर्त्तव्य इति प्राप्ते—

ब्रूमः—यद्यपि मुख्यः पाको न सम्भवति, तथाऽपि लक्षणया तापमात्रं वचनेन विधीयते, अतस्तावन्मात्रं कर्त्तव्यम् । अन्यथा वचनानर्थक्यं स्यात् । यदि त्वयमेव मुख्यः पाको यदनुष्णस्पर्शवद्द्रव्यस्योष्णीकरणं, ततः सुतरां वचनबलादसत्यपि प्राकृते कार्ये कर्त्तव्यः ।

इति प्रथमं कृष्णलचरौ पाकानुष्ठानाधिकरणं ।



कृष्णले उपस्तरणाभिघारणयोरभावाधिकरणम् ॥ २ ॥

उपस्तरणाभिघारणयोरमृतार्थत्वादकर्म स्यात् ॥ ३ ॥ क्रियेत वाऽर्थवादत्वात्तयोः संसर्गहेतुत्वात् ॥ ४ ॥ अकर्म वा चतुर्भिराप्तिवचनात्सह पूर्णः; पुनश्चतुरवत्तम् ॥ ५ ॥ क्रिया वा मुख्यावदानपरिमाणात्; सामान्यात्तद्गुणत्वम् ॥ ६ ॥ तेषां चैकावदानत्वात् ॥ ७ ॥ आप्तिः संख्या समानत्वात् ॥ ८ ॥ सतोस्त्वाप्तिवचनं व्यर्थम् ॥ ९ ॥ विकल्पस्त्वेकावदानत्वात् ॥ १० ॥ सर्वविकारे त्वभ्यासानर्थक्यं, हविषो हीतरस्य स्यादपि वा स्विष्टकृतः स्यादितरस्यान्यायत्वात् ॥ ११ ॥ अकर्मा वा संसर्गार्थनिवृत्तित्वात्, तस्मादाप्तिसमर्थत्वम् ॥ १२ ॥

कृष्णलचरावेव सन्देहः—किमुपस्तरणाभिघारणे कर्त्तव्ये, नेति ? चोदकप्राप्तेः कर्त्तव्ये । 'यदुपस्तृणात्यभिघारयति, अमृताहुतिमेवैनां करोती'ति — वचनात्स्वादिमाऽर्थ्येत, न च कृष्णलेषु स्वादिमा सम्भवति । अतो लुप्तार्थत्वादकर्त्तव्ये इति चेत् ? न । अर्थवादत्वादमृताहुतिवचनस्य । एवं तर्हि चतुरवत्तसम्पत्त्यर्थमुपस्तरणाभिघारणं । ननु चत्वारि 'चत्वारि कृष्णलान्यवद्यति, चतुरवत्तस्याप्त्यै' तै. सं. २-३-२ इति कृष्णलचतुष्ट्वेनैव चतुरवत्ता-

वाप्तिवचनादकर्त्तव्यं। नैवं। न हि कृष्णलचतुष्ट्वेनावदानचतुष्ट्वमाप्तुं-शक्यं, विषयभेदात्। आप्तिवचनं त्वर्थवादमात्रं। यदि कृष्णलचतुष्ट्वेनैव चतुरवत्तमाप्येत, ततः सकृदवत्तैरेव तदवाप्तेर्नद्व्यवदानमपि स्यात्। तत्र 'चत्वारि चत्वारी'ति वीप्सा नावकल्प्येत।

अथ वीप्सार्थो विधीयते, ततः प्राप्तावदानानुवादेन चतुःसङ्ख्यायाः, वीप्सायाश्च विधानाद्वाक्यं भिद्येत। ननु 'द्विर्हविषोऽवद्यती'त्यस्य प्रकृतितः प्राप्तेर्द्व्यवदानं स्यात्। न। चतुरवत्तसम्पत्त्यर्थं हि प्रकृतौ द्व्यवदानमुपस्तरणाभिघारणवत्। तच्चेदन्यतः सम्पन्नं, ततो व्यवदानमप्युपस्तरणाभिघारणवदेव निर्वर्त्तितुमर्हति[1]। तस्मादर्थवादमात्रमाप्तिवचनमिति, कर्त्तव्यमुपस्तरणाभिघारणमिति प्राप्ते—

उच्यते—सूक्ष्माणां पुरोडाशावयवानां स्रुच्यसंसक्तानामाहवनीयपातः-कथं स्यादित्येवमुपस्तरणाभिघारणं दृष्टार्थं। न च कृष्णलानां संसक्तिः-सम्भवति, यत्परिहारायोपस्तरणादि भवेत्। ननु चतुरवत्तसम्पत्तिरपि दृष्टमेव प्रयोजनं। न। अनङ्गत्वात्। 'चतुरवत्तं जुहोती'त्यत्रावत्तं जुहोतीत्येतावद्विधीयते। चतुःशब्दस्तूपस्तरणाभिघारणद्व्यवदानवचनप्राप्तचतुःसङ्ख्यानुवादमात्रं, न विधानार्थम्। अवत्तहोमविधिपरत्वाद्वाक्यस्य, तस्मादकर्त्तव्यमुपस्तरणाभिघारणम्।

इति द्वितीयं कृष्णले उपस्तरणाभिघारणयोर्बाधाधिकरणम्।

---

कृष्णलचरौ भक्षसद्भावाधिकरणम् ॥ ३ ॥

भक्षाणां तु प्रीत्यर्थत्वादकर्म स्यात् ॥ १३ ॥ स्याद्वा निर्धानदर्शनात् ॥ १४ ॥ वचनं त्वाज्यभक्षस्य प्रकृतौ स्यादभागित्वात् ॥ १५ ॥ वचनं वा हिरण्यस्य प्रदानवदाज्यस्य गुणभूतत्वात् ॥ १६ ॥

कृत्वा चिन्तेयं। यदा प्रकृतौ भक्षाः पुरुषप्रीत्यर्थाः, तदा कृष्णलानामस्ति भक्षः, नेति? तत्र कृष्णलैर्भक्ष्यमाणैर्न प्रीतिर्भवति। तेन प्राकृतास्तावद्भक्षा लुप्तार्थत्वादकर्त्तव्याः। यत्तु वचनं 'चुश्चूषाकारं भक्षयती'ति, तदाज्यस्य भक्षणं विधत्ते, तस्यादनीयत्वात्। चुश्चूषाकारस्यानुवादसम्भवात्। न कृष्णलानाम्। तस्मान्न तेषां भक्षणमिति प्राप्ते—

---

१. निर्वर्तितुमिति मु. पु. पा.

ब्रूमः—पूर्ववाक्ये कृष्णलानां प्राधान्यात्, आज्यस्य च तदङ्गत्वात्, तेषामेव भक्षणवाक्येऽन्वयः। तेषां चानदनीयानामपि प्रदानवद्भक्षणमपि-वचनाद्भविष्यतीति, तेषामेव चुश्चूवाकरणविशिष्टं भक्षणं विधीयते।

इति तृतीयं कृष्णलचरौ भक्षसद्भावाधिकरणम्।

---

कृष्णलचरौ एकधा ब्रह्मण उपहरतीत्यनेन सपरिहारविधानाधिकरणम् ॥४॥

## एकधोपहारे सहत्वं ब्रह्मभक्षाणां, प्रकृतौ विहितत्वात् ॥ १७ ॥

तत्रैव श्रूयते 'एकधा ब्रह्मण उपहरती' मै. सं. २-२-२ ति। किमत्र-सकृत्त्वं, सहत्वं वा विधीयते। उत सहत्वमिति ? कश्चात्र विशेषः। यदि सकृत्त्वं विधीयते, ततश्चोदकप्राप्तानामिडाः-प्राशित्र-चतुर्धाकरण-शंयुवाक-कालभक्षाणां कालभेदेन चतुर्हरणे प्राप्ते'सकृद्धरति नाधिकमि'ति विधानादेकः एवास्य भक्ष उपहर्त्तव्यः। भक्षान्तराणि निवर्त्तेरन्। सहत्वविधौ पुनर-निवर्त्तिता भक्षाः कालभेदेनोपहर्त्तव्याः प्राप्ताः सन्त एकस्मिन्काल उपह्रि-यन्ते। तत्र सकृत्वे सहत्वे चैकधाशब्दस्य लोके प्रयोगादनियमः।

यत एवायं साधारणः। अत एव चोदकप्राप्तभक्षान्तराबाधाय सहत्वमेव-विधीयते। प्राशित्रं, इडामिति द्वितीयया क्रियां प्रति भक्षस्य प्राधान्यावग-माद्, दृष्टार्थत्वाच्च तत्प्रतिपत्त्यर्थाः प्राकृता भक्षाः कृष्णलेष्वपि चोदकेन प्राप्नुवन्तीति, तेषां सहत्वविधानमुपयुज्यते।

इति चतुर्थं ब्रह्मभक्षाणां युगपत्परिहरणीयत्वाधिकरणम्।

---

कृष्णलचरौ ब्रह्मणे सर्वभक्षभागार्पणाधिकरणम् ॥ ५ ॥

## सर्वत्वं च तेषामधिकारात्स्यात् ॥ १८ ॥ पुरुषापनयो वा तेषामवाच्यत्वात् ॥ १९ ॥

तत्रैव 'सर्वं ब्रह्मणे परिहरती ति श्रुतं। तत्र संशयः—किं ब्रह्मभागस्य-सर्वस्य परिहारो विधीयते—यद्ब्रह्मणे सर्वं, तत्परिहरतीति—यद्ब्रह्मणे-परिहरति, तत्सर्वमिति वा ? उत परिहरणीयस्य सर्वस्य ब्रह्मसम्बन्धो-विधीयते-यत्परिहरति, तत्सर्वं ब्रह्मणे, नाध्वर्य्वादिभ्य इति, पुरुषान्तरेभ्यो-

भक्षोऽपनीयत इति। तत्र चोदकप्राप्ततुरुषान्तरसम्बन्धो मा बाधीति ब्रह्मभागस्य परिहर्त्तव्यस्य सर्वता, सर्वस्य ब्रह्मसम्बधिनो वा परिहारो विधीयत इति मन्यते।

वचनं त्वेवमनर्थकं स्यात्। प्रकृतित एव हि कृत्स्नस्य ब्रह्मभागस्य-भक्षणाय परिहरणं प्राप्तमेव। कृत्स्नो हि भागस्तेन भक्षणीयः। अन्यथा-ह्यभक्षितस्यांशस्य संस्कारहानिः स्यात्। तस्मात्प्राप्तत्वाद्ब्रह्मभागस्य-कृत्स्नता न विधातव्या। तेन यत्प्रकृतौ नानापुरुषेभ्यो भक्षार्थं हरति, तत्सर्वं ब्रह्मणे परिहरति, नान्येभ्य इति, प्राकृता भक्षाः पुरुषान्तरेभ्योऽपनीयन्ते।

इति पञ्चमं ब्रह्मणस्सर्वभक्षपरिहाराधिकरणम्।

भक्षभागानां स्वस्वकाले ब्रह्मणा भक्षणाधिकरणम् ॥ ६ ॥

पुरुषापनयात्स्वकालत्वम् ॥ २० ॥

सर्वे भक्षा ब्रह्मण उपहर्त्तव्याः, ते 'एकधा ब्रह्मण उपहरती'ति सहत्वविधानादेकस्मिन्नेव काल उपहर्त्तव्या इति स्थिते, संशयः—किं युगपदुपहूतानां युगपद्भक्षणम्? उत प्रकृतिवन्नानाकालं भक्षणं।

तत्र—भक्षार्थो ह्युपहारोऽतो भक्षोऽपि युगपद्भवेत्।
सहाप्युपहृतौ शक्यं यथाकालं तु भक्षणम् ॥ ६ ॥

तस्माच्चोदकाबाधाय सहोपहृतानामपि प्रकृतिवन्नानाकालं भक्षणम्।

इति षष्टं ब्रह्मणा स्वस्वकाले भक्षाधिकरणम्।

ब्रह्मभक्षे चतुर्धाकरण.दीनामभावाधिकरणम् ॥ ७ ॥

एकार्थत्वादविभागः स्यात् ॥ २१ ॥

प्रकृतौ चतुर्धाकरणं विधाय 'इदं ब्रह्मणः, इदं होतुरि'त्यादिव्यादेशो-विहितः। स किं कृष्णलेषु कर्त्तव्यः, नेति? चोदकप्राप्तेः कर्त्तव्यः।

नैवं। चतुर्धाकरणं तावच्चतुर्णां भक्षणार्थं प्रकृतौ, इह तु ब्रह्मणैव-सर्वं भक्षयितव्यमिति लुप्तार्थत्वादकर्त्तव्यं। व्यादेशोऽपि चतुर्णां व्यवस्थार्थम्।

इह तु सर्वस्य ब्रह्मसम्बन्धित्वेन निश्चित'त्वादिदं ब्रह्मणः' इत्यपि निर्देशो-न कर्त्तव्यः, नतरा'मिदं होतुरि'त्यादि, होत्रादिभ्योऽपनीतत्वात् ।

इति सप्तमं ब्रह्मभक्षे चतुर्थाकरणादीनामभावाधिकरणम् ।

ज्योतिष्टोमे ऋत्विग्दानस्यानत्यर्थताधिकरणम् ॥ ८ ॥

ऋत्विग्दानं धर्ममात्रार्थं स्याद्ददातिसामर्थ्यात् ॥ २२ ॥ परि-क्रयार्थं वा कर्मसंयोगाल्लोकवत् ॥ २३ ॥ दक्षिणायुक्तवच-नाच्च ॥ २४ ॥ न चाऽन्येनाऽऽनम्येत परिक्रयात्, कर्मणः परार्थ-त्वात् ॥ २५ ॥ परिक्रीतवचनाच्च ॥ २६ ॥ सनिवन्ये [ व ] च-भृतिवचनात् ॥ २७ ॥ नैष्कर्तृकेण संस्तवात् ॥ २८ ॥

'ऋत्विग्भ्यो दक्षिणां दद्यादि'त्यादि यदृत्विग्दानं, तददृष्टार्थम्, आनत्यर्थं वेति सन्देहे, अदृष्टार्थमिति ब्रूमः—दानकर्तव्यता श्रुत्या, दानेनानति-कर्तव्यता वाक्यात् । तच्च दुर्बलं, तस्माद्दानमात्रं कर्त्तव्यम् । किं च द्वादश-शतादिपरिमाणनियमः, मन्त्रादीतिकर्त्तव्यता, [1]कर्मानुरूपद्रव्यता च दान-स्यादृष्टार्थत्वेऽवकल्पते, नान्यथा ।

उच्यते—कर्मकरेभ्यस्तु दीयमानमपेक्षितानतिद्वारेण दृष्टप्रयोजनत्वान्न शक्यते अदृष्टार्थं कल्पयितुं, परिमाणादिनियमस्तु कामं भवत्वदृष्टार्थः । न तु तावता दानस्याप्यदृष्टार्थता, तस्मात्सत्रेषु न कर्त्तव्यं दानम् ।

इत्यष्टमं दक्षिणादानस्य ऋत्विगानत्यर्थत्वाधिकरणम् ।

ज्योतिष्टोमे भक्षस्य प्रतिपत्त्यर्थताधिकरणम् ॥ ९ ॥

शेषभक्षाश्च तद्वत् ॥ २९ ॥ संस्कारो वा द्रव्यस्य परार्थत्वात् ॥ ३० ॥ शेषे च समत्वात् ॥ ३१ ॥ स्वामिनि च दर्शनात्तत्सा-मान्यादितरेषां तथात्वम् ॥ ३२ ॥ तथा चान्यार्थदर्शनम् ॥ ३३ ॥

शेषभक्षा इडादिविषया दर्शपूर्णमासयोः, सोमविषयाश्च सोमे-समाम्नाताः किं परिक्रयार्थाः ? उत प्रतिपत्त्यर्था इति विचारः ? तत्र—भक्षणात्प्रीतिः, प्रीत्या चानतिः प्रत्यक्षा, तस्मात्तदर्थाः ।

१. श्रुत्येति मु० पु० अधिकः ।

नैवं। यागे कृतेऽवशिष्टं द्रव्यं प्रतिपत्तिमपेक्षमाणं भक्षणेन प्रतिपाद्यते। तत्तु दृष्टमेव प्रयोजनम्, अनीशानश्च यजमानो देवतायै सङ्कल्पितस्य। अतो न शक्नोत्यसौ तेन परिक्रेतुं। तस्मात्प्रतिपत्त्यर्था भक्षाः। स्थिते चास्मिन्-भक्षाणां प्रतिपत्त्यर्थत्वे, चतुर्धा करणे भक्षणाश्रवणात्परिक्रयमाशङ्क्य-भक्षार्थता व्यादेशस्य तृतीये साधिता। तस्मात्सत्रेष्वप्यबाध्या भक्षाः।

इति नवमं ज्योतिष्टोमे भक्षस्य प्रतिपत्त्यर्थताधिकरणम्।

---

## सत्रे ऋत्विग्वरणाभावाधिकरणम् ॥ १० ॥

### वरणमृत्विजामानमनार्थत्वात्सत्रे न स्यात्स्वकर्मत्वात् ॥३४॥

ज्योतिष्टोमे वरणमृत्विजामाम्नातम् 'अग्निर्होता, स मे होते'मै. सं. ३-५-१ त्यादि। तत्सत्रेषु कर्त्तव्यं, नेति संशये चोदकानुग्रहाय कर्तव्यम्। ऋत्विक्त्वार्थं चेदं प्रकृतौ। तच्च सत्रेऽपि यजमानेष्वाधातव्यं [संपादनीयं] 'ये यजमानास्त ऋत्विजः' इति वचनात्। अतो लुप्तार्थत्वात्कर्त्तव्यं वरणं।

मैवम्। आनत्यर्थं तत्प्रकृतौ कृतं। न चात्र यजमानैर्वरणेनानमितव्यम्। अतोऽर्थलोपादकर्त्तव्यम्। ऋत्विक्त्वमपि यागकर्तृत्वं। तच्च प्रकृतौ वरणविधानात्तद्द्वारेणानतानामेव। सत्रेषु तु वरणस्यार्थलोपान्निवृत्तवरणानामेव न विगुणमृत्विक्त्वम्, अध्वर्य्वादित्वञ्च भविष्यति। यदि तु कर्मकरत्ववचनोऽयमृत्विकशब्दः, ततो वरणेनापि यजमानेषु अशक्यमाधातुं। ते हि स्वार्थं कुर्वाणाः न कर्मकरा भवन्ति। तेन ऋत्विग्भिरेव सत्रं कर्त्तव्यमिति, वरणनिवृत्तिः।

इति दशमं सत्रे वरणाभावाधिकरणम्।

---

## सत्रे परिक्रयाभावाधिकरणम् ॥ ११ ॥

### परिक्रयश्च तादर्थ्यात् ॥ ३५ ॥ प्रतिषेधश्च कर्मवत् ॥ ३६ ॥ स्याद्वा प्रासर्पिकस्य धर्ममात्रत्वात् ॥ ३७ ॥ न दक्षिणा शब्दात्तस्मान्नित्यानुवादः स्यात् ॥ ३८ ॥

दक्षिणादानं परिक्रयार्थं, नादृष्टार्थमित्युक्तम्। इदानीं परिक्रय एव-सत्रे किं कर्त्तव्यः, नेति संशये, पूर्वाधिकरणवत्पूर्वोत्तरपक्षौ। 'नात्र गौर्दीयते'

इत्यादिप्रतिषेधो नासत्यां दानप्राप्तौ घटते। तस्मादनिवृत्तं दानमिति-विशेषाङ्का।

विध्यन्तरशेषस्त्वयमनुवादो न प्राप्तिं सूचयति। तस्मादानमनार्थ-त्वाद्वरणवत्परिक्रयोऽपि निवर्त्तते।

इत्येकादशं सत्रे परिक्रयाभावाधिकरणम्।

---

उदवसानीये दानस्य परिक्रयार्थत्वाधिकरणम् ॥१२॥

उदवसानीयः सत्रधर्मा स्यात्तदङ्गत्वात्तत्र दानं धर्ममात्रं स्यात् ॥ ३९ ॥ न त्वेतत्प्रकृतित्वाद्विभक्तचोदितत्वात् ॥ ४० ॥

'सत्रादुदवसाय ज्योतिष्टोमेन पृष्टशमनीयेन सहस्रदक्षिणेन यजेरन्नि'ति-श्रूयते। तत्र संशयः—किं पृष्टशमनीयं सत्राङ्गं, तत्र सत्रवद् यजमानै-रेवार्त्विज्यं कर्तव्यमिति दक्षिणादानमदृष्टार्थम्? उत नाङ्गमृत्विग्भिः कर्तव्यं, परिक्रयार्थं च दानमिति?। तत्र फलवत्सत्रसमभिव्याहारात्तदुत्तर-कालेऽपि श्रूयमाणः पृष्ठशमनीयो वाजपेयस्येव बृहस्पतिसवः सत्रस्याङ्गम्। इतरथा हि सत्रसंयोगः काललक्षणार्थः स्यात्। फलं च कल्प्येत। तस्मादङ्गं।

नैवम्। उदवसानं हि त्यागः, स च निःशेषसमाप्ताववकल्पते। न च निःशेषसमाप्तस्याङ्गं सम्भवति, 'वाजपेयेनेष्ट्वेति तु प्रयोगसमाप्तिर्गम्यते। समाप्तेऽपि च यथोक्ते प्रयोगे सम्भवत्यङ्गान्तरं। त्यक्तस्य तु पुनरङ्गं न सम्भवति। सम्भवे वा त्याग एव न स्यात। तस्मादुदवसायेति त्यागस्य शाब्दत्वादनङ्गत्वं। न च लक्षणा, श्रौतमेव सत्रावसानं निमित्तीकृत्य-पृष्टशमनीयविधानात्।

इति द्वादशमुदवसानीये दानस्य परिक्रयार्थत्वाधिकरणं।

---

उदवसानीयस्य ऋत्विजामेकैकेनानुष्ठानाधिकरणम् ॥ १३ ॥

तेषां तु वचनाद्द्वियज्ञवत्सहप्रयोगः स्यात् ॥ ४१ ॥

पृष्टशमनीय एव संशयः-किमुदवसायिभिः सह संहत्य प्रयोक्तव्यः?, उतैकैकश्येन यजेरन्निति। तत्राख्यातोपात्तस्य बहुत्वस्योपादेयकर्तृगामित्वेन-

विवक्षितत्वात्संहत्य कुर्युरिति स्थितं तावदपर्यवसितम्। अन्तरा चिन्तान्तरं क्रियते।

इति त्रयोदशमुदवसानीयस्यर्त्विजामेकैकेनानुष्ठानाधिकरणम्।

उदवसानीये सत्त्रिभ्योऽन्येषामृत्विक्त्वाधिकरणम् ॥ १४ ॥

तत्रान्यानृत्विजो वृणीरन् ॥ ४२ ॥ एकैकशस्त्वविप्रतिषेधात्प्रकृतेश्चैकसंयोगात् ॥ ४३ ॥

यदा संहत्य कर्त्तव्यं, तदा किं यजमानैरेव सर्वं कर्त्तव्यं, उतर्त्विग्भिरिति विचारः। तत्रोदवसाने यजमानानामेव कर्तृत्वात्, क्त्वाप्रत्ययेन च पृष्टशमनीयस्य तत्समानकर्तृकत्वात्तत्रापि यजमाना एव कर्त्तारः, नान्ये इति प्राप्ते—

ब्रूमः—यजेरन्नित्यनेन यो व्यापारो विधीयते, तस्यैवोदवसानसमानकर्तृकता क्त्वाप्रत्ययादवगम्यते, नार्त्विज्यस्य। तत्तु पुरुषान्तरैः प्रकृतिवत्क्रियमाणं न केनचिद्विरुध्यते। किं च दक्षिणाशब्दः परिक्रयार्थे वर्त्तते। न चात्र परिक्रयः संभवति। अतो दक्षिणाश्रुतिबलादन्ये भवेयुः, यद्येवमङ्गत्वेऽपि दक्षिणाश्रुतेरेवान्ये सिध्येयुः। 'ये यजमानास्ते ऋत्विजः' इति साधारणं वचनं पृष्टशमनीयवर्जं भविष्यति। तत्राहत्य परिक्रयवचनात्। भवतु नामैवं को दोषः? किमर्थं तस्याङ्गत्वनिराकरणम्? उच्यते—अङ्गत्वाभ्युपगमेनापि शक्यत एव परिक्रयार्थता वक्तुं, तथाऽपि तत्त्वतः उत्तरं विवक्षित्वाऽङ्गत्वमेव नास्तीत्युक्तम्। अपि चाङ्गत्वे सति संहत्यप्रयोगः स्यात् प्रधानवत्। एकैकशस्तु प्रयोगं वक्तुकामोऽङ्गत्वं निराकृतवान्। तस्मादन्ये वरीतव्याः।

स्थितादुत्तरं। नैतदस्ति संहत्य प्रयोग इति। यदि बहुत्वं विधीयेत, तत एवं स्यात्।उदवसायेति तु क्त्वाप्रत्ययादुदवसानसमानकर्तृकत्वावगमादुदवसाने च बहूनां कर्तृत्वात्प्राप्तमेव बहुत्वं। न चाविहितमङ्गं भवति। उदवसाने च गम्यमानमपि बहुत्वं निमित्तवदुद्देश्यगतत्वादविवक्षितं। यागे चानुवादत्वादनङ्गम्। किं च उदवसाने निरपेक्षाः कर्त्तारस्तद्यदि यागेऽपि निरपेक्षाः, ततः समानकर्तृकत्वं सम्भवेन्नान्यथा। तस्मादेकैकश्येन प्रयुञ्जीरन्।

इति चतुर्दशं सत्त्रिभ्योऽन्येषामृत्विक्त्वाधिकरणम्।

कामेष्टौ दानस्यऽदृष्टार्थताधिकरणम् ॥ १५ ॥

कामेष्टौ च दानशब्दात् ॥ ४४ ॥ वचनं वा सत्रत्वात् ॥ ४५ ॥

सारस्वते सत्रे श्रूयते 'प्लाक्षं प्रस्रवणं प्राप्य, अग्नये कामायाष्टाकपालं निर्वपन्ति, तस्यामश्वां पुरुषीं च धेनुके दद्युरि'* तां. ब्रा. २५-१०-२२ ति। किमिदं दानमदृष्टार्थम् ? उत परिक्रयार्थमिति । तदर्थं चिन्त्यते । किमेतस्यामृत्विजः सन्ति ? उत यजमानैरेवेयमिष्टिः कर्त्तव्येति । तत्र द्वादशाहे 'ये यजमानास्त ऋत्विजः' इति यजमानानामार्त्विज्यमिहातिदेशेन प्राप्यमाणं प्राकृतेष्वेवाङ्गेषु प्राप्यते, नापूर्वाङ्गेषु यूपावटस्तरणबर्हिष्विव बर्हिर्धर्माः । तेनापूर्वाङ्गे कामेष्टौ असति यजमानार्त्विज्ये चोदकप्राप्तैर्ऋत्विग्भिर्भवितव्यं । सत्सु च तेषु दानमसत्यपि दक्षिणाशब्दे दृष्टार्थत्वात्परिक्रयार्थमेवेति प्राप्ते —

ब्रूमः—प्रकृतौ बर्हिर्धर्माः प्रदिष्टानां पदार्थानामङ्गत्वाद्युक्तं, यदपूर्वेषु न भवन्ति । यजमानास्तु कर्त्तारः प्रयोगाङ्गत्वाद्विकृतावपि प्रयोगद्वारेण प्राप्नुवन्ति । तस्मिंश्च प्रयोगे यदपूर्वमप्यङ्गं निपतति, तत्रैव प्रसङ्गसिद्धत्वान्न कर्त्रन्तरमाकाङ्क्षति । तस्माददृष्टार्थमेवैतद्दानम् ।

इति पञ्चदशं कामेष्टौ दानस्यादृष्टार्थताधिकरणम् ।

दर्शपूर्णमासयोर्द्वेष्याय दानस्यादृष्टार्थताधिकरणम् ॥ १६ ॥

द्वेष्ये वा चोदनाद्दक्षिणापनयात् ॥ ४६ ॥

दर्शपूर्णमासयोश्श्रूयते 'यदि पत्नीः संयाजयन् कपालमभिजुहुयात्, वैश्वानरं द्वादशकपालं निर्वपेत्, तस्यैकहायनो गौर्दक्षिणा, तं स द्वेष्याय दद्यादि'ति । किमिदं दानं परिक्रयार्थं ? उतादृष्टार्थमिति । दक्षिणाशब्दात्परिक्रयार्थमिति । यद्यपि च दर्शपूर्णमासयोरेव नैमित्तिकमङ्गं वैश्वानरेष्टिः—तन्त्रमध्य एव क्रियते, तथाऽपि वचनाद्दक्षिणान्तरं नानुपपन्नम् ।

उच्यते । द्वेष्याय तद्दानं, न चर्त्विग् द्वेष्यः सम्भवति, 'ऋत्विगाचार्यौ नातिचरितव्यावि'ति स्मरणात् । तस्मादनृत्विजे दानमिदमदृष्टार्थं । दक्षिणाशब्दश्च दानमात्रेऽगत्या वर्तते ।

इति षोडशं वैश्वानरेष्टौ द्वेष्यसंप्रदानस्यादृष्टताधिकरणम ।

जीवतामस्थियज्ञाधिकरणम् ॥ १७ ॥

अस्थियज्ञोऽविप्रतिषेधादितरेषां स्याद्विप्रतिषेधादस्थ्नाम् ।४७।

यावदुक्तमुपयोगः स्यात् ॥ ४८ ॥

इदं श्रूयते 'यदि सत्राय सन्दीक्षितानां प्रमीयेत, तं दग्ध्वा कृष्णाजिने-ऽस्थीन्युपनह्य, योऽस्य नेदिष्ठः स्यात्, तं तस्य स्थाने दीक्षयित्वा, तेन सह यजेरन्, ततः सम्वत्सरे अस्थीनि याजयेयुरि' तां. ब्रा. ८-९-१ ति। योऽयं सम्वत्सरे अस्थियागः, स विचार्यते-किमस्थिशब्देन शरीरशरीरिणोरभेदोपचारेण मृतं लक्षयित्वा तस्यायं याग उच्यते, तदधिकारे च यागे सत्रिणामिव-इतरेषामृत्विक्स्थानीयानां कर्तृत्वमात्रम्? उतास्थिशब्देन जीवत एव सत्रिणोऽस्थिसहायांल्लक्षयित्वा तेषामेव यागविधिरिति? तत्रास्थिशब्दस्य तच्छरीरे पुंसि प्रवृत्तेः, इतरेषां च ण्यन्तपरस्मैपदनिर्द्देशात्परार्थे कर्मणि याजयितृत्वावगमात्। मृताधिकारमिदं कर्म सत्रमध्यमरणनिमित्तं तस्यैव फलदमिति प्राप्ते—

ब्रूमः—न कथंचिदपि मृतस्य साक्षाद्वा संविधानाद्वा कर्तृत्वं सम्भवति। न चाकर्त्तुरधिकारः। तस्माज्जीवतामेवायं यागः। याजयतिश्च ये तेषां-याजयितारः, तदभिप्रायेण भविष्यति।

इति सप्तदशमस्थियज्ञस्य जीवदधिकारिकत्वाधिकरणम्।

---

अस्थियज्ञे अस्थ्नां जपाद्यननुष्ठानाधिकरणम् ॥ १८ ॥

यदि तु वचनात्तेषां जपसंस्कारमर्थलुप्तं; सेष्टि तदर्थत्वात् ।४९।

जीवदधिकारपक्षे चोदकप्राप्तं न किञ्चिद्बाधितव्यं। मृताधिकारे तु भवति केषांचिद्बाधः। तदिह कृत्वा चिन्तया किं बाध्यं, किं नेति-चिन्त्यते। ये यजमानजपाः, वपनादयश्च संस्काराः, दीक्षणीयेष्टिश्च, ते किमस्थ्यधिकारपक्षे कर्त्तव्याः, नेति। चोदकानुग्रहाय कर्त्तव्याः।

मैवं। दीक्षार्था हीष्टिः। यम-नियम-सङ्कल्पश्च दीक्षा। न चासौ मृतस्य सम्भवति। तस्माल्लुप्तार्था। वपनं तु दूरापास्तं, केशश्मश्रुणोरभावात्। जपश्चाशक्यत्वात्।

इत्यष्टादशमस्थियज्ञेऽस्थ्नां जपाद्यननुष्ठानाधिकरणं।

—:०:—

अस्थियज्ञे शाखा-मान-शुक्रस्पर्शानुष्ठानाधिकरणम् ॥ १९ ॥

क्रत्वर्थं तु क्रियेत गुणभूतत्वात् ॥ ५० ॥

अथ यत्र यजमानो गुणभूतः। यथा 'शुक्रं यजमानोऽन्वारभते' इत्यादौ, तत्कर्त्तव्यं, नेति। अचेतनानामस्थ्नां स्वातन्त्र्यलक्षणकर्तृत्वासम्भवादकर्त्तव्यं। न चैतन्यापेक्षं कर्तृत्वं, काष्ठादीनामपि ज्वलनादौ कर्तृत्वसम्भवात्। यस्यैवान्यानपेक्षयाऽऽख्यातोपात्तव्यापारसमवायसम्भवः, स एव कर्त्ता। तस्माच्छुक्रान्वारम्भणादिकर्माऽस्थिभिः कर्त्तव्यम्।

इत्येकोविंशमस्थियज्ञे शाखा-मान-शुक्रस्पर्शानुष्ठानाधिकरणम्।

---

अस्थियज्ञे अस्थ्नाङ्काम्यकर्माद्यननुष्ठानाधिकरणम् ॥ २० ॥

काम्यानि तु न विद्यन्ते कामाज्ञानाद्यथेतरस्यानुच्यमानानि ॥५१॥

गुणकामानां विकृतौ प्रवृत्तिं कृत्वा चिन्त्यते। 'यदि कामयेत वर्षुकः पर्जन्यः स्यात्, नीचैः सदो मिनुयादि' तै. सं. ६-३-४ त्यादयो गुणकामाः मृताधिकारपक्षे प्रवर्तन्ते, नेति। चोदकप्राप्तेः प्रवर्तन्ते।

नैवं। कुतः? कामाज्ञानात्। न हीदं ज्ञायते—किं मृतस्येष्टं, न वेति। तस्मादप्रवृत्तिर्गुणकामानाम्।

इति विंशमस्थियज्ञे काम्यकर्माद्यननुष्ठानाधिकरणं।

---

अस्थियज्ञे अस्थ्नां सूक्तवाकगताशासनानुष्ठानाधिकरणम् ॥ २१ ॥

ईहार्थाश्चाभावात्सूक्तवाकवत् ॥५२॥ स्युर्वाऽर्थवादत्वात् ॥५३॥ नेच्छाभिधानात्तदभावादितरस्मिन् ॥ ५४ ॥

सूक्तवाकगतानि 'आयुराशास्ते' इत्यादीनि फलपदानि प्रवर्तन्ते, नेति संशये, सूक्तवाकस्य प्रहरणाङ्गतया नित्यवत्प्रवृत्तेः तन्निबन्धनानामायुरादिपदानामपि प्रवृत्तिः।

नैवं। फलनिर्देशा ह्येते, मान्त्रवर्णिकफलकल्पनात्। न च मृतस्य फलाशंसनङ्गम्यत इत्युक्तम्। अतो लुप्तार्थत्वादेषां निवृत्तिः।

इत्येकत्रिंशं सूक्तवाकगतफलप्रकाशनभागानुष्ठानाधिकरणम्।

---

अस्थियज्ञे होतृकामाभावाधिकरणम् ।। २२ ।।

स्युर्वा होतृकामाः ।। ५५ ।। न तदाशीष्ट्वात् ।। ५६ ।।

प्रकृतौ सन्ति होतृकामाः 'यं कामयेत पापीयान् स्यादिति, नीचैस्तरां तस्य याज्यया वषट्कुर्यात्' । तै. सं. ५-१-१ यं कामयेत 'वसीयान् स्यादिति, उच्चैस्तरां तस्य याज्यया वषट्कुर्यादि'त्यादयः । ते मृताधिकारेऽपि कर्मणि होतुः कामनासम्भवान्न निवर्तेरन् ।

निवृत्तिर्वा । यजमानफलमेव हि अत्रापि निर्दिश्यते । न चानिर्दिष्टं फलं भवति । न च मृतस्येच्छा विज्ञायते । तस्मादेवमादीनामपि निवृत्तिः ।

इति द्वाविंशमस्थियज्ञे होतृकामाभावाधिकरणम् ।

---

यजमानस्य मरणेऽपि सर्वस्वारस्य समापनाधिकरणम् ।। २३ ।।

सर्वस्वारस्य दिष्टगतौ, समापनं न विद्यते, कर्मणो जीवसंयोगात् ।। ५७ ।। स्याद्वोभयोः प्रत्यक्षशिष्टत्वात् ।। ५८ ।।

सर्वस्वारो नामैकाहः स्वर्गकामस्य विहितः। तत्रार्भवस्तोत्रकाले-'ब्राह्मणाः-समापयत मे यज्ञमि' तां. ब्रा. १७-१२-६ ति प्रैषमृत्विग्भ्यः प्रदाय यजमानो म्रियते। तस्मिन्मृते शेषं कर्म समापनीयं, नेति संशये। न समाप्यं, मृतस्य कर्तृत्वासम्भवात्, यजमानस्य तावन्न समाप्तिः कर्त्तव्या। यच्च यज्ञमानस्य कार्यं, तद् ऋत्विजः कुर्वन्ति, नाऽन्यत्, तस्मादृत्विजोऽपि न समापयेयुः ।

उच्यते—यद्यसम्भवि कर्त्तव्यं तत एवं भवेदिदं ।
जीवन्नेव तु संप्रैषाच्चिछ्ष्टे कर्तृत्वमृच्छति ।। १० ।।

वरण-भरणादिसमाचरणमेव जीवदवस्थायामपि यजमानस्य कर्तृत्वं। तच्च मरणोत्तरकालभाविन्यपि कर्मशेषे जीवदवस्थायामपि संविधानेन-सम्भवति। प्रत्यक्षमेव च 'समापयते'ति प्रैषेण समाप्तिश्चोद्यमाना न शक्यते-अपह्नोतुं, न हि ब्राह्मणभागगताद्विधेः प्रैषस्य कश्चिद्विशेषः। न हि प्रैषे प्रेषकपुरुषस्य स्वातन्त्र्यं, येन पौरुषेयत्वाद्दोषः स्यात्। प्रयोक्तृत्वमात्रं तु ब्राह्मणगतेष्विव विधिषु प्रैषेष्वपि पुरुषाणाम्। अतः प्रत्यक्षमेव विहितं समापनं। स्वर्गः एवात्र मरणेनार्थिनः फलं,न मरणं। मरणकाम इति अङ्गीकृतमरण इत्यर्थः।

१. वर्षीयानिति भा. पा. ।

तेन यो ह्येवं ज्ञात्वा स्वर्गं प्राप्नवानीति कामयते, तस्यायं क्रतुः, तथा च हरिभिरुक्तं 'प्रधानस्य मरणेनार्थिन इज्यां प्रवर्तयन्ती' वा. प. ति। तेन- संजातेऽपि मरणे स्वर्गार्थमेव समापनीयम्।

इति त्रयोविंशं यजमानमरणोत्तरमपि सर्वस्वारस्य समापनाधिकरणम्।

—:o:—

यजमानस्य दिष्टगतावपि सर्वस्वारस्य शुक्रस्पर्शादि-
योग्याङ्गाद्यनुष्ठानाधिकरणम् ॥ २४ ॥

गते कर्मास्थियज्ञवत् ॥ ५९ ॥

अथ मृते यजमाने कर्मशेषे क्रियमाणे किं बाध्यम्, ? किं वा नेति- प्रश्नेनैवोपक्रमः।

अत्रोत्तरम्—अस्थियज्ञेऽस्थ्नामधिकारपक्षे यथोक्तं, तथेहापि द्रष्टव्यम्।

इति चतुर्विंशं सर्वस्वारे कार्य-बाध्यव्यवस्थाधिकरणं।

—:o:—

सर्वस्वारे यजमानस्य दिष्टगतावपि आयुराशंसनाधिकरणम् ॥ २५ ॥

जीवत्यवचनमायुराशिषस्तदर्थत्वात् ॥ ६० ॥ वचनं वा भागि- त्वात्प्राग्यथोक्तात् ॥ ६१ ॥

सर्वस्वार एव मरणात्प्राग्जीवदवस्थाया 'मायुराशस्ते' इत्यायुराशीर्व- क्तव्या, नेति संशयः। तत्र मरणाभ्युपगमेन प्रवृत्तस्य नाशासितव्यमायुः।

प्रागपि त्वार्भवकालान्मरणं संभवति। तथा सति क्रतोर्वैगुण्याद्या- वदार्भवकालमाशासितव्यमायुः, तस्मादायुराशीर्वक्तव्या।

इति पञ्चविंशं तस्य दिष्टगतावपि आयुराशंसनाधिकरणं।

—:o:—

द्वादशाहे ऋतुयाज्याद्यनुष्ठानाधिकरणम् ॥ २६ ॥

क्रिया स्याद्धर्ममात्राणाम् ॥ ६२ ॥

यत्प्रकृतावानत्यर्थमृत्विग्वरणं, दक्षिणादानं च। न तत् सत्रे स्यादि- त्युक्तं। यत्त्वदृष्टार्थमृतुयाजग्रावरणम्, आत्रेयाय हिरण्यदानं च। तत् सत्रेऽपि कर्त्तव्यमिति।

इति षड्विंशं द्वादशाहे ऋतुयाज्यानुष्ठानाधिकरणम्।

—:o:—

पवमानेष्टौ निर्वापानुष्ठानाधिकरणम् ॥ २७ ॥

गुणलोपे च मुख्यस्य ॥ ६२ ॥

दर्शपूर्णमासयोः 'अग्निहोत्रहवण्या हवींषि निर्वपती'ति श्रुतो निर्वापः पवमानेष्टिषु चोदकेन प्राप्तः कर्त्तव्यः, नेति संशये, न कर्तव्यः, कस्मात् ? अग्निहोत्रहवण्यभावात। ययाऽग्निहोत्रं हुतं, सा ह्यग्निहोत्रहवणी। न च पवमानेष्टिवेलायामग्निहोत्रं हुतं सम्भवति। विना वाऽग्निहोत्रहवण्या निर्वापः–विगुणत्वादकर्त्तव्य इति प्राप्ते—

ब्रूमः—अतिदेशेन हि कार्यमुखेन पदार्थेषु प्राप्यमाणेषु हविःसंस्कारार्थतया निर्वापः प्राप्यते, तदङ्गभूताग्निहोत्रहवण्यसम्भवान्न प्राप्यते। न चाप्राप्ताया गुणत्वम्। अतस्तदभावेऽप्यगुणत्वात्कर्त्तव्य एव निर्वापः।

इति सप्तविंशं पवमानेष्टौ निर्वपानुष्ठानाधिकरणम्।

—:o:—

वाजपेये मुष्टिलोपाधिकरणम् ॥ २८ ॥

मुष्टिलोपात्तु सङ्ख्यालोपस्तद्गुणत्वात्स्यात् ॥६४॥ न निर्वापशेषत्वात् ॥ ६५ ॥ सङ्ख्या तु चोदनां प्रति सामान्यात्तद्विकारः; संयोगाच्च परं मुष्टेः ॥ ६६ ॥ न चोदनाभिसम्बन्धात्प्रकृतौ संस्कारयोगात् ॥ ६७ ॥

वाजपेये श्रूयते 'बार्हस्पत्यो नैवारः सप्तदशशरावः क्षीरे चरुर्भवती'ति। अस्ति तु प्रकृतौ 'चतुरो मुष्टीन्निर्वपती'ति चतुःसङ्ख्या, मुष्टिद्रव्यञ्च। तदुभयमिह चोदकेन प्राप्तं। न च चतुर्भिर्मुष्टिभिः सप्तदशशरावपरिमाणः–चरुः सम्पादयितुं शक्यते। अतोऽवश्यं बाधितव्ये सति, किमुभयं बाधितव्यं–शरावद्रव्येण मुष्टिद्रव्यं, सप्तदशसंख्यया च चतुःसङ्ख्या, किं वान्यतरत्, तत्रापि किमनियमः ? अथ वा मुष्ट्यनुग्रहः? सङ्ख्यालोपः? विपरीतं वेति। तत्राविशेषादुभयोर्बाधः। तत्रापि समानकार्यत्वात् द्रव्यं द्रव्येण, सङ्ख्या–सङ्ख्ययेत्येकः पक्षः। सप्तदशसङ्ख्याशरावपरिमाणं च यागद्रव्याङ्गं, चतुःसङ्ख्या मुष्टिश्च निर्वापाङ्गम्। अतो न तावत्साक्षादेकविषयत्वं, येनोभयमुभयेन बाध्येत, चतुर्भिर्मुष्टिभिः सप्तदशशरावश्चरुर्न सम्पादयितुं शक्यते-इत्यर्थाद्बाधः, तत्रैकबाधेनोपपत्तौ नोभयबाधनं युक्तं, तस्मादन्यतरबाधः।

तत्राविशेषादनियम इति द्वितीयः। सङ्ख्याया द्रव्याङ्गत्वात्प्राधानस्य मुष्टिद्रव्यस्यानुग्रहः। सङ्ख्यायास्तु बाध इति तृतीयः। न सङ्ख्याया मुष्ट्यङ्गत्वं वाक्यलक्षणसमानाधिकरणद्रव्यसम्बन्धबाधेन द्वितीयश्रुत्या निर्वापाङ्गत्वावगमादुभयोरपि क्रियाङ्गत्वावगमात्तुल्यत्वं। तत्र मुख्यत्वात्सङ्ख्यानुग्रहः, जघन्यत्वाच्च मुष्टिलोप इति सिद्धान्तः।

इत्यष्टाविंशं सप्तदशशरावचरौ मुष्टिलोपेन चतुस्संख्यानुग्रहाधिकरणम्।

—:०:—

धेन्वादिशब्दानां गोवाचिताधिकरणम्॥ २८॥

## औत्पत्तिके तु द्रव्यतो विकारः स्यादकार्यत्वात्॥ ६८॥

'द्यावापृथिव्यां धेनुमालभेत, वायव्यं वत्सं, ऐन्द्रमृषभमि'ति गोद्रव्यासाधारणगुणवचनेषु धेन्वादिशब्देषु श्रुतेषु किं चोदकप्राप्तमजद्रव्यं प्रवर्त्तते, नेति संशयः? तत्र यद्यपि गोरसाधारणं गुणमेते वदन्ति, तथाऽपि न गोर्वाचकाः। तेनात्र गोर्नोपदेशेन, नातिदेशेन प्राप्तिः। अजस्त्वतिदेशेन प्राप्यते। तत्रैव धेन्वादिशब्दा लक्षणया वर्तन्ते। तथाजमृषभमित्यादिष्विति प्राप्ते—

ब्रूमः—नानुमानिकचोदकानुरोधेन श्रुतानां शब्दानां लक्षणावृत्तिः न्याय्या। तेन यद्यपि गोद्रव्यं न शाब्दं, तथाऽपि श्रुतगुणविशेषसम्पादनायगौरेव आलब्धव्यः, चोदकप्राप्तं त्वजद्रव्यं प्रत्यक्षश्रुतगुणविशेषविरोधान्न प्राप्यते।

इति ऊनत्रिंशं धेन्वादिशब्दानां गोवाचित्वाधिकरणम्।



वायव्यं श्वेतमालभेतेत्यनेन अजस्यैवालम्भनाधिकरणम्॥ ३०॥

## नैमित्तिके तु कार्यत्वात्प्रकृतेः स्यात्तदापत्तेः॥ ६९॥

यस्तु साधारणगुणवचनः श्वेतादिशब्दः 'वायव्यं श्वेतमालभेते'ति। स चोदकप्राप्तेऽप्यजे सम्भवतीति, न तत्राजस्य बाधनमिति प्रत्युदाहरणमेतत्।

इति त्रिंशं श्वेतगुणेन प्राकृताजद्रव्यस्याबाधाधिकरणम्।



खलेवाली-तण्डुलयोः खादिर-व्रैहत्वानियमाधिकरणम् ॥ ३१ ॥

विप्रतिषेधे तद्वचनात्प्राकृतगुणलोपः स्यात्तेन च कर्मसंयोगात् ॥७०॥

साद्यस्क्रे श्रूयते 'खलेवाली यूपी भवती'ति । तत्र संशयः—किं चोदकप्राप्तं खादिरादिकं यूपं छेदनादिभिः कृत्वा स खलेवाली कर्त्तव्यः—यूपः खले वाली भवतीति वचनव्यक्तिः ? उत यैवोत्तरवेदिभूते खले पूर्वावस्थिता खादिर्यखादिरी वा खलेवाली, तस्यामेव पशुनियोजनं कर्त्तव्यं-या खलेवाली, स यूपो भवति यूपकार्यकारी भवतीति यचनव्यक्तिरिति। तथा—चित्रायामिष्टौ श्रूयते 'दधि मधु घृतं धाना उदकं तण्डुलास्तत्संसृष्टंप्राजापत्यमि' मै. सं.१-३-६ ति। तत्रापि चोदकप्राप्ता व्रीहयोऽवघातादिभिस्तण्डुलीकर्त्तव्याः, उत व्रैहा अव्रैहा वा लोकसिद्धास्तण्डुला ग्रहीतव्या इति । तत्र चोदकानुग्रहाय यूपस्य खलेवालीत्वं, व्रीहीणां च तण्डुलत्वं । यथासिद्धोपादाने हि चोदकप्राप्ताः खदिरादयोः, व्रीहयस्तत्संस्काराश्च छेदनावघातादयो बाध्येरन्। किं च खलेवाली यूपकार्यं भवतीति विधौ यूपशब्दस्यायूपे तत्कार्यंकरे-यजमानशब्दस्येव प्रस्तरे गौणी वृत्तिः स्यात् । यूपस्य तु खलेवालीत्वविधौ—न गौणत्वं, तस्मात्खदिरादयः खलेवाली कर्तव्याः, व्रीहयश्च तण्डुलीकर्त्तव्याः इति प्राप्ते—

ब्रूमः—यूपस्य खलेवालीत्वमदृष्टार्थं विधीयते। खलेवाल्यास्तु यूपत्वं दृष्टार्थं, पश्वनपक्रमणात् । तस्माद्यथासिद्धैव खादिरी, अखादिरी वा खलेवाली यूपकार्यं कुर्यात् । तण्डुलाश्च यथासिद्धा एवोपादेयाः । प्रकृतौ हि श्रपणस्य विधानात्प्रकृतिद्रव्यमुपादाय स्वयमेव हविः कर्त्तव्यं। विकृतावपि यत्र श्रपणं चर्वादौ, तत्रापि प्रकृतिद्रव्यं गृहीत्वा स्वयमेव हविः—कर्त्तव्यं । तण्डुलेषु श्रपणस्यार्थाभावान्निवृत्तौ न श्रपणकर्त्तव्यताबलेन प्रकृतिद्रव्यप्राप्तिः । प्राप्ते च प्रकृतिद्रव्योपादाने व्रीहि-यवनियमः । तस्माल्लोकप्रसिद्धा एव तण्डुला व्रैहा अव्रैहा वा ग्रहीतव्याः ।

इत्येकत्रिंशं खलोवालीतण्डुलयोः खादिर-व्रैहत्वानियमाधिकरणम् ।

खलेवाल्यां तक्षणाद्यननुष्ठानाधिकरणम् ॥ ३२ ॥

परेषां प्रतिषेधः स्यात् ॥ ७१ ॥ प्रतिषेधाच्च ॥ ७२ ॥

यथासिद्धखले वाल्युपादानात्खादिरादिकाष्ठं बाध्यमिति स्थितम् । अथ छेदनतक्षणादयः संस्काराः कर्त्तव्याः, नेति ? संदेहे, चोदकानुग्रहात्,

च्छ्रयत्वाच्च कर्त्तव्याः। प्रयोजनाभावात्तु न कर्त्तव्याः,। छिन्ना हि खलेवाली श्लक्ष्णीभूता निखातोच्छ्रिता, तस्याः छेदनं, तक्षणं, निखननम्, उच्छ्रयणञ्च लुप्तार्थमकर्त्तव्यम्।

इति द्वात्रिंशं खलेवाल्यां तक्षणाद्यननुष्ठानाधिकरणम्।

खलेवाल्यां पर्य्यूहणादिसंस्काराणामनुष्ठानाधिकरणम्॥ ३३॥

## अर्थाभावे संस्कारार्थत्वं स्यात्॥ ७३॥

अथ यत् पर्यूहण-परिबृंहण-परिषेचनादि खलेवाल्यां सम्भवत्प्रयोजनं, यच्चादृष्टार्थमञ्जन—प्रोक्षणादि, तत् खलेवाल्यां भवति, नेति संशये, भवतीति ब्रूमः। कुतः? यूपार्थत्वात्तेषाम्। इह चायूपे खलेवाल्यां यूपकार्यकरणाल्लुप्तार्थं पर्यूहणादि न कर्त्तव्यम्।

उच्यते। न यूपो नामैकः कश्चिदर्थोऽस्ति। यदर्थाः संस्काराः। किन्तु-छेदन-प्रोक्षणादिजन्यदृष्टादृष्टरूपाः संस्काराः काष्ठे वर्त्तमाना यूपशब्दाभिधेया नियोजनस्याङ्गभूताः। तत्र केषांचिल्लुप्तार्थानां लोपेऽपि, अन्येषामलुप्तार्थानां निवृत्तौ नास्ति प्रमाणं। तस्मात्पर्यूहणाञ्जनादयः कर्त्तव्याः।

इति त्रयस्त्रिंशं खलेवाल्यां पर्यूहणादिसंस्काराणामनुष्ठानाधिकरणम्।

महापितृयज्ञे धानासु अवघातानुष्ठानाधिकरणम्॥ ३४॥

## अर्थेन च विपर्यासे तादर्थ्यात्तत्त्वमेव स्यात्॥ ७४॥

महापितृयज्ञे श्रूयते 'सोमाय पितृमते पुरोडाशं षट्कपालं निर्वपति-पितृभ्यो बर्हिषद्भ्यो धानाः, पितृभ्योऽग्निष्वात्तेभ्योऽभिवान्यायै दुग्धे मन्थमि' मै. सं १-१-१७ ति। तत्र धानासु हन्तिः कर्त्तव्यः, नेति संशये, विघातादकर्त्तव्यः। क्रियमाणे हि हन्तौ धानात्वं विहन्येत। सक्तवो भवेयुः। तस्मादकर्त्तव्योऽवघातः। सत्यं। अपणोत्तरकालं क्रियमाणे विघातः स्यात्, पूर्वं तु हन्तिं कृत्वा,पश्चात्पाकः क्रियते क्रममात्रं बाधित्वा। तथा च न विहन्यते; न हि क्रमबाधे पदार्थोऽपि बाधितव्यः, तदुक्तं 'गुणलोपे च मुख्यस्य क्रियाभवती' शा. भा. पृ.१८६४ ति। तस्मात्कर्त्तव्योऽवघात इत्येवं भाष्यकारेणाधिकरणं व्याख्यातं।

वार्तिककारोक्तं भाष्यदूषणम् ।

तदिदमनुपपन्नं। प्रकृतावपि पूर्वमवघातः,ततः पाकः, तेन नास्ति क्रमविपर्यासः । पुनरुक्तं च 'गुणलोपे च मुख्यस्ये'त्यनेन न्यायेन ।

प्राभाकरोक्तभाष्यसमर्थनप्रकारोपन्यास-निरासौ ।

ये त्वाहुः न क्रमो नाम कश्चिद्गुणः पदार्थव्यतिरिक्तोऽस्ति, यस्य पृथग्बाधं व्यवस्थापयामः। पदार्था एव हि त्रितयाः प्रतीयन्ते । तेन केवलस्य क्रमस्य बाधासम्भवात्तद्बाधे पदार्थोऽपि बाधित इति, अवघातो न कर्त्तव्यः, इत्येतन्निराकरणार्थमिदमधिकरणम् । यत्तु विपर्यासो नास्तीति। तत्राप्याहुः - धानासु श्रपणं कृत्वाऽवघातः । प्रकृतौ च विपरीतमित्यस्ति विपर्यास इति । यदि विपर्यासः । कथं तर्ह्यवघातानुष्ठानं, न हि क्रमस्य पृथग्बाधः सम्भवति । सत्यं । न त्वत्र परमार्थतः क्रमबाधः । प्रकृतौ हि श्रुतेष्वेव व्रीहिष्ववघातः-कृतः । अत्रापि श्रुतास्वेव धानास्ववघात इति, नास्ति क्रमविपर्यासः। प्रकृताववघातात्परं श्रपणम्, इह तु विपरीतमित्येतावता विपर्यासवाचोयुक्तिः । ननु धानावस्थायां हन्तिः क्रियमाणो विघातं कुर्यात्। यथा न विघातो भवति, तथा कुर्महे सकृदेवानभ्यस्तमवहननं क्रियते । न च भविष्यति विघात इति । तदयुक्तं । संभवति हि पृथक् क्रमस्य बाधः, त एव हि पदार्था अन्येनाऽन्येन च क्रमेणानुष्ठातुं शक्यन्ते । तेन क्रमस्य प्राकृतस्याभावेऽपि पदार्था न निवर्तन्ते ।

यत्तु श्रपणं कृत्वाऽवघात इति । तस्मात्पूर्वं हन्ति कृत्वा पश्चात्पाकः-कार्यः, 'शा. भा.पृ.१२६४ इति भाष्यविरुद्धम् । यच्चापि श्रपणोत्तरकालेऽप्यवघाते विपर्यासो नास्ति, श्रुते द्रव्येऽवघातकरणादिति । तदप्यसारं । प्रकृतौ हि द्वे द्रव्यश्रपणे-पुरोडाशश्रपणं, व्रीहिश्रपणं च । तत्र धाना देवतासम्बन्धात् पुरोडाशकार्ये वर्तन्ते, न व्रीहिकार्ये । प्रकृतौ च व्रीहिविषयोऽवघातः, न पुरोडाशविषयः । तेन धानास्वपि चोदकप्राप्तेषु व्रीहिष्वेवावघातः, न धानावस्थायां, तत्र तु क्रियमाणे हन्तौ क्रमविपर्यासः स्यादेव । धानासु वाऽवघातकरणे धानात्वं विहन्येत ।

यत्तु सकृदेवावहनिष्यामः—इति । तथा सत्यप्राकृतकार्यमदृष्टार्थमवहननं स्यात् । प्रकृतिवत्तु तुषविमोकार्थोऽवघातः क्रियमाणो धानात्वं विहन्यात् ।

वार्तिकमतेनाधिकरणरचना ।

तस्मान्नैवमधिकरणं युक्तमिति, यथावार्त्तिकं व्याख्यास्यामः । न धाना उदाहरणं, तत्रैव मन्थ उदाहरणं । तत्र पेषणं श्रपणोत्तरकालम-

र्थाद्भवति । तत्प्राकृतं ? उताप्राकृतमिति संशयः । प्रकृतौ पाकात्पूर्वं पेषणं-पाकार्थं भवति । न ह्यसति पेषणे पुरोडाशनिर्वर्तकः पाकः कर्तुं शक्यते । तेन पाकार्थं पेषणं, मन्थे तु विनैव पेषणेन भर्जनरूपः पाकस्तण्डुलावस्थाया-मेव कृत इति, लुप्तार्थं प्राकृतं पेषणं निवृत्तं, भर्जितेषु तण्डुलेषु सक्तुभावा-पादनाय लौकिकं पेषणमधर्मकं कर्त्तव्यमिति प्राप्ते—

ब्रूमः—न प्रकृतौ पाकार्थं पेषणं, द्वितीयाश्रुत्या पेषणं, श्रपणं चोभय-मपि हविरर्थम् । अर्थात्तु तयोः पूर्वं पेषणम्, इह त्वर्थादेव पश्चात्क्रियत इति, क्रममात्रमन्यत् । न च तदन्यत्वे पदार्थान्यत्वं । तस्मात्प्राकृतमेव पेषणमिति-कर्त्तव्याः पेषणधर्माः ।

इति चतुस्त्रिंशं मतद्वयसहितमधिकरणम् ।

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां दशमस्य द्वितीयः पादः ।

---

# अथ दशमाध्याये तृतीयः पादः

पश्वादौ सामिधेनीत्यादिप्राकृतेतिकर्तव्यतानुष्ठानाधिकरणम् ॥ १ ॥

विकृतौ शब्दवत्त्वात्प्रधानस्य; गुणानामधिकोत्पत्तिः सन्नि-धानात् ॥१॥ प्रकृतिवत्त्वस्य चानुपरोधः ॥२॥ चोदनाप्रभुत्वाच्च ॥३॥ प्रधानं त्वङ्गसंयुक्तं; तथाभूतमपूर्वं स्यात्तस्य विध्युपलक्षणात्सर्वो हि पूर्ववान्विधिरविशेषात्प्रवर्तितः ॥ ४ ॥ न चाङ्गविधिरनङ्गे स्यात् ॥५॥ कर्मणश्चैकशब्द्यात् सन्निधाने विधेराख्या संयोगो गुणेन तद्विकारः स्याच्छब्दस्य विधिगामित्वाद्गुणस्य चोपदेश्यत्वात् ॥ ६ ॥ अकार्य-त्वाच्च नाम्नः ॥ ७ ॥ तुल्या च प्रभुता गुणे ॥ ८ ॥ सर्वमेवं-प्रधानमिति चेत् ॥ ९ ॥ तथाभूतेन संयोगाद्यथार्थविधयः स्युः ॥१०॥

**विधित्वं चाविशिष्टं वैकृतैः कर्मणा योगात्तस्मात्सर्वं प्रधानार्थम् ॥११॥ समत्वाच्च तदुत्पत्तेः संस्कारैरधिकारः स्यात् ॥ १२ ॥**

अग्नीषोमीयपशौ श्रूयते 'एकादश प्रयाजान् यजती' तै. सं. ६-३-१० ति। तथा चातुर्मास्येषु 'नव प्रयाजान् यजति, नवानुयाजानि'ति। तथा वायव्ये पशौ-'हिरण्यगर्भः समवर्त्तताग्रे इत्याघारमाघारयती' तै.सं. ४-१-८ ति। एवमन्यत्रापि। यत्र प्राकृतमङ्गमप्राकृतगुणयुक्तं श्रूयते, तदुदाहृत्य विचार्यते-किं तत्र चोदकेन प्राकृतीतिकर्त्तव्यता प्राप्यते, न वेति। तदर्थमिदं विचार्यते-किमेतैः गुणविशिष्टप्रयाजादिविधिः ? उत प्रयाजाद्यनुवादेन गुणमात्रविधिरिति। तत्रातिदेशेन पदार्थानां न स्वरूपतः पर्युपस्थापनमस्ति, प्रकारमात्रातिदेशात। अतो नातिदेशप्राप्त्यङ्गीकरणेन गुणविधिः सम्भवति। तस्मात्सङ्ख्यादिविशिष्टाः प्रयाजादय एवात्र विधीयन्ते। एवं च धात्वर्थविधानाच्छ्रुत्यनुग्रहो भवति। ते च प्रयाजादयः प्रकृतौ क्लृप्तोपकारा विकृतौ श्रूयमाणा गृहमेधीयाज्यभागवदतिदेशं निरुन्धन्ति। तस्मान्न प्राकृतीतिकर्त्तव्यताऽतिदिश्यते- इति प्राप्ते—

ब्रूमः—प्रकारद्वारतः प्राप्तेरतिदेशेन कर्मणां।
तान्यनूद्य गुणः शक्यो विधातुमिति तद्विधिः ॥ ११ ॥
न च सत्यां गतौ न्याय्यं विशिष्टविधिगौरवम्।
वाक्यार्थविधिदोषश्च समानः पक्षयोर्द्वयोः ॥ १२ ॥

योऽपि हि श्रुत्यर्थविधिलिप्सया धात्वर्थं विधित्सति, तेनापि गुणवादस्याप्रमादपाठायाऽवश्यं वाक्यार्थविधिरङ्गीकर्तव्यः। तथा सति तत्र संक्रान्तेविधौ धात्वर्थानुवादेनानेकविधिपरिजिहीर्षया प्रकारद्वारा प्राप्तिमालोच्य, तदनुवादेन विधिर्गुणमात्रं विधत्ते। तस्मादेवंजातीयकेषु गृहमेधीयन्यायाभावादस्त्यतिदेशः।

इति प्रथमं पशवादौ प्राकृतेतिकर्तव्यतानुष्ठानाधिकरणम्।

---

वायव्यपशौ हिरण्यगर्भः इत्यादिमन्त्रस्योत्तरस्मिन्नाधारे गुणत्वाधिकरणम् ।२।

**हिरण्यगर्भः पूर्वस्य मंत्रलिङ्गात् ॥१३॥ प्रकृत्यनुपरोधाच्च ॥१४॥ उत्तरस्य वा मंत्रार्थित्वात् ॥ १५ ॥ त्रिष्यतिदेशात्तच्छ्रुतौ विकारः स्याद्गुणानामुपदेश्यत्वात् ॥ १६ ॥ पूर्वस्मिंश्चामन्त्रत्वदर्शनात् ॥१७॥**

वायव्ये पशौ श्रूयते 'हिरण्यगर्भस्समवर्तताग्रे इत्याघारमाघारयती'ति।

तत्प्राकृताघारानुवादेन मन्त्रविधिरिति स्थितं। प्रकृतितश्च द्वावाघारौ-प्राप्तौ—पूर्वः प्राजापत्यः अमन्त्रकश्च, उत्तरस्त्वैन्द्रः समन्त्रकः। तदिह किं-पूर्वस्याघारस्य मन्त्रविधिः ? उतोत्तरस्येति संशये, मन्त्रस्य प्रजापतिलिङ्ग-त्वात् 'प्रजापतिर्वै हिरण्यगर्भः प्रजापतेरनुरूपत्वाये' तै. सं. ५-१-१ ति च-वाक्यशेषात्पूर्वस्येति प्राप्ते—

ब्रूमः—पूर्वस्मिन्मन्त्राभावान्न मन्त्रकार्यमस्ति, तत्र मन्त्रविधौ मन्त्र-कार्यमप्राकृतं कल्प्यं स्यात्। उत्तरत्र तु प्रकृतावेव मन्त्रविधानादस्ति मन्त्र-नियमजन्यमदृष्टं। तत्र मन्त्रविधानं सुकरं। मन्त्रलिङ्गं त्वैन्द्रेऽप्यविशिष्टमिति-दर्शितं भाष्ये। वाक्यशेषोऽपि प्रजानां पतिः प्रजापतिरित्येवमिन्द्र एवोपपन्नः। 'यो हि खलु वाव प्रजापतिः, स एवेन्द्रः' इति चैकत्वादुपपत्तिर्वाक्यशेषस्य। पूर्वाघारस्य चाहत्यैवामन्त्रत्वं दृश्यते, 'न स्वाहेति करोति, न मन्त्रञ्चाहेति। तस्मादुत्तरस्य मन्त्रः।

इति द्वितीयं हिरण्यगर्भमन्त्रस्य उत्तराघारगुणताधिकरणम्।



चातुर्मास्येषु सोमेष्वासादन-नियोजनयोः प्राकृतगुणविधित्वाधिकरणम् ॥३॥

संस्कारे तु क्रियांतरं तस्य विधायकत्वात् ॥ १८ ॥ प्रकृत्यनुप-रोधाच्च ॥ १९ ॥ विधेस्तु तत्र भावात्सन्देहे यस्य शब्दस्तदर्थः-स्यात् ॥ २० ॥ संस्कारसामर्थ्याद् गुणसंयोगाच्च ॥ २१ ॥ विप्रतिषे-धात्क्रिया प्रकरणे स्यात् ॥ २२ ॥

'उत्करे वाजिनमासादयन्ति, परिधौ पशुं नियुञ्जीते'त्यत्र संशयः—किमप्राकृतमासादनान्तरं, नियोजनान्तरं वा दृष्टार्थकमुत्कर-परिधिविधि-विशिष्टं विधीयते ? उत प्राकृतयोरेवासत्तिभावानपक्रमणरूपदृष्टप्रयोजनयो-रुत्कर-परिधिविधिरिति। तत्र तीक्ष्णाग्रत्वात् तुङ्गत्वाच्चोत्करस्य, परिधेश्चाणीयस्त्वान्न दृष्टकार्यमासादनं, नियोजनं च शक्यं कर्तुम्। अतः-अप्राकृतकार्यमन्यद्विधीयते। एवं च धात्वर्थविधानाच्छ्रुत्यनुग्रहः। अन्यथा वाक्यार्थविधिः स्यादित्येवं प्राप्ते—

ब्रूमः—न सम्भवति गुणमात्रविधौ विशिष्टविधिर्युक्तः, साधारणश्च-वाक्यार्थविधिः, गुणस्यावर्जनीयत्वात्। अतः प्राकृतयोर्गुणविधिः, न चाशक्यता, पृथ्वग्रतामुत्करस्य, स्थविमानं च परिधेराश्रित्य प्राकृतकार्य-सम्पादनात्।

इति तृतीयं सौमिकचातुर्मास्येषु आसादन-नियोजनयोर्गुणविधित्वाधिकरणम्।



अग्निचयने प्राकृतवैकृतोभयदीक्षाहूतीनामनुष्ठानाधिकरणम् ॥ ४ ॥

षड्भिर्दीक्षयतीति; तासां मन्त्रविकारः श्रुतिसंयोगात् ॥ २३ ॥ अभ्यासात्तु प्रधानस्य ॥ २४ ॥ आवृत्त्या मन्त्रकर्म स्यात् ॥ २५ ॥ अपि वा प्रतिमन्त्रत्वात्प्राकृतानामहानिः स्यादन्यायश्च कृतेऽभ्यासः ॥ २६ ॥ पौर्वापर्यञ्चाभ्यासे नोपपद्यते नैमित्तिकत्वात् ॥ २७ ॥ तत्पृथकत्वं च दर्शयति ॥२८॥ न चाविशेषाद्व्यपदेशः स्यात् ॥२६॥

अग्नौ प्रकृतितो दीक्षाऽऽहुतयः षट् प्राप्ताः, तासां च षण्मन्त्राः-प्रकृतित एव प्राप्ताः 'आकूत्यै प्रयुजेऽग्नये स्वाहे' त्यादयः। अग्नावपरे षण्मन्त्राः—'आकूतिमग्निं प्रयुजं स्वाहे'त्यादयः। ते च दीक्षार्थतया विनियुक्ताः 'षड्भिर्दीक्षयती'ति। दीक्षाहुतीनां चाभ्यासः श्रूयते 'द्वादश जुहोती'ति। तत्र संशयः—किं वैकृतैर्मन्त्रैः प्राकृता बाध्यन्ते, समुच्चीयन्ते वेति।

तत्र प्रत्यक्षपाठेन प्रत्यक्षवचनेन च।
वैकृताः प्राकृतान्मन्त्रान् बाधेरन्नेककार्यतः ॥ १३ ॥

यद्यपि 'द्वादश जुहोती'ति वचनाद्धोमानामभ्यासः, तथाऽपि वैकृतानामेव प्रत्यक्षवचनविहितानां चोदकप्राप्तप्राकृतमन्त्रबाधेन होमाङ्गत्वात्तैरेवाभ्यस्तैर्द्वादशापि होतव्या इति प्राप्ते—

ब्रूमः—न प्रत्यक्षेण वाक्येन होमार्थं वैकृताः श्रुताः।
दीक्षार्थताबलात्तेषां होमाङ्गत्वं प्रकल्प्यते ॥ १४ ॥
सकृत्प्रयोगमात्राच्च तादर्थ्यमुपपद्यते।
वैकृतैः प्राकृतास्तस्मात्समुच्चेया न बाधनम् ॥ १५ ॥

'षडभिर्दीक्षयती'ति दीक्षार्थता श्रुता। सा च स्वाहाकारलिङ्गानां-होमद्वारेणेति दीक्षार्थत्वसिद्धये होमाङ्गता कल्प्यते। सकृत्प्रयुक्तैरेव च-

षट्सु होमेषु दीक्षार्थतासिद्धेर्नाभ्यासे, प्राकृतबाधे वा प्रमाणमस्ति । तेनाभ्यासवशेन होमानां द्वादशत्वान्मन्त्राणामपि प्राकृत-वैकृतानां समुच्चयः ।

इति चतुर्थं चयने श्रुतानां दीक्षाहुतिमन्त्राणां सौमिकदीक्षाहुतिमन्त्रैस्समुच्चयाधिकरणम् ।

---

पुनराधानेऽग्न्याधानदक्षिणानां निवृत्त्यधिकरणम् ॥ ५ ॥

अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद्वाक्यसंयोगात् ॥ ३० ॥ शिष्टत्वाच्चेतरासां यथास्थानम् ॥ ३१ ॥ विकारस्त्वप्रकरणे हि काम्यानि ॥ ३२ ॥ शङ्कते च निवृत्तेरुभयत्वं हि श्रूयते ॥ ३३ ॥

अस्ति पुनराधेयं, तच्चाग्न्याधेयधर्मकं । तत्र श्रूयते 'पुनर्निष्कृतो रथो दक्षिणा, पुनरुत्स्यूतं वासः' इत्यादि । सेयं दक्षिणा किमग्न्याधेयस्य दक्षिणाना 'मैका देये'त्येवमादीनां निवर्त्तिका, न वेति चिन्तायां, ? सत्यप्येककार्यत्वे, वचनो'दुभयोर्ददाती'ति समुच्चयप्राप्तौ—

उच्यते-विध्यश्रवणाद्विध्यन्तरशेषत्वाच्चास्य समुच्चयविधावसामर्थ्याद्दक्षिणयोश्चानत्यर्थत्वमनेककार्यत्वेनैककार्यत्वाद्वैकृतीभिः प्राकृतीनां बाधः । कथं पुन 'रुभयोर्ददाती'ति निर्देशः ? उच्यते-कृत्वा ह्यग्न्याधेयं, पश्चात्पुनराधेयं क्रियते । तेन पूर्वदत्तसम्प्रतिदीयमानापेक्षयोभयदाननिर्देशः ।

इति पञ्चमं पुनराधाने आधानदक्षिणानां निवृत्त्यधिकरणम् ।

---

आग्रयणे वासो-वत्साभ्यामन्वाहार्य्यस्य निवृत्त्यधिकरणम् ॥ ६ ॥

वासो वत्सश्च सामान्यात् ॥ ३४ ॥

आग्रयणे 'वासो दक्षिणा, वत्सःप्रथमजो दक्षिणे'ति श्रुतं वासोवत्सं समानकार्यत्वात्प्राकृतस्यान्वाहार्यस्य निवर्त्तकमिति सिद्धमेवोत्तरविवक्षायै प्राप्यते ।

इति षष्टं वासोवत्साभ्यां अन्वाहार्यस्य निवृत्त्यधिकरणम् ।

---

आग्रयणे वासोवत्सयोरन्वाहार्य्यधर्मानुष्ठानाधिकरणम् ॥ ७ ॥

अर्थापत्तेस्तद्धर्मः स्यान्निमित्ताख्याभिसंयोगात् ॥ ३५ ॥

अन्वाहार्यकार्यापत्तेर्वासः-वत्सम्, तद्धर्माल्लभेत इत्येतदपि प्राप्तिसूत्रमेव ।

इति सप्तमं आग्रयणे वासोवत्सयोरन्वाहार्यधर्माननुष्ठानाधिकरणम् ।

---

आग्रयणे वत्से पाकाभावाधिकरणम् ॥ ८ ॥

दाने पाकोऽर्थलक्षणः ॥ ३६ ॥

अन्वाहार्यपाको वत्से कर्तव्यः, नेति संशये, चोदकानुग्रहाय पक्त्वा-वत्सं तदीयं मांसं दक्षिणात्वेन देयमिति मन्यते ।

श्रुतन्तु वत्सद्रव्यं पाकेन नश्येत्, अश्रुतं च मांसं दीयेत । वत्सशब्दो-वा मांसलक्षणार्थः स्यात् । न चैतन्न्याय्यं । तस्मान्न वत्सपाकः ।

इत्यष्टममाग्रयणे वत्सपाकाभावाधिकरणम् ।

---

आग्रयणे वाससि पाकाभावाधिकरणम् ॥ ९ ॥

पाकस्य चान्नकारितत्वात् ॥ ३७ ॥

अथ वाससि पाकः स्यान्नेति संशये, विरोधाभावात् पच्येत । प्रयोज-नाभावात्त्वपाकः । प्रकृतौ हि दक्षिणाभूतान्नसंपत्त्यर्थः पाकः, नादृष्टार्थः । तस्मान्न वाससः पाकः ।

इति नवमं वाससि पाकाभावाधिकरणं ।

---

आग्रयणे वासो-वत्सयोरभिधारणाभावाधिकरणम् ॥ १० ॥

तथाभिधारणस्य ॥ ३८ ॥

अभिघारणमन्वाहार्यधर्मः किं वासो–वत्सयोः कर्त्तव्यं,नेति । प्रकृताव-दृष्टार्थत्वात्, इह विरोधात्कर्त्तव्यं ।

नैवं—स्वादिमार्थं हि तद् दृष्टेनैव प्रकृतावन्नानामुपकरोति। न च वासो-वत्सयोः स्वादिम्ना प्रयोजनमस्ति। अतोऽभिधारणनिवृत्तिः।

इति दशमं वासोवत्सयोरभिधारणाभावाधिकरणं।

---

ज्योतिष्टोमे गवामेव द्वादशशतस्य दक्षिणात्वाधिकरणम् ॥ ११ ॥

द्रव्यविधिसन्निधौ सङ्ख्या तेषां गुणत्वात्स्यात् ॥ ३९ ॥ समत्वात्तु गुणानामेकस्य श्रुतिसंयोगात् ॥ ४० ॥ यस्य वा सन्निधाने स्याद्वाक्यतो ह्यभिसम्बन्धः ॥ ४१ ॥ असंयुक्तास्तु तुल्यवदितराभिर्विधीयन्ते; तस्मात्सर्वाधिकारः स्यात् ॥ ४२ ॥ असंयोगाद्विधिश्रुतावेकजाताधिकारः स्याच्छ्रुत्याकोपात्क्रतोः ॥ ४३ ॥ शब्दार्थश्चापि लोकवत् ॥ ४४ ॥ सा पशूनामुत्पत्तितो विभागात् ॥ ४५ ॥ अनियमोऽविशेषात् ॥४६॥ भागित्वाद्वा गवां स्यात् ॥४७॥ प्रत्ययात् ॥४८॥ लिङ्गदर्शनाच्च ॥ ४९ ॥

ज्योतिष्टोमे श्रूयते 'गौश्चाश्वश्चाश्वतरश्च गर्दभाश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादश शतं दक्षिणे'ति। तत्र-संशयः—किमेकैकस्य गवादेर्द्रव्यस्य द्वादशशतसङ्ख्या? उतैकस्य यस्य कस्यचित्? अथवा माषाणाम? आहोस्वित्सर्वैः सहितैः सम्पाद्या? किं वैकजातीयस्यैवानियमेन? यद्वा पशूनां? तत्रापि किमनियमः।? अथवा गवामिति। तत्र 'तस्ये'ति षष्ठयन्तेन गवादीनि प्रधानत्वेनोपदिश्य तद्गुणभूता-सङ्ख्या विधीयमाना प्रतिप्रधानं सम्बध्यते। अतः प्रत्येकं द्वादशशतमिति-प्रथमः पक्षः।

नात्र गवाद्युद्देशेन सङ्ख्या विधीयते, न ह्येकेन वाक्येन गवादीनां दक्षिणात्वेन विधानं, तदङ्गत्वेन च सङ्ख्याविधानं सम्भवति। तस्माद्-गवादीनि द्रव्याणि, सङ्ख्या च दक्षिणया संबध्यन्ते। सा उभयविशिष्टा-विधीयते। तत्रैकस्मिन्द्रव्ये निविष्टायां सङ्ख्यायां, तद्विशिष्टा दक्षिणा-अनुष्ठिता भवति। तस्मादेकस्य सङ्ख्या। तत्राप्यनियमः, विशेषाभावात्। अथवा माषाणां स्यात्, आनन्तर्यात्। नैतदपि युक्तं। चशब्दश्रुत्या ह्यन्यसहिताः-माषा निर्दिष्टाः, तेनान्यसहितानां माषाणां सङ्ख्या, तेषां च बहुत्वात्, तस्येति प्रतिनिर्देशासम्भवात्। तस्येति तु क्रतुनिर्देशोऽङ्गीकर्त्तव्यः।

यद्वा गवादिसमाहाराभिप्रायं तस्येत्येकवचनं। यदा च क्रतुनिर्देशः, तदा यद्यपि चशब्दो न स्यात्, तथाऽपि गवादिद्रव्यविशिष्टा द्वादशशतसङ्ख्याविशिष्टा च दक्षिणा श्रुता, सहितानि च गवादीनि दक्षिणा, नैकैकम्। अतोदक्षिणापरिच्छेदिका सङ्ख्या सर्वेषु सहितेषु निवेष्टुमर्हति। तस्मात्सर्वसंपाद्या सङ्ख्या। नैवं। न हि 'तस्ये'ति शब्दो वाक्यगतेन द्रव्येण सम्बन्धं लभमानः—प्रकृतिविशेषञ्च कुर्वन्नप्रकृतेन क्रतुना सम्बन्धमानर्थक्यं चावलम्बते। तस्मात्तस्येति गवादीनां निर्द्देशः। तत्रैकवचनान्तत्वान्न सहितानां सर्वेषां निर्द्देशः। नापि समाहारस्य, तस्याशाब्दत्वात्। किं त्वेकजातीयकस्य, तत्राप्यनियमः, विशेषाभावात्।

अथवा पशूनामेव, न माषादीनां। तेषामाढकादिपरिमाणान्तरापेक्षया सङ्ख्याव्यवहारो लोके। न स्वरूपतः भृतित्वाभावादिति दर्शितं भाष्ये। अत एव माषैरप्यनन्तरैर्न सम्बध्यते। अतः पशूनामेव। तत्राप्यनियमः, अविशेषात्। एकवचनान्तत्वाच्च तस्येति न बहुवचननिर्द्दिष्टानां माषादीनां निर्द्देशः। अत एवाजादीनामपि न निर्द्देशः। गवादीनां चत्वारि परिशिष्टानि। तत्र महोपकारित्वादप्रतिषिद्धत्वान्मुख्यत्वाच्च गवां निर्द्देशः। तेनायमर्थः—गवादिद्रव्याणि, तत्र च 'तस्य गोर्द्वादशशतं दक्षिणेति'। तस्माद्गवामेषा सङ्ख्या।

इति एकादशं ज्योतिष्टोमे गवामेव द्वादशशतस्य दक्षिणात्वाधिकरणम्।

---

विभज्य गोदक्षिणाया दानाधिकरणम्॥ १२॥

तत्र दानं विभागेन प्रदानानां पृथक्त्वात्॥ ५०॥ परिक्रयाच्च लोकवत्॥ ५१॥ विभागं चापि दर्शयति॥ ५२॥

किमेषा दक्षिणा ऋत्विग्भ्यो विभज्य विभज्य वा देया? किमविभज्यैव? उत विभज्यैवेति संशये? विशेषाश्रवणादनियमः। अथवा—'ऋत्विग्भ्यो दक्षिणां ददाती'ति दानाङ्गत्वेन ऋत्विग्बहुत्वस्य विवक्षितत्वादविभज्यैव सहितेभ्यो देया, न विभज्यैकैकस्मै, बहुवचनविरोधादिति प्राप्ते—

अभिधीयते—ऋत्विक्परिक्रयार्थेन दानमेतदिति स्थितम्।

तेन तेषां प्रधानत्वाद्बहुत्वं न विवक्षितम्॥ १६॥

अतः प्रतिप्रधानावृत्तेरेकैकस्यैव तद्दानं। न चानियमः, आनमनार्थं हि तद्दानं। यदि च दीयमानं द्रव्यमात्मोपयोगक्षमं भवति। तेन तेषामानतिः, नान्यथा। तेनात्मीयं द्रव्यमृत्विजामुपयोगक्षम कुर्यादिति दानविधेरर्थः। विभज्य च ददता सम्पूर्णं तदनुष्ठितं भवति, परिषदे तु ददता न तत्सम्पूर्ण-मनुष्ठितं स्यात्। पुर्विभागापेक्षत्वात्तेषामुपयोगस्य 'तुथो वो विश्ववेदाः-विभजत्वि' तै. सं. १-४-४१ ति च मन्त्रवर्णस्यापाक्षिकत्वात् छागन्याये-नापि सिध्यति विभागः। यत्र त्वेकमेव द्रव्यं दक्षिणा। यथा 'धेनुर्दक्षिणा, अन्वाहार्यो दक्षिणे' ति। तत्र विभागासम्भवादविभज्यैव दानम्।

इति द्वादशं गोदक्षिणाया विभज्य दानाधिकरणम्।



ज्योतिष्टोमे समाख्यानुसारेण दक्षिणाविभागाधिकरणम् ॥ २३ ॥

समं स्यादश्रुतत्वात् ॥ ५३ ॥ अपि वा कर्मवैषम्यात् ॥ ५४ ॥ अतुल्याः स्युः परिक्रये विषमाख्या; विधिश्रुतौ परिक्रयान्न कर्मण्यु-पपद्यते; दर्शनाद्विशेषस्य तथाभ्युदये ॥ ५५ ॥

स्थिते विभागे, चिन्त्यते—किं समो विभागः स्यात्? उत प्रयासानु-रूपः, अथवा समाख्यानुरूप इति? विशेषाश्रवणात्साम्ये, लोकवद्वा-प्रयासानुरूप्ये प्राप्ते—

द्वादशाहे दीक्षाक्रमवाक्यगताद्धर्चादिसमाख्यानात् ब्राह्मणाच्छंसि-प्रभृतीनां तदनुरूपो विभागः प्रकृतावध्यवसीयते।

इति त्रयोदशं ज्योतिष्टोमे समाख्यानुसारेण दक्षिणाविभागाधिकरणम्।



भूर्नामैकाहे 'तस्य धेनुः' इत्यनेन कृत्स्नक्रतुदक्षिणाबाधाधिकरणम् ॥ १४ ॥

तस्य धेनुरिति गवां प्रकृतौ विभक्तं चोदितत्वात्तत्सामान्यात्तद्धि-कारः स्याद्यथेष्टिगुणशब्देन ॥ ५६ ॥ सर्वस्य वा, क्रतुसंयोगादेकत्वं दक्षिणार्थस्य, गुणानां कार्यैकत्वादर्थे विकृतौ श्रुतिभूतं स्यात्तस्यासम-

समवायाद्धि कर्मभिः ॥ ५७ ॥ चोदनानामनाश्रयाल्लिङ्गेन नियमः स्यात् ॥ ५८ ॥

एवं प्रकृतौ दक्षिणास्थितिर्निरूपिता। तस्यां हि निरूपितायां विकृतिषु बाधाबाधविचारः सुखेन वर्तिष्यते। इदानीं बाधाबाधौ विचार्येते। अस्ति भूनर्नामैकाहः 'अथैष भूर्वैश्वदेवः, तस्य धेनुर्दक्षिणे' ति। तत्र संशयः– किं गवादीनां प्रत्येकं दक्षिणात्वम्? उत सहितानामिति। तत्र प्रत्येकं दक्षिणात्वं न्याय्यं। कथं? गवादिशब्दा जातिवचनाः, दक्षिणाशब्दो-गणवचनः, स हि भृतित्वेन गुणेन वर्तते, जाति–गुणयोश्च जातिर्विशेष्यत्वेन, गुणस्तु विशेषणत्वेन। 'नीलमुत्पलं, शुक्लो गौरि'त्यादिषु सार्वजनीनमेतत्। यच्च विशष्यं, तत्प्रधानमेव। अतो गवादीनां प्राधान्यं। प्राधान्यात्तेषां-गुणभूता दक्षिणा प्रत्येकमेतैः सम्बध्यते। गवादयो दक्षिणारूपाः कार्या इति। एवं बह्वीषु दक्षिणासु यस्याः कस्याश्चित्स्थाने निविशमानाया धेन्वा दक्षिणात्वमुपपन्नं। तत्र गोलिङ्गेन धेनुत्वेन गवां निवृत्तिर्गम्यते। तस्माद्गवामेव-निवर्त्तिका धेनुः, नाऽश्वादीनामिति प्राप्ते —

अभिधीयते—गवादीनां प्रधानत्वे दृष्टं नास्ति प्रयोजनम्।
ऋत्विगानमनार्था तु दक्षिणा सप्रयोजना ॥ १७ ॥

यदि च द्रव्योपसर्जनत्वेन दक्षिणोच्येत, ततो गुणवचनत्वादाश्रयभूतगवादिद्रव्यगतवचनप्राप्तेर्गवादीनां बहुत्वाद्दक्षिणाशब्दो बहुवचनान्तः-स्यात्। गुणवचनशब्दस्य व्याकरणे परोपसर्जनार्थत्वात्। स्वप्राधान्ये तु नैषः-दोषो भवति। तथाहि–यत् अनतिकरम्, तद्दक्षिणेत्युच्यते। एका चानतिरिति-तदुपाधिको दक्षिणाशब्द एकवचनं लभते। गवादीनि तु तत्र विशेषणानि। न च विशेषणवशेन विशेष्ये सङ्ख्या संभवति। यथाऽग्नीषोमौ देवतेति। तेनानेकगवाद्यात्मिकैका दक्षिणा विधीयते। गवादिरूपया च भृत्या दृष्टं-प्रयोजनमृत्विगानमनं भृतिरूपसंस्कृतैर्गवादिभिर्नास्ति दृष्टं। तस्मादेका-दक्षिणा गवाद्यात्मिका प्रकृतौ विकृतौ धेन्वात्मिका जातेति, समस्तगवादि-निवृत्तिः।

इति चतुर्दशं भूनाम्नि धेनुदानेन निखिलदक्षिणाबाधाधिकरणम्।



तस्य सोममपहरेयुः, इत्यादौ एकां गाम्, इत्यादीनां
गोगतसङ्ख्याबाधाधिकरणम् ॥ १५ ॥

एकां पञ्चेति धेनुवत् ॥ ५६ ॥

'यदि सोममपहरेयुः, एकां गां दक्षिणां दद्यात अभिदग्धे सोमे पञ्च-गाः दद्यादि' ता. ब्रा. ८-५-१ ति श्रुतम्। 'तत्र संशयः'—किमेका पञ्च गवां-निर्वर्त्तिका, किं वा सर्वस्य दाक्षिण्यस्येति। तदर्थमिदं विचार्यते—किमेकां दद्यादिति सम्बन्धः ? उतैकां गामिति।

तत्र —द्वितीयाश्रुतिसामर्थ्याद्ददातिक्रियया ऽन्वयः ।
एकया पञ्चभिश्चातः सर्वं देयं निवर्त्तते ॥ १८ ॥

उच्यते—ददातिसङ्गतौ सत्यां गोशब्दे लक्षणा भवेत्।
पाक्षिको वाऽनुवादः स्याद्विधौ वाक्यं तु भिद्यते॥ १९ ॥

बहुषु गवादिषु चोदकप्राप्तेषु 'एकां दद्यादि'ति विहितं किं तदेकमित्य-निर्द्देशात चोदकप्राप्तेषु यत्किंचिदिति गम्यते। गामित्यश्वादीनामप्युप-लक्षणार्थं स्यात। गोरपि वा पक्षे प्राप्तेः पाक्षिकोऽनुवादः स्यात्। न चैतदु-भयमपि न्याय्यम्। अथ त्वेकां दद्यात्, तां गामिति विधीयते, ततः प्राप्तक्रिया ऽनुवादेनानेकार्थविधानाद्वाक्यं भिद्येत,। यदि तु 'गां दद्यादि'ति गौरेव दक्षिणा-दाने विधीयते, ततस्तस्याश्चोदकप्राप्तैव द्वादशशतसङ्ख्या परिच्छेदिका-प्राप्तेति, पञ्चैकशब्दावनर्थकौ स्यातां, विधाने वाक्यभेदः। अथ धेनुवद्विवक्षि-तैकसङ्ख्गोविधानादेकशब्दोऽनुवादः। तथाऽप्यानर्थक्यं। पञ्चशब्दस्त्वन-नुवाद एव, तस्माच्छब्दानर्थक्यपरिजिहीर्षया श्रुतिलक्षणमपि क्रियासम्बन्ध-मविधाय वाक्यलक्षणे गोसङ्ख्यासम्बन्ध एव विधीयते।

यद्वा भवतु सङ्ख्ययोर्दानेनैवान्वयः, तथाऽपि ते प्रातिपदिकाभिहित-सङ्ख्यात्वसाम्यात् द्वादशशतसंख्यास्थाने निविशेते। सा च प्रकृतौ गोपरिच्छे-देनैवोपकृतवतीति, तत्स्थानपतिते एक-पञ्चसंख्ये गामेव परिछिन्द्यातामिति, अश्वादीनामनिवृत्तिः।

इति पञ्चदशं एकां गामित्यनेन गोगतसंख्याबाधाधिकरणम्।



साद्यस्के त्रिवत्सेन सर्वेषां क्रयार्थानां बाधाधिकरणं ॥ १६ ॥

त्रिवत्सश्च ॥ ६० ॥ तथा लिङ्गदर्शनम् ॥ ६१ ॥ एके तु श्रुतिभूतत्वात्सङ्ख्यया गवां लिङ्गविशेषेण ॥ ६२ ॥

'त्रिवत्सः साण्डः सोमक्रयणः' ता० ब्रा० १६-१३-६ इत्यत्र तु साण्डानुवादेन त्रिवत्सविधौ सत्यग्नीषोमीयादिष्वपि प्रसङ्गात्सोमक्रयण एव त्रिवत्सो विधीयते इति, सर्वाणि क्रयद्रव्याणि निवर्त्तन्त इति विशेषः।

इति षोडशं त्रिवत्से सोमक्रयसाधनमात्रबाधाधिकरणं।

---

अश्वमेधे प्राकाशावित्यनेनाध्वर्य्यंभागबाधाधिकरणम् ॥ १७ ॥

प्राकाशौ च तथेति चेत् ॥ ६३ ॥ अपि त्ववयवार्थत्वाद्विभक्तप्रकृतित्वाद्गुणेदन्ताविकारः स्यात् ॥ ६४ ॥

अश्वमेधे श्रूयते 'प्राकाशावध्वर्यवे ददाती' तै. सं. १-८-१८ति। तत्र संशयः—किं प्राकाशौ कृत्स्नस्य क्रतुदाक्षिण्यस्य निवर्तकौ? उताध्वर्युभागस्य निवर्त्तकाविति। यदि प्राकाशौ ददातीति सम्बन्धः, ततः कृत्स्नस्य, अथ प्राकाशावध्वर्यंव इति, ततस्तद्भागस्यैव।

तत्र—तदानन्तर्यसम्प्राप्तं बाधित्वाऽध्वर्युसङ्गमम्।
द्वितीयाश्रुतिसामर्थ्याद्ददातीति क्रियान्वयः ॥ २० ॥

दानञ्च चोदकप्राप्तमुद्दिश्यते, न चोद्देश्यमध्वर्युणा शक्यं विशेष्टुम्, तस्मादध्वरं युङ्क्ते इत्येवमध्वर्युशब्दं कथंचिद्दृत्विङ्मात्रे व्याख्याय दानमात्रे-प्राकाशविधिरिति, कृत्स्ननिवृत्तिः।

उच्यते अध्वर्युसम्बन्ध एव प्राकाशयोरिह।
विधीयतेऽथवाऽपूर्वं दानं द्वाभ्यां विशेषितम् ॥ २१ ॥

अध्वर्युशब्दस्यानर्थक्यभयान्न दानमात्रे विधानम्। अतः क्रियान्वयनिमित्तो यः पश्चात्तनः सम्प्रदानस्याध्वर्योः सम्प्रदेयभूतयोश्च प्राकाशयोर्मिथःसम्बन्धः, स एव विधीयते।

अथवाऽध्वर्युशब्दस्यानर्थक्यपरिजिहीर्षयैव दानान्तरमेवापूर्वमध्वर्यु-प्राकाशविशिष्टं विधीयते। तेन दृष्टार्थत्वादध्वर्य्वानतिसिद्धेस्तद्भागः प्राकृतो निवर्त्तत इति, न कृत्स्ननिवृत्तिः।

इति सप्तदशमश्वमेधे प्राकाशाभ्यामध्वर्युभागमात्रबाधाधिकरणम।

---

उपहव्ये अश्वेन कृत्स्नक्रतुदाक्षिण्यस्य बाधाधिकरणम् ॥ १८ ॥

धेनुवच्चाश्वदक्षिणा, स ब्रह्मण इति, पुरुषापनयो यथा हिरण्यस्य ॥ ६५ ॥ एके तु कर्तृसंयोगात्स्रग्वचास्य लिङ्गविशेषेण ॥ ६६ ॥ अपि वा तदधिकाराद्धिरण्यवद्विकारः स्यात् ॥ ६७ ॥

'उपहव्योऽनिरुक्तः' इत्युपहव्यसञ्ज्ञकमेकाहं विधाय श्रूयते 'अश्वश्यावो दक्षिणा, स ह्यनिरुक्तः, स ब्रह्मणे देयः, तां०ब्रा० १८-१-२०-२१-२२ इति। किमयमश्वो ब्रह्मभागस्य निवर्त्तकः? किं वा कृत्स्नस्येति। तत्र 'ब्रह्मणे देयः' इति वचनाद् ब्रह्मणे दीयमानस्तस्यैवानतिं कुर्वंस्तद्भागमेव निवर्त्तयति। प्राकाशवदध्वर्युभागं पुरुषान्तराणां चानत्यर्थं चोदकप्राप्तं दाक्षिण्यं दातव्यमेवेति प्राप्ते—

ब्रूमः—द्वे ह्येते वाक्ये क्रतुसंयुक्तमेकम्—अश्वःश्यावो दक्षिणेति। पुरुषयुक्तमपरं—ब्रह्मणे देयः—इति। तत्र पूर्वेण वाक्येनास्मिन क्रतावश्वो दक्षिणेत्यश्वेनानतिः कार्येति विहिते, यदन्यदस्मिन क्रतौ चोदकेनानत्यर्थतया प्राप्तं, तत्सर्वं धेनुन्यायेन निवर्त्तते। स चाश्वः क्रतौ भृतित्वेन विहितः सर्वर्त्विजां दातव्यः प्राप्तः सन्नुत्तरेण वाक्येन पुरुषान्तरेभ्योऽपनीय ब्रह्मणे दीयते। तेन पुरुषान्तराणां विनैव दक्षिणया प्रकारान्तरेणानतिः कर्त्तव्येति, कृत्स्ननिवृत्तिः।

इति अष्टादशं श्यावाश्वेन कृत्स्नदक्षिणाबाधाधिकरणम्।

---

ऋतपेये सोमचमसेन कृत्स्नक्रतुदाक्षिण्यबाधाधिकरणम् ॥ १९ ॥

तथा च सोमचमसः ॥ ६८ ॥ सर्वविकारो वा क्रत्वर्थे पशूनां प्रतिषेधात् ॥ ६९ ॥ ब्रह्मदानेऽविशिष्टमिति चेत् ॥ ७० ॥ उत्सर्गस्य

**क्रत्वर्थत्वात्प्रतिषिद्धस्य कर्मस्यान्न च गौणः प्रयोजनमर्थः स दक्षिणानां स्यात् ॥ ७१ ॥**

ऋतपेये श्रूयते 'औदुम्बरः सोमचमसो दक्षिणा सप्रियाय सगोत्राय-ब्रह्मणे देयः' तां॰ ब्रा॰ १८-२-१०-११-१२ इति। तत्र पूर्ववत्संशयपूर्वोत्तरपक्षाः। का पुनर्विशेषाशङ्का ? पूर्वत्र द्वे एव वाक्ये। इह त्वेकमिदं वाक्यम्। अतः-प्रथमं क्रतुसंयोगाभावाद् ब्रह्मभागस्यैव निवत्तिरिति विशेषाशङ्का।

प्राभाकरोक्तायाः विशेषाशंकाया उपन्यास-निरासौ

यद्यप्येकं-वाक्यं, तथाऽपि दक्षिणासंयोगात्सर्वनिवृत्तिरिति 'केचिदेवं वर्णयन्ति। न त्वेतद्युक्तम्। अत्रापि द्वे एव वाक्ये सोमचमसो दक्षिणेत्येकं, स ब्रह्मणे देय इत्यपरं स्पष्टमेव। अतो नायं विशेषः। सिद्धान्तोऽप्ययुक्तः। सति ह्येकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः स्यादिति वक्ष्यामः।

स्वमतेन परिहारः

तस्मादेवं वक्तव्यम्। अत्र हि केषांचिद्दक्षिणाद्रव्याणां प्रतिषेधः-श्रूयते, असौ सत्यां प्राप्तौ घटते। तस्मान्नूनं सोमचमसः सर्वस्यनिवर्त्तक इति-विशेषाशङ्का। सोमचमसस्तुत्यर्थोऽयमर्थवादः 'ऋतं वै सोमः, अनृतं पशवः, यत्पशून्दद्यात्, सोऽनृतं कुर्यादित्यादिः, न प्रतिषेधः। तस्मात्पूर्ववत्सर्वनिवृत्तिः।

इति विंशं सोमचमसेन कृत्स्नदक्षिणापुरुषान्तरयोर्बाधाधिकरणम्।

सोमचमसेन कृत्स्नदक्षिणापुरुषान्तरयोर्बाधाधिकरणम् ॥ २० ॥

**यदि तु ब्रह्मणस्तदूनं तद्विकारः स्यात् ॥ ७२ ॥ सर्वं वा पुरुषापनयात्तासां क्रतुप्रधानत्वात् ॥ ७३ ॥**

इदं सूत्रद्वयं पूर्वोत्तरपक्षप्रयोजनकथनार्थत्वेन व्याख्याय, पुनरन्यथा-व्याख्यातं[1]। सोमचमसो ब्रह्मणे दक्षिणा देय इत्येकमिदं वाक्यमिति कृत्वा-चिन्त्यते। यदैकं वाक्यं, तदाऽपि किं कृत्स्नस्य क्रतुदाक्षिण्यस्य निवृत्तिः? उत-ब्रह्मभागस्यैवेति ? दक्षिणासंयोगात् दक्षिणायाश्च चोदकेनैकस्याःप्राप्तत्वात्त-त्संयुक्तश्चमसः सत्यपि ब्रह्मसंयोगे कृत्स्नां दक्षिणां निवर्तयेत्। इतरथा हि ब्रह्म-भागे दक्षिणावयवे दक्षिणाशब्दो लक्षणया स्यात्। तस्माद्दक्षिणासंयोगा-कृत्स्ननिवृत्तिः, ब्रह्मसंयोगाच्च पुरुषान्तरापनय इत्येवमुत्सूत्रं पूर्वपक्षं कृत्वा,

१. भाष्ये इति शेषः।

'यदि ब्रह्मणः' इति सिद्धान्ते वर्णयितव्यम्। एकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः–ब्रह्मणे दक्षिणात्वेन सोमचमसो देयः, इति। न खल्वेकं वाक्यं सोमचमसः क्रतोर्दक्षिणा, नाऽन्यत्, सोऽपि तु ब्रह्मणे देयः, नान्येभ्य इति, अर्थद्वयं शक्नोति विधातुं। भिद्येत हि तथा वाक्यं। तस्माद्दक्षिणावयवे ब्रह्मभागे-दक्षिणशब्दमङ्गीकृत्य तत्रैव सोमचमसो विधातव्यः।

किं च दक्षिणाशब्दो भृतिवचनः, स च कर्मापेक्षयाऽपि प्रवर्त्तते-अस्मिन् कर्मणीयं भृतिरिति। कर्त्रपेक्षयाऽपि प्रवर्त्तते–अस्य पुरुषस्य कुर्वाण-स्येयं भृतिरिति। तदिह यदि द्वे वाक्ये, ततो यत्पुरुषविशेषासंयुक्तं, तत् प्रकरणात् क्रतुना सम्बध्यमानं क्रत्वपेक्षयैव दक्षिणात्वं चमसस्य विदधत् क्रतुगतं कृत्स्नं दाक्षिण्यं निवर्त्तयेद। यदा पुरुषविशेषसंयुक्तमेकं वाक्यं, तदा तदपेक्षयैव दक्षिणात्वं चमसस्य विदधत् तद्भागमेव निवर्त्तयति। तद्भागश्च-यद्यपि क्रत्वपेक्षया दक्षिणावयवः, तथाऽपि ब्रह्मापेक्षया भृतित्वान्मुख्यैव-दक्षिणेति, न लक्षणाप्रसङ्गः। तस्मादेकवाक्यत्वे ब्रह्मभागस्यैव निवृत्तिः। 'सर्वं वा पुरुषापनयादि'ति कृत्वाचिन्तोद्घाटनम्।

---

वाजपेये रथस्य भागनियामकताधिकरणम्॥ २१॥

**यजुर्युक्तेऽध्वर्योर्दक्षिणा विकारः स्यात्॥ ७४॥ अपि वा श्रुतिभूतत्वात्सर्वासां तस्य भागो नियम्यते॥ ७५॥**

वाजपेये 'सप्तदश रथाः, सप्तदश दास्यः' इति दक्षिणां विधाय श्रूयते-'यजुर्युक्तं रथमध्वर्यवे ददाती'ति। तत्र संशयः–किं यजुर्युक्तो रथो अध्वर्युभागं-निवर्त्तयेन्नेति।

तत्र—प्राकाशवद्यजुर्युक्तः स्यात्तद्भागस्य बाधकः।
न चायं बाधकस्तस्य प्राप्तस्य नियमो ह्यसौ॥ २२॥

प्राकाशौ ह्यपूर्वावध्वर्व्यानतिकरत्वेन विधीयमानौ युक्तं तत्र यत्तद्भागं-प्राकृतं बाधेते–इति। इह तु सप्तदशरथाः, द्रव्यान्तराणि च वाजपेयस्य-दक्षिणात्वेन विहितानि इति, तत्र यजुर्युक्तस्यापि रथस्य प्राप्तमेव दानं सत्वध्वर्यवे, अन्यस्मै वा कस्मैचिद्दातव्यः सन्नध्वर्योर्नियम्यते। ततश्च नायमर्थः—यदध्वर्यवे ददाति, तद्यजुर्युक्तं रथमिति, किं तर्हि? यजुर्युक्तं-

यद्ददाति, तदध्वर्यवे-इति । तस्य च द्रव्यान्तरसहितस्यैव दानं प्राप्तमिति, तादृशस्यैव नियमान्न देयान्तरनिवृत्तिः । अध्वर्युभागे तु यथाप्राप्ते यजुर्युक्तो-नियम्यते ।

इत्येकविंशं वाजपेये रथस्य भागनियामकताधिकरणम् ।

इति श्रीमत्पार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां-

दशमाध्यायस्य तृतीयः पादः ।

---

# दशमाध्याये चतुर्थः पादः

उपहोमानां नारिष्टहोमादिभिर्नक्षत्रेष्टौ समुच्चयाधिकरणम् ॥ १ ॥

प्रकृतिलिङ्गासंयोगात्कर्मसंस्कारं विकृतावधिकं स्यात् ॥ १ ॥

चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानात् ॥ २ ॥

नक्षत्रेष्टौ श्रूयते'सोऽत्र जुहोती'तै० ब्रा०३-१-५ति । तत्र मन्त्रा आम्नाताः-'अग्नये स्वाहा, कृत्तिकाभ्यः स्वाहा इत्येवमादयः । सन्ति च प्रकृतौ नारिष्टहोमाः । तत्र संशयः—किं वैकृतैरुपहोमैः प्राकृता नारिष्टहोमा बाध्यन्ते ? किं वा समुच्चय इति । तदर्थं च किं वैकृताः प्राकृतानां कार्ये वर्त्तन्ते, नेति ? तत्रोपहोमाः कार्यमनपेक्षमाणाः होमत्वसामान्यात्प्राकृतहोमकार्ये उपस्थिते, तत्रैव विधीयन्ते । तस्मिंश्च कार्ये प्रत्यक्षश्रुतैरुपहोमैर्निर्वर्तिते तत्कार्यकराः-प्राकृता निवर्त्तन्ते शरैरिव कुशा इति प्राप्ते—

ब्रूमः—सति प्राकृतकार्यत्वे भवेद्बाधो न चास्ति तत् ।

साधारणं न होमत्वं तस्योपस्थापनक्षमम् ॥ २३ ॥

सर्वसाधारणं हि होमत्वं न नारिष्टकार्यमुपस्थापयितुमर्हति । विधीयमानस्य तु होमविशेषस्य दूरापास्तमेव तदुपस्थापकत्वं,अदृष्टार्थत्वाच्च होमानां, प्रमाणान्तरमपि तत्कार्यकरत्वे नास्ति । न च प्रत्यक्षश्रुतैरुपहोमैर्निराकाङ्क्षा-विकृतिः प्राकृतमित्थम्भावं नापेक्षत इति वाच्यं । सन्निपातिनां द्रव्य–देवता-

संस्काराणामलाभे कथंभावस्यापरिपूर्णत्वात्। तस्मादुभयेषामभ्युच्चयः- स्यात्, अतिदेशोपदेशाभ्यामवगतत्वात्। यदुक्तमाद्येऽभ्यच्चयं वक्ष्यामः-इति, तदिदं। शरास्तु बर्हिःशब्दलक्षिते कुशकार्ये विहिता युक्तं यत्कुशान्बाधन्ते। तदिदमुक्तं 'चोदनालिङ्गसंयोगे तद्विकारः प्रतीयेत प्रकृतिसन्निधानादि'ति। यद्वाऽधिकरणान्तरमिदम्। उभयोः कुश-शरयोः प्रमाणावगतत्वात्समुच्चयः। सिद्धा प्राकृतकार्यत्वाच्च निवृत्तिः।

एवं वा—वाजपेये श्रूयते 'रथघोषेण माहेन्द्रस्य स्तोत्रमुपाकरोती'ति। प्रकृतौ 'उपावर्तध्वमि'ति मन्त्रेण दर्भाभ्यां स्तोत्रोपाकरणं। तदिह किं रथो-दर्भयोर्निवर्तकः, घोषश्च मन्त्रस्य? उत रथस्य घोष उभयोर्निवर्तक इति—संशयः। तदर्थं च किमयं समाहारद्वन्द्वो रथेन घोषेण चेति? किं वा षष्ठी-तत्पुरुषः? तत्र षष्ठीसमासपक्षे पूर्वपदस्य लक्षणा स्यात्, अतः समाहारद्वन्द्वः। तेन रथो घोषश्च द्वयमुपाकरणसाधनं। तत्र रथो द्रव्यत्वसामान्यात् दर्भ-योर्निवर्तकः, घोषस्तु मन्त्रस्य, शब्दत्वसामान्यात्। एवं च नावश्यं रथस्यैव घोष आदर्तव्यः, घोषस्याविशेषणात्। येन केन चिदपि घोषेण कार्यसिद्धे-रिति प्राप्ते—

ब्रूमः—इतरेतरयोगद्वन्द्वे पदद्वयमपि श्रुतिवृत्तं स्यात्,तथा तु रथघोषा-भ्यामिति द्विवचनं स्यात्। समाहाराश्रयणे तु द्वे अपि पदे लक्षणार्थे स्याताम्। तत् पूर्वपदमात्रे लक्षणावृत्तिमङ्गीकृत्य षष्ठीसमासाश्रयणं। तस्माद्रथस्य-घोष उपाकरणस्य साधनं। स च प्राकृतं साधनं मन्त्रदर्भौ निवर्त्तयति।

इति प्रथमं वर्णकद्वयसहितं नारिष्टहोमानामुपहोमादिभिस्समुच्चयाधिकरणम्।



बृहस्पतिसवादौ बार्हस्पत्यग्रहादिभिः प्राकृतैन्द्रवायवादि-
ग्रहाणां समुच्चयाधिकरणम् ॥ २ ॥

सर्वत्र तु ग्रहाम्नानमधिकं स्यात्प्रकृतिवत् ॥ ३ ॥ अधिकश्चैक-वाक्यत्वात् ॥ ४ ॥ लिङ्गदर्शनाच्च ॥ ५ ॥

बृहस्पतिसवे श्रूयते 'बार्हस्पत्यं ग्रहं गृह्णाती'ति। विषुवति 'अर्कं गृह्णाती'ति। महाव्रते 'शुक्रं गृह्णाती'ति। अश्वमेधे 'सौवर्णराजताभ्यां महिमानौ ग्रहौ-गृह्णाती'ति। एवंजातीयका वैकृता ग्रहाः प्राकृतानामैन्द्रवायवादिग्रहाणां-

निवर्तकाः, न वेति संशये ? ग्रहाणां यागनिर्वृत्त्यर्थत्वेनैककार्यत्वात्प्रत्यक्षश्रुतैः वैकृतैर्ग्रहैर्निर्वृत्ते यागे, चोदकप्राप्ता निवर्तन्ते इति प्राप्ते—

ब्रूमः—येषां मिथोऽनपेक्षाणां कार्येणैकेन सङ्गतिः।
तेषां बाधो विकल्पो वा नैवमस्ति ग्रहे पुनः ॥ २४ ॥

न हि यागनिर्वृत्तौ ग्रहावाक्यैर्विधीयन्ते—बार्हस्पत्येन यजेतेति, येन निरपेक्षा यागं निर्वर्तयेयुः। प्रयोगवचनस्तु चोदकप्राप्तान्,उपदिष्टांश्च ग्रहान्, यौगपद्येन गृह्णन् सहितानामेव यागान्वयं गमयति। न च दृष्टार्थानि-ग्रहणानि। विनापि ग्रहणेन यागनिर्वृत्तिसिद्धेः। यश्च ग्रहेषु देवतोद्देशः, सोऽत्यन्तादृष्टार्थ एव। न हि ग्रहणस्य देवतया किञ्चिद्दृष्टमस्ति, न चैकेन ग्रहणेन, देवतोद्देशेन वा यददृष्टं, तदन्येन क्रियत इत्यत्र प्रमाणमस्ति। अतो-यथा प्रकृतावैन्द्रवायवादिग्रहाणां समुच्चयः, तथा प्राकृत-वैकृतानामपि-भवितुमर्हति।

आह—भवत्वेवं ग्रहान्तरविधौ 'अर्कं गृह्णाती' त्यादौ। बार्हस्पत्ये तु प्राकृतेष्वेव देवतामात्रं विधीयते, न ग्रहान्तरमित्यनुदाहरणं। ग्रहणविधाने-श्रुतिः, देवताविधाने वाक्यम्। अतो ग्रहणविधिरेव न्याय्य इति चेत्। न। वाक्यार्थविधेरवर्जनीयत्वात,देवतापदस्याप्रमादपाठात्। तेनोभयविधानाद्वरं-देवतामात्रविधानं। न चाविपरिवृत्तिः, ग्रहाणां चोदकप्राप्त्या विपरिवृत्तेः। यद्यपि च चोदकः कार्यप्रधानत्वान्न स्वरूपेण पदार्थान् स्पृशति, तथाऽपि-कार्यमुखेन तेषां विपरिवृत्तेः, शक्यं तदनुवादेन गुणविधानं। येषां च कार्य-प्राप्त्युत्तरकालं पदार्थानामपि पृथगतिदेश इष्टः, तन्मते सुतरामस्ति विपरि-वृत्तिः। यस्त्वेवं नेच्छति, तस्य 'एकां गां दक्षिणां दद्यादि'ति दानान्तरमेव-विधीयेत। तेन समस्तं प्राकृतं दाक्षिण्यं धेनुन्यायेन निवर्त्तेत। तथा 'अध्वर्युध्नीं होत्रे हरतो' ति हरणान्तरमप्राकृतं विधीयेत 'अध्यूध्नीप्रतिपत्त्यर्थम्। तत्राप्राकृतकार्यत्वात्प्राकतं होतुरिडाभक्षणं न निवर्तयेत्। तस्माच्चोदक-प्राप्तेषु बृहस्पतिमात्रविधानादनुदाहरणम्।

उच्यते—प्राकृतग्रहानुवादेन देवताविधौ तेषां बहुत्वात्, 'आग्नेया ग्रहा, भवन्ती'तिवद् बहुवचनं स्यात्। यद्यपि चानुवाद्यगता सङ्ख्या न विवक्षिता, तथाऽपि बहुषु बहुवचनेनैव भवितव्यं। सोऽयमभिधानबाधः। विशिष्टविधौ तु गौरवमात्रं, तस्माद्देवताविशिष्टग्रहान्तरविधिरेव न्याय्य इति, सूक्त-मुदाहरणम्।

इति द्वितीयं बार्हस्पत्यग्रहादिभिरैन्द्रवायवादिग्रहाणां समुच्चयाधिकरणम्।

वाजपेये प्राजापत्यपशुभिः क्रतुपशूनां समुच्चयाधिकरणम् ॥ ३ ॥

प्राजापत्येषु चाम्नानात् ॥ ६ ॥

वाजपेये श्रूयते—'सप्तदश प्राजापत्यान् पशूनालभते' तै. ब्रा. १-३-४, आप. श्रौ. १८-२१ इति। सन्ति तु चोदकप्राप्ता आग्नेयादयः क्रतुपशवः। ते-किं प्रजापत्यैर्निवर्त्यन्ते ? किं वा समुच्चीयन्त इति ? पशुत्वेन प्रकृतिलिङ्गेन संयोगान्निवृत्तिं मन्वानस्य—

उत्तरं—न पशुत्वं सवनीयादिकार्यमलमुपस्थापयितुमनेकसाधारणं। न च प्राकृतपश्वनुवादेन गुणविधिः सम्भवति, देवतान्तरस्य संख्यान्तरस्य च विधौ वाक्यभेदात्। तस्मात्कर्मान्तराणि। तानि चादृष्टार्थत्वात् प्राकृतैः समुच्चीयन्ते।

इति तृतीयं वाजपेये प्राजापत्यैः क्रतुपशूनां समुच्चयाधिकरणम्।

साङ्ग्रहणीष्टौ आमनहोमैरनुयाजानां समुच्चयाधिकरणम् ॥ ४ ॥

आमने लिङ्गदर्शनात् ॥ ७ ॥

सांग्रहण्यां श्रूयते 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोती' तै. सं. २-३-९ ति। सन्ति तु प्रकृतौ त्रयो अनुयाजाः। ते किमामनहोमैः-बाध्यन्ते ? उत समुच्चीयन्ते ? प्रत्यक्षश्रुतत्वात्, त्रित्वस्य च प्रकृतिलिङ्गत्वान्निवृत्तिः।

अथवा 'यत्तिस्रो जुहोति, तदामनमसी'त्यादिभिर्मन्त्रैरित्यनुयाजेष्वेव-मन्त्रविधिं मन्यते। त्रित्वविशिष्टहोमानुवादे विशिष्टानुवादाद्वाक्यभेदः। तस्मात्कर्मान्तराणि। न च त्रित्वमात्रमनेकसाधारणमनुयाजकार्यं शक्नोत्यु-पस्थापयितुमिति, समुच्चयः।

इति चतुर्थमामनहोमैरनूयाजानां समुच्चयाधिकरणम्।

महाव्रते ऋत्विगुपगानस्य पत्न्युपगानेन समुच्चयाधिकरणम् ॥ ५ ॥

उपगेषु शरवत्स्यात्प्रकृतिलिङ्गसंयोगात् ॥८॥ आनर्थक्यात्त्वधिकं-स्यात् ॥ ९ ॥

गवामयने महाव्रतं नामैकाहः। तत्र 'दिक्षु दुन्दुभयो नदन्ती'त्यादि-विधाय,श्रूयते 'पत्नय उपगायन्ती'ति सं. ८-५-८ ति। प्राकृतं च सामगानम्, ऋत्विजश्चोपगातारः प्राप्ताः। तत्र पत्न्य उपगायन्त्यः किं सामगानस्य, उपगातृणामृत्विजाञ्च निर्वतिकाः? किं वा दुन्दुभ्यादिवादित्रनादानुपगायन्त्यो भिन्नविषयत्वादृत्विजामनिर्वतिकाः।

इदमपरं सन्दिह्यते-किं गानस्योपचय उपगानम्? उतोपचयात्मकं गानमुपगानमिति? तत्र गानस्योपचय उपगानं, गानशब्दश्च शारीर्याङ्गीतौ-प्रसिद्धः। तस्माद्गानस्योपचयङ्काण्डवीणादिभिः कुर्वन्त्य ऋत्विजां-निर्वर्त्तिकाः। भवतु वोपचयात्मकं गानमुपगानं, तथाऽपि गायतेः शारीर-गीतिवचनत्वाच्छारीरमेवेदमुपगानं तच्छारीरस्योपचयो भवति, समान-जातीयत्वात्। अतः सामगानस्यैवोपगाने पत्न्यो वर्त्तन्त इति, ऋत्विजां-निवृत्तिः—

उच्यते—नायमेकान्तः यच्छारीर एव गायतिरिति, तन्त्रीगानेऽपि प्रयोगात, ततश्च यद्यपि गानस्येदमुपगानं, तथाऽपि दुन्दुभ्यादीनां गानानामनन्तरविहितानां विपरिवर्तमानानामिदमुपगानं पत्नीभिः कर्त्तव्यम। अपि-चोपचयात्मकं गानमुपगानं, सामानाधिकरण्यलाभात्। तच्च काण्डवीणा-दिभिः क्रियमाणं न कथंचिच्छारीरं सम्भवति। तेन वादित्रादिकमिदमुपगानं, तत्कस्योपचय इति दुन्दुभ्यादीनां गानानां समानजातीयत्वात्प्रकृतत्वाच्च-तेषामेवेदमुपगानं। पत्न्यः कुर्वन्तीति, न सामविषयाणामृत्विजां निवृत्तिः।

इति पञ्चमं महाव्रते पत्न्युपगानेन ऋत्विगुपगानस्य समुच्चयाधिकरणम्।



अञ्जनाभ्यञ्जने नवनीताभ्यञ्जनस्य गोग्गुलवाभ्य-
ञ्जनादिभिः समुच्चयाधिकरणम्॥ ६॥

संस्कारे चान्यसंयोगात्॥ १०॥ प्रयाजवदिति चेत्॥ ११॥ अर्थान्यत्वात्॥ १२॥

अस्त्यञ्जनाभ्यञ्जनं नाम सत्रं। तत्र श्रूयते 'गौग्गुलवेन प्रातः सवनेऽभ्यञ्जते' तां. ब्रा. २४—१३—४ इत्यादि। तत्किं प्राकृतस्य नवनीताभ्यञ्ज-

नस्य निवर्तकं, नेति संशये, दृष्टार्थत्वात् अञ्जनाभ्याञ्जनयोः प्राकृतस्य वैकृतेन निवृत्तिः ।

सत्यं, दृष्टार्थमभ्यञ्जनं, तथाऽपि नैकार्थं, नवनीताभ्यञ्जनस्य स्नेहनार्थत्वात्, गौग्गुलवादेस्तु चन्दनानुलेपनवद्रूक्षीकरणार्थत्वात् । न च प्राकृतेऽभ्यञ्जने गुणविधिः, प्रातःसवन इति च, गौग्गुलवेनेति चानेकगुणश्रवणात् ।

इति षष्ठं नवनीताभ्यञ्जनस्य गौग्गुलवाभ्यञ्जनादिभिस्समुच्चयाधिकरणम् ।

महाव्रते अहतवाससः तार्य्यादिभिः समुच्चयाधिकरणम् ॥ ७ ॥

आच्छादने त्वैकार्थ्यात्प्राकृतस्य विकारः स्यात् ॥ १३ ॥ अधिकं वाऽन्यार्थत्वात् ॥ १४ ॥ समुच्चयं च दर्शयति ॥ १५ ॥

महाव्रते श्रूयते[1] 'तार्य्यं यजमानः परिधत्ते, दर्भमयं पत्नी'ति । तत्र संशयः–किं तार्य्यं, दर्भमयञ्च चोदकप्राप्तस्याहतस्य वाससो निवर्त्तकं, नेति । तत्र कौपीनाच्छादने परिदधातीति प्रयुज्यते । तस्मिश्च तार्येण कृते तत्कार्यस्याहतस्य निवृत्तिः ।

नैवं । 'कम्बलं परिधत्ते' इत्युपरिवासस्यपि दर्शनात्, तार्य्य-दर्भमययोश्च कौपीनाच्छादनेऽतीवायोग्यत्वात तत्राप्याचारप्राप्तस्योत्तरीयस्य स्थाने विधीयते । किं चाधिकमिदं तार्यादिपरिधानं 'वासांसि विस्रंसयती'ति वासोबहुत्वानुवाददर्शनात् । तस्मादुपरिधारणे तार्य्यादिविधिरिति, अहतस्यानिवृत्तिः।

इति सप्तममहतवाससस्तार्यादिभिस्समुच्चयाधिकरणम् ।

—:o:—

महाव्रते रथन्तरादिसाम्नां श्लोकादिसामभिः समुच्चयाधिकरणम् ॥ ८ ॥

सामस्वर्थान्तरश्रुतेरविकारः प्रतीयेत ॥ १६ ॥

तत्रैव श्रूयते 'श्लोकेन पुरस्तात्सदसः स्तुवीत, अनुश्लोकेन पश्चादि' त्यादि । तत्र श्लोकादिभिः सामभिः प्राकृतानां गायत्रादिसाम्नां निवृत्तिः,

१. तार्यं-घृताक्तं वास इति सोमनाथीये । तार्प्यमिति भाष्यपाठः ।

न वेति सन्देहे ? स्तुत्यर्थत्वान्निवृत्तिः। स्यादेवं यदि प्राकृतस्तुत्यनुवादेन सामान्तरं विधीयेत, त्वेवमस्ति। न हि प्राप्तस्तुत्यनुवादेन सामान्तरं, 'पुरस्तात्सदसः' इति च देशान्तरं शक्यं विधातुम्। अतः स्तुतिरेवात्र विधेया। सा चादृष्टार्था न प्राकृतीनां निर्वर्तिका भवितुमर्हति, एकार्थत्वानवगमात्। तदेतद् गतप्रायं विस्पष्टीकरणार्थम्। उत्तरविवक्षया वा।

इति अष्टमं महाव्रते रथन्तरादिसाम्नां श्लोकादिसामभिस्समुच्चयाधिकरणम्।

---

विकृतिविशेषे प्राकृतसाम्नां कौत्सादिभिर्बाधाधिकरणं ॥ ९ ॥

अर्थे त्वश्रूयमाणे शेषत्वात्प्राकृतस्य विकारः स्यात् ॥ १७ ॥

क्वचिच्छ्रूयते—'कौत्सं भवति, काण्वं भवति, वसिष्ठस्य जनित्रे भवतः, क्रौञ्चानि भवन्ती'ति। किं कौत्सादीनि सामानि प्राकृतानां निवर्त्तकानि, नवेति संशयः। तत्र साममात्रं श्रूयते, न स्तुत्यर्थता। तस्मात्स्तुत्यर्थानामनिवृत्तिः। सत्यं। न प्रत्यक्षः स्तुतिसंयोगः, प्रकरणात्तु क्रत्वर्थत्वेनावगतानि सामानि लिङ्गात्प्राकृतानां साम्नां कार्यमृगक्षराभिव्यक्तिमवलम्बमानानि प्राकृतानां निवर्त्तकानि भवन्ति।

इति नवमं प्राकृतसाम्नां कौत्सादिभिर्बाधाधिकरणम्।

---

कौत्सादिभिर्व्यवस्थया एकादिभिर्बाधाधिकरणम् ॥ १० ॥

सर्वेषामविशेषात् ॥ १८ । एकस्य वा श्रुतिसामर्थ्यात्प्रकृतेश्चाविकारात् ॥ १९ ॥

कौत्सादीनि निवर्तकानीत्युक्तम्। इदमिदानीं विचार्यते—किं कौत्सं सर्वेषां निवर्त्तकं, तथा वसिष्ठस्य जनित्रे, तथा क्रौञ्चानि ? उतैकमेकस्य, द्वे द्वयोः, बहूनि बहूनामिति। अविशेषात्सर्वत्र सर्वेषां निवृत्तौ प्राप्तायाम—

उच्यते—यत्रैकं श्रूयते, तत्रैकस्य निवृत्तिः यत्र द्वयं, तत्र द्वयोः। यत्र बहूनि, तत्र बहूनामिति यावन्त्यत्र वैकृतानि, तावतामेव प्राकृतानां निवृत्तिः, तावन्मात्रेणैव वैकृतसामोपदेशस्यार्थवत्त्वादितरनिवृत्तौ प्रमाणाभावात्।

इति दशमं कौत्सादिभिर्व्यवस्थया एकादिभिर्बाधाधिकरणं।

---

त्रिवृद्धाविवृद्धस्तोमकक्रतुषु यथाक्रमं प्राकृतसामबाधाबाधाधिकरणम् ॥११॥

**स्तोमविवृद्धौ त्वधिकं स्यादविवृद्धौ द्रव्यविकारः स्यादितरस्याश्रुतित्वात् ॥ २० ॥**

प्रत्यक्षश्रुतैः सामभिस्तावत्सङ्ख्यानां प्राकृतानां विकार इत्युक्तम्। अथेदानीं विचार्यते-यत्र स्तोमविवृद्धिः, यथा-'द्वात्रिंशः पवमानोऽभिषेचनीयः' इत्यादौ। तत्र प्रत्यक्षश्रुतैः राजसामभिः प्राकृतानि विक्रियन्ते, किं वा-समुच्चय इति। तत्र विवृद्धस्तोमकेष्वागमेन सङ्ख्यापूरणं वक्ष्यते। तत्रागमेन विवृद्धौ पूरितायां प्रत्यक्षश्रुतानि राजसामानि विवृद्धाववकाशमलभमानानि प्राकृतबाधेन वर्तन्ते। तेनाविवृद्धौ विवृद्धौ च सर्वत्र बाध इति प्राप्ते—

ब्रूमः—प्राकृतानामबाधेन वैकृतानामसम्भवः।
यत्र तत्रैव बाधः स्याद् विवृद्धौ त्वस्ति सम्भवः॥ २४॥

न ह्यागमेन सङ्ख्यापूरणं वाचनिकं। विवृद्धयन्यथानुपपत्त्या त्वागमः-क्रियते। सा चेह विवृद्धिरुपदिष्टसामभिरेव सिद्ध्यतीति, को नामाऽश्रुतानामागमं कृत्वाऽतिदिष्टानि बाधेत, तस्माद्विवृद्धौ समुच्चयः।

इत्येकादशं विवृद्धाविवृद्धस्तोमक्रतुषु क्रमेण प्राकृतसामबाधाधिकरणम्।

—:o:—

पवमान एव विवृद्धाविवृद्धस्तोमकक्रतूनां सामावापोद्वापाधिकरणम् ॥१२॥

**पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात् ॥ २१ ॥ वचनानि त्वपूर्वत्वात् ॥ २२ ॥**

अविवृद्धौ प्रत्यक्षश्रुतैः 'कौत्समभवती'त्यादिभिस्तावत्सङ्ख्यानां प्राकृतानामुद्वापः। विवृद्धौ तु प्रत्यक्षश्रुतानां राजसामादीनामधिकानामावाप इति-स्थितं। तत्र चिन्त्यते—किं यस्मिन्कस्मिंश्चित्स्तोत्रे यस्यां कस्यांचिदपि प्रत्यक्षश्रुतानामावापः, यतः कुतश्चिच्च प्राकृतानामुद्वापः। अथवा पवमानेष्वेव गायत्रीबृहत्यनुष्टुप्स्वावापोद्वापाविति। तत्र यत्र क्वचिदपि निवेशे-वैकृतानामर्थवत्त्वादविशेषः, तन्निबन्धनश्च प्राकृतानामुद्वाप इति, सोऽप्यविशेषेणैव स्यात्। 'त्रीणि ह वै यज्ञस्योदराणि, गायत्री बृहत्यनुष्टुप् च, अत्र-

ह्येवाऽवपन्ति, अत एवोद्वपन्ती'त्येतत्तु हिशब्दोपबन्धात् वर्त्तमानापदेशरूपत्वाच्चाविधायकं नावापोद्वापौ नियन्तुमलम्। यद्यपि नियामकं, तथाऽपि पवमानविषययोरेवावापोद्वापयोर्देशविधानार्थं, न स्तोत्रान्तरपरिसंख्यानार्थम्-इति।

उच्यते—अपूर्वत्वादस्यार्थस्य विधायकमेवेदं स्तुतिकल्पितविधिशक्तिकम्। अतो वचनात्पवमानेष्वेवावापोद्वापौ। ननु 'एकविंशेनातिरात्रेण'त्यादौ स्तोत्रविवृद्धिरविशेषेण श्रुता सर्वत्र कर्त्तव्या। सा चावापेनैव, नाभ्यासेन, अभ्यासस्याश्रुतत्वादिति वक्ष्यति। ततश्च सर्वस्तोत्रेष्ववापे कर्त्तव्ये प्रत्यक्षश्रुतानामपि यत्र क्वचिदावापः स्यात्। सत्यं। यदि सर्वत्रावापः स्यात्। स तु न्यायात्सर्वत्र प्राप्तो'अत्र ह्येवाऽवपन्ति, अत एवोद्वपन्ती'ति वचनाद् गायत्र्यादिभ्योऽन्यत्र परिसंख्यायते। न चेदमेवावापस्य वचनमिति निबन्धकारवचनाद्भ्रमितव्यं। कौत्सादीनां पाठादेवावापसिद्धेः, अन्यत्रापि विवृद्धावागमेन संख्यापूरणं वक्ष्यमाणन्यायसिद्धं न विधातव्यम्। एवकारोपहतविधिशक्तिकं चेदं। तस्मात्परिसंख्या।

न च परिसंख्यायास्त्रिदोषत्वम्, एवकारेण तस्या एव श्रुतत्वात्। स्तोत्रान्तरेष्वगत्याऽभ्यासेनैव पूरणम्। ननु कण्वरथन्तरन्यायेन कौत्सादीनां स्वयोनावेव गानान्न प्राकृतीषु ऋक्ष्वावापप्राप्तिः। असत्याञ्च प्राप्तौ कथं परिसंख्या। तस्माद्विधिरेव गायत्र्यादिष्वावापस्य। नैतदेवं। 'कौत्सं भवती'त्यादिषु साममात्रमुपदिश्यते, तद्योनिभूतायास्त्वृचो नोपदेशेन, नातिदेशेन प्राप्तिः। यदि परमक्लृप्तकल्पनाभयादध्ययनसिद्धरूपान्यथाभावभयाच्च स्वयोनावेव गीयते। तच्चायुक्तं, प्राकृत्यो हि ऋचः प्रकृतौ क्रमप्रकरणाभ्यामङ्गत्वेनावधारिताः। सामानि च प्रति संस्कार्यत्वात्प्रधानभूता इहापि स्तोत्राङ्गत्वेनातिदेशतः प्राप्ता न शक्यन्ते बाधितुम्। अतः प्राकृतीष्वेव ऋक्षु प्रत्यक्षश्रुतान्यागम्यमानानि च सर्वाण्यपूर्वाणि सामानि गेयानीति प्राप्ते आवापे, परिसंख्यार्थमेव वचनम्। एवमेवकारः समर्थितो भवति। कण्वरथन्तरस्य तु यथा स्वयोनावेव स्वयोनेः, उत्तरयोश्च गानम्, तथा वक्ष्यामः। तस्मात्पवमानेष्वावापोद्वापौ।

इति द्वादशं पवमान एव सामावापोद्वापाधिकरणम्।

---

यागादौ विधिशब्देनैव देवताभिधानाधिकरणम् ॥ १३ ॥

## विधिशब्दस्य मन्त्रत्वे भावः स्यात्तेन चोदना ॥१२॥ शेषाणां वा चोदनैकत्वात्तस्मात् सर्वत्र श्रूयते ॥ २४ ॥

दर्शपूर्णमासयोः श्रूयते 'आग्नेयोऽष्टाकपालः' इति । बहूनि चाग्नेरभिधानानि-अग्निः, शुचिः, पावक इत्यादीनि । तत्र तद्वाचिषु निगमेषु येन केनचिच्छब्देनाग्नेरभिधानं कर्त्तव्यम् ? उत विधिगतेनैवाग्निशब्देनेति—

तत्र—देवतात्वं विधायाग्नेश्चोदना विनिवर्त्तते ।
प्रयोगकाल उद्देशो येन केनापि सिध्यति ॥ २५ ॥

अग्न्यर्थो देवता कर्त्तव्य इत्येतावांश्चोदनार्थः । तस्य शब्देनोद्दिश्यमानस्य देवतात्वमिति, प्रयोगावस्थायां शब्दोच्चारणमापतति । तन्नियमे तु नास्ति प्रमाणं । पावकशब्देनापि ह्युद्दिश्यमाने चोदनाभिहितमग्नेर्देवतात्वं सम्पादितमेव भवति । तस्मादनियम इति प्राप्ते—

[1]केचित्तावदाहुः—सत्यमर्थस्यैव देवतात्वं चोदनयोच्यते। तस्य त्विदमेव-देवतात्वं,-यच्छब्देनोद्देशः । तेन तच्छब्दोच्चारणमेव पुरुषस्य व्यापारः । स्वव्यापारे चासौ नियोक्तव्यः । तेनार्थस्यापि देवतात्वमुक्त्वा तन्मात्रेणापर्यवस्यन्ती चोदना शब्दोच्चारणं यावद्विधाय पर्यवस्यति, तस्यां चावस्थायां विधिगतस्य शब्दस्य सन्निहितस्य परित्यागे कारणाभावात्तदुच्चारणमेव विधीयते, न शब्दान्तरस्य, असन्निहितत्वात् । तस्माद्विधिशब्दनियमः—इति ।

निबन्धनकारमतेऽनुपपत्तिप्रदर्शनम् ।

अस्मिंस्तु पक्षे स्यादपि कथंचिद्विधिशब्द एव नियमः, किं तु यत्र पर्यायेण शब्दद्वयेन देवताविधिः । यथा 'अग्नये पावकाय निर्वपेत्, अग्नये शुचये' इति । तत्र द्वाभ्यामपि शब्दाभ्यामेकमर्थमभिधाय, तस्य देवतात्वे विहिते शब्दाकाङ्क्षावेलायामुभयोः शब्दयोः सन्निहितत्वेऽप्येकेनैवार्थस्योद्देशसम्भवात् अगृह्यमाणविशेषत्वे विकल्पेनान्यतरस्यैवोपादानं स्यात्, न द्वयोः । न हि निरपेक्षयोरेककार्ययोः समुच्चयः । नन्वेकेनैव वाक्येन विधानात्समुच्चयः—सिद्ध्यति । स्यादेवं यदि [2]प्रथमोच्चारणे एव शब्दस्वरूपं वाक्यार्थान्वयि स्यात् । अर्थसमर्प्पणेन तु चरितार्थौ शब्दौ पश्चादाकाङ्क्षावशाद्गृह्यमाणावेकैक-

१. निबन्धनकारादयः । २. प्रथमोपनिपाते इति. मु. पु ।

शस्तदाकाङ्क्षापूरणसामर्थ्याद्विकल्पेनैव गृहीतव्यौ। अर्थैकेनैवार्थस्य देवतात्वे-सिद्धे, द्वितीयः शब्दः स्वरूपपर इत्युच्यते, तथा सति तस्यैवोच्चारणं स्यात्, नेतरस्यार्थसमर्पणेन चरितार्थस्य। अथैवमादिषु शब्दस्यैव वाक्यार्थान्वयित्वं, तथा सति सर्वत्रैवमेव सिद्धान्तयितव्यम्। अवश्यं ह्यत्र शब्दोच्चारण एव पुरुषो नियोक्तव्यः। तत्र किमित्यर्थस्य देवतात्वं विधाय, पश्चाच्छब्दो-च्चारणं विधीयते। प्रथममेव शब्दस्वरूपं वाक्यार्थान्वयित्वेन विधीयते। तद्विधानेन चार्थस्य देवतात्वं प्राप्तमेवानूद्यते। येन हि शब्देनोद्दिश्य हविस्त्यज्यते, तस्यार्थस्य देवतात्वं भवति, तस्माच्छब्दोच्चारणेन तस्यैव विधानान्न पर्यायप्रसक्तिः।

इति त्रयोदशं यागादौ विधिशब्देनैव देवताभिधानाधिकरणम्।



अतिदेशस्थलेऽपि विधिशब्देनैव देवताभिधानाधिकरणम् ॥ १४ ॥

## तथोत्तरस्यां ततौ तत्प्रकृतित्वात् ॥ २५ ॥

सौर्यादिषु विकृतिषु चिन्त्यते—चोदकप्राप्तेषु उज्जित्यादिनिगमेषु किं विधिशब्द एव वक्तव्यः? उतादित्यादिशब्दा अपीति संशयः। तत्र विधि-वाक्ये हविस्त्यागमात्रे सूर्यशब्दो विधीयते, नोज्जित्यादिषु निगमेषु। प्रकृतौ तूज्जित्यादिष्वग्निशब्द एव पठित इति तदाश्रयणम्। इह त्वसति पाठे-ये न केनचिद्गुणलक्षणमिति प्राप्ते—

अभिधीयते—प्रकृतावग्निशब्दो न यागरूपेण संबध्यते, किं तर्हि? याग-करणके भावनापरनामधेये प्रयोगे। भावनया ह्यङ्गानि सम्बध्यन्त इति, सप्तम-नवमाद्ययोर्व्याख्यातं। तेनाग्निशब्दयुक्तः प्रयोगः कर्तव्यः। स तु कियत्कृत्वः, केषु च प्रदेशेषूच्चारयितव्य इत्यपेक्षायां याज्यानुवाक्यापाठादुज्जित्यादि-पाठाच्च तावत्कृत्वस्तेषु च प्रदेशेषूच्चारणीय इति गम्यते। विकृतावपि सूर्यशब्दः प्राकृतस्याग्निशब्दस्य स्थाने निविशमानस्तेषु प्रदेशेषु वक्तव्यो-भवति, तस्माद्विधिशब्द एव सर्वेषु निगमेषु विकृतिष्वपि वक्तव्यः।

इति चतुर्दशमतिदेशस्थले वैधशब्देनैव देवताभिधानाधिकरणम्।

—:०:—

आधाने अग्नेः सगुणेनाभिधानाधिकरणम् ॥ १५ ॥

प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् ॥ २६ ॥ अविकारो वाऽर्थशब्दानपायात् स्याद् द्रव्यवत् ॥ २७ ॥ आरम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशासनमनर्थकं स्यात् ॥ २८ ॥ द्रव्येष्वारम्भगामित्वादर्थेऽविकारः सामर्थ्यात् ॥ २९ ॥

सन्त्याधाने पवमानेष्टयः—'अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये' इति। तत्र संशयः-तद्वाचिषु निगमेषु किमेक एवाग्निशब्दो वक्तव्यः ? किमुभौ शब्दौ वक्तव्यौ-अग्नये पवमानाय निर्वपामि, अग्निं पवमानमावह, अग्नेः पवमानस्याहमुज्जितिमनूज्जेषमि'ति।

तत्रैकेनार्थनिर्देशसिद्धेर्नोच्चारणं द्वयोः।
स चाग्निशब्द एवैकश्चोदकानुग्रहाद्भवेत् ॥ २६ ॥

स्यादेवं यदि प्रथममर्थं विधाय, पश्चाच्छब्दाश्रयणं भवेत्, शब्द एव तु भावनाङ्गत्वेन विधीयत इत्युक्तं। तस्मादुभयोर्विधानादुभौ वक्तव्यौ।

इति पञ्चदशं अग्नेस्सगुणेनाभिधानाधिकरणम्।

---

आधानाज्यभागयोरग्नेर्निर्गुणेनाभिधानाधिकरणम् ॥ १६ ॥

बुधन्वान्पवमानवद्विशेषनिर्देशात् ॥ ३० ॥ मन्त्रविशेषनिर्देशान्न देवताविकारः स्यात् ॥ ३१ ॥

पवमानेष्टिष्वाज्यभागौ प्रकृत्य श्रूयते 'बुधन्वानाग्नेयः कार्यः, पावकवान्सौम्यः' इति। तत्र संशयः—किं बुधन्वत्तया' पावकवत्तया गुणेन सगुणमभिधानं निगमेषु कर्त्तव्यं-बुधन्वन्तमग्निमावह, पावकवन्तं सोममावहे'ति, उत-अविकारेण प्रकृतिवन्निर्गुणमिति। तदर्थमिदं चिन्त्यते-किं देवताविशेषणं बुधन्वत्ता ? उत मन्त्रविशेषणमिति। मन्त्रस्य स्वरूपप्रकरणाभ्यां प्राप्तत्वाद्देवतानिर्देशः। तदयमर्थः-आग्नेय आज्यभागो बुधन्वान्-बुधन्वच्छब्दयुक्तः-

कार्यः। तस्य च देवताद्वारेण बुधन्वच्छब्दवत्ता, तदनेन प्रकारेण देवतायाः बुधन्वत्ता विहिता भवति। तस्मात्सगुणमभिधानं कर्तव्यं।

नैतदेवं। मन्त्रान्तराण्यप्यग्निलिङ्गानि सोमलिङ्गानि च प्रकरणे विद्यन्ते। तत्र मन्त्रविशेषनियमार्थं वचनमुपपन्नं। तेन मन्त्रद्वारेण बुधन्वत्ता आज्यभागस्य विधीयते। न चाहृत्याग्नेर्बुधन्वत्ता विधीयते। तद्धितार्थे वृत्तस्योपसर्जनीभूतस्याग्नेर्विशेषणत्वेन विशेषणान्तरासहत्वात्। मन्त्रमेव चाऽग्नेयशब्देन निर्दिश्य तस्यैव बुधन्वत्ता साक्षाद्विधीयते, एवं चोदकप्राप्ता देवता न विकृता भवति।

इति षोडशं पवमानेष्टिष्वाज्यभागयोः निर्गुणस्यैव देवतापदस्याभिधानाधिकरणम्।

---

## आनुबन्ध्यवनस्पतियागयोर्विधिगतोस्रावनस्पतिशब्दाभ्यामभिधानाधिकरणम् ॥ १७ ॥

विधिनिगमभेदात्प्रकृतौ तत्प्रकृतित्वाद्विपिभेदः स्यात् ॥ ३२ ॥

यथोक्तं वा विप्रतिपत्तेर्न चोदना ॥ ३३ ॥

ज्योतिष्टोमे श्रूयते 'गौरनुबन्ध्या' इति। तत्राग्नीषोमीयस्य पशोः 'छागस्य वपाया मेदसः' तै. ब्रा. ३-६-२ इति मन्त्रश्चोदकेन प्राप्तः। तत्र मन्त्रान्तरमाम्नातम् 'उस्राया वपाया मेदसः' इति। तत्र संशयः—किं गोशब्दादन्येन येन केनचिदभिधानं कर्त्तव्यम्? उतोस्राशब्देनैवेति? तथा पशौ 'वनस्पतिं यजती'ति श्रुतं। स्विष्टकद्विकारश्च वनस्पतिः। तत्र निगमेषु किं विधिशब्दादन्येन केन चिदभिधानम्? उत विधिशब्देनैवेति। किं प्राप्तम्? उभयत्रापि विधिशब्दादन्येन येनकेनचित्तदभिधानं तत्र निगमे स्यात्। प्रकृतौ विधि-निगमभेदात्। पशुशब्देन विधिः। छागशब्देन निगमः। तथा स्विष्टकृच्छब्दको विधिः'अग्निं स्विष्टकृतं यजती'ति। निगमस्त्वस्विष्टकृच्छब्दकः 'ये देव्या ऋत्विजस्तेऽभिरग्ने' तै. ब्रा. ३-६-११ इति। यच्च प्रकृतौ श्रुतं, तत। विकृतौ कर्त्तव्यं। तस्मात गोशब्दादन्येनाभिधानं। तदपि येन केन चित् शब्देन उस्राया वपाया मेदस इति च पाठमात्रं, न विधिरस्ति।

तथा—वनस्पतावपि विधिशब्दादन्येन येन केनचिदभिधानमिति मन्यते । उच्यते । प्रकतावार्थिको विधि-निगमभेदः, न वाचनिकः । 'न चार्थिकश्चोदकः प्रतिदिशति' । तेनानुबन्ध्याया द्रव्यत्वाद्विधिशब्दनियमाभावे विधिशब्देनान्येन वा येन केनचिदभिधाने प्राप्ते, प्रकरणाम्नानादुस्राशब्दस्य, तेनैवाभिधानं । वनस्पतौ तु देवतात्वाद्विधिशब्देनैव ।

इति सप्तदशंमानुबन्ध्यवनस्पतियागयोर्विधिगतोस्रावनस्पति-
शब्दाभ्यामभिधानाधिकरणम् ।



अवभथे अग्नीवरुणयोः सस्विष्टकृच्छब्देनाभिधानाधिकरणम् ॥ १८ ॥

स्विष्टकृद्देवतान्यत्वे तच्छब्दत्वान्निवर्त्तेत ॥ ३४ ॥ संयोगे वाऽर्थापत्तेरभिधानस्य कर्मजत्वात् ॥ ३५ ॥

अवभृथे श्रूयते–'अग्नीवरुणौ स्विष्टकृतौ यजती'तै. सं. ६-६-३ति । किं निगमेष्वस्विष्टकृच्छब्दकं वचनमग्नीवरुणावावहेति, उत स स्विष्टकृच्छब्दकमग्नीवरुणौ स्विष्टकृतावावहेति ? यद्येषा वचनव्यक्तिः-स्विष्टकृत्कार्ये अग्नीवरुणाविति, ततोऽग्नीवरुणयोर्देवतात्वादस्विष्टकृच्छब्दकम् । अथैवं वचनं व्यज्यते-यत्स्विष्टकृद्गुणेन सगुणां देवतां यजति, तदग्नीवरुणौ, न केवलमग्निमिति । ततः स्विष्टकृत्त्वेनाग्नीवरुणयोर्विधानात्सस्विष्टकृच्छब्दकमिति ।

तत्सिद्ध्यर्थमिदं चिन्त्यते–किं स्विष्टकृच्छब्दः प्रकतौ समुदायप्रसिद्ध्याऽग्नौ प्रयुक्तः ? उत स्विष्टकरणयोगेनेति । तत्र भूतस्य स्विष्टकरणयोगस्याग्नावभावाद्रूढ्या यं शब्दोऽग्नेर्वाचकोः । अतोनाग्नीवरुणयोः शक्नोति वर्त्तितुम । अतः कार्यलक्षणार्थः स्विष्टकृच्छब्दः स्विष्टकृत्कार्ये अग्नीवरुणौ निर्गुणौ विधीयेते । तस्मदस्विष्टकृच्छब्दकवचनम् । उच्यते। भूतकालतामात्रासम्भवेऽपि स्विष्टकरणयोगस्य तावत्सम्भवाद्भूतकालताया अपि प्रयोगान्तरापेक्षयोपपन्नत्वान्न समुदायप्रसिद्धौ प्रमाणमस्ति । तेन स्विष्टकृद्गुणकावग्नीवरुणौ यष्टव्याविति, श्रौत एव स्विष्टकृच्छब्दः, न लक्षणा । तस्मात्सगुणयोरेव देवतात्वात्सगुणमभिधानम् ।

इत्यष्टादशमवभृथेऽग्नीवरुणयोस्सस्विकृच्छब्देनाभिधानाधिकरणम् ।



अग्नीषोमीयपशौ सर्वत्रैव प्रयोगे निर्गुणेनाग्निशब्देनाग्नेरभिधानाधिकरणम् ॥ १९ ॥

**सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात् ॥ ३६ ॥ सर्वस्य-वैककर्म्यात् ॥ ३७ ॥**

अग्नीषोमीयपशौ पशुपुरोडाशः। तत्र चोदकप्राप्तस्य स्विष्टकृतः-गुणलोपः श्रुतः—'अग्निं यजती'ति। किमयं प्रधानमात्रे गुणलोपः? उत-सर्वेषु निगमेष्विति। प्रधानमात्रे, यजतीति लोपश्रवणात्। अवशिष्टेषु-निगमेषु प्रकृतिवत्स्विष्टकृद्गुणयुक्तमभिधानं, प्रयोग एव निर्गुणविधिरिति, सर्वत्र गुणलोपः।

एकोनविंशमग्नीषोमीयपशौ अग्निशब्देन निर्गुणेनाभिधानाधिकरणं।

— :०: —

अनुयाजेषुस्विष्टकृद्यागस्य संस्कारकर्मताधिकरणं ॥ २० ॥

**स्विष्टकृदावापिकोऽनुयाजे स्यात्, प्रयोजनवदङ्गानामर्थसंयोगात् ॥ ३८ ॥**

दर्शपूर्णमासयोस्त्रयोनुयाजाः, तृतीयः स्विष्टकृद्देवत्यः, स किमावापिकस्यो[1] 'उत्तरार्द्धात्स्विष्टकृते समवद्यती' आ. २-४-६-२ त्यस्य स्विष्टकृतः संस्कारार्थः? उत आराद्दुपकारक इति।

तत्र—उभयोर्दर्शशेषत्वाद्विशेषानवधारणात् ।
न मिथोऽङ्गाङ्गिभावः स्यात्तस्मादाराद्दुपक्रिया ॥ २७ ॥

उच्यते—देवतास्मरणं ह्यत्र दृष्टमेव प्रयोजनम्।
अनूयाजस्य तेनेह न युक्ताऽदृष्टकल्पना ॥ २८ ॥

न चागृह्यमाणविशेषत्वम्। आवापिकस्य द्रव्यप्रतिपत्त्येष्टदेवतास्मरणेन च कृतार्थत्वान्नानुयाजिकस्विष्टकृद्देवतासंस्कारार्थत्वम्। अनूयाजस्य तु दृष्टप्रयोजनान्तराभावाददृष्टकल्पनापरिहारायावापिकस्विष्टकृत्संस्कारार्थत्वमध्यवसीयते।

इति विंशमनुयाजेषु स्विष्टकृद्यागस्य संस्कारकर्मताधिकरणम्।

—:०:—

१. आज्यभाग-स्विष्टकृतावन्तरा आवसस्थानम्। तत्र भवः आवापिक-इति भा. १९३७।

दर्शपूर्णमासयोर्याज्यापुरोनुवाक्ययोः संस्कारकर्मताधिकरणम् ॥ २१ ॥

अन्वाहेति च शस्त्रवत् कर्म स्याच्चोदनान्तरात् ॥ ३९ ॥ संस्कारो वा चोदितस्य शब्दस्य वचनार्थत्वात् ॥ ४० ॥ स्याद् गुणार्थत्वात् ॥ ४१ ॥

दर्शपूर्णमासयोः 'तिष्ठन्याज्यामन्वाह आसीनः पुरोऽनुवाक्यामन्वाहे' आ॰ ४-१३-१० ति । किं याज्यापुरोनुवाक्योच्चारणमर्थकर्म ? उत संस्कारकर्म अर्थप्रतिपत्त्यर्थमिति। तत्रार्थप्रतिपत्त्यर्थत्वे रूपादेव प्राप्त-मुच्चारणं न विधातव्यं, तस्माददृष्टार्थं।

सत्यं। यद्युच्चारणं विधीयेत, रूपादेव तु प्राप्तमुच्चारणमनूद्य 'तिष्ठन्-आसीन इति गुणविधानान्न वचनानर्थक्यम्। अतो नादृष्टार्थता।

इत्येकविंशं दर्शपूर्णमासयोर्याज्यापुरानुवाक्ययोस्संस्कारकर्मताधिकरणम्।

---

मनोतायामूहाभावाधिकरणम् ॥ २२ ॥

मनोतायां तु वचनादविकारः स्यात् ॥ ४२ ॥

अग्नीषोमीये पशावस्ति मनोतामन्त्रः 'त्वं ह्यग्ने प्रथमो मनोते' तै. ब्रा. ३-६-१०ऋ. सं.४-४-३५ति। तत्रैव चेदं वचनं 'यद्यप्यन्यदेवत्यः पशुः, अग्नेय्येव-मनोता कार्ये'ति। सोऽयं मनोतामन्त्रः किं विकृतिषु वायव्यादिपशुषु यथादेवत-मूहितव्यः,अथवाऽविकारेण प्रयोक्तव्य इति संशयः। तदर्थं च 'यद्यप्यन्यदेवत्यः' इत्येतद्वचनं प्रकृत्यर्थं ? उत विकृत्यर्थमिति। तत्र पशोरग्नीषोमदेवत्य-त्वात्केवलाग्निदेवत्या मनोता तत्रासामर्थ्यादुत्कृष्यमाणा वचनेनानेन वार्यते। यद्यपि द्विदेवत्यः, तथाऽप्येकदेवत्यैव मनोता तत्र कार्या, नोत्क्रष्टव्येति। न चानेन वचनेन विकृतिषूहः प्रतिषिध्यते। प्रकृतावेवार्थवत्किमिति विकृतिषु कार्यं कुर्यात्तद्वचनेनावस्थापिता मनोता न प्रकृतावदृष्टार्था, येन विकृतिषु नोह्येत,शक्नोति ह्यसावग्निद्वारेण लक्षणया देवताभूतावग्नीषोमौ प्रकाशयितुम्। तस्माद्वायव्यादिषु यथादेवतमूहितव्येति प्राप्ते—

ब्रूमः—अग्निद्वारेण मन्त्रोयमग्नीषोमौ प्रकाशयन्।
अन्तरेणैव वचनं प्रकृताववतिष्ठते ॥ २९ ॥

न च विकृतिषु सामान्यसम्बन्धोऽस्ति, येन लिङ्गेन केवलाग्निदेवत्यायाः उत्कर्षः स्यात्। तस्मान्नोत्कर्षप्राप्तिः, येन तन्निवारणेन प्रकृतावेव वचनं कार्यं कुर्यात। तस्माद्विकृतिषु यथादेवतमूहे प्राप्ते,तन्निवारणार्थं वचनमिति, वायव्यादिष्वनह इति, अग्निशब्दस्याबाधः।

इति द्वाविंशमनोतायामूहाभावाधिकरणम्।

---

कण्वरथन्तरस्य स्वयोनौ गानाधिकरणम् ॥ २३ ॥

पृष्ठार्थेऽन्यद्रथन्तरात्तद्योनिपूर्वत्वात् स्यादृचां प्रविभक्तत्वात् ॥४३॥ स्वयोनौ वा सर्वाख्यत्वात् ॥ ४४ ॥ यूपवदिति चेत् ॥ ४५ ॥ न कर्मसंयोगात् ॥ ४६ ॥

वैश्यस्तोमे श्रूयते 'कण्वरथन्तरं पृष्ठं भवती'ति। तत्र संशयः—किं कण्वरथन्तरं बृहद्योनौ, रथन्तरयोनौ वा गेयम्? उत रथन्तरयोनावेव? उत स्वयोनाविति। तत्र कण्वरथन्तरशब्देन साममात्रं प्राकृतयोः साम्नोः स्थाने विधीयते, तद्योनिभूतयोस्त्वृचोः प्रकृतौ क्रमप्रकरणाभ्यामङ्गत्वेनावधारितयोरिह चोदकेन प्राप्तयोर्नास्ति किञ्चिन्निवर्तकं। तस्मात्तयोरन्यतरत्र गानम्।

अथवा कण्वस्य रथन्तरं कण्वरथन्तरमिति यौगिकोऽयं शब्दः, रथन्तरशब्दश्चारथन्तरे तद्धर्मातिदेशार्थः। तस्माद्रथन्तरयोनावेव गेयं।

नैतदेवं, कण्वसम्बन्धे प्रमाणाभावात्। तस्माद्रूढोऽयं कण्वरथान्तरशब्दः, न कण्वस्य रथन्तरम् इत्येवं प्रवृत्तः। तस्मान्न तावद्रथन्तरयोनावेव गेयं। नापि बृहद्योनौ रथन्तरयोनौ वा, किन्तु स्वयोनावेव। कस्मात्? उत्तराग्रन्थेतस्याः, तदुत्तरयोश्च पठितत्वात्। ऋत्वर्थो ह्युत्तराग्रन्थः। 'एकं साम तृचेक्रियते स्तोत्रीयं, यद्योन्यां, तदुत्तरयोर्गायती'ति वचनार्थानुष्ठानाय ऋग्विशेषापेक्षायां तत्परिज्ञानाय योनयः, उत्तराश्च प्रतिसाम विभक्ता उत्तराग्रन्थे पठ्यन्ते। नादृष्टार्थं। कण्वरथन्तरयोनिरपि तत्रैव पठिता। सा यत्र कण्वरथन्तरं, तदङ्गत्वेन ज्ञायते। तस्मात्स्वयोनौ गेयम्। एवं चाम्नान-

सिद्धर्क्परित्यागः ऋगन्तरसञ्चारश्च न कल्पितो भवति। कौत्सादिसाम्नान्तु-योनिरुत्तराग्रन्थे न पठितेति, तेषां प्राकृतीष्वेव ऋक्षु गानम् ।

इति त्रयोविंशं कण्वरथन्तरस्य स्वयोनौ गानाधिकरणम् ।

---

कण्वरथन्तरस्य स्वयोन्युत्तरयोर्गानाधिकरणम् ॥ २४ ॥

कार्यत्वादुत्तरयोर्यथाप्रकृति ॥ ४७ ॥ समानदेवते वा तृचस्याविभागात् ॥ ४८ ॥

कण्वरथन्तरस्यैवोत्तरागाने संशयः—किं बृहदुत्तरयोः,रथन्तरोत्तरयोर्वा-गानम् ? उत स्वयोन्युत्तरयोरपि ? तत्र स्वयोन्युत्तरयोरपि गीयमानस्याम्ना-नसिद्धर्क्परित्याग—ऋगन्तरसञ्चारावपरिहार्यौ । तद्वरं चोदकप्राप्तयोरेव गानमिति मन्यते । उत्तराग्रन्थे पाठस्तु स्वयोनिवदुत्तरयोरप्यविशिष्ट इति-स्वयोन्युत्तरयोरेव गानम् ।

इति चतुर्विंशं कण्वरथन्तरस्य स्वयोन्युत्तरयोर्गानाधिकरणम् ।

---

अग्निष्टुति स्तुतशस्त्रयोरविकाराधिकरणम् ॥ २५ ॥

ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारस्स्यात ॥ ४९ ॥

अग्निष्टुति श्रूयते 'आग्नेया ग्रहा भवन्ती'ति। प्रकृतौ नानादेवत्यानि-स्तोत्रशस्त्राणि। तानि यदि देवतासंस्कारार्थानि, ततोऽग्निष्टुति यथादेवतम्-हिव्यानि, तेषां त्वर्थकर्मत्वं द्वितीये स्थितं। तस्मादविकार इति। द्वितीयसिद्ध-स्यैव प्रयोजनकथनमेतत् ।

इति पञ्चविंशमग्निष्टुतिस्तोत्रशस्त्रयोरविकाराधिकरणम् ।

चातुर्मास्येषु आज्यशब्दस्याविकारेणावाहनाधिकरणम् ॥ २६ ॥

उभयपानात्पृषदाज्ये दध्नोप्युपलक्षणं निगमेषु पातव्यस्योपलक्षणात् ॥५०॥ न वा परार्थत्वाद्यज्ञपतिवत् ॥५१॥ स्याद्वा आवाहनस्य तादर्थ्यात् ॥ ५२ ॥ न वा संस्कारशब्दत्वात् ॥ ५३ ॥ स्याद्वा द्रव्याभिधानात् ॥ ५४ ॥ दध्नस्तु गुणभूतत्वादाज्यपा निगमाः स्युर्गुणत्वं श्रुतेराज्यप्रधानत्वात् ॥ ५५ ॥ दधि वा स्यात्प्रधानमाज्ये प्रथमान्त्यसंयोगात् ॥ ५६ ॥ अपि वाऽऽज्यप्रधानत्वाद्गुणार्थे व्यपदेशे भक्त्या संस्कारशब्दः स्यात् ॥५७। अपि वाऽऽख्याविकारत्वात्तेन स्यादुपलक्षणम् ॥ ५८ ॥ न वा स्याद्गुणशास्त्रत्वात् ॥ ५७ ॥

चातुर्मास्येषु श्रूयते—'पृषदाज्येनानुयाजान् यजती'ति । सन्ति प्रकृतावाज्यपशब्दयुक्ताः निगमाः 'देवानाज्यपानावह स्वाहा, देवानामाज्यपानां प्रिया धामानि, देवा आज्यपा आज्यमजुषन्ते'ति । आज्यपशब्देन च तत्र प्रयाजानुयाजदेवता उच्यन्ते । अत्र च पृषदाज्येनानुयाजा यष्टव्याः । तदिह संशयः—आज्यपशब्दस्याज्यदधिपानित्येवं विकारः ? अथवा दधिपानिति, उत पृषदाज्यपानिति, अहोस्विदविकारेणैव प्रयोग इति । यद्युभयं हविः, ततः प्रथमः पक्षः । यदि दध्येव, ततो द्वितीयः । यदि पृषदाज्यं नाम द्रव्यान्तरं हविः, ततस्तृतीयः । अथ त्वाज्यमेव हविः, तस्य तु पृषत्त्वं चित्रता संस्कारमात्रं । तज्जननार्थं च दधि, ततः सिद्धान्तः ।

तत्र 'पृषदाज्यं गृह्णाति, द्वयं वा इदं सर्पिश्च दधि चे'ति तुल्यवत्सङ्कीर्तनादुभयं हविः । नन्वेकेन प्रकृतौ देवतोपलक्षिता, तेनेह यद्यप्युभयं हविः, तथाऽप्येकेन देवतोपलक्षणसिद्धेर्नोभयादरो यज्ञपतिशब्दवदिति चेत् ? स्यादेवं यदि यज्ञपतिवत्परार्थं हविः । तदपि देवतावदनुष्ठानाङ्गत्वेन स्मर्तव्यमेव । तस्मादुभयोपलक्षणम् ।

अथवा 'द्विरुपस्तृणाति, सकृदभिघारयती'त्युपस्तरणाभिघारणवादाद्दधिसंस्कारार्थमाज्यं, दध्येव हविः । ततो दधिपानित्येव वक्तव्यं । नैतद द्वयमपि युक्तं । ग्रहणे हि दध्याज्ययोस्तुल्यत्वं, दध्नो वा प्राधान्यं गम्यते । यागे त्वाज्यमेव पृषत्त्वगुणकं करणत्वेन श्रुत्या विधीयते, नोभयं । नापि दधि । यच्च यागद्रव्यं, तदर्थो ग्रहणसंस्कारः तस्माद्ग्रहणेऽपि आज्यमेव प्रधानं । तस्य तु पृषत्तासम्पादनार्थं दधि गृह्यते । न स्वार्थेन अनुपयोगित्वात् । तथाविधे तु दधनि तुल्यनिर्देश उपस्तरणादिवादेन च—

प्राधान्यनिर्देशोऽर्थवादमात्रं । तस्मादविकारः । अन्यस्त्वाह—दध्ना आज्येन द्रव्यान्तरं निष्पद्यते, तस्य वाचकः पृषदाज्यशब्दः । तच्च हविः 'पृषदाज्येनानूयाजान् यजती'ति वचनात् । तस्मात्पृषदाज्यपानिति वक्तव्यं ।

स्यादेतदेवं यदि पृषदाज्यशब्दः समुदायशक्त्या द्रव्यान्तरमभिधत्ते, नत्वेवमस्ति। पृषच्छब्दो हि लोके चित्रत्ववचनः पृषद्रज्जुः पृषन्मणिरिति । तेन पृषदाज्येन-चित्रेणाज्येनेत्यर्थः । तेन प्राकृतस्यैवाज्यस्य हविषश्चित्रतागुणमात्रविधानम् । एवं च गुणं सम्पादयितुं दधि गृह्यते । प्राधान्यनिर्देशोऽर्थवादमात्रं । हविरेव च प्रकृतावुपलक्षितं, न हविर्गुणः । अविकारेण तेनाज्यपानित्येवोपलक्षणं, चोदकानुग्रहश्चैवमविकाराद्भविष्यति ।

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां दशमाध्यायस्य चतुर्थः पादः ॥ ४ ॥



# अथ दशमाध्याये पञ्चमः पादः

एकदेशग्रहणे प्राथमिकानामेव ग्रहणाधिकरणम् ॥ १ ॥

आनुपूर्व्यवतामेकदेशग्रहणेष्वागमवदन्त्यलोपः स्यात् ॥ १ ॥ लिङ्गदर्शनाच्च ॥ २ ॥ विकल्पो वा समत्वात् ॥ ३ ॥ क्रमादुपजनोऽन्ते स्यात् ॥ ४ ॥ लिङ्गमविशिष्टं सङ्ख्याया हि तद्वचनम् ॥५॥ आदितो वा प्रवृत्तिः स्यादारम्भस्य तदादित्वाद्वचनादन्त्यविधिः स्यात् ॥ ६ ॥

प्राकृतानां बहूनामेकदेशे विकृतिषूपादातव्ये, किमादितः, मध्यतः, अन्ततो वा विकल्पेनोपादानम्? उतादित एवेति संशयः । यथा—द्यावापृथिव्य एककपाले, आश्विने द्विकपाले, वैष्णवे त्रिकपाले, प्राकृतानां कपालानामेकदेशग्रहणं । तथा 'एकां सामिधेनीमि'त्यत्र सामिधेन्येकदेशः, तथा द्विरात्रादिषु द्वादशाहैकदेशः, तत्र विशेषाग्रहणादनियमे प्राप्ते—

उच्यते—यः कपालोपधानानां मध्ये प्राचीनः पदार्थः, तेन प्रथमः कपालः-उपस्थाप्यते, तस्योपस्थितस्य परित्यागे न किंचित्कारणमस्ति। तथा तेनापि द्वितीयः, तेनापि तृतीय इत्येवं क्रमेणोपस्थापितेषूपात्तेषु चावशिष्टानि प्रयोजनाभावाल्लुप्यन्ते। तथा सामिधेन्यादिष्वपि। तस्मादाद्योपादानं, अन्त्यलोपः।

इति प्रथममेकदेशग्रहणे प्राथमिकानामेव ग्रहणाधिकरणम्।

एकत्रिके आद्ये तृचे गानाधिकरणम् ॥ २ ॥

एकत्रिके तृचादिषु माध्यंदिनच्छन्दसां श्रुतिभूतत्वात् ॥ ७ ॥ आदितो वा तन्न्यायत्वादितरस्यानुमानिकत्वात् ॥ ८ ॥ यथानिवेशश्च प्रकृतिवत्संख्यासात्रविकारत्वात् ॥ ९ ॥

अस्त्येकत्रिको नाम क्रतुः 'अथैव एकत्रिकः, तस्यैकस्यां स्तोत्रीयायां बहिष्पवमानं स्तुवीत, तिसृषु होतुराज्ये, एकस्यां मैत्रावरुणस्य, तिसृषु ब्राह्मणाच्छंसिनः, एकस्यामच्छावाकस्य, तिसृषु माध्यन्दिनः पवमानः, इत्येवमन्तादेका, तिस्रश्च स्तोत्रीया व्यतिषङ्गेण कर्त्तव्याः श्रूयन्ते। प्रकृतौ-माध्यन्दिनपवमाने त्रयस्तृचाः, गायत्रः प्रथमः, बार्हतो द्वितीयः, त्रैष्टुभ-स्तृतीयः। तत्रैव चेदं वचनं 'त्रिच्छन्दा आवापो माध्यन्दिनः पवमानः' इति। तदिह नवानामृचां मध्ये तिसृषूपादातव्यासु भवति संशयः-किं त्रयाणां तृचानामाद्या ऋच उपादातव्याः? उताद्यस्तृचः सकलो ग्राह्य इति। तत्र त्रिच्छन्दस्त्वं श्रुत्या प्रकृतौ विहितं। चोदकप्राप्तमनुग्रहीतं तृचाद्यानामु-पादानम्। आद्ये हि तृचे गायत्रीमात्रोपसंग्रहात् त्रिच्छन्दस्त्वं हीयते। नन्वाद्यया गायत्र्या द्वितीया गायत्र्युपस्थाप्यते, न तु द्वितीयस्य तृचस्याद्या-बृहती, सा हि तृतीयया गायत्र्योपस्थाप्यते, तेन पाठक्रमोपस्थापनबलादाद्य-स्तृच उपादेयः। सत्यं। पाठप्राप्तः क्रमो लोपनीयः श्रुतिप्राप्तत्रिच्छन्दस्त्वानु-ग्रहायेति प्राप्ते—

ब्रूमः—प्रकृतावियं श्रुतिः, अयं पाठ इति बलाबलं चिन्त्यं। विकृतौ तु सर्वस्य प्रकृतितो लब्धात्मकस्य प्राप्तस्य न तत्कृतः कश्चिद्बलाबलविशेषः, किं तु यद्विकृतावेव शीघ्रमुपतिष्ठते, तदुपादेयम्। अतः क्रम एवात्र-

बलीयान्। प्रथमा हि गायत्री समाप्यमानैव द्वितीयां गायत्रीमुपस्थापयति, सोपस्थापितोपक्रान्तैव भवतीति, नान्यस्यावसरः। तस्मादाद्ये तृचे माध्यन्दिनः पवमानः स्तोतव्यः।

इति द्वितीयमेकत्रिके आद्ये तृचे गानाधिकरणम्।

---

एकस्यामृचि धूर्गानाधिकरणम् ॥ ३ ॥

त्रिकस्तृचे धुर्ये स्यात् ॥ १० ॥ एकस्यां वा स्तोभस्यावृत्तिधर्मत्वात् ॥ ११ ॥

एकत्रिक एव क्रतौ व्यतिषङ्गेणैकस्यां, तिसृषु च स्तोत्रेषु सम्पाद्यमानेषु, यानि प्रकृतौ[1] धूर्गानसम्पाद्यानि स्तोत्राणि, तेषु यत् त्रिकं सम्पाद्यं, तत्किं तिसृष्वृक्षु ? उतैकस्या एवर्चो अभ्यासेन त्रिकं सम्पाद्यमिति संशयः ? तत्र तृचगानप्राप्तिचोदकानुग्रहाय गानान्तरवद्धूर्गानान्यपि त्रिस्तोमकानि तृचे गातव्यानि। 'आवृत्तं धूर्षु स्तुवते' इति तु वचनं तिसृष्वपि गीयमानस्य साम्नः प्रत्येकमावृत्तेस्तेनाभिप्रायेणानुवादमात्रमिति मन्यते।

स्यादेतदेवं, यदि सामावृत्तिरियमुच्यते, स्तोत्रावृत्तिस्त्वियं। गुणकीर्त्तनञ्च स्तुतिः। तत्र एकरूपैव स्तुतिरावर्त्तनीया। सा चैकस्यामेवर्चि क्रियमाणा तादृश्येवावृत्ता भवति, न तद्भेदे। तत्रान्यथाभावस्यावर्जनीयत्वात्। वचनं चैवमर्थवत्, इतरथा ह्यनुवादमात्रमनर्थकं। तस्माद्धूर्गानानि त्रिकस्तोमकान्येकस्यामेवर्च्यभ्यस्तव्यानि।

इति तृतीयमेकस्यामृचि धूर्गानाधिकरणम्।

---

द्विरात्रादिषु दशरात्रस्य विध्यन्तानुष्ठानाधिकरणम् ॥ ४ ॥

चोदनासु त्वपूर्वत्वाल्लिङ्गेन धर्मनियमः स्यात् ॥ १२ ॥ प्राप्तिस्तु रात्रिशब्दसम्बन्धात् ॥ १३ ॥

---

१. गीतिविकारो गायत्रस्य धुरः—इति वचनात् गानविकारात्मकानि सामानि।

द्विरात्रादिष्वहर्गणेषु द्वादशाहः प्रवर्त्तत इति स्थितं। तत्र किं द्वादशाप्यहान्यादितः प्रवर्त्तन्ते ? उत प्रापणीयोदयनीये वर्जयित्वा मध्यमो-दशरात्रः पृष्टचषडह-च्छन्दोमचतुष्टयात्मक इति संशये, विशेषाभावात् सर्वप्रवृत्तौ—

उच्यते–द्विरात्रे यत् प्रथमं,तद्द्वितीयं, यद् द्वितीयं, तत् तृतीयं जगतीमन्तर्गच्छती'ति पार्ष्णिकतृतीयस्य जागतस्यान्तरायदर्शनात् अन्यैश्चैवंविधैर्लिङ्गैर्दशरात्रस्यैव प्रवृत्तिः। अस्ति च द्वादशाहे मध्यमस्य दशरात्रस्य पृथक्सङ्घातक्लृप्तिः। पृष्ट्यादारभ्य हि प्रथममहर्द्वितीयमहरिति व्यवहारः। चतुर्थं छन्दोममहः, दशममहरिति व्यवहारः, सति च दशरात्रसङ्घाते तस्यैव-प्रवृत्तिर्लिङ्गविशेषैरध्यवसीयते ।

इति चतुर्थं द्विरात्रादिषु दशरात्रस्य विध्यन्तानुष्ठानाधिकरणम् ।

---

सप्तभिराधुनोति इत्यनेनाग्नौ धूननाद्यर्थानां-
मन्त्राणामनियमेनोपादानाधिकरणम् ॥ ५ ॥

अपूर्वासु तु संख्यासु विकल्पः स्यात्सर्वासामर्थवत्त्वात् ॥ १४ ॥

प्राकृतानां बहूनामेकग्रहणे सत्याद्योपादानम्। अन्त्यलोप इति स्थितं। यत्र तु प्रकरणपठितानां मन्त्राणामेकदेशग्रहणं। यथाग्नावाधूननार्थानां 'वेशीनां-त्वा पत्मन्नाधूनोमी 'त्येवमादीनामावपनार्थानां च'याजाता ओषधयः तै. सं. ४-२-६ इत्येवमादीनां। सप्तभिराधूनोतीति, चतुर्दशभिर्वपतीति। तत्रापि किमाद्योपादानम् ? उतानियम इति संशये, क्रमानुग्रहायाद्योपादाने प्राप्ते–

बलीयसा प्रकरणेन सर्वेषामङ्गत्वावगमात्सङ्ख्याश्रुतेश्चानियमेन तत्संख्योपादानेऽप्यविराधात् क्रमबाधेनादितो मध्यतो, अन्ततो वा सप्तानां, चतुर्दशानां चोपादानम् ।

इति पञ्चममग्नौ धूननावपनादिमन्त्राणामनियमेनोपादानाधिकरणम् ।

विवृद्धस्तोमकेऽप्राप्तानां साम्नामागमाधिकरणम् ॥ ६ ॥

स्तोमविवृद्धौ प्राकृतानामभ्यासेन सङ्ख्यापूरणमविकारात्सङ्ख्यायां गुणशब्दत्वादन्यस्य चाश्रुतित्वात् ॥ १५ ॥ आगमेन वाऽभ्यासस्याश्रुतित्वात् ॥ १६ ॥ संख्यायाश्च पृथक्त्व निवेशात् ॥ १७ ॥ पराक्छब्दत्वात् ॥ १८ ॥ उक्ताविकाराच्च ॥ १६ ॥ अश्रुतित्वादिति चेत् ॥ २० ॥ स्यादर्थचोदितानां परिमाणशास्त्रम् ॥ २१ ॥ आवापवचनं चाभ्यासे नोपपद्यते ॥२२॥ साम्ना चोत्पत्तिसामर्थ्यात् ॥२३॥ धुर्येष्वपीति चेत् ॥ २४ ॥ नावृत्तिधर्मत्वात् ॥ २५ ॥

विवृद्धस्तोमकेषु क्रतुषु 'एकविंशेनातिरात्रेण प्रजाकामं याजयेदि' त्यादिषु किं प्राकृतानामेव साम्नामभ्यासेन स्तोमविवृद्धिसम्पादनम्, उताप्राकृतानां साम्नामागमेनेति सन्देहे, अन्येषामश्रवणात्संख्यायाश्च प्राकृताभ्यासेनापि सम्पत्तेरभ्यास एव न्याय्यः ।

नैवं, संख्या हि पृथक्त्वनिवेशनी स्तोत्रीयागता सम्पाद्या, स्तोत्रीयापृथक्त्वसिद्ध्यर्थं सामान्तरागममाक्षिपति । अभ्यासे हि मुख्यपृथक्त्वाभावादसमञ्जसा संख्या स्यात् । तस्मादागमः । स च साम्नामेव, नर्चाम् । 'त्रीणि ह वै यज्ञस्योदराणि, गायत्री बृहत्यनुष्टुप् च, अत्र ह्येवाऽवपन्ति,अत एवोद्वपन्ती'ति वचनेनावप्तव्यानां गायत्र्याद्याधारत्वनियमाद्दचां चक्ष्वेवापासम्भवादनेनैव वचनेन न्यायप्राप्तोऽप्यागमः पवमानविषय एव कृत इति, स्तोत्रान्तरेष्वगत्याऽभ्यासेनैव संख्यापूरणमित्युक्तम् ।

इति षष्ठं विवृद्धस्तोमकेऽप्राकृतानां साम्नामागमाधिकरणम् ।



वहिष्पवमाने ऋगागमाधिकरणम् ॥ ७ ॥

वहिष्पवमाने तु ऋगागमः सामैकत्वात् ॥ २६ ॥

बहिष्पवमानेऽपि किं सामागमः ? उतर्गागम इति संशये ? पूर्वेण न्यायेन सामागमे प्राप्ते—

ब्रूमः, 'एकं हि तत्र सामेति ब्रूयात्, स्वरसाम्नैव गायती'ति वचनात्सामागमो न सम्भवति। न चाभ्यासेनापि संख्यापूरणं भवति' 'पराग्बहिष्पवमानेन स्तुवीते'त्यनभ्यासवचनेन पराक्छब्देनाभ्यासस्य श्रुत्यैव निषिद्धित्वात, तस्मादृगागमः।

इति सप्तमं पवमाने ऋगागमाधिकरणम्।



सामिधेनीष्ववशिष्टानामागमेन संख्यापूरणाधिकरणम् ॥ ८ ॥

अभ्यासेन तु संख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात् । २७ ॥ अविशेषान्नेति चेत् ॥ २८ । स्यात्तद्धर्मत्वात् प्रकृतिवदभ्यस्येतासंख्यापूरणात् ॥ २९ ॥ यावदुक्तं वा कृतपरिमाणत्वात् ॥ ३० ॥ अधिकानाञ्च दर्शनात् ॥ ३१ ॥ कर्मस्वपीति चेत् ॥ ३२ ॥ न चोदितत्वात् ॥ ३३ ॥

यत्र सामिधेनीविवृद्धिः 'एकविंशतिमनुब्रूयात्प्रतिष्ठाकामस्ये' त्यादौ, तत्र किं प्राकृतीभ्य एकादशभ्योऽधिकानामागमः? उत प्रथमोत्तमयोरेवाभ्यासेन संख्यापूरणम्? उत यावदुक्तं त्रिरभ्यासम्प्रथमोत्तमयोः कृत्वा, अवशिष्टानामागम इति संशये, संख्यासामञ्जस्यादेकादशभ्यः प्राकृतीभ्यो अतिरिक्तानां सर्वासामागमः।

नैवं। प्रकृतौ हि पञ्चदशसु सामिधेनीषु विहितासु एकादशसु सामिधेनीषु पठितासु वचनं 'त्रिः प्रथमामन्वाह त्रिरुत्तमामि'ति संख्यापूरणं यावद्भवति, तावत्प्रथमोत्तमयोरभ्यसितव्यमित्येवंपरं, पूरणसङ्ख्याभिप्रायश्च त्रिशब्दः, दृष्टार्थत्वात्। त्रित्वस्वरूपपरत्वे हि अदृष्टार्थता स्यात। तस्मात्प्रथमोत्तमयोरभ्यासेन सङ्ख्यापूरणमिति प्राप्ते

ब्रूमः-स्यादेवं यदि पूरणसङ्ख्यायाः, त्रित्वस्य च सम्प्रतिपत्तिः स्यात्, न त्वेतदस्ति। न ह्यवश्यं प्रथमोत्तमाभ्यासेन सङ्ख्यायां पूर्यमाणायामेकैकस्यास्त्रिरभ्यासो भवति, द्विचतुरभ्यासेनापि तत्पूरणसम्भवात्। तस्मात् त्रिरभ्यास एव तत्र विवक्षितः, न यावत्पूरणमभ्यासः। तेन विकृतिष्वपि त्रिरभ्यास एव प्राप्तः। न यावतपूरणमभ्यासः। तस्मात्प्रथमोत्तमे त्रिरभ्यस्य,

अवशिष्टानामाग्नेयीनां दाशतयीभ्य आगमः। किं पुनरागम्यमानानां कर्मसम्बन्धेप्रमाणं ? न तावल्लिङ्गं, तस्याग्न्यादिस्वरूपमात्रविषयत्वेन क्रत्वर्थत्वे प्रमाणाभावात्। सर्वत्र हि लिङ्गं यत्किञ्चित्प्रमाणकं क्रतुसम्बन्धसामान्यमपेक्ष्य द्वारविशेषमात्रे प्रमाणमिति, याज्यापुरोऽनुवाक्याकाण्डे व्याख्यातं[1]। न चान्यदपि प्रमाणं पश्यामः? उच्यते-संख्यैवात्र संख्येयानां कर्माङ्गत्वे प्रमाणं। तथा हि सामिधेनीपरिच्छेदद्वारा क्रतोरुपकर्त्तव्यम्। अग्निसमिन्धनप्रकाशिकाश्चर्चः सामिधेन्य उच्यन्ते। तेन तत्समर्थाः याः काश्चिदृचोऽवश्यमुपादातव्याः। एवं सर्वत्रागमे द्रष्टव्यम्।

इत्यष्टमं सामिधेनीष्ववशिष्टानामागमेन संख्यापूरणाधिकरणम्।

---

षोडशिनो ज्योतिष्टोमांगत्वाधिकरणम् ॥ ९ ॥

षोडशिनो वैकृतत्वं तत्र कृत्स्नविधानात् ॥ ३४ ॥ प्रकृतौ चाऽभावदर्शनात् ॥ ३५ ॥ अयज्ञवचनाच्च ॥ ३६ ॥ प्रकृतौ वा शिष्टत्वात् ॥ ३७ ॥ प्रकृतिदर्शनाच्च ॥ ३८ ॥ आम्नात परिसङ्ख्यार्थम् ॥ ३९ ॥ उत्कर्षभावदर्शनम् ॥ ४० ॥ गुणादयज्ञत्वम् ॥ ४१ ॥

अस्ति ज्योतिष्टोमे षोडशी। स च 'षोडशिना वीर्यकामः' स. सं. ६ ६-११-१० इति पुरुषार्थतया विहितोऽपि पुनः क्रत्वर्थतया श्रूयते 'अग्निष्टोमे राजन्यस्य गृह्णीयात, अप्युक्थ्ये ग्राह्यो तिरात्रे ब्राह्मणस्योत्तरेऽहनि द्विरात्रस्य गृह्यते, मध्यमेऽहंस्त्रिरात्रस्य चतुर्थेऽहन्यहीनस्य गृह्यते' मै. सं. ४ ८-६ इति। तत्र क्रत्वर्थषोडशिनं प्रति सन्देहः-किं प्रकृतौ स्यात, उत विकृतिष्वेवोत्क्रष्टव्य इति। 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यादिवचनैर्विकृतिसम्बन्धावगमादग्निष्टोमे राजन्यस्येत्यादिवचनस्य च वैकृताग्निष्टोमाभिप्रायत्वेनाप्यविरोधात् प्रकरणं बाधित्वा वाक्येनोत्कर्षे प्राप्ते—

ब्रूमः—प्रकृतिप्रकरणाम्नानैरग्निष्टोमादिशब्दैस्तत्रैव सम्भवद्भिः किमित्यसन्निहिताऽपि विकृतिरभिधीयते। तस्माद्वाक्येनैव प्रकृतौ स्यात्।

---

१—याज्यापुरोनुवावाक्याकाण्डे-लिंग-क्रम-समाख्यानादि'३—२—७। त्यधिकरणे व्याख्यातमित्यर्थः।

तत्र राजन्यादिनिमित्तेन विहितः स विकृतिष्वनैमित्तिको विधीयते 'उत्तरेऽहन्द्विरात्रस्ये'ति ।

इति नवमं षोडशिनो ज्योतिष्टोमांगत्वाधिकरणम् ।

---

आग्रयणादेव षोडशिग्रहणाधिकरणम् ॥ १० ॥

तस्याग्रयणाद्ग्रहणम् ॥ ४२ ॥ उक्थ्याच्च वचनात् ॥ ४३ ॥

षोडशिन्येव सन्देहः-किमसावाग्रयणात्, उक्थ्याद्वा ग्रहीतव्यः । उताग्रयणादेवेति । तत्र 'आग्रयणाद्गृह्णाति' उक्थ्यान्निगृह्णाती ति वचनद्वयाद्विकल्पेन, समुच्चयेन वा द्वाभ्यां गृह्यते । एवमपर्यवसिते पूर्वपक्षे, मध्ये चिन्ता ।

इति दशममाग्रयणादेव षोडशिग्रहणाधिकरणम् ।

---

तृतीयसवन एव षोडशिग्रहणाधिकरणम् ॥ ११ ॥

तृतीयसवने वचनात्स्यात् ॥ ४४ ॥ अनभ्यासे पराक्छब्दस्य तादर्थ्यात् ॥ ४५ ॥ उक्थ्याविच्छेदवचनाच्च ॥ ४६ ॥ आग्रयणाद्वा पराक्छब्दस्य देशवाचित्वात्पुनराधेयवत् ॥ ४७ ॥ विच्छेदः स्तोमसामान्यात् ॥ ४८ ॥

वचनात् किं षौडशी सवनत्रये ग्राह्यः,? उत तृतीयसवन एवेति । किं पुनः कारणमन्तरा चिन्तायाः? मूलाधिकरणसिद्धान्ते कालोपलक्षणत्वमुक्थ्यस्य स्थास्यति । स्थिते च तस्मिन्पूर्वयोः सवनयोर्ग्रहणमाशङ्कितुमशक्यम्, तयोरुक्थ्याभावात् । तस्मान्मध्ये चिन्तितमिति केचित । तदयुक्तम् । एवमपि पूर्वपक्षं समाप्य, कर्त्तव्येयं चिन्ता स्यात्,न मध्ये । किं च 'प्रातः सवने ग्रहीतव्यः' इत्यादिवचनादस्य सवनत्रये ग्रहणमाशङ्क्यते, न च वचनस्य परिपन्थी सम्भवति । तस्माद्यद्यपि पूर्वयोः सवनयोरुक्थ्याभावात्तदुत्तरकालता न सम्भवति । तथाऽपि वचनबलाद् ग्रहीतव्यः । कालवचनन्तु तार्त्तीयसवनग्रहणाभिप्रायं भविष्यति । विद्यते च पूर्वयोरपि सवनयोरुक्थ्यं । तस्माद्विचित्रगतिः सूत्र-

कारश्चिन्तान्तरमध्येऽपि प्रसङ्गात् चिन्तान्तरं कृतवानित्येव वक्तव्यम् । तत्र 'प्रातः सवने गृह्णाती'त्यादिभिर्वाक्यैः सवनत्रयेऽपि विधानात् त्रिष्वपि ग्राह्यः—

नैवं । प्रातसवनाद्यनुक्रमणं निन्दाद्वारेण तृतीयसवनस्तुत्यर्थं । सवनत्रयं ह्यनुक्रम्य 'यत्प्रातः सवने गृह्णीयात्' वज्रो वै षोडशी 'त्यादिना सवनद्वयं निन्दित्वा' तृतीयसवने ग्राह्य इति श्रूयते। तस्मात्सर्वमिदमेकं वाक्यं तृतीयसवने षोडशिविधानार्थमिति, तत्रैवास्य ग्रहणं ।

स्थितादुत्तरम् । 'उक्थ्यान् निर्गृह्णाति षोडशिनमि'ति वचनादुक्थ्यादपि ग्रहीतव्यमित्युक्तम् । यदपि शाखान्तरवचनं 'तंपराञ्चमुक्थ्यात् षोडशिनं गृह्णातो'ति। तत्राप्युक्थ्यादित्यपादानपञ्चमी, न दिक्छब्दयोगनिमित्ता, पराक्शब्दस्य 'पराचीः सामिधेनीरि' तिवदनभ्यासवाचित्वेन दिक्छब्दत्वाभावात् । तस्मादुभाभ्यां ग्रहणमिति प्राप्ते—

ब्रूमः—कृत्स्नस्याग्रयणादेव ग्रहणं नित्यवच्छ्रुतम् ।
न युक्तं बाधितुं तस्मान्न विकल्प-समुच्चयौ ॥ ३० ॥

यत्तु वचनादिति । तन्न । 'पराञ्चमुक्थ्यादि'त्यत्र पराक्शब्दोऽनभ्यासवचनः सन्ननपकर्षकः स्यात्, अभ्यासस्य प्राप्त्यभावात् । तस्माद्दिक्शब्दोऽयं कालवचनः, तन्निमित्ता चेयं पञ्चमी । उक्थ्यादूर्ध्वकाले षोडशिनं गृह्णातीत्यत्रापि दिक्छब्दनिमित्तैव पञ्चमी । न ह्यवश्यं दिक्छब्दयोगापेक्षैव सा । विनाऽपि तेन मासात्प्रवक्ष्यामीत्यादिषु दर्शनात् । तेनेयं 'सह युक्ते तृतीयावदर्थमात्रापेक्षा न शब्दमात्रयोगमपेक्षते । एवं चाग्रयणात् कृत्स्नस्य नित्यवद्ग्रहणं न बाधितं भवति । तस्मादाग्रयणादेव ग्रहीतव्यः ।

इत्येकादशं तृतीयसवन एव षोडशिग्रहणाधिकरणम् ।



षोडशिग्रहस्य सस्तोत्रशस्त्राधिकरणम् ॥ १२ ॥

उक्थ्याऽग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्सति हि संस्थान्यत्वम् ॥ ४९ ॥ सस्तुतशस्त्रो वा तदङ्गत्वात् ॥ ५० ॥ लिङ्गदर्शनाच्च ॥ ५१ ॥ वचनात्संस्थान्यत्वम् ॥ ५२ ॥

षोडशिन्येव 'यदाऽप्यग्निष्टोमे राजन्यस्य गृह्णीयात्, अप्युक्थ्ये ग्राह्यः' इत्यादिवचनादग्निष्टोमोक्थ्ययोर्वा गृह्यते, तदा किमस्तुतशस्त्रः स्यात् ? उत तदाऽपि सस्तुतशस्त इति संशये,

उक्थ्याग्निष्टोमसंयोगेनास्य स्तोत्रादिकं भवेत्।
षोडशिस्तोत्रसंस्थायां नोक्थ्याग्निष्टोमता भवेत् ॥ ३१ ॥
अग्निष्टोमादिशब्दा हि स्तोत्रसंस्थानिमित्तकाः।
षोडशिस्तोत्रसंस्थायां नाग्निष्टोमः क्रतुर्भवेत् ॥ ३२ ॥

तत्राग्निष्टोमे ग्राह्य इत्येतदेव विरुद्धयते। तस्मादस्तुतशस्त्रः स्यात्।

सत्यं संस्थान्यतापत्तिर्वचनात्तु न दुष्यति।
पूर्वसंस्थोपमर्द्देन संस्थैवान्या विधीयते ॥ ३३ ॥
उक्थ्यसंस्थो हि यः प्राप्तस्तथाऽग्निष्टोमसंस्थितिः।
राजन्यस्य तथा नासौ किन्तु षोडशिसंस्थितिः ॥ ३४ ॥
इत्येष वचनस्यार्थस्तस्मात्सस्तुतशस्त्रकः।
तदङ्गत्वेन हि स्तोत्रं शस्त्रं चाहत्य चोदितम् ॥ ३५ ॥

'एकविंशं स्तोत्रं भवति, प्रतिष्ठित्यै 'हरिवच्छस्यते' तै.सं.६-६-११-४- इति विहितं स्तुतशस्त्रमप्रति विरोधे किमुक्थ्याग्निष्टोमसंस्थस्य न क्रियते। तस्मात्सस्तुतशस्त्रः।

इति द्वादशं षोडशिग्रहस्य सस्तोत्रशस्त्राधिकरणम्।



## अङ्गिरसां द्विरात्रे षोडशिनः परिसङ्ख्याधिकरणम् ॥ १३ ॥

**अभावादतिरात्रेषु गृह्यते ॥ ५३ ॥ अन्वयो वाऽनारभ्य विधानात ॥ ५४ ॥**

अङ्गिरसां द्विरात्रे श्रूयते 'वैखानसम्पूर्वेऽहन् साम भवति, षोडश्युत्तरे' इति। किमिदमप्राप्तस्य षोडशिनोऽविधानार्थम् ? उत प्राप्तस्य परिसंख्यार्थमिति संशये, विधिः, प्राप्त्यभावात्। न तावच्चोदकेन प्राप्तिः, स ह्यानुमानिकः, तत्प्राप्तेः प्रागेव प्रत्यक्षेण वचनेन विधीयते। 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यनेन।

अथवा वैकल्पिकी चोदकप्राप्तिः, प्रकृतावतिरात्रे षोडशिनो वैकल्पिकत्वात्। तत्र नियमार्थं विधानं। विहिते च तस्मिन्नानुमानिको न प्रापयति। तस्मान्न तावच्चोदकप्राप्तिमपेक्ष्य तत्परिसंख्या। न चानेनैव 'उत्तरेऽहन्द्विरात्रस्य गृह्यते' इति सामान्यवचनेन प्राप्तत्वात्, षोडश्युत्तरवचनं परिसंख्यार्थमिति वाच्यम्। सामान्येन हि सर्वद्विरात्राणामिदं वचनं तत्प्राप्तेः प्रागेवाङ्गिरसां द्विरात्रे षोडश्युत्तर इति विशेषवचनेन विधीयते। तस्मादप्राप्तविधिः 'षोडश्युत्तरे' इति।

नैतदेवं। यद्यपीदं सामान्यवचनं, तथाऽपि प्रत्यक्षेणैव वाक्येन द्विरात्रेषूत्तरेषामह्नां विकल्पेन प्राप्तः षोडशी नियतः। 'षोडश्युत्तरे'इत्यत्र तु नास्तिप्रत्यक्षो द्विरात्रादिसंयोगः। प्रकरणात्तु कल्प्यते। तच्च दुर्बलं वाक्यात्। तस्मात्सामान्यवचनेनैव वैकल्पिकीं चोदकप्राप्तिमपोद्य नियम्यमानः षोडशी-'षोडश्युत्तरे' इत्यनेन द्विरात्रान्तरेषु तु यथाचोदकं विकल्प एव स्यात्।

भाष्यमतेनाधिकरणम्।

तदिदं वृत्त्यन्तरकारव्याख्यानमधिकरणस्यानुपपन्नमिति मत्वा, भाष्यकारेण व्याख्यानान्तरमारब्धं। तत्र यः पूर्वस्मिन् व्याख्याने सिद्धान्तः, स एव पूर्वपक्षः—परिसंख्येति—

सिद्धान्तस्तु—परिसंख्यायास्त्रिदोषत्वाद्वैखानसविधिशेषोऽयं न विधिः, परिसंख्या वा। तस्मात्सर्वद्विरात्रेषूत्तरेषामह्नां नियत एव षोडशी, सामान्यवचनेन प्राप्तत्वात्। वचनान्तरेणापरिसंख्यातत्वात्।

इति चतुर्दशमङ्गिरसां द्विरात्रे षोडशिनियमाधिकरणम्।

---

नानाऽहीने षोडशिग्रहग्रहणाधिकरणम्॥ १४॥

चतुर्थे चतुर्थेऽहन्यहीनस्य गृह्यते इत्यभ्यासेन प्रतीयेत भोजनवत् ॥ ५५ ॥ अपि वा सङ्ख्यावत्त्वान्नानाहीनेषु गृह्यते; पत्नवदेकस्मिन्सङ्ख्यार्थभावात् ॥ ५६ ॥ भोजने च तत्सङ्ख्यं स्यात् ॥ ५७ ॥

षोडश्येव 'चतुर्थे चतुर्थेऽन्यहीनस्य गृह्यते' इति श्रूयमाणः सन्दिह्यते-किमेकस्यैवाहीनस्य चतुर्थे गृहीत्वा पुनस्तत्पुरस्ताच्चतुर्थेऽभ्यासेन ग्रहीतव्यः?

उतैकस्याहीनस्यैकस्मिन्नेव चतुर्थे सकृद्ग्रहणं, वीप्सा तु नानाभिप्रायेति। तत्र नानाऽहीनाभिप्रायत्वे न्यायप्राप्तत्वेन वीप्सानर्थक्यादहीनस्येति चैकवचनश्रवणादेकस्मिन्नहीने चतुर्थे चतुर्थेऽभ्यासः।

नैवम्। अहीस्य चतुर्थ इत्युच्यते। एकस्य चाहीनस्यैकं चतुर्थमहः। यत्तु चतुर्थाच्चतुर्थं तत्, अहीनस्याष्टमं भवति, तत्र गृह्णन्नाहीनस्य गृह्णीयात्। तस्मात्सकृद्ग्रहणम्। एकवचनं तु सामान्याभिप्रायं, वीप्सा च न्यायप्राप्तानुवादः।

इति चतुर्दशं नानाहीने षोडशिग्रहणाधिकरणम्।

---

## वर्णकद्वयविशिष्टमधिकरणम् ॥ १५ ॥

### तगत्साम्नि; सामाभावाद्दक्तः; साम तदाख्यं स्यात् ॥ ५८ ॥

ज्योतिष्टोमे श्रूयते 'यदि रथन्तरसामा सोमः स्यात्, ऐन्द्रवायवाग्रान् ग्रहान् गह्णीयात्, यदि बृहत्सामा, शुक्राग्रान्, यदि जगत्सामा आग्रयणाग्रानि' आ. श्रौ.१२-१४-१ति। किमाग्रयणग्रता ज्योतिष्टोमे निविशते? किं वोत्कृष्येतेति संशये, प्रकरणात् ज्योतिष्टोमे स्यात्। जगत्सामशब्देनापि ज्योतिष्टोम एव प्रकरणाद्यथाकथं चिदुच्यत इति प्राप्ते—

ब्रूमः—न जगन्नाम साम ज्योतिष्टोमे, अन्यत्र वा कुत्र चिदस्ति। तेनायमृग्द्वारेण व्यपदेशः। जगत्यामृच्युत्पन्नं साम जगत्साम। तद्यत्र, स जगत्सामा। न च ज्योतिष्टोमे तदस्ति। विद्यते तु विषुवति। तस्माद्विषुवान् जगत्सामा। तत्संयुक्ता चाग्रयणाग्रता प्रकरणादुत्क्रष्टव्या।

इति प्रथमवर्णकं विषुवत्संज्ञिकायांविकृतावाग्रयणाग्रताया निवेशाधिकरणम्।

एवं वा 'यदि जगत्सामा आग्रयणाग्रानि'त्यत्रैव जगत्सामशब्दे सन्देहः— किमनेन ज्योतिष्टोम एव रथन्तरसामा बृहत्सामा वोचयते, किं वा स एवोभयसामा? अथ वा रथन्तरसामैव? उत यत्र जगत्यामुत्पन्नं साम विषुवति, सोऽनेनाभिधीयत इति। प्रकरणात् ज्योतिष्टोम एवान्यतरसामाऽभिधीयते। तथा सति पूर्वाभ्याम ग्रताभ्यामाग्रयणाग्रताया विकल्प एव स्यात्। तस्मादुभयसामा जगत्सामा। जगच्छब्दो हि कृत्स्नवचनः,। कार्त्स्न्यं च समुच्चयेस्यात। तस्मात्समुच्चितोभयसामा जगत्सामा। नैवमपि युक्तम्। एवं हि सति जगत्सामेत्यनर्थकं स्यात्। आग्रयणाग्रान् गृह्णीयादित्येतावतैवोभयसामपक्षेनिवेशसिद्धेः अन्यतरसामत्वपक्षयोः पूर्वाभ्यामग्रताभ्यामवरुद्धत्वात्।

नचोभयसामत्वं ज्योतिष्टोमेऽस्ति,बृहद्रथन्तरयोर्वचनेनैव विकल्पविधानात् । तस्मात् 'ईशानमस्य जगतः स्वर्दृशमि' सा. सं. उ. १-१-११ त्येवं जगच्छब्दवत्यामुत्पन्नं रथन्तरमेव जगत्साम । अतस्तत्साम जगत्सामेति प्राप्ते—

ब्रूमः—पदद्वारेण ऋक, ऋचा च साम लक्षयितव्यं स्यात् । तत्र लक्षितलक्षणा स्यात् । तस्माज्जगत्यामुत्पन्नेन साम्नाऽसौ विषुवानेव जगत्सामा । तदर्थं चाग्रयणाग्रत्वं । पूर्वव्याख्यां नैमित्तिकमाग्रयणाग्रत्वं विचारितं, तद्धेतुत्वेन तु जगत्सामशब्दप्रस्तावः । इह तु स एव साक्षाद्विचारित इति भेदः ।

[ जगत्सामशब्दार्थनिर्वचनरूपं ]

इति पञ्चदशं वर्णकद्वयसहितमधिकरणम् ।

---

संसवे उपवत्यग्रवत्योरभावाधिकरणम् ॥ १६ ॥

उभयसाम्नि; नैमित्तिकं विकल्पेन समत्वात्स्यात् ॥५९॥ मुख्येन वा नियम्यते ॥६०॥ निमित्तविघाताद्वा क्रतुयुक्तस्य कर्म स्यात् ॥६१॥

यत्र बृहद्रथन्तरपृष्ठयोः समुच्चयः संसव-गोसवादिषु । तत्र यत् प्रकृतौ रथन्तरनिमित्तं, बृहन्निमित्तं च 'उपवतीं रथन्तरपृष्ठस्य प्रतिपदं कुर्यात्, अग्रवतीं बृहत्पृष्ठस्ये'त्यादि, तदुभयं विकल्पेन कर्त्तव्यं ? उत रथन्तरनिमित्तम् ? अथवोभयं न कर्त्तव्यमिति संशयः । तत्रोभयसामत्वेऽपि रथन्तरस्य बृहतश्च सद्भावात् सत्तया चोभयोः क्रतुविशेषणत्वादुभयमपि प्राप्तं । समुच्चयासम्भवाद्विशेषाग्रहणाच्च विकल्पः । अथ वा मुख्यत्वाद्रथन्तरनिमित्तमेव स्यादिति प्राप्ते—

ब्रूमः-बृहद्रथन्तरे हि प्रकृतौ निरपेक्षया सत्तया, परस्परव्यवच्छेदेन वा क्रतुं विशिंषती निमित्ततामुपगते, अत्र तूभयोः सहैव क्रतुसम्बन्धात्सापेक्षयोः नान्यतरेणापि क्रतुर्विशेष्यते, तस्मान्निमित्तविघातादकर्त्तव्यम् ।

इति षोडशं संसवे उपवत्यग्रवत्योरभावाधिकरणम् ।

—:०:—

### ऐन्द्रवायवस्य सर्वादावप्रतिकर्षाधिकरणम् ॥ १७ ॥

ऐन्द्रवायवस्याग्रवचनादादितः प्रतिकर्षः स्यात् ॥ ६२ ॥ अपि वा धर्मविशेषात्तद्धर्माणां स्वस्थाने प्रतिप्रकरणादग्रत्वमुच्यते ॥ ६३ ॥ धारासंयोगाच्च ॥ ६४ ॥

ज्योतिष्टोमे उपांश्वन्तर्यामौ अधाराग्रहौ विधाय, 'ऐन्द्रवायव-मैत्रावरुणादीनां धाराग्रहाणामुपक्रमे श्रूयते 'वाग्वा एषा' यदैन्द्रवायवः, यदैन्द्रवायवाग्रा ग्रहा गृह्यन्ते, वाचमेवानुप्रयन्ति 'तै. सं. ६–४–७, 'अण्व्या धारया गृह्णाती' आप श्रौ'ति । तत्र संशयः—किमैन्द्रवायवः सर्वादित उपांश्वन्तर्यामाभ्यामपि पूर्वं ग्रहीतव्यः ? उत पाठप्राप्तस्थान इति ? तदर्थमिदं विचार्यते–किमैन्द्रवायवप्रभृतीनां ग्रहाणामेतद्विधायकं ? उत ग्रहानुवादेनैन्द्रवायवाग्रता धर्मोऽङ्गत्वेन विधीयत इति ? तत्र ग्रहाणां वचनान्तरैरेव प्राप्तत्वात्तदग्रताविधिरयं, तच्चाविशेषेण सर्वग्रहाणामङ्गमुपांश्वन्तर्यामयोरपि संपादयितव्यम् । इतरथा तयोर्वैगुण्यं स्यात् । अतः सर्वादितः प्रतिकर्षः । स्यादेवं, यद्यग्रताविधिः स्यात । ग्रहविधिस्त्वयं । कथं ? धारासंयोगाद्धि धाराग्रहाणामत्र गृह्णातिनोपादानं । तेषां च पाठप्राप्तमैन्द्रवायवाग्रत्वम् । अतो वक्ष्यमाणानामैन्द्रवायवादीनां ग्रहाणां संक्षेपेणायमुपक्रमः । तस्मात्स्वस्थानस्यैवैन्द्रवायवस्य ग्रहणम् ।

इति सप्तदशमैन्द्रवायवस्य सर्वादावप्रतिकर्षाधिकरणम् ।

—:०:—

### कामसंयोगेऽपि ऐन्द्रवायवस्यादावप्रतिकर्षाधिकरणम् ॥ १८ ॥

कामसंयोगे तु वचनादादितः प्रतिकर्षः स्यात् ॥ ६५ ॥ तद्देशानां वाऽग्रसंयोगात्तद्युक्तं कामशास्त्रं स्यान्नित्यसंयोगात् ॥ ६६ ॥

तत्रैव संक्षेपेणोपक्रम्य प्राग्विस्तारवचनेभ्यः कामसंयुक्तानि वचनान्याम्नातानि 'ऐन्द्रवायवाग्रान् गृह्णीयात्, यः कामयेत यथापूर्वं प्रजाः कल्पेरन्नि' तै. सं. ७–२–७ ति । तत्र किं सर्वादितः प्रतिकर्षः, उत तत्रापि स्वस्थान एव ग्रहणमिति । तत्र ग्रहाणां नित्यत्वान्न कामे विधानम् । अतोऽत्रैन्द्रवायवाग्रता गुणः कामाय विधीयत इति, सर्वादितः प्रतिकर्षः ।

नैवं। गुणो हि विधीयमानः प्रकृतान् ग्रहानाश्रित्य विधीयेत। धाराग्रहाश्च प्रकृताः। तेषां च स्वरूपवदैन्द्रवायवाग्रताऽपि पाठादेव प्राप्ता सती-कामे विधातव्या। तद्वरं श्रुत्यर्थविधानाय ग्रहणमेव कामे विहितम्। अतः कामसंयोगेऽपि स्वस्थान एवैन्द्रवायवः।

इत्यष्टादशं कामसंयोगेऽप्यैन्द्रवायवस्यादावप्रतिकर्षाधिकरणम्।

— :०: —

आश्विनाग्रादीनां ग्रहाणां प्रतिकर्षाधिकरणम् ॥ १९ ॥

परेषु चाग्रशब्दः पूर्ववत् स्यात् तदादिषु ॥ ६७ ॥ प्रतिकर्षो वा नित्यार्थेनाग्रस्य तदसंयोगात् ॥ ६८ ॥ प्रतिकर्षश्च दर्शयति ॥६९॥

तत्रैव श्रूयते 'शुक्राग्रान् गृह्णीयात् प्रतिष्ठाकामः, 'मन्थ्यग्रानभिचरन्' तै. सं. ७-२-१२-३ त्यादि। तत्र संशयः—किं शुक्राग्रादीनामपि कामसंयोगे स्वस्थाने ग्रहणम्? उत प्रतिकर्ष इति। तत्र पूर्ववदेव शुक्रप्रभृतीनां नित्यानां ग्रहाणां कामे विधानात्स्वस्थाने प्राप्ते—

उच्यते—न हि प्राकृता धाराग्रहा पाठतः शुक्राग्राः, येन तदनुवादेन ग्रहाणां कामे विधिः स्यात्, ऐन्द्रवायवाग्रा हि ते। तत्र ग्रहान्कामे, ग्रहेषु च शुक्राग्रतां विदधद्वाक्यं भिद्यते। तस्माद्ग्रहणाश्रितः शुक्राग्रतादिगुणः कामाय-विधीयत इति प्रतिकर्षः।

इत्येकोनविंशमाश्विनाग्रादीनां ग्रहाणामप्रतिकर्षाधिकरणम्।



आश्विनादीनां ग्रहाणामैन्द्रवायवस्य पुरस्तात्प्रतिकर्षाधिकरणम् ॥ २० ॥

पुरस्तादैन्द्रवायवस्याग्रस्य कृतदेशत्वात् ॥ ७० ॥ तुल्यधर्मत्वाच्च ॥ ७१ ॥ तथा च लिङ्गदर्शनम् ॥ ७२ ॥

स्थिते प्रतिकर्षे, चिन्त्यते—किं सर्वादितः प्रतिकर्षः? उतैन्द्रवायवात्पूर्वमिति। विशेषाग्रहणात्सर्वग्रहाणां पुरस्ताच्छुक्रोऽपकृष्टव्य इति प्राप्ते—

ब्रूमः—कामाय हि गुणो विधीयमानः प्रकृतान् ग्रहानाश्रित्य विधीयते,

प्रकृताश्च 'यदैन्द्रवायवाग्राग्रहा गृह्यन्ते' इत्यनेन साधारणेनोपक्रमेणोपक्रान्ताः ऐन्द्रवायवाद्या धारा ग्रहा वक्ष्यमाणाः। तेन तानेवाश्रित्य शुक्राग्रता गुणः कामाय विधीयत इति, न सर्वादितः प्रतिकर्षः। इदमेव च वक्ष्यमाणानां ग्रहाणां साधारणोपक्रमस्य प्रयोजनं। कथं नाम सर्व एव वक्ष्यमाणा ग्रहाः काम्यानां गुणानामाश्रयत्वं प्रतिपद्येरन्निति।

इति विंशमाश्विनादीनामैन्द्रवायवस्य पुरस्तात् प्रतिकर्षाधिकरणम्।

---

सादनस्यापि प्रतिकर्षाधिकरणम् ॥ २१ ॥

सादनं चापि शेषत्वात् ॥ ७३ ॥ लिङ्गदर्शनाच्च ॥ ७४ ॥

धाराग्रहाणां पूर्वं पूर्वं गृहीत्वा, सादयित्वा, उत्तरोत्तरस्य ग्रहणं। सर्वेषु च गृहीतेष्वासादितेषु च पश्चात्क्रमेण प्रदानमित्येषा तावन्नित्यक्लृप्तिः। कामाय तु शुक्राग्रादिग्रहणेष्वपकृष्यमाणेषु किं सादनं प्रतिकृष्यते, नेति संशये ? वचनाभावान्न प्रतिकर्ष इति प्राप्ते—

उच्यते—सादनस्यैतत्प्रयोजनं यदुत्तरग्रहाणां साहित्यसम्पादनं। न ह्यनासाद्यैकम्, अपरो ग्रहीतुं शक्यते। तस्माद्ग्रहणशेषत्वात्सादनस्य तत्प्रतिकर्षे प्रतिकर्षः।

इत्येकविंशं सादनस्यापि प्रतिकर्षाधिकरणम्।

---

प्रदानस्यापि प्रतिकर्षाधिकरणम् ॥ २२ ॥

प्रदानं चापि सादनवत् ॥ ७५ ॥ न वा प्रधानत्वाच्छेषत्वात्सादनं तथा ॥ ७६ ॥

तथा प्रदानं किं प्रतिकृष्यते, नेति संदेहे ? प्रदानोपक्रमत्वाद्ग्रहणस्य, तत्प्रतिकर्षे प्रदानस्य प्रतिकर्षः।

नैवं। न ह्यवदानवत्प्रदानोपक्रमो ग्रहणं। सर्वेषु गृहीतेषु पश्चात्प्र-

दानं नित्यक्लृप्ताविस्युक्तं, अवगतस्वरूपं च ग्रहणं कामेऽपि प्रतिकृष्यत इति, न प्रतिकृष्यमाणस्यापि प्रदानोपक्रमत्वम् । तस्मान्न प्रदानापकर्षः ।

इति द्वाविंशं प्रदानस्यापि प्रतिकर्षाधिकरणम् ।

त्र्यनीकानामैन्द्रवायवाग्रतोक्तेः समानविध्यर्थताधिकरणम् ॥ २३ ॥

**त्र्यनीकायां न्यायोक्तेष्वाम्नानं गुणार्थं स्यात् ॥ ७७ ॥ अपि-वाऽहर्गणेष्वग्निवत्समानविधानं स्यात् ॥ ७८ ॥**

द्वादशाहे त्र्यनीकाऽऽम्नाता-'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ दशमं चाहः, अथेतरेषां नवानामन्हामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रं, अथ-आग्रयणाग्रं, अथैन्द्रवायवाग्रं, अथ शुक्राग्रमि'त्यादि । तत्र प्रथमद्वितीययोरन्हो-रैन्द्रवायवाग्रता शुक्राग्रता च श्रुता । सा तयोरथन्तरसामत्वाद्बृहत्साम-त्वाच्च प्रकृतित एव प्राप्ता सती किमर्थं श्रूयत इति चिन्त्यते ? अनुवादमात्र-मित्येकः पक्षः, तथा सत्यानर्थक्यं स्यात्, तस्मादङ्गान्तरपरिसंख्यार्थं । साऽपि त्रिदोषा । तस्मादर्थवादार्थं । तृतीयेऽह्न्याग्रयणाग्रता न्याय्या । पूर्वयोरैन्द्र-वायवाग्रतायाः, शुक्राग्रतायाश्चानुष्ठितत्वादजामित्वायेति—

सिद्धान्तस्तु—प्रकृतौ रथन्तरसामत्वेन, बृहत्सामत्वेन च निमित्ते नैमित्तिके ऐन्द्रवायवाग्रताशुक्राग्रते विहिते । तथैव चोदकेन प्राप्येते । इदं त्वनैमित्तिकार्थं वचनं, तस्य च प्रयोजनं तत्तद्विकृतिष्वसत्यपि रथन्तरबृह-त्सामत्वे ऐन्द्रवायवग्रताशुक्राग्रतयोः सिद्धिः ।

इति त्रयोविंशंत्र्यनीकानामैन्द्रवायवाग्रतोक्तेस्स मानविध्यर्थताधिकरणम् ।

व्यूढद्वादशाहस्य समूढविकारत्वाधिकरणम् ॥ २४ ॥

**द्वादशाहस्य व्यूढसमूढत्वं पृष्ठवत्समानविधानं ॥ ७९ ॥ व्यूढो वा लिङ्गदर्शनात्समूढविकारः ॥ ८० ॥ कामसंयोगात् ॥ ८१ ॥ तस्योभयथा प्रवृत्तिरैककर्म्यात् ॥ ८२ ॥**

ग्रहाग्रताविशेषद्वैविध्यात् द्विविधो द्वादशाहः-समूढः, व्यूढश्च। समूढः-पूर्वोक्तः, व्यूढस्त्वैन्द्रवायवाग्रौ प्रायणीयोदनीयौ, अथेतरेषां दशानामह्नामैन्द्रवायवाग्रं प्रथममहः, अथ शुक्राग्रम्। अथ द्वे आग्रयणाग्रे, अथैन्द्रवायवाग्रम्, अथ द्वे शुक्राग्रे, अथाग्रयणाग्रम्, अथ द्वे ऐन्द्रवायवाग्रे 'इति। तत्र किं द्वे अपि रूपे द्वादशाहस्य नैसर्गिके वैकल्पिके क्रत्वङ्गे? उत समूढमेव नित्यं, व्यूढरूपं तु तस्यैव काम्यो विकार इति। तत्र व्यूढस्याप्यकामसंयुक्तस्योत्पन्नस्य वाक्यान्तरेण कामसंयोगे सत्यति 'एकस्यतू भयत्वे संयोगपृथक्त्वमि' ४-३-३ त्यनेन न्यायेन क्रत्वर्थता, पुरुषार्थता च तस्मात्समूढवद्व्यूढोऽपि क्रत्वर्थः।

उच्यते—न दध्यादिवत् व्यूढस्योभयार्थत्वं युक्तं। तत्र हि दध्नः इन्द्रियसंबन्धं विदधत् वाक्यं लोकतो दधिस्वरूपं, प्रकरणेन चाश्रयसंबन्धं लब्ध्वा, न दध्ना जुहोतीत्येतं दधिविधिमपेक्षते, व्यूढस्वरूपस्य तु लोकतोऽप्रसिद्धेरवश्यं वाक्यान्तरसिद्धैव व्यूढोत्पत्तिः कामवाक्येन फले विधातव्या। अतः प्रत्यक्षेण कामवाक्येन फललाभाद् व्यूढोत्पत्तिवाक्यं न प्रकरणेन क्रत्वङ्गतां भजते। तस्मात्समूढविकारो व्यूढः।

इति चतुर्विंशं व्यूढद्वादशाहस्य समूढद्वादशाहविकारत्वाधिकरणम्।



संवत्सरसत्रेऽनीकानां विवृद्धयाभ्यासाधिकरणम्॥ २५॥

ऐकादशिनवत् त्र्यनीका प्रवृत्तिः स्यात्॥ ८३॥ स्वस्थानविवृद्धिर्ह्नामप्रत्यक्षसङ्ख्यत्वात्॥ ८४॥ पृष्ठ्यावृत्तौ चाग्रयणस्य दर्शनात् त्रयस्त्रिंशे परिवृत्तौ पुनरैन्द्रवायवः स्यात्॥ ८५॥ वचनात्परिवृत्तिरैकादशिनेषु॥ ८६॥ लिङ्गदर्शनाच्च॥ ८७॥

वक्ष्यमाणलिगदर्शनादिसौकर्यार्थमहःक्लृप्तिवर्णनम्।

गवामयने एकषष्ट्याधिकानि त्रीणि शतान्यहानि। अशीतिशतं पूर्वपक्षः, तथोत्तरं, मध्ये विषुवान्। तत्राहः क्लृप्ति "ताण्डकिनः समामनन्ति-'प्रायणीयं प्रथममहः, चतुर्विंशं द्वितीयं, ततश्चत्वारोऽभिप्लवाः षडहाः' 'एकः पृष्ट्यः षडहः। स मासः। स द्वितीयः, स तृतीयः, स चतुर्थः, स पञ्चमः, ततस्त्रयोऽभिप्लवाः षडहाः। एकः पृष्ठयः षडहः। अभिजिन्नामैकाहः।

१—ताण्डिनः—४-५-अध्याययोः २४-२० इत्यत्रास्य विस्तरो द्रष्टव्यः।

त्रयः स्वरसामानः इत्यष्टाविंशतिरहानि, आद्याभ्यामहोभ्यां सह षण्मासाः। 'तदिदं-पूर्वं पक्षः। ततो विषुवान्। अथोत्तरं पक्षः'—त्रयः स्वरसामानः। विश्वजिन्नामैकाहः। पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणः। त्रयोऽभिप्लवाः षडहाः। तान्यष्टाविंशतिरहानि, पुनः षडहस्त्रयस्त्रिंशारम्भणः, चत्वारोऽभिप्लवाः-षडहाः। स मासः, स द्वितीयः, स तृतीयः, स चतुर्थः, ततस्त्रयोऽभिप्लवाः षडहाः। आयुर्गौरिति द्वे अहनी। द्वादशाहस्य दशाहानि, महाव्रतं च, अतिरात्रश्चेति—'द्वात्रिंशदहानि आद्यैरष्टाविंशत्याऽहोभिः सह षण्मासाः' इति।

### भाष्यमतेनाधिकरणवर्णनम्।

तदत्र भाष्यकारेण प्रायणीयोदयनीयमध्यवर्तिनीं द्वादशाहिकीं त्र्यनीकां-चोदकप्राप्तामाश्रित्य विचारितं—किं दण्डकलितवदावर्तनीया? किं वा-नवानामप्यनीकानां स्वे स्वे स्थाने विवृद्धिरिति। तदर्थं च विचारितम्-'ऐन्द्रवायवाग्रं प्रथममहरि'त्यहर्ग्रहणं विवक्षितम्, अतश्च प्रथमादीनामह्नामङ्गभूता ऐन्द्रवायवाग्रत्वादयोऽहरपूर्वप्रयुक्ताः? उत प्रथमादीनां यज्ञभागानां धर्माः परमापूर्वप्रयुक्ता इति। तत्राहर्ग्रहणस्य श्रुतत्वादहर्धर्मत्वं। अतश्च प्रायणीयानन्तरस्याह्नो धर्म ऐन्द्रवायवाग्रता। तदनन्तरस्य शुक्राग्रता, तदनन्तरस्याग्रयणाग्रता। गवामयनेऽपि तथैव प्राप्नोति। नवभिश्चानीकैर्नवस्वहस्सु समनुष्ठितेषु। पुनरैन्द्रवायवाग्रं प्रथममहरित्येतदेवोपतिष्ठते। तथा-ततः परमपि, । तस्माद्दण्डकलितवदावृत्तिरिति प्राप्ते—

सिद्धान्तितम्-उद्दिश्यमानस्य हि प्रथमादेरह्ना विशेषणं न सम्भवति। तस्मात्प्रथममैन्द्रवायवाग्रं, अथ शुक्राग्रमित्येतावद्विवक्षितं, नवानां चानीकानां नवधा विभागः। गवामयनेऽपि पूर्वं पक्षो नवधा विभज्य, प्रथमादिभागेषु नवस्वैन्द्रवायवाग्रतादीनां नवानामनीकानामनुष्ठानं कर्त्तव्यमिति स्वस्थानविवृद्धिः सिद्धा भवति। एवं च कृत्वा, उत्तरे पक्षसि पञ्चमे षाडहिके त्रयस्त्रिंशेऽहन्याग्रयणाग्रतादर्शनमुपपन्नं भवति। 'जगन्तीं वै छन्दांसि प्रत्यवरोहन्ति, आग्रयणं वै ग्रहाः, बृहत्पृष्ठानि' त्रयस्त्रिंशं स्तोमाः 'इति दण्डकलितवदावृत्तावभिप्लवादारभ्य नवकैरहस्सु सङ्कल्प्यमानेषु, उत्तरस्मिन्नपि पक्षसि एकमहर्व्याप्य त्र्यनीका समाप्यते। ततः पुनरैन्द्रवायवाग्रत्वादारभ्याऽनुष्ठीयमाने द्वितीयमहरैन्द्रवायवाग्रं, तृतीयं शुक्राग्रं, विश्वजिदाग्रयणाग्रम्, त्रयस्त्रिंशमहरैन्द्रवायवाग्रं प्राप्नोति। स्वस्थानविवृद्धौ पुनः पूर्वस्मिन्पक्षसि नवधा विभक्ते-नवमे भागे आग्रयणाग्रतायामनुष्ठितायाम्, उत्तरे पक्षस्यावृत्ते प्रातिलोम्येन

प्रथमभागे आग्रयणाग्रता भवति। तदन्तर्गतं च त्रयस्त्रिंशमहरिति, तत्र आग्रयणाग्रतादर्शनमुपपन्नं भवति—इति।

### भाष्यकारीये सिद्धान्ते दोषवर्णनम्।

तदिदं भाष्यकारीयमधिकरणव्याख्यानं, लिङ्गोपवर्णनञ्चानुपपन्नं। न ह्यत्र चोदकेन त्र्यनीका प्राप्यते। अभिप्लवेषु हि 'ज्योतिर्गौरायुरि'ति नामधेयैरेकाहज्योतिरादिधर्मप्राप्तिः। एकाहेषु च रथन्तरसामस्वैन्द्रवायवाग्रता, बृहत्सामसु च शुक्राग्रता। तेनाभिप्लवेऽपि षडहे प्रथम-तृतीय-पञ्चमानां रथन्तरसामत्वादैन्द्रवायवाग्रता, द्वितीय-चतुर्थ-षष्ठानां बृहत्सामत्वाच्छुक्राग्रता 'न तु त्र्यनीकाप्राप्तिः। चोदकादपि बलीयो नामधेयमित्युक्तं।[1] बहुशोऽभिप्लवविकाराण्येव गवामयनेऽहानि। तेन न त्र्यनीका स्यात्।

अस्तु वा चोदकेन त्र्यनीकाप्राप्तिः, तथाऽपि नवधा विभागो न युक्तः। न हि द्वादशाहे प्रायणीयोदयनीययोरन्तरालं नवभिरनीकैः पूरितं, किन्तु दशभिः। दशमे चैन्द्रवायवाग्रता 'ऐन्द्रवायवाग्रौ प्रायणीयोदयनीयौ, दशमं चाऽहरि'ति वचनात्। अतश्च गवामयनेऽपि सर्वस्मिन्पक्षसि दशधा विभज्यमाने, दशमो भागः-ऐन्द्रवायवाग्रः स्यात्। उत्तरस्मिंश्च पक्षसि प्रातिलोम्येनानुष्ठीयमाने प्रथमो भाग ऐन्द्रवायवाग्रः स्यात्। तदन्तर्गतं च 'त्रयस्त्रिंशमहरि'ति, तत्राप्यैन्द्रवायवाग्रताप्राप्तेराग्रयणाग्रताऽनुपपत्तिः—सिद्धान्तेऽपि स्यात्। अपि च पूर्वपक्षे त्वहर्धर्मत्वात् त्र्यनीकायां गवामयनिके च पृष्ठ्यषडहे नामधेयेन द्वादशाहिकपृष्ठ्यषडहधर्मप्राप्तेस्तत्र च त्रयस्त्रिंशस्याह्न आग्रयणाग्रत्वात, इहापि यत्र क्वचिदवस्थितस्यापि त्रयस्त्रिंशस्याग्रयणाग्रता भवतीति विपरीतं लिङ्गम्। अन्यानि च दूषणानि तन्त्ररत्न एव दर्शितानीति, नेह प्रपञ्च्यन्ते।

### वार्तिकमतेनाधिकरणवर्णनम्।

तस्माद्यथावार्तिकमधिकरणं वर्ण्यते। सत्यं। न चोदकेन त्र्यनीका प्राप्यते, प्रत्यक्षेण तु वचनेन त्र्यनीका विधीयते। 'ऐन्द्रवायवाग्रं प्रथममहः' अथ शुक्राग्रम्, अथाग्रयणाग्रम्, अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम्, अथाग्रयणाग्रमि'ति। तत्र संशयः—किमेते दण्डकलितवदावर्तनीया ? उत नवधा विभज्य नवस्वपि भागेषु नवानामनीकानां निवेश इति। तत्र प्रथममहरिति वचनादुत्तरेष्वप्यहर्ग्रहणस्यानुषङ्गात्प्रथमादन्हः आरभ्यान्तादैन्द्रवायवशुक्राग्रयणानां-

१. उक्तमिति—सप्तमान्त्ये इति शेषः।

व्यतिषङ्गेणाग्रत्वमनेन वचनेन विधीयते। ऐन्द्रवायवाग्रता, शुक्राग्रता, आग्रयणाग्रतेति त्रिष्वहस्सु तथा। परेष्वपि त्रिषु तथा, परेष्वपि, एवमान्तात्कुर्यादिति वचनार्थं मन्यते पूर्वपक्षवादी।

सिद्धान्तस्तु—उद्दिश्यमानस्य भागस्य, अह्नो वा प्राथम्येन विशेषणासम्भवात्प्रथममहरिति चोद्देश्यं। तत्राहरुद्देशेऽहर्मात्रोद्देशात्, अथेति निर्देशानुपपत्तिः। तस्मात्प्रथमनैन्द्रवायवाग्रम्, अथ शुक्राग्रमि'त्येतावद्विवक्षितम्, अहर्ग्रहणं त्वहःसङ्घाते। तस्मात्प्रथमादीनां भागानां धर्माः नवानां चाग्रतानां विधानान्नवधा विभागः। गवामयने च धर्मा विधीयमाना अवान्तरप्रकरणेन पूर्वस्मिन्पक्षसि निविशन्ते। अतश्च पूर्वं पक्षो नवधा विभज्य नवाप्यनीकानि निवेशनीयानि। तत्र चान्त्ये भागे आग्रयणाग्रता भवति। उत्तरस्मिंश्च पक्षसि यत्पूर्वस्मिन्पक्षसि विहितं, तत् प्रातिलोम्येनानुष्ठेयं। ततश्च प्रथमे भाग आग्रयणाग्रता भवति। तदन्तर्गतं च पार्ष्ठिकं 'त्रयस्त्रिंशमहरि'ति, तत्राग्रयणाग्रत्वदर्शनमुपपद्यते।

दण्डकलितवदावृत्तौ त्वाद्ये द्वे अहनी वर्जयित्वा, त्र्यनीका प्रारब्धव्या। तयोरैन्द्रवायवाग्रताया आहत्य विधानात्। आदितो ह्यारभ्यमाणा सा द्वितीये अहनि आहत्य चोदितेनैन्द्रवायवाग्रत्वेन विरुद्ध्येत। तस्माद द्वे अहनी वर्जयित्वाऽभिप्लवादिकात्प्रथमादन्हस्त्रिवृत आरभ्य प्रवर्तते। ततश्च पूर्वस्मिन्पक्षस्यन्तिमे पर्याये सप्तानामन्हां परिशेषादसमाप्तैव त्र्यनीका विषुवन्तमुत्तरस्मिंश्च पक्षस्यैकमहर्व्याप्य समाप्यते। ततश्चासौ पूर्वस्मिन्पक्षसि साकल्येनासम्भवन्ती सामर्थ्यात्मकेन लिङ्गेन अवान्तरप्रकरणं बाधित्वा महाप्रकरणेन गवामयनस्य विधीयमाना न पूर्वस्य पक्षसो विहितेति शक्यं वक्तुं। यच्च पूर्वस्य पक्षसो विहितं, तस्योत्तरस्मिन्प्रातिलोम्यमिति, न त्र्यनीकायाः प्रातिलोम्यमित्यानुलोम्येनैवासावान्तात्प्रवर्तत इति, त्रयस्त्रिंशेऽहन्यैन्द्रवायवाग्रत्वप्रसङ्गादाग्रयणाग्रताऽनुपपत्तिः। सिद्धान्ते त्वविरोधादादित आरभ्य प्रवर्तते। उत्तरे च पक्षसि प्रातिलोम्यं लभत इत्युपपन्नं लिङ्गम्।

इति पञ्चविंशं गवामयने त्र्यनीकाविवृद्ध्याऽभ्यासाधिकरणम्।

---

## व्यूढे मन्त्राणां छन्दोव्यतिक्रमाधिकरणम् ॥ २६ ॥

**छन्दोव्यतिक्रमाद् व्यूढे; भक्षपवमानपरिधिकपालमन्त्राणां यथोत्पत्तिवचनमूहवत्स्यात् ॥ ८८ ॥**

व्यूढात्मके द्वादशाहे छन्दोव्यतिक्रम आम्नातः 'छन्दांसि वा अन्योन्यस्य लोकमभ्यध्यायन् 'गायत्रीत्रिष्टुभा, त्रिष्टुब्जगत्या, जगती गायत्र्या' तां ब्रा. १०-५-१३ इति। तत्र संशयः-किं भक्षाणां, पवमानानां, परिधीनां कपालानाञ्च मन्त्रार्थवादेषु गायत्रादिशब्दैरभिलपितानां मन्त्राणाम्, अर्थानां च छन्दांस्यतिक्रमयितव्यानि ? उत मन्त्रगतानामेव छन्दसां व्यतिक्रम इति ? विशेषाभावात्। सर्वेष्वर्थेषु मन्त्रेषु च छन्दोव्यतिक्रमः, तेन गायत्रशब्दनिर्दिष्टः प्रातःसवनीयो भक्षः त्रैष्टुभशब्दितस्य माध्यन्दिनीयस्य भक्षस्य स्थाने माध्यन्दिने सवने कर्त्तव्यः। माध्यन्दिनीयश्च जागतशब्दितस्य तार्तीयसवनीकस्य स्थाने तृतीयसवने, तार्तीयसवनिकश्च प्रातःसवने, तथा बहिष्पवमानो माध्यन्दिने, माध्यन्दिनपवमानस्तृतीयसवने, आर्भवःपवमानः प्रातः सवने। तथा-मध्यमः परिधिः स्थविष्ठो दक्षिणस्य स्थाने, दक्षिणश्चाणीयानुत्तरस्य, उत्तरश्चाणिष्ठो मध्यमस्थाने परिधातव्यः। तथा-अष्टाकपालो माध्यन्दिने, एकादशकपालस्तृतीयसवने, द्वादशकपालश्च प्रातःसवने कर्त्तव्यः। तथा मन्त्रगता गायत्रादिशब्दाः 'श्येनोऽसि गायत्रच्छन्दाः' तै. सं. ३-२-१ इत्यादयस्त्रिष्टुबादिशब्दानां, 'सुपर्णोऽसि त्रिष्टुप्छन्दाः' इत्यादीनां स्थाने 'सुपर्णोऽसि गायत्रच्छन्दा इत्येवमूहितव्या इति प्राप्ते—

ब्रूमः-मन्त्रगतानामेव व्यतिक्रमः नार्थानां। न हि तेषां गायत्रादिशब्दवत्त्वमस्ति। स्तुतिमात्रं तु तेषु गायत्र्यादिभिः निर्देशः। शक्यते त्वेकस्मिन्त्रे प्रकाशितं छन्दो मन्त्रान्तरे गायत्रादिशब्दप्रक्षेपेण प्रकाशयितुं। तस्मान्मन्त्रगतानामेव छन्दसां व्यतिक्रमः।

इति षड्विंशं व्यूढे मन्त्राणां छन्दोव्यतिकमाधिकरणम्।

---

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां-
दशमाध्यायस्य पञ्चमः पादः।

---

## अथ दशमाध्यायस्य षष्ठः पादः

रथन्तरादीनां साम्नां तृचे गानाधिकरणम् ॥ १ ॥

**एकर्चस्थानानि यज्ञे स्युः स्वाध्यायवत् ॥ १ ॥ तृचे वा लिङ्ग-दर्शनात् ॥ २ ॥**

सन्ति ज्योतिष्टोमे रथन्तरादीनि स्तोत्रीयाणि सामानि । तानि किमेकैकस्यामृचि गेयानि ? उत तृच इति संशये ? स्वाध्यायवेलायामेकस्यामृचि गीतत्वात् तदवैलक्षण्याय यज्ञेऽप्येकस्यां भवेयुः, 'एकं साम तृचे क्रियते' इति तु वर्तमाननिर्देशसरूपं न विधिक्षममित्येतावान्पूर्वः पक्षः ।

'ऋक् सा वाचे' तै. सं. ६-१-३ त्याद्यर्थवादविभावितविधिशक्तेः, एकं साम तृचे क्रियतः इति वचनात्तृचे गातव्यानीति सिद्धान्तः ।

इति प्रथमं रथन्तरादीनां साम्नां तृचे गानाधिकरणम् ।



स्वर्दृक्शब्देन वीक्षणस्य कालार्थताधिकरणम् ॥ २ ॥

**स्वर्दृशं प्रति वीक्षणं कालमात्रं परार्थत्वात् ॥ ३ ॥**

'रथन्तरे प्रस्तूयमाने संमीलयेदि' ति विधाय श्रूयते 'स्वर्दृशं प्रतिवीक्षेते' ता. ब्रा. ८-८-१५ ति । तत्र सन्देहः–किं स्वर्दृक्च्छब्दस्य वीक्षणस्य च कालार्थः संयोगः ? उताङ्गाङ्गिसम्बन्ध इति । तत्र कालार्थत्वे स्वर्दृक्च्छब्दस्य लक्षणाप्रसङ्गादङ्गाङ्गिसम्बन्ध एव न्याय्यः । स्वर्दृक्च्छब्दो वा वीक्षणाङ्गं-स्वर्दृक्च्छब्दं समुच्चारयन् वीक्षेत, नान्यथेति । वीक्षणं वा स्वर्दृक्च्छब्दस्याङ्गं वीक्षमाणः स्वर्दृक्च्छब्दमुच्चारयेन्नान्यथेति प्राप्ते—

ब्रूमः–अनपेक्षितसम्बन्धाद् वाक्यभेदप्रसङ्गतः ।
न युक्तोऽङ्गाङ्गिसम्बन्धस्तस्मात्कालार्थता वरम् ॥ ३६ ॥

अभिवत्येकदेशो हि स्वर्दृक्च्छब्दः पृष्ठस्तुत्यर्थत्वान्न वीक्षणं प्रयोजनमपेक्षते । स्वर्दृक्च्छब्दः कर्तृवचनत्वाद् द्वितीयान्तत्वाच्च'नो नुमः' इत्यनेन

सम्बध्यमानः स्तुतिमेवालमभिनिर्वर्तयितुं, न वीक्षणं प्रकाशयितुं। तथा-वीक्षणमपि रागप्राप्तं दृष्टेनैव प्रयोजनेन निराकाङ्क्षं न स्वर्द्दृक्शब्दतया-विधातव्यं, सम्मीलनविधिना चावधिप्रतिपयादनेनैकार्थ्यसम्भवान्न वाक्यान्तर-त्वमवकल्पते। प्रतिशब्दश्च स्वर्द्दृक्शब्दस्य श्रुत्यैव लक्षणतामाचष्टे। अतः काललक्षणैव न्याय्या। तेनायमर्थः-रथन्तरे प्रस्तूयमाने संमीलयेदास्वर्द्दृक्च्छब्दोच्चारणात्, तस्मिंस्तु काले वीक्षेतेति।

इति द्वितीयं स्वर्द्दृक्च्छब्देन वीक्षणस्य कालार्थताधिकरणम्।



गवामयनिके पृष्ठ्यषडहे बृहद्रथन्तरयोर्विभागाधिकरणम्।

पृष्ट्यस्य युगपद्विधेरेकाहवद्‌द्विसामत्वम् ॥४॥ विभक्ते वाऽसमस्त विधानात् तद्विभागेऽप्रतिपिद्धम् ॥ ५ ॥

द्वादशाहे पृष्ठ्यः षडह उत्पन्नः। तत्र षण्णामप्यन्हां क्रमेण रथन्तरबृहत्-वैरूप-वैराज-शाक्वर-रैवतानि पृष्ठसामानि। गवामयनादिषु श्रूयते 'पृष्ठ्यः षडहो बृहद्रथन्तरसामा कार्यः' इति। तेन वैरूपादिकं निवर्त्तते बृहद्रथन्त-राभ्यामेव पृष्ठस्तुतिर्निर्वर्तयितव्या। तत्र संशयः—किमेकैकस्मिन्नहनि द्वे द्वे स्याताम्? उत क्वचित् बृहत् कक्वचिद्रथन्तरमिति। तदर्थमिदं विचार्यते-किं बृहद्रथन्तरसामेति द्वन्द्वगर्भो बहुव्रीहिः, बृहच्च रथन्तरञ्च बृहद्रथन्तरे इति प्रथमं द्वन्द्वं कृत्वा पश्चादबृहद्रथन्तरे सामनी अस्येत्यन्यपदार्थो बहुव्रीहिः, उताकृत्वैव द्वन्द्वम्,अनेकपदबहुव्रीहिः, बृहच्च रथन्तरं च सामास्येति तत्र 'द्वन्द्व-तत्पुरुषयोरुत्तरपदे नित्यसमासवचनमि' का. वा. २-१-५१ ति कात्यायन-वचनादेवं विषये द्वंद्वस्य नित्यत्वात्, कृत्वैव द्वन्द्वं, बहुव्रीहिः। तेनेतरेतरयुक्तयोः सम्नोः षडहसम्बन्धाद्यत्रैकं प्रयोक्तव्यं, तत्रेतरेतरसहितमेव कार्यमित्येवम-वगमादेकैकमेवाहो बृहद्रथन्तरसामकं कार्यमिति प्राप्ते—

ब्रूमः—क्वचित्किञ्चित्स्यात्। एवमेकैकस्येतरेतरनिरपेक्षस्य प्राप-कश्चोदकोऽनुगृहीतो भवति। न च वचनविरोधः। यद्यपि तावद् द्वन्द्वगर्भो बहुव्रीहिः स्यात्, तथाऽपि षडहापेक्ष एवेतरेतरयोगो द्वन्द्वेनावगम्यते, न षड-हावयवापेक्षः। षडहापेक्षश्चेतररेतरयोगः क्वचित्कस्यचिन्निवेशेऽपि न विरुध्यते। स च यदि विभागेन निवेशे प्रमाणं न स्यात्, ततः सर्वत्रेतरेतर-

योगः स्यात्, अविशेषात् । अस्ति तु प्रमाणं चोदकः। तस्मादेकस्मिन्नहन्येकम्, इतरस्मिंश्चेतरत्प्रयोक्तव्यं । न चाऽवश्यं द्वन्द्वगर्भोऽयं बहुव्रीहिः । विभाषा-वचने न द्वन्द्वस्यानित्यत्वात् । कात्यायनीयं तु वचनं शब्दानुशासनपरत्वाद्यत्र सतोर्द्वन्द्वतत्पुरुषयोरन्यशब्दरूपम्, असतोश्चान्यद्भवति । तत्र समासकृतरूप-नियमार्थं तत्, यथा—वाक्त्वचप्रियः, पञ्चगवधन इत्यत्र द्वन्द्वतत्पुरुषयोरकरणे वाक्त्वक्प्रियः पञ्चगोधन इति अकृत्वाऽपि समासान्तं प्रयोगः प्रसज्येत । तद्व्यावृत्त्यर्थं नित्यं समासवचनं । बृहद्रथन्तरसामेत्यादिषु तु द्वेधाऽपि स्वरूप-स्याभेदात्, न्यायतोऽर्थो निर्णेतव्य इति, प्रत्येकप्राप्तिचोदकानुग्रहायानेकपद-बहुव्रीह्याश्रयणं । तस्मात्क्वचित्किञ्चित्प्रयोक्तव्यं, न प्रत्यहं द्वे द्वे स्याताम् ।

इति तृतीयं गवामयने पृष्ट्यषडहे बृहद्रथन्तरयोर्विभागाधिकरणम् ।

प्रायणीयोदनीययोरैकादशिनानां विभागाधिकरणम् ॥ ४ ॥

समासस्त्वैकादशिनेषु तत्प्रकृतित्वात् ॥ ६ ॥ विहारप्रतिषेधाच्च ॥७॥ श्रुतितो वा लोकवद्विभागः स्यात् ॥८॥ विहारप्रकृतित्वाच्च॥९॥ यावच्छक्यं तावद्विहारस्यानुग्रहीतव्यं; विशये च तदासत्तेः ॥ १० ॥ त्रयस्तथेति चेत् ॥ ११ ॥ न समत्वात्प्रयोजवत् ॥ १२ ॥

द्वादशाहे श्रूयते 'ऐकादशिनान् प्रायणीयोदयनीययोरतिरात्रयोरालभे-रन्नि'ति । तत्र किं 'सर्वे प्रायणीये' सर्वे चोदयनीये आलब्धव्याः 'उत विभज्य केचित्प्रायणीये, केचिच्चोदयनीये इति संशये । प्रायणीयोदयनीययोः प्रधान-त्वेनोद्देश्यत्वात्, द्वन्द्वावगतसाहित्यस्याविवक्षितत्वात् प्रतिप्रधानमैकादशिनाः आलब्धव्या इति प्राप्ते—

ब्रूमः—द्वादशाहप्रकरणे प्रागेव वचनान्तरेणैकादशिनी विहिता, प्रकरणाद् द्वादशाहाङ्गत्वेनावगता साऽनुष्ठातव्या सती क्व प्रदेश आलब्ध-व्येत्यपेक्षायां देशविधित्सायां प्रायणीयोदयनीयौ श्रूयेते, न प्रधानतया । द्वादशाहस्य प्रधानस्यावगमात्, देशश्चाङ्गं । न च प्रत्यङ्गमावर्तते प्रधानं । तस्माद्विभाज्यालम्भः ।

इति चतुर्थं प्रायणीयोदयनीययोरैकादशिनानां विभागाधिकरणम् ।

विश्वजित् सर्वपृष्ठ इत्यत्रैकस्येव पृष्ठदेशे निदेशाधिकरणम् ॥ ५ ॥

सर्वपृष्ठे पृष्ठशब्दात्तेषां स्यादेकदेशत्वं पृष्ठस्य कृतदेशत्वात् ॥१३॥ विधेस्तु विप्रकर्षः स्यात् ॥ १४ ॥

'विश्वजित्सर्वपृष्ठो भवती'ति श्रूयते—तत्र षाडहिकानां रथन्तरादिपृष्ठानां विधिरिति स्थितं सप्तमे। तत्र संशयः—किं षण्णामपि साम्नां पृष्ठस्तुतिसाधनत्वं, ततश्च पृष्ठदेशे माध्यन्दिनपवमानः-मैत्रावरुणसाम्नोः-मध्ये निवेशः, उत वैरूपस्यैव तत्साधनत्वेन तत्र विनिवेशः, अन्येषां स्तोत्रान्तरसाधनत्वेन तत्तद्देशे प्रयोग इति। तत्र षडहे तेषां पृष्ठसाधनत्वेनेहापि पृष्ठशब्देन तत्साधनत्वावगमात्पृष्ठदेश एव प्रयोगः सर्वेषामिति प्राप्ते—

ब्रूमः—रथन्तरं वहिष्पवमाने कुर्यात्, आर्भवे बृहत् 'मध्यत इतराणि' वैरूपं होतुः पृष्ठे इत्यादिवचनाद्वैरूपस्यैव पृष्ठसाधनत्वम्। इतराणि स्तोत्रान्तरसाधनानि। न च पृष्ठस्तुतौ प्रयुक्तानामेव पुनर्वचनात्स्तोत्रान्तरेऽपि प्रयोगोऽस्त्विति वाच्यं। वैरूपस्य पृष्ठे विधेरानर्थक्यप्रसङ्गात्। किं च सर्वपृष्ठशब्देन लक्षणया पृष्ठसाधनभूतानि रथन्तरादीनि सामानि षाडहिकानि विधीयन्ते, स्तुतेर्बहुत्वाभावेन सर्वशब्दविषयत्वासम्भवात्, तेषां च साम्नामिहातिदिष्टानां कार्याकाङ्क्षिणां वाचनिकैरेव कार्यैरुपपत्तौ, को नाम सर्वेषां पृष्ठसाधनत्वं कल्पयेत्। तस्माद्विभज्यैव निवेशः।

इति पञ्चमं सर्वपृष्ठे देशविशेषेसाम्नां व्यवस्थाधिकरणम्।

---

वैरूपसाम-वैराजसाम्नोः पृष्ठकार्ये निवेशाधिकरणम् ॥ ६ ॥

वैरूपसामा क्रतुसंयोगात्त्रिवृद्वदेकसामा स्यात् ॥ १५ ॥ पृष्ठार्थे वा प्रकृतिलिङ्गसंयोगात् ॥१६॥ त्रिवृद्वदिति चेत् ॥ १७ ॥ न प्रकृतावकृत्स्नसंयोगात् ॥१८॥ विधित्वान्नेति चेत् ॥ १९ ॥ न स्याद्विशये तन्न्यायत्वात्कर्माविभागात् ॥ २० ॥ प्रकृतेश्चाविकारात् ॥ २१ ॥

'उक्थ्यो वैरूपसामा, एकविंशः षोडशी वैराजसामे'त्यत्र किं-वैरूपवैराजयोः साम्नोः सर्वेषु सामकार्येषु निवेशः, उत पृष्ठस्तुतावेवे ति संशये? विशेषाग्रहणात्सर्वेष्विति प्राप्ते—

प्रकृतावेवंविधस्य निर्देशस्य रथन्तरसामा बृहत्सामा, वेति पृष्ठविषये दृष्टत्वात्, इहापि तेन प्रकृतिलिङ्गेन पृष्ठस्तुतेर्बुद्धावारोहात् तद्द्वारेण च साम्नोः क्रतुसम्बन्धोपपत्तेः पृष्ठसाधनस्यैव रथन्तरादेर्विकारो वैरूपादिः ।

इति षष्ठं वैरूप-वैराजसाम्नोः पृष्ठकार्ये निवेशाधिकरणम् ।



त्रिवृदग्निरग्निष्टुदष्टोमः इत्यत्र स्तोमगतसंख्याविकाराधिकरणम् ॥ ७ ॥

त्रिवृति सङ्ख्यात्वेन सर्वसङ्ख्याविकारः स्यात् ॥२२॥ स्तोमस्य वा तल्लिङ्गत्वात् ॥ २३ ॥

'त्रिवृदग्निष्टदग्निष्टोमः' तां.ब्रा. १७-६-१ इति श्रूयते । त्रिवृच्छब्दोऽयं त्रैगुण्यवचनो लोके त्रिवृद्रज्जुरित्यादौ, वेदे च 'रशना त्रिवृद्भवती'ति प्रयोगादवगतः । स्तोत्रीयानवकवचनोऽपि वेदे अवगतः 'त्रिवृद्बहिष्पवमानमि'त्युक्त्वा स्तोत्रीयाणां नवानामनुक्रमणात् । तदेवमुभयार्थत्वे सति, यत्र 'त्रिवृदग्निष्टुदि'त्यादौ वाक्यशेषादर्थविशेषो नावगम्यते, तत्र विचार्यते, किं त्रैगुण्यवचनः सन् सर्वेषां क्रतुसाधनानां सङ्ख्याविकारः? उत स्तोत्रीयानवकवचनः सन् स्तोमस्यैव विकार इति । तत्र शास्त्रस्य महाविषयत्वलिप्सया सर्वद्रव्याणां त्रैगुण्यविधिरिति प्राप्ते—

ब्रूमः—त्रैगुण्यं ह्यसौ ब्रुवन्नवयवप्रसिद्ध्या ब्रूयात् । रूढ्या च स्तोत्रीयानवकं । सा च बलीयसी । तस्मात्स्तोत्रीयासङ्ख्याविकारस्त्रिवृत्त्वम् ।

इति सप्तमं त्रिवृति स्तोमगतसंख्याविकाराधिकरणम् ।

—:०:—

उभयसाम्नि बृहद्रथन्तरयोः समुच्चयाधिकरणम् ॥ ८ ॥

उभयसाम्नि विश्वजिद्वद्विभागः स्यात् ॥ २४ ॥ पृष्ठार्थे वाऽतदर्थत्वात् ॥ २५ ॥ लिङ्गदर्शनाच्च ॥ २६ ॥

यत्र संसवादौ 'उभे बृहद्रथन्तरे भवतः'तां.ब्रा.१९-८-२ इति श्रुतं । तत्र-किमुभयोः पृष्ठसाधनत्वम्? उतैकेन पृष्टं, इतरेण स्तोत्रान्तरं साधयितव्य-

मिति संशये, चोदकेन वैकल्पिकपृष्ठप्राप्तेस्तदनुग्रहार्थैकमेव पृष्ठसाधनं, इतरत्तु साम विश्वजिद्वत स्तोत्रान्तरेऽपि स्यात् ।

नैवं । विश्वजिति वाचनिकः कार्यान्तरे निवेशः, न त्विह तादृग्वचनमस्ति । येन कार्यान्तरे निवेशः स्यात् । तेन विकल्पेन प्राप्तयोः पृष्ठयोः समुच्चयमात्रं वचनेन क्रियते । चोदकबाधस्तु स्तोत्रान्तरसाधनत्वेऽपि तुल्यः, तस्मात्पृष्ठ एव निवेशः ।

इत्यष्टममुभयसाम्नि बृहद्रथन्तरयोस्समुच्चयाधिकरणम् ।

मध्वशन–घृताशनयोः षडहान्तेऽनुष्ठानाधिकरणम् ॥ ९ ॥

**पृष्ठे रसभोजनमावृत्तसंस्थिते त्रयस्त्रिंशेऽहनि स्यात्तदानन्तर्यात् प्रकृतिवत् ॥ २७ ॥ अन्ते वा कृतकालत्वात् ॥ २८ ॥**

द्वादशाहे 'त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, स्त्रिणवः,त्रयस्त्रिंशः' इति षडहं विधाय श्रूयते' संस्थिते पृष्ठ्ये षडहे, मध्वाशयेत्, घृतं वै तां. ब्रा. १३-१२-१५ ति । गवामयनादिषु पृष्ठ्यषडहस्य प्रातिलोम्यं विहितं 'पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणस्त्रिवृदुत्तमः कार्यः' इति । तत्र किं त्रयस्त्रिंशेऽहनि संस्थिते मध्वशनं ? उत षडहान्त इति । तत्र त्रयस्त्रिंशेऽहनि प्रकृताावनुष्ठितत्वात्तदङ्गं मध्वशनं मन्वानः पूर्वानुष्ठिते त्रयस्त्रिंशे तदन्त एव मध्वशनंमन्यते ।

सिद्धान्तस्तु—द्वादशाहाङ्गता ह्यस्य गम्यते प्रक्रियावशात् ।
वाक्याद्वा षडहाङ्गत्वं त्रयस्त्रिंशाङ्गता क्रमात् ॥ ३८ ॥

अनुष्ठानसंनिधिलक्षणेन हि क्रमेण त्रयस्त्रिंशाङ्गता मध्वशनस्य स्यात् । प्रकरणात्तु द्वादशाहाङ्गत्वं, षडहाङ्गत्वं समभिव्याहाराद्वा । तत्र सत्यपि संस्थाशब्दे वैमृधवत्पौर्णमास्यां षडहस्यैवाङ्गं षडहावसाने च विधीयते, न त्रयस्त्रिंशावसाने । तस्मात् षडहान्ते स्यात् ।

इति नवमं मध्वशन–घृताशनयोः षडहान्तेऽनुष्ठानाधिकरणम् ।

षडहावृत्तावपि मध्वशन-घृताशनयोः सकृदनुष्ठानाधिकरणम् ॥ १० ॥

अभ्यासे च तदभ्यासः कर्मणः पुनः प्रयोगात् ॥ २९ ॥ अन्ते-वा कृतकालत्वात् ॥ ३० ॥

यत्र षडहस्य पुनः प्रयोगः, तत्र किं मध्वशनस्य पुनः प्रयोगः ? उत सर्वाभ्यासान्ते सकृदिति संशये, षडहाङ्गत्वात्, आवृत्तावावृत्तिः। षडहसंस्थायाश्च पुनः पुनर्भावात्तन्निमित्तं मध्वशनमावर्तनीयम्।

नैवं। संस्था नाम तद्विषयव्यापारोपरमः। पुनः प्रवर्त्तमानस्य च नोपरमोऽस्ति। तस्मात्सत्यप्यङ्गत्वे निमित्ताभावान्नावृत्तिः। अङ्गत्वनिराकरणं तु भाष्येऽतिशयोक्तमिति, नातीवादर्त्तव्यम्।

इति दशमं षडहावृत्तावपि मध्वशन-घताशनयोस्सकृदनुष्टानाधिकरणम्।

गवामयने मध्वशन-घृताशनयोः प्रतिमासमावृत्त्यधिकरणम् ॥ ११ ॥

आवृतस्तु व्यवाये कालभेदात् ॥ ३१ ॥

यत्र गवामयनादावभिप्लवादिभिर्व्यवेतस्य षडहस्याभ्यासाः, तत्रापि किं सर्वान्ते मध्वशनम् ? उत प्रत्यभ्यासमिति। पूर्वेण न्यायेन सर्वान्ते-इति प्राप्ते—

उच्यते—अत्र षडहादुपरम्यैवाभिप्लवादिषु व्याप्रियते, न तु पूर्ववदनुपरमः। तस्मान्निमित्तभूतसंस्थावृत्तेर्नैमित्तिकस्य मध्वशनस्यावृत्तिः।

इत्येकादशं गवामयने मध्वशन-घृताशनयोः प्रतिमासमावृत्त्यधिकरणम्।

—:०:—

द्वादशाहे सत्रिभिरपि मध्वशनाधिकरणम् ॥ १२ ॥

मधु न दीक्षिता ब्रह्मचारित्वात् ॥ ३२ ॥ प्राश्येत वा यज्ञार्थत्वात् ॥ ३३ ॥

सत्रम्, अहीनश्च द्वादशाहः। तत्र सत्रे मध्वशनं कर्त्तव्यं, नेति सन्देहे, यजमानानामेव सत्रे दीक्षितानामृत्विक्त्वात्, दीक्षितस्य च ब्रह्मचर्यविधानात्, ब्रह्मचारिणश्च मधुप्रतिषेधान्न कर्त्तव्यं सत्रे मध्वशनं। न च वैगुण्यं,

घृताशनेन साद्गुण्यसम्भवात्। मध्वशनं चाहीनविषयं भविष्यतीति प्राप्ते—अभिधीयते—यस्तावत्प्रतिपदोक्तो मध्वशनप्रतिषेधो ब्रह्मचारिणः, स तु पुरुषार्थो न क्रत्वर्थं मध्वशनं बाधितुमर्हति, विषयभेदात्। यस्तु ज्योतिष्टोमे दीक्षितस्य क्रत्वर्थत्वेन ब्रह्मचर्यविधानादिहाप्यतिदेशेन क्रत्वर्थतया ब्रह्मचर्यप्राप्तेर्ब्रह्मचारिधर्मगतो मध्वशनप्रतिषेधः क्रत्वर्थतया प्राप्तः, स प्रत्यक्षविहितं मध्वशनं नाहीनविषयत्वेन संकोचयितुमर्हति। वरमतिदेशस्यैवानुमानिकस्याङ्गान्तरेषु सङ्कोचः। तस्मात्तत्र मध्वशनं स्यात्।

इति द्वादशं सत्रिभिः मध्वशनाधिकरणम्।



मानसस्य दशमाहाङ्गताधिकरणम् ॥ १३ ॥

मानसमहरन्तरं स्याद् भेदव्यपदेशात् ॥ ३४ ॥ तेन च संस्तवात् ॥ ३५ ॥ अहरन्ताच्च परेण चोदना ॥ ३६ ॥ पक्षे सङ्ख्या सहस्रवत् ॥ ३७॥ अहरङ्गं वांऽशुवच्चोदनाभावात् ॥३८॥ दशमविसर्गवचनाच्च ॥ ३९ ॥ दशमेऽहनीति च तद्गुणशास्त्रात् ॥ ४० ॥ सङ्ख्यासामञ्जस्यात् ॥ ४१ ॥ पश्वतिरेके चैकस्य भावात् ॥ ४२ ॥ स्तुतिव्यपदेशमङ्गेनाविप्रतिषिद्धं व्रतवत् ॥४३॥ वचनादतदन्तत्वम्॥४४॥

द्वादशाहे दशमस्याह्नोऽधिकारे मानसो ग्रहः श्रूयते 'अनया त्वा पृथिव्या पात्रेण समुद्रं रसया प्रजापतये जुष्टं गृह्णामी'ति मानसं प्राजापत्यं गृह्णातीति। तत्र संशयः—किमहरन्तरचोदनेयं—यागान्तरचोदनेत्यर्थः ? उत दशमस्याह्नोऽङ्गभूतग्रहाभ्यासान्तरं चोद्यत इति। तत्र 'वाग्वै द्वादशाहः, मनो मानसमि'त्यादिभिर्व्यपदेशादिभिर्हेतुभिर्यागान्तरशङ्कायां—

उच्यते—व्यपदेशभेदादेरवयवावयव्यभेदादप्युपपत्तेर्ग्रहणचोदनानां च 'अचोदकाश्च संस्काराः' २-२-६ इत्यनेन संस्कारमात्रपर्यवसायित्वेन यागान्तरकल्पकत्वाभावाद्दशमेऽहनि 'मानसाय प्रसर्पन्ती'त्यादिदर्शनैश्च दशमस्याह्नो ग्रहाभ्यासान्तरम्, नाहरन्तरम्।

इति त्रयोदशं मानसस्य द्वादशांगताधिकरणम्।



सत्रस्य बहुकर्तृकत्वाधिकरणम् ॥ १४ ॥

सत्रमेकः प्रकृतिवत् ॥ ४५ ॥ वचनात्तु बहूनां स्यात् ॥ ४६ ॥ अपदेशः स्यादिति चेत् ॥४७॥ नैकव्यपदेशात् ॥ ४८ ॥ सन्निवापं च दर्शयति ॥ ४९ ॥ बहूनामिति चैकस्मिन्विशेषवचनं व्यर्थम् ॥५०॥

सत्राणि किं कामिन एवैकैकशः कुर्युः ? उत बहवः संहत्येति, चोदकानुग्रहाद्बहुवचनस्य चैकैकशोऽपि लोके बहवः कामिनः सत्रं कुर्वन्तीत्यनेनाभिप्रायेणानुवादत्वोपपत्तेरेकैकशः कुर्युः ।

नैवम् । आख्यातगता हि कर्तृसंख्या प्रकृतिवदिहापि प्रयोगाङ्गतया विवक्षिता । न हि तस्याः किंचिदविवक्षाकारणमस्ति । सा च चोदकप्राप्तमेकत्वं बाधते । तस्माद्बहवः प्रयुञ्जीरन् ।

इति चतुर्दशं सत्रस्य बहुकर्तृकत्वाधिकरणम् ।

---

सत्रे यजमानानामेव ऋत्विक्त्वाधिकरणम् ॥ १५ ॥

अन्ये स्युर्ऋत्विजः प्रकृतिवत् ॥ ५१ ॥ अपि वा यजमानाः स्युर्ऋत्विजामभिधानसंयोगात्तेषां स्याद्यजमानत्वम् ॥ ५२ ॥ कर्तृसंस्कारो वचनादाधातृवदिति चेत् ॥ ५३ ॥ स्याद्विशये तन्न्यायत्वात् प्रकृतिवत् ॥ ५४ ॥ स्वाम्याख्या स्युर्गृहपतिवदिति चेत् ॥ ५५ ॥ न प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्मेण ॥ ५६ ॥ बहूनामिति तुल्येषु विशेषवचनं नोपपद्यते ॥ ५७ ॥ दीक्षिताऽदीक्षितव्यपदेशश्च नोपपद्यतेऽर्थयोर्नित्यभावित्वात् ॥ ५८ ॥ अदक्षिणत्वाच्च ॥ ५९ ॥

सत्रेष्वेव किमन्यैरार्त्विज्यम् ? उत यजमानैरेवेति सन्देहे, चोदकानुग्रहाय 'ये यजमानाः, त ऋत्विजः' इति वचनं यच्छब्दोपबद्धयजमानोपदेशेन तत्संस्कारार्थतयाऽऽर्त्विज्यविधिः, न त्वार्त्विज्ये यजमानविधिः । तेनार्त्विज्यमन्यैः कार्यं ।

यद्वा 'अध्वर्युर्गृहपतिं दीक्षयित्वे' गो. ब्रा. १-३ त्यनेन ऋत्विजां संस्कारार्थेन दीक्षा विधीयत इति, तद्योगादृत्विगेव यजमानशब्दगोचरः- इत्यनुवादः ।

नैवम् । अप्राकृतकार्यत्वप्रसङ्गात् । वचनानर्थक्याच्च । न चार्त्विज्यस्य यजमानसंस्कारत्वम्, अप्राकृतकार्यत्वप्रसङ्गादेव । तस्मात्प्राकृतकार्यस्यैवार्त्विज्यस्य यजमानाः कर्त्तारो विधीयन्ते । अतो अन्येषां चोदकप्राप्तानां बाधः ।

इति पञ्चदशं सत्रे यजमानानामेवार्त्विज्याधिकरणम् ।

## सत्राहीनयोर्विवेकाधिकरणम् ॥ १६ ॥

द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च; सत्रशब्दाभिसंयोगात् ॥६०॥ यजतिचोदनादहीनत्वं; स्वामिनां चाऽस्थितपरिमाणत्वात् ॥ ६१ ॥

सत्रप्रसङ्गात द्वादशाहगतस्य सत्रस्वरूपस्य लक्षणं, तत्प्रसङ्गाच्च तद्गतस्यैवाहीनरूपस्य लक्षणं सूत्रद्वयेनोच्यते । तत्र त्रयोदशरात्रादिष्वासनोपायिचोदनेषु वेदे, अध्यतृप्रयोगेषु च सत्रशब्दप्रयोगाद्, द्वादशाहेऽपि प्रयुज्यमानस्य सत्रशब्दस्य तन्निमित्तता, द्विरात्रादिषु च यजतिचोदनेष्वहर्गणेष्वहीनशब्ददर्शनाद् द्वादशाहेऽपि तदेव तस्य निमित्तम् ।

इति षोडशं सत्राहीनयोर्विवेकाधिकरणम् ।

## पौण्डरीके सकृदेव दक्षिणादानाधिकरणम् ॥ १७ ॥

अहीने दक्षिणाशास्त्रं गुणत्वात् प्रत्यहं कर्मभेदः स्यात् ॥ ६२ ॥ सर्वस्य वैककर्म्यात् ॥६३॥ पृषदाज्यवद्वाऽह्नां गुणशास्त्रं स्यात् ॥६४॥ ज्योतिष्टोम्यस्तु दक्षिणाः; सर्वासामेककर्मत्वात्प्रकृतिवत्; तस्मात् तासां विकारः स्यात् । ६५ ॥ द्वादशाहे तु वचनात्प्रत्यहं दक्षिणाभेदस्तत्प-

कृतित्वात्परेषु; तासां सङ्ख्याविकारः स्यात् ॥६६॥ परिक्रयाविभागाद्वा-समस्तस्य विकारः स्यात् ॥ ६७ ॥ भेदस्तु गुणसंयोगात् ॥ ६८ ॥

पौण्डरीको नामाहीन एकादशरात्रः। तत्र श्रूयते 'अयुतं दक्षिणाम्, दद्यात्, अश्वसहस्रमेकादशमि'ति । तत्र संशयः—किमयुतं, अश्वसहस्रं च प्रत्यहं दातव्यम् ? उतैकमेवायुतम्, अश्वसहस्रं च दातव्यमिति ।

तत्र—दक्षिणा ह्यहरङ्गत्वात् प्रत्यहं भेदमर्हति ।
एकप्रयोगपातात्तु तन्त्रेणैका प्रदीयते ॥ ३९ ॥

सत्यं । प्रत्येकमह्नामङ्गं दक्षिणा, तथाऽपि कर्त्रानतिद्वारत्वात्, कर्तृणां च चिकीर्षितार्थमुपादानादेकप्रयोगचोदितानामेकादशानामप्यह्नां युगपच्चिकीर्षितत्वात्तन्त्रेण सर्वेषां पुरुषाणामुपादानं। तदानतिश्चैकैव तन्त्रेण। तत्सिद्ध्यर्था च दक्षिणेति, सापि तन्त्रेण संभवादेकैव दीयते ।

ननु पौण्डरीकप्रकृतौ द्वादशाहे प्रत्यहं दक्षिणा भेदेन दत्ता, 'अन्वहं द्वादशशतं ददाती'ति वचनात्। तेनेहापि द्वादशशतविकारो अयुतं, अश्वसहस्रं-च प्रत्यहं भेदमर्हति। उच्यते। द्वादशाहेऽप्येकप्रयोगत्वादेकैवानतिरिति, प्रत्यहं द्वादशशते दीयमाने यावती भवति, तावती भवति दक्षिणैकैव। तस्मादिहाप्येकमेवायुतम्, अश्वसहस्रं दातव्यम्।

इति सप्तदशं पौण्डरीके सकृदेव दक्षिणादानाधिकरणम् ।

---

पौण्डरीके सर्वासां दक्षिणानां विभज्य नयनाधिकरणम् ॥ १८ ॥

प्रत्यहं सर्वसंस्कारः प्रकृतिवत्, सर्वासां सर्वशेषत्वात् ॥ ६९ ॥ एकार्थत्वान्नेति चेत् ॥ ७० ॥ स्यादुत्पत्तौ कालभेदात् ॥७१॥ विभज्य तु संस्कारवचनाद्द्वादशाहवत् ॥ ७२ ॥

प्रकृतौ माध्यन्दिने सवने दक्षिणानयनं श्रुतं। पौण्डरीके चायुतमश्व-सहस्रं माध्यन्दिने सवने प्रत्यहं नेतव्यम् ? उतैकस्मिन्नहनि ? अथवा विभज्य प्रत्यहं सहस्रं नेतव्यम् ? अश्वसहस्रं त्वेकादशेऽन्हि नेयमिति संशये, प्रकृतावात्मीये माध्यन्दिने सवने नीतेति, इहापि प्रतिकर्मावसायी चोदकः प्रति-माध्यन्दिनं नयनं प्रतिपादयति। समस्ता चेयं सर्वेषामन्हां दक्षिणेति, सर्वैव

प्रत्यहं नेतव्या। दक्षिणासंस्कारत्वान्नयनस्य सकृत्संस्कृतायाश्च न पुनः संस्कारेण प्रयोजनमित्येकस्मिन्कस्मिंश्चिन्माध्यन्दिने नयनम्।

नैवं। द्वादशाहे हि विभज्य नयनं विहितम् 'अन्वहं द्वादशशतं ददाती'ति, तेनेहापि तद्वदेव विभज्य नयनम्।

इत्यष्टादशं पौण्डरीके दक्षिणानां विभज्य नयनाधिकरणम्।

---

मनो ऋचं इत्यनेन यावदर्थमृचामुपादानाधिकरणम्॥ १९॥

लिङ्गेन द्रव्यनिर्देशे सर्वत्र प्रत्ययः स्याल्लिङ्गस्य सर्वगामित्वात्॥७३॥

यावदर्थं वाऽर्थशेषत्वादतोऽर्थेन परिमाणं स्यात्तस्मिंश्च लिङ्गसामर्थ्यम्॥७४॥

आग्नेये कृत्स्नविधिः॥ ७५॥ ऋजोषस्य प्रधानत्वात्वहर्गणे सर्वस्य-प्रतिपत्तिः स्यात्॥ ७६॥

क्वचिद्विकृतौ श्रूयते 'मनोर्ऋचः सामिधेन्यो भवन्ती' तां.ब्रा,२३-१६-६ति। तत्र किं सर्वा एव मनोर्ऋचः सामिधेनीत्वेन वक्तव्याः? उत यावतीभिः संख्या पूर्यते प्राकृती, तावत्य एवेति। प्रत्यक्षेण वचनेन सर्वासामविशेषेण प्राप्त्यवगमाच्चोदकप्राप्तसंख्याबाधेन सर्वासामुपादानमित्येतावान्पूर्वः पक्षः—

नावश्यं प्रत्यक्षवचनेन सर्वासां प्राप्तिः। न हीदमृक्संस्कारार्थम्, अग्नि-समिन्धनार्थं ह्यत्रर्च उपादीयन्ते। तत्र बहुवचनात्त्रित्वे प्राप्ते, त्रित्वमतिक्रम्य पञ्चदशोपादीयन्ते। अधिकानां त्वनाशङ्क्यमेवोपादानम्।

इत्येकोनविंशं मानवीषु पञ्चदशानां सामिधेनीत्वाधिकरणम्।

---

वाससि मानोपावहरणयोरनुष्ठानाधिकरणम्॥ २०॥

वाससि मानोपावहरणे प्रकृतौ सोमस्य वचनात्॥ ७७॥

ज्योतिष्टोमे सोमस्य मानम्, उपावहरणं च वासःसाधनकं, वाससि-मिनोति, वाससोपावहरती'ति वचनादिति, उत्तरविवक्षया प्राप्तिः क्रियते।

इति विंशं वाससि मानोपावहरणयोरनुष्ठानाधिकरणम्।

---

अहर्गणेऽर्थाद् वासोऽन्तरोत्पादनाधिकरणम् ॥ २१ ॥

तत्राहर्गणेऽर्थाद्वासः प्रकृति स्यात् ॥ ७८ ॥

स्थितं वाससि मानं, वाससा चोपावहरणमिति। द्वादशाहादावहर्गणे किमुपावहरणार्थं प्रत्यहं वासोभेदः स्यात्? उत नेति। भेदे प्रमाणाभावान्नेति प्राप्ते—

ब्रूमः—अर्थाद्वाससो भेदः स्यात्। हविर्द्धाने शकटेऽवस्थितः सोमः प्रत्यहं भेदेनाभिषवार्थं यावानेकस्याह्नः पर्याप्तः, तावान्सोमो वाससोपावहर्त्तव्यः। अवशिष्टश्च शकट एव वाससोपनद्धोऽवतिष्ठते। तस्मादर्थादहर्भेदे वासोऽन्तरमुपावहरणार्थमुत्पादयितव्यम्।

इत्येकविंशमहर्गणे वासोऽन्तरोपादानाधिकरणम्।



उपावहरणार्थमेव वासोऽन्तरोत्पादनाधिकरणम् ॥ २२ ॥

मानं प्रत्युत्पादयेत्प्रकृतौ तेन दर्शनादुपावहरणस्य ॥ ७९ ॥ हरणे वा श्रुत्यसंयोगादर्थाद्विकृतौ तेन ॥ ८० ॥

यदेतदुपावहरणार्थमन्यद्वास उत्पाद्यते, तत्किं मानकाल एवोत्पाद्यं? उतोपावहरणकाले' इति संशये, प्रकृतौ यस्मिन्वाससि क्रयकाले मानं कृतं, तेनैवाभिषववेलायामुपावहरणस्य दर्शनात्, अहर्गणेऽपि मानवाससोपावहरणेन भवितव्यं। तस्मान्मानकाल एवोत्पाद्यं।

नैवम्। आर्थिकं हि प्रकृतौ मानवाससोपावहरणं, न शास्त्रीयं। एतावद्धि श्रूयते 'वाससोपावहरती'ति। तत्र प्रकृतौ यस्मिन्वाससि सोमो मितः, उपनह्य शकटे स्थापितः, तेनैव सौकर्यादुपावहरणमनुष्ठितम्। अहर्गणे तु मानवेलायामनुपपत्त्यभावादेकस्मिन्नेव वाससि सर्वेषामह्नां सोमे मित्वा उपनह्य स्थापिते, अभिषववेलायामुपावहरणार्थमनुपपत्तिवशादन्यदुत्पाद्यते।

इति द्वाविंशमुपावहरणार्थमेव वासोन्तरोत्पादनाधिकरणम्।

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां षष्ठः पादस्समाप्तः।



# अथ दशमाध्याये सप्तमः पादः

ज्योतिष्टोमे प्रत्यङ्गं हविर्भेदाधिकरणम् ॥ १ ॥

पशावेकहविष्ट्वं समस्तचोदितत्वात् ॥ १ ॥ प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक्प्रकल्पनत्वात् ॥ २ ॥

'अग्नीषोमीयं पशुमालभेते' तै. सं. ६-१-११ त्यत्र संशयः-किं कृत्स्नः पशुरेकं हविः, तेन च देवतायै दीयमानेन पयो विक्रियते, तत एव चावदायहोनः ? उत पश्वङ्गं हृदयादि हविरिति।

तत्र —तद्धितेन पशोरेव देवतान्वयचोदनात।
समस्तस्य पशोर्दानमैन्द्रस्य पयसो यथा ॥ ४० ॥

हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षसः, 'तै. सं. ६-३-१० इत्यादीनि वचनानि पशोरेवावदानप्रदेशलक्षणार्थानि, मध्यपूर्वार्धवचनवत्, हृदयप्रदेशेऽवद्यतीत्येकादशानां च प्रदेशानामुपदेशाद्। द्व्यवदानमपोद्य, एकादशकृत्वोऽवदाय हूयते। तस्मिन्नेव च काले समस्तः पशुर्देवतायै त्यज्यते-पुरोडाशवत्, तस्मात्पशुरेकं हविरिति प्राप्ते —

ब्रूमः—खण्डनं प्राकृतार्थं हि हृदयादिषु दृश्यते।
तस्मात्तत्प्रकृतित्वेन देवतासङ्गतिः पशोः ॥ ४१ ॥

हृदयादिशब्दा मांसविशेषवचना नयुक्तं यत् पशुप्रदेशलक्षणार्थतां नीयन्ते, हृदयादीनामेवावदानोपपत्तेः। अवदानञ्च प्रकृतौ हविसंस्कारार्थं, मिति, इहाप्यवदानं हविष एव युक्तं। तच्च हृदयादिषु दृश्यत इति, हृदयादीनामेव हविष्ट्वं निश्चीयते। न चोत्पत्तिवाक्यशिष्टपशविरोधः, तस्य हृदयादिप्रकृतित्वेन यागसाधनत्वेऽपि देवतासम्बन्धोपपत्तेः। यदि हि प्रणाड्यां प्रमाणं न स्यात्, ततः पशुरेव साक्षाद्दीयेत। अस्ति तु प्रमाणं हृदयादिष्ववदानवचनं, विशसनवचनं च। तस्माद्धृदयादीनि हवींषि देवतायै देयानि, तेभ्य एव च द्व्यवदानं गृहीत्वा हूयते, तत्प्रकृतिश्च पशुः।

इति प्रथमं पशौ हृदयादीनामेव हविष्टवाधिकरणम्।

स्थितविभाषया देवताः ? यदाऽमावास्यायां, तदा विष्णुः। पौर्णमास्यान्तु प्रजापतिरग्नीषोमौ चेति। अथवा पौर्णमास्यामेवोपांशुयाजो विषण्वाद्याश्च तिस्रो देवतास्तत्रैव विकल्प्यन्त इति ? तत्र धर्मसम्प्रतिपत्तेः प्रजापतिर्देवतेति-गम्यते। स हि 'यत्किञ्चित्प्राजापत्यं यज्ञे क्रियते, उपांश्वेव तत्क्रियते' इति वचनादुपांशुधर्मा, यागोऽपि चायं तद्धर्मेति प्राजापत्यत्वाध्यवसानं न प्रजापतिरुपांशुत्वधर्मा तूष्णींभावः, तस्य धर्मः 'प्रजापतिं मनसा ध्यायेदि'ति विधेः, तदर्थवादस्त्वयं यत्किञ्चित्प्राजापत्यमिति। तस्मात्सम्प्रतिपत्त्यभावान्न-प्रजापतिः।

मुख्यत्वात्त्वग्निः स्यात्। सोऽपि न। विष्णुस्तु मन्त्रवर्णात्स्यात्। आग्नेयैन्द्राग्नयाज्यानुवाक्यायुगलयोर्मध्ये वैष्णवं याज्यानुवाक्यायुगलमाम्नातं। यागश्चायं पुरोडाशद्वयमध्ये विहित इति, स्थानसामान्याद्वैष्णवमन्त्रद्वयमस्याङ्गं भवद्विष्णुं देवतां परिकल्पयति। आग्नेयैन्द्राग्नमध्यवर्तित्वाच्च मन्त्रयोरमावास्याकालत्वावगमादविशेषविहितोऽपि यागो मन्त्रवशादमावास्याकाल इति निश्चीयते। सत्यं। मान्त्रवर्णिको देवता, न तु विष्णुरेव। मन्त्रवशादेव तु तिस्रोऽपि देवता व्यवस्थितविकल्पेन स्युः, उभयोश्च पर्वणोरुपांशुयाजः स्यात्। तथाहि 'जामि वा एतद्यज्ञस्य क्रियते, यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजत्यजामित्वाये' तै. सं. २ ६-६ त्यविशेषेण पुरोडाशद्वयोपलक्षिते काले विधानादुभयोश्च पर्वणोः पुरोडाशद्वयसम्भवादुभयत्रोपांशुयाजः स्यात्।

नन्वमावास्यायां जामितादोषः पाक्षिकः, सोमयाजिनः ऐन्द्राग्नाभवात् तुल्यं पौर्णमास्यामपि पाक्षिकत्वम्। असोमयाजिनोऽग्नीषोमीयाभावात्। तस्मात्पाक्षिकेणैव जामित्वापनयनेनोभयत्रार्थवाद इत्युभयत्राप्युपांशुयाजः-स्यात। तत्र 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशुपौर्णमास्यां यजन्ति' त्यनेन पौर्णमासी कालवर्तिनोऽग्नीषोमदेवताविधानान्मन्त्रवर्णाच्च स्यातामग्नीषोमौ। प्रजापतिश्च मन्त्रवर्णात्स्यात्। आग्नेयाग्नीषोमीययाज्यानुवाक्यामध्ये तैत्तिरीयाणां प्राजापत्ययाज्यानुवाक्याम्नानात्। विष्णुस्तु पूर्वोक्तेन न्यायेनामावास्यायां स्यादिति प्राप्ते—

ब्रूमः विष्ण्वाद्या देवताः सत्यं मन्त्रवर्णाद्विकल्पिताः।
न तु कालद्वये यागः पौर्णमास्यान्तु वाक्यतः॥ ६५॥

'उपांशु पौर्णमास्यां यजन्ति'त्यनेन प्रत्यक्षवचनेन पौर्णमासीविधानात्-पौर्णमास्यामेव कालविधानं ह्येतत्, न देवताविधानं, मन्त्रवर्णादेव देवतानां

लब्धत्वात् । पौर्णमासीकालविशिष्टयागानुवादेन च देवताविधौ विशिष्टानुवाददोषापत्तेः। तस्मादुपांशुयाजानुवादेन कालविधानमेतत् । अग्नीषोमग्रहणं तु मान्त्रवर्णिकीनां देवतानामुपलक्षणार्थं ।

ये-शां.ब्रा.३-६त्वाश्वलायनाः कालविधिमनिच्छन्तः पर्वद्वयेऽप्युपांशुयाजमाहुः, ते कथमिव 'त्रयोदशामावास्यायामि'ति लिङ्गं समर्थयेरन् । कालविध्यभावे च पौर्णमासीवाक्येनानुवादासम्भवात् पूर्णमासशब्देनापि न फले विनियुज्येतेति, प्राधान्यमुपांशुयाजस्य न स्यात् । आज्यभागादिवदङ्गता स्यादित्यास्तां तावत् । तस्मात्पौर्णमासीकालस्य वाचनिकत्वात्प्रधानानुवर्तित्वाच्च देवतानां तिसृणामपि तत्रैव विकल्पः ।

इति सप्तदशमुपांशुयाजस्य विष्वादिदेवताकत्व-पौर्णमासीकर्तव्यत्वयोरधिकरणं।

---

एकपुरोडाशामप्युपांशुयाजाधिकरणम् ।

द्विपुरोडाशायां स्यादन्तरालार्थत्वात् ॥ ६२ ॥ अजामिकरणार्थत्वाच्च ॥ ६३ ॥ तदर्थमिति चेन्न तत्प्रधानत्वात् ॥ ६४ ॥ अशिष्टेन च सम्बन्धात् ॥ ६५ ॥ उत्पत्तेस्तु निवेशः स्याद्गुणस्यानुपरोधेनार्थस्य विद्यमानत्वाद्विधानादन्तरार्थस्य; नैमित्तिकत्वात्; तदभावेऽश्रुतौ स्यात् ॥ ६६ ॥ उभयोस्तु विधानात् ॥ ६७ ॥ गुणानाञ्च परार्थत्वादुपवेषद् यदेति स्यात् ॥६८॥ अनपायश्च कालस्य लक्षणं हि पुरोडाशौ । ६९॥ प्रशंसार्थमजामित्वम् ॥ ७० ॥

पौर्णमास्यामेवोपांशुयाज इति स्थिते, चिन्त्यते-किं द्विपुरोडाशायामेव स्यात् ? उतैकपुरोडाशायामपीति ? तत्रैकपुरोडाशायामन्तरालगुणालाभेन वैगुण्यात् द्विपुरोडाशायामेव स्यात् । सिद्धान्तैकदेशीत्वाह यागस्याविशेषेण श्रवणादुभयत्रानुष्ठानं । गुणस्तु यदा द्विपुरोडाशा, तदा भविष्यतीति । तदयुक्तं । विधीयमान एव यागोऽन्तरालकालगुणविशिष्टो विधीयते, अनुपादेयश्चान्तरालगुणः, तेन यत्रैवायङ्गुणः, तत्रैवास्य विधिः, इतरत्र तु विधिरेव नास्तीत्यकर्त्तव्य एवेति प्राप्ते—

अभिधीयते—स्यादेवमन्तरालस्य गुणत्वेन विधिर्यदि ।
कालो विधीयते, त्वत्र पुरोडाशोपलक्षितः ॥ ६६ ॥

अन्यार्थाभ्यां हि पुरोडाशाभ्यामुपलक्षिते काले कर्म विधीयते, योऽयम्पुरोडाशयोर्मध्यकालः, तत्रोपांशुयाज इति, सर्वत्र चोपलक्षणापायेऽपि उपलक्षणीयमवतिष्ठते शङ्खवेलायामागन्तव्यमित्यादौ। तेन कर्माङ्गभूतस्य कालस्यैकपुरोडाशायामपि लाभात्, तत्राप्युपांशुयाजो न बाधितव्यः।

उक्त–वक्ष्यमाणयोरर्थयोः संक्षेपेण कथनम्।

तदेवं लुप्तार्थं यदपि च निषिद्धं विकृतिषु।
तथा प्रत्याम्नातं त्रिविधमिह बाध्यं व्यवसितम्॥ ६७॥
अतस्त्वन्यस्याभ्युच्चयविधिरियत्तैवमुदिता।
प्रयोगेयत्तायास्त्वत उपरि चिन्तां प्रकुरुते॥ ६८॥

इति एकोत्रिंशमेकपुरोडाशायामुपांशुयाजाधिकरणम्।

इति श्रीपार्थसारथिमिश्रकृतौ शास्त्रदीपिकायामष्टमः पादः समाप्तिमितः

दशमोऽध्यायश्च समाप्तः।



# अथ एकादशाऽध्याये

## प्रथमः पादः

### आग्नेयादीनां समुदितानां तन्त्रेण स्वर्गफलकत्वाधिकरणम् ॥ १ ॥

प्रयोजनाभिसम्बन्धात्पृथक् सतां ततः स्यादैककर्म्यमेकशब्दाभिसंयोगात् ॥ १ ॥ शेषवद्वा प्रयोजनं प्रतिकर्म विभज्येत ॥ २ ॥ अविधानाच्चु नैवं स्यात् ॥ ३ ॥ शेषस्य हि परार्थत्वाद्विधानात्प्रतिप्रधानभावः स्यात् ॥ ४ ॥

दशमेऽध्याये बाधाभ्युच्चयचिन्तया विकृतिष्वङ्गपरिमाणं चिन्तितम्, अतिदेशविचारश्च सप्तमादिभिर्दशमपर्यन्तैः समाप्तः। संप्रत्युपदेशातिदेशसाधारण्येन प्रयोगपरिमाणं परिमाणप्रसङ्गादेकादशे तन्त्रावापचिन्तया चिन्त्यते। उपदिष्टातिदिष्टपदार्थेयत्तावधारणाधीनं प्रयोगेयत्ताऽवधारणमिति, तदुत्तरकालमारंभः। तदिहैकप्रयोगवचनचोदितानामेकफलानां–संहत्यकारिणां बहूनां कर्मणां साधारणाङ्गभाजामङ्गानुष्ठानं किं तन्त्रेण भवति, उतावृत्त्येति चिन्ता लक्षणार्थः। प्रथमं तावदुपोद्घातत्वेन संहत्यकारित्वं प्रतिपाद्यते, यदि ह्याग्नेयादयः षडपि परस्परानपेक्षाः स्वर्गं साधयेयुः ततस्तेषां कामिनः कर्त्तव्यत्वेन युगपदुपस्थानाभावात्पृथक्पृथगेव स्वाङ्गयुक्ताः कर्त्तव्या इति, न तन्त्रत्वं सिद्ध्येत्। तस्मात्संहत्यकारित्वं प्रतिपाद्यते।

तदयमत्राधिकरणे विचारः–किमाग्नेयादीनि पृथक्-पृथक् स्वर्गं साधयन्ति? उत संहत्येति?

तत्र—परस्परानपेक्षाणामुत्पन्नानां फलार्थिनाम्।
चोद्यमानं फलन्तेषामेकैकस्यावधार्यते ॥ १ ॥
तेषां ह्युद्दिश्यमानत्वात्साहित्यमविवक्षितम्।
तस्मात्प्रत्येकमेव स्यादिति प्राप्तेऽभिधीयते ॥ २ ॥
आग्नेयादिकमुद्दिश्य फलं यद्युपदिश्यते।
तत उद्दिश्यमानत्वात्तेषामेकैकशः फलम् ॥ ३ ॥
कामिनन्तु यदोद्दिश्य कर्मणां चोदनात्तदा।
तेषां विधीयमानानां सहभावो विवक्षितः ॥ ४ ॥

यद्यपि चोभयथा वचनव्यक्तिः सम्भवति, तथाऽपि द्वित्वावगतं दर्श-शब्देन च त्रिकस्य, पूर्णमासशब्देन च तस्य तन्त्राभिधानावगतं च साहित्यं मा बाधीति, कामिनमेवोपायार्थिनं नरमुद्दिश्याग्नेयादीनि विधीयन्त इत्येतदेव युक्तं। प्रधानत्वाच्च फलस्यैवोद्देशो युक्तो न कर्मणां गुणभूतानां। एकस्मिन्नपि काले संहत्यकारित्वेन विनियुक्तानां कर्मणां प्रत्येकमप्युत्पन्नानां फलापेक्षा निवर्तत इति, नानपेक्षितसम्बन्धापत्तिः। तस्मात्फलोद्देशेन विधीयमानानां विवक्षितं साहित्यमिति, सिद्धं सहत्यकारित्वम्।

भाष्यस्य स्वोक्तेऽर्थे भाष्यतात्पर्यवर्णनम्।

यत्तु भाष्यकारेण पुरुषपरत्वं, कालपरत्वं, निमित्तपरत्वं च निराकृत्य-फलपरत्वं च कामपदस्य समर्थितं, तदिहासूत्रितमपि सूत्रितविचारस्योपोद्-घातत्वेन। सति हि तस्य फलपरत्वे किं प्रत्येकं फलम्? उत सहत्येति-विचारः, नान्यथा-इति। स्वर्गकामाधिकरणे तु स्वर्गस्य, तत्कामनायाश्चाङ्गत्वेन विधानं निराकृतमित्यपुनरुक्तता।

इति प्रथममाग्नेयादीनां समुदितानां तन्त्रेण स्वर्गफलकत्वाधिकरणं।



## अङ्गानामेककार्याधिकरणम् ॥ २ ॥

अङ्गानान्तु शब्दभेदात्क्रतुवत्स्यात् फलान्यत्वम् ॥ ५ ॥ अर्थ-भेदस्तु तत्रार्थेह्यैकार्थ्यादैककर्म्यम् ॥ ६ ॥ शब्दभेदान्नेति ॥ ७ ॥ कर्मार्थत्वात्प्रयोगे ताच्छब्द्यं स्यात्तदर्थत्वात् ॥ ८ ॥ कर्तृविधेर्नानार्थत्वादुगुणप्रधानेषु ॥ ९ ॥ आरम्भस्य शब्दपूर्वत्वात् ॥ १० ॥ एकेनापि समाप्येत कृतार्थत्वाद्, यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत्स्यात् ॥ ११ ॥ फलाभावादिति चेत् ॥ १२ ॥ न कर्मसंयोगात्प्रयोजनमशब्ददोषं स्यात् ॥ १३ ॥ एकेशब्द्यादिति चेत् ॥ १४ ॥ नाऽर्थपृथक्त्वात्समत्वादगुणत्वम् ॥ १५ ॥ विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतभूताभिसंयोगादर्थेन युगपत्प्राप्तेर्यथाक्रमं स्वशब्दो निवीतवत्तस्मात्सर्वप्रयोगे प्रवृत्तिः स्यात् ॥ १६ ॥ तथा कर्मोपदेशः स्यात्

॥ १७ ॥ क्रत्वन्तरेषु पुनर्वचनम् ॥ १८ ॥ उत्तरास्वश्रुतित्वाद्विशेषाणां कृतार्थत्वात्स्वदोहे यथाकामी प्रतीयेत ॥ १९ ॥

भाष्यमतम् ।

अतः प्रभृति षड्भिः सूत्रैरेकमधिकरणम् । 'एकेनापि समाप्येते' इत्यतः-प्रभृति च नवभिः सूत्रैरधिकरणान्तरं भाष्यकारेण व्याख्यातमिति प्रतिभाति। तत्र च पूर्वाधिकरणे अङ्गानां कार्यभेदं पूर्वपक्षीकृत्य, ऐककार्यत्वं सिद्धान्तितम। उत्तराधिकरणे तु तस्मिन्नेकस्मिन्कार्ये विकल्पमाशङ्क्य, समुच्चयः प्रतिपाद्यत इति व्याचष्टे ।

तदिदं वार्त्तिककारो नाऽनुमेने । न हि कार्यभेदाभेदमात्रचिन्ता-प्रयोजनवती । भेदे सति कार्याणां कारकवदङ्गानां समुच्चयः, कार्यैक्येऽप्य-पर्यायविधानात्समुच्चय इति, नास्त्यनुष्ठाने विशेषः । औपोद्घातिकमिदं । सति हि कार्यैक्ये विकल्प-समुच्चयाविति चेत् ? तथाऽपि नास्त्येव प्रयोजनं करणैकत्वाद्धि तत्सामर्थ्योद्बोधनरूपस्योपकारस्य स्पष्टमेवैकत्वम् । अवान्तरकार्यभेदस्तु सिद्धान्तेऽपि सम्मत एवेति, न चिन्तनीयं पश्यामः । अथ शक्त्युद्बोधनस्य, अवान्तरकार्याणां च मध्ये किंचिदुपकाराख्यं वस्तु मन्यसे, तदप्रमाणकं, निष्प्रयोजनञ्च । शक्त्युद्बोधन एव विकल्प-समुच्चयचिन्तेति ।

वार्तिकमतम्

तस्मादेकमेवेदं पञ्चदशसूत्रं समुच्चयप्रतिपादनार्थमधिकरणं । त्रयश्चेह-पक्षाः-किमङ्गानामितरेतरनिरपेक्षाणां क्रतूपकारकतया विकल्पः, उतैकेन, द्वाभ्यां, बहुभिश्चोपकारसिद्धेरुपकारभूयस्तया च फलभूयस्त्वम् ? उत-समुच्चितानामेवोपकारकत्वमिति । तदर्थमिदं चिन्त्यन्ते-किमङ्गानामात्मी-यैर्विधिभिः प्रयोगोऽभिधीयते ? किं वा प्रधानविधिभिरिति ? तत्र प्रधाना-न्येकशब्देन तन्त्रेणाभिहितानि युगपत्फले विनियुक्तानि युक्तं-यत्फले समुच्चीयन्ते । अङ्गानि तु पृथक शब्देनाभिहितानि पृथगेव विहितानि फलम-पेक्षमाणान्योन्यनिरपेक्षाण्येव क्रतूपकारार्थतया विनियुक्तानि विकल्पितु-मर्हन्ति । तेषां हि स्ववाक्यैरेव विधानम्, असति विधानेऽङ्गत्वानुपपत्तेः । उक्तं हि 'न चाविहितमङ्गं भवती' शा० भा० पृ० ६४१ति । स्ववाक्यानि च तेषामेकैकमेव विदधतीति, कुतः समुच्चयः ? न हि कश्चिच्छब्दोऽस्ति, येनैषां सहितानामनुष्ठानमुच्यते । तस्माद्यथा सत्यपि पशुफलत्वे चित्रोद्भिदादीनां, पृथग्विधानादसमुच्चयः, तथाऽङ्गानामपीति प्रथमः पक्षः ।

सत्यं, निरपेक्षाणामुपकारकत्वं गम्यते, तथाऽपि बह्वङ्गाम्नानसामर्थ्यात्, द्विकल्पस्य चान्याय्यत्वात्तेषामेकमपि प्रयुञ्जीत, तथा द्वे, तथा बहूनि च, अङ्गभूयस्तया चोपकारभूयस्त्वात्फलभूयस्त्वमिति द्वितीयः। स 'चैएकेनापि समाप्येते'त्यनेन सूत्रेणोच्यते। पक्षान्तरमेव चाधिकरणान्तरमिव भाष्ये दर्शितम्। अधिकरणान्तरत्वे त्वनेनैव सूत्रेण विकल्पपक्षो वक्तव्यः स्यात्। न चानेन विकल्प उच्यते। प्राप्तेषु चोत्तरावत् स्यादिति समुच्चयस्याप्यभ्यनुज्ञानात्। तस्मान्नाधिकरणान्तरम्।

सिद्धान्तस्तु युक्तं–चित्रादीनां नैरपेक्ष्यं, तेषु हि प्रतिवाक्यं भेदेन-कामपदं श्रूयते। समिदादिषु तु यद्यपि 'प्रतिवाक्यं विधिश्रवणात्फलापेक्षोपजायते। फलं तु न प्रतिवाक्यं श्रूयते, प्रधानभावनया ह्येषां फलाकाङ्क्षाणां कथंभावाकाङ्क्षिण्या सहेत्थंभावेन सम्बन्धः। सा च सकृदुपात्ता सर्वैरङ्गैर-गृह्यमाणविशेषैर्विशिष्टा युगपत्प्रधानविधिना विधीयत इति,सिद्धः समुच्चयः। यद्यपि च प्रत्येकं विधिः श्रूयते, तथाऽप्यंशत्रयालाभादसावुदास्ते। भाव्यांशस्तु विध्यवगमबलादेव पुरुषार्थरूपोऽपेक्ष्यते। एतावानेव च तत्र विधेरुपयोगः, तदभावे धात्वर्थ एव भाव्यांशे निपतेत्, सत्यां च फलापेक्षायां प्रकृतभावनया-युगपत्सम्बन्धात् तस्याश्च सर्वाङ्गविशिष्टया युगपदत्प्रधानविधिना विधाना-दङ्गानामपि तत एवानुष्ठानसिद्धेः, तस्मिन्नंशेऽङ्गविधीनामनुवादकत्वं, सर्व-विशिष्टविधानाच्च समुच्चयः।

इति वार्तिकमतेन द्वितीयमंगानामेककार्याधिकरणम्।

---

काम्यकर्म्मणां भूयोऽभ्यासाधिकरणम् ॥ ३ ॥

कर्मण्यारम्भभाव्यत्वात्कृषिवत् प्रत्यारम्भं फलानि स्युः ॥ २० ॥ अधिकारश्च सर्वेषां कार्यत्वादुपपद्यते विशेषः । २१ ॥ सकृत्तु स्यात् कृतार्थत्वादङ्गवत् ॥ २२ ॥ शब्दार्थश्च तथा लोके ॥ २३ ॥ अपि वा संप्रयोगे यथा कामी प्रतीयेताश्रुतित्वादिधिषु वचनानि स्युः । २४ । ऐकशब्द्यात्तथाङ्गेषु ॥ २५ ॥ लोके कर्माऽर्थलक्षणम् ॥ २६ ॥

काम्यानां कर्मणामैन्द्राग्न-सौर्यादीनां किं सकृदेव प्रयोगः? उत भूयो भूयः फलमिच्छता भूयोऽपि प्रयोग इति सन्देहे, सकृदिति ब्रूमः। कर्मण

हि फलं कालान्तरे जननीयं। तच्च द्वारमपेक्षते। तत्रात्यन्तमदृष्टमपूर्वं, तस्य च कर्मजत्वं फलहेतुत्वं, स्थायित्वं चेत्यनेककल्पनात् वरं कृतयागादात्मनः फलमिति कल्पितम्। आत्मनो हि सद्भावः, स्थिरत्वं कर्मसम्बन्धश्च-क्लृप्तः, केवलं तु फलहेतुत्वं कल्पनीयम्। अतः कृतयागादात्मनः फलं, सकृत्प्रयोगादेव चासौ कृतयागो जातः, पुनरपि प्रयुञ्जानस्य तस्य तावत्येव तु कृतयागता, न तस्य कश्चिदतिशय इति, अनर्थकः पुनः प्रयोगः। सकृदेव प्रयोग इति प्राप्ते—

ब्रूमः—आत्मन्यतिशयः कश्चित्कृते कर्मणि नैव चेत्।
प्रागवस्थासमानत्वादात्मनो न भवेत्फलम्॥ ५॥
आत्मस्वरूपहेतुत्वे ह्यकर्त्तुरपि तद्भवेत्।
तस्मादतिशयः कश्चित्कर्मभ्यो जायते नरे॥ ६॥
स च कार्यविरोधित्वात्स्वफलाप्तेर्विनश्यति।
फलान्तरार्थं कर्त्तव्यं तस्मादतिशयान्तरम्॥ ७॥
स एवातिशयोऽस्माभिरपूर्वमिति गीयते।
तस्माद् भूयः प्रयोक्तव्यं पुनः फलमभीप्सता॥ ८॥

कर्मभ्यः फलसिद्धिप्रकारे विकल्प-समुच्चयरूपे चिन्तिते, बहुफलसिद्धि-प्रकारः सकृदसकृद्रूपश्चिन्त्यत इति सङ्गतिः।

इति तृतीयं काम्यकर्मणां भूयोऽभ्यासाधिकरणं।

---

अवघातादीनामातण्डुलनिर्वृत्तेरभ्यासाधिकरणम्॥ ४॥

क्रियाणामर्थशेषत्वात्प्रत्यक्षतस्तन्निर्वृत्त्याऽपवर्गः स्यात्॥ २७॥

धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात्॥ २८॥

दर्शपूर्णमासयोः श्रुतं 'व्रीहीनवहन्ती' आप श्रौ. १-१९-११ ति। तत्र संशयः - किं सकृदेवोद्यमननिपातने कृत्वोपरन्तव्यम्? उत यावत्तण्डुल-निष्पत्ति प्रयोक्तव्यमिति? तत्रोद्यमन-निपातनमात्रस्य शब्दार्थत्वात् तन्मात्रं विधीयते। विहितस्य च प्रयोजनकल्पनमिति, असत्यपि दृष्टेऽवघातमात्रम-दृष्टार्थं कर्त्तव्यं सर्वौषधावहन्तिवत्।

स्यादेवं, यद्यवघातं कुर्यादिति विधीयेत। अवघातेन तु समीहितं साधयेदिति विधिः। समीहितं च दृष्टे सम्भवति नादृष्टं कल्पयितव्यं। सम्भवति चेह क्रत्वपेक्षितातण्डुलनिर्वृत्त्यर्थता वघातस्येति, तदेव प्रयोजनं। तच्चानभ्यस्तेनाशक्यमिति, प्रयोजनवशादश्रुतोऽप्यासः कर्त्तव्यः। *सर्वौषधावघाते तु दृष्टार्थासम्भवाददृष्टार्थं शब्दार्थमात्रं कर्त्तव्यं। सकृदसकृद्विचारप्रसङ्गात्सङ्गतिः। एवमुत्तरत्रापि।

इति चतुर्थमवघातादीनामातण्डुलनिर्वृत्तेरभ्यासाधिकरणम्।

प्रयाजादीनामङ्गानां सकृदनुष्ठानाधिकरणम् ॥ ५ ॥

क्रतुवद्धानुमानेनाभ्यासे फलभूमा स्यात् ॥ २९ ॥ सकृद्वा कारणैकत्वात् ॥ ३० ॥ परिमाणं चानियमेन स्यात् ॥ ३१ ॥ फलारम्भनिवृत्तेः क्रतुषु स्यात् फलान्यत्वम् ॥ ३२ ॥ अर्थवांस्तु नैकत्वादभ्यासः स्यादनर्थको यथा भोजनमेकस्मिन्नर्थस्यापरिमाणत्वात्प्रधाने च क्रियार्थत्वादनियमः स्यात् ॥ ३३ ॥ पृथक्त्वाद्विधितः परिमाणं स्यात् ॥ ३४ ॥ अनभ्यासो वा प्रयोगवचनैकत्वात्सर्वस्य युगपच्छास्त्रादफलत्वाच्च कर्मणः स्यात्क्रियार्थत्वात् ॥ ३५ ॥ अभ्यासो वा छेदनसम्मार्गाऽवदानेषु वचनात्सकृत्त्वस्य ॥ ३६ ॥ अनभ्यासस्तु वाच्यत्वात् ॥ ३७ ॥

फलभूमार्थिना कर्माणि पुनः पुनः प्रयोक्तव्यानीति स्थिते, चिन्त्यते—किमेकस्मिन्प्रयोगेऽङ्गानि पुनः पुनः प्रयुञ्जानस्य फलभूयस्त्वं भवति, नेति। तत्राभ्यस्यमानान्यङ्गानि बहूनुपकारान् जनयन्ति, बहूपकारयुक्तं च प्रधानं फलभूयस्त्वाय भवतीति मन्वानस्य उत्तरं समग्रकारणावृत्त्या न भूयः फललाभः। न चोपकारभूयस्तया फलभूयस्त्वं, प्रमाणाभावात, नचात्राङ्गाभ्यासःशास्त्रीयः। न चाशास्त्रीयेण प्रयासगौरवेण फलभूमा शक्यते कल्पयितुम्। अतः फलभूमार्थिना साङ्गं प्रधानमभ्यसितव्यम्, नाङ्गमात्रं, नापि प्रधानमात्रम्।

इति पञ्चमंप्रयाजादीनामंगानांसकृदनुष्ठाधिकरणम्।

—:०:—

कपिञ्जलाधिकरणम् ॥ ६ ॥

बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात् ॥ ३८ ॥ दृष्टः प्रयोग इति चेत् ॥ ३९ ॥ तथेह ॥ ४० ॥ भक्त्येति चेत् ॥ ४१ ॥ तथेतरस्मिन् ॥ ४२ ॥ प्रथमं वा नियम्येत, कारणादतिक्रमः स्यात् ॥ ४३ ॥ श्रुत्यर्थाविशेषात् ॥ ४४ ॥ तथा चान्यार्थदर्शनम् ॥ ४५ ॥ प्रकृत्या च पूर्ववत्तदासक्तेः ॥ ४६ ॥

'वसन्ताय कपिञ्जलानालभते' मै. सं. ३-१४-१ इत्यादिषु बहुवचनेषु किं त्रयाणामेवालम्भः ? उत त्रिप्रभृतीनामसंख्यानामिति संदेहे, बहुवचनस्य सर्वत्र वृत्तेः सर्वसंख्यानां शास्त्रार्थत्वं, शास्त्रीयाच्च प्रयासगौरवात्फलभूयस्त्वमविवादम्, अतो यावदुत्साहं नानासंख्योपादानं।

नैतदेवं। बहुत्वमात्रं हि शब्दार्थः। न तु 'षट् देया, द्वादश देये'त्यादिवत्संख्याविशेषाणां भेदेन शास्त्रमस्ति। यद्बलात्फलभूयस्त्वं कल्प्येत। यस्त्रीनालभते, यश्च सहस्रं, तयोरुभयोरपि बहुत्वसंपादनमविशिष्टं। यत्तु विशिष्यते सहस्रादि-तदशास्त्रीयं। न चाशास्त्रीयं गौरवं फलभूयस्त्वं कल्पयितुमलम्। एवं च त्रीनालभ्य, चतुर्णामालम्भासम्भवात्, अवश्यं त्रय आलब्धव्याः, । तावता च सिद्धे शास्त्रार्थे, नाधिकालम्भं तादच्छास्त्रं कल्पयति। निवृत्तव्यापारे च विधौ, 'न हिंस्यादि'ति निषेधशास्त्रं प्रवर्त्तते-इति, अधिकानालम्भः।

इति षष्टं कपिञ्जलाधिकरणम्।

---

'उत्तरा दोहयति' इत्यत्र सर्वासां गवां दोहनविधानाधिकरणम् ॥ ७ ॥

उत्तरासु न यावत्स्वमपूर्वत्वात् ॥ ४७ ॥ यावत्स्वं वाऽन्यविधानेनानुवादः स्यात् ॥ ४८ ॥ साकल्यविधानात् ॥ ४९ ॥ बह्वर्थत्वाच्च ॥ ५० ॥ अग्निहोत्रे चाशेषवद्यवागूनियमः ॥ ५१ ॥ पयः प्रतिषेधः कुमाराणाम् ॥ ५२ ॥ सर्वप्रापिणापि लिङ्गेन संयुज्य देवताभिसंयोगात् ॥ ५३ ॥

सान्नाय्यदोहाधिकारे श्रूयते 'वाग्यतस्तिस्रो दोहयित्वा, विसृष्टवागनन्वारभ्य 'तूष्णीमुत्तरा दोहयती' इति, तत्र किमुत्तरासान्तिसृणामेव दोहः ?

उत यावत्यो यजमानस्य गावः, तासां सर्वासामिति संदेहे, पूर्ववत्तिसृणामेव। न च यावत्स्वं दोहनं साक्षात्केनचिद्विहितं, येन सर्वासां दोहनं स्यात। येन-'चोत्तरा दोहयती'त्यनुवादः स्यात्। अन्यो विधिरेवायमिति, तिसृणामेव दोहः।

मैवं—'नास्यैतां रात्रिं कुमारा अपि पयो लभेरन्नि'त्यनेन वचनेन कृत्स्नस्यापि पयसो हविष्ट्ववचनात्प्राप्तमेव सर्वासां दोहनं। न हीदं कुमाराणां पयःप्रदानप्रतिषेधपरम्, अदृष्टार्थत्वप्रसङ्गात्, अपिशब्दार्थक्यप्रसङ्गाच्च। तस्मात्सर्वासां दोहः।

इति सप्तममुत्तरादोहाधिकरणम्।

---

आग्नेयादीनां प्रधानानां भेदेऽप्याधारादीनामङ्गानां
तन्त्रेणानुष्ठानाधिकरणम् ॥ ८ ॥

प्रधानकर्मार्थत्वादङ्गानां तद्भेदात् कर्मभेदः प्रयोगे स्यात् ॥५४॥ क्रमकोपश्च यौगपद्ये स्यात् ॥ ५५ ॥ तुल्यानां तु यौगपद्यमेकशब्दोपदेशात् स्याद्विशेषाग्रहणात् ॥५६॥ ऐकार्थ्यादव्यवायः स्यात् ॥५७॥ तथा चान्यार्थदर्शनं कामुकायनः ॥ ५८ ॥ तन्न्यायत्वादशक्तेरानुपूर्व्यं स्यात् संस्कारस्य तदर्थत्वात् ॥ ५९ ॥ असंसृष्टोऽपि तादर्थ्यात् ॥ ६० ॥ विभवाद्वा प्रदीपवत् ॥ ६१ ॥ अर्थात्तु लोके विधिः प्रतिप्रधानं स्यात् ॥ ६२ ॥ सकृदिज्यां कामुकायनः, परिमाणविरोधात् ॥ ६३ ॥ विधेस्त्वितरार्थत्वात् सकृदिज्याश्रुतिव्यतिक्रमः स्यात् ॥ ६४ ॥ विधिवत्प्रकरणाविभागे प्रयोगं बादरायणः ॥ ६५ ॥ क्वचिद्विधानान्नेति चेत् ॥६६॥ न विधेश्चोदितत्वात् ॥ ६७ ॥

उपोद्घातप्रसक्तानुप्रसक्तादि गतम्। इदानीं लक्षणार्थं तन्त्रावापं विचारयामः। दर्शपूर्णमासयोः षट् प्रधानकर्माणि-पौर्णमास्यां त्रीणि, अमावास्यायां च त्रीणीति। तत्र देश-काल-कर्तॄणां तन्त्रत्वं वक्ष्यते, तेनैकस्यामेव पौर्णमास्याम, एकस्मिन्नेव देशे तैरेव कर्तृभिस्त्रीण्याग्नेयादीनि तदङ्गानि च कर्त्तव्यानीति स्थिते, चिन्त्यते—किं त्रयाणामप्याग्नेयादीनां प्रधानानां भेदेन प्रयाजाद्यङ्गानि कर्त्तव्यानि, उत सकृदेवेति।

तत्र--भेदेन विनियुक्तत्वात् भेदेनैव क्रिया भवेत्।
कथंभावस्य भिन्नत्वाद्भेदेन विनियोगधीः ॥ ६ ॥

षडप्याग्नेयादिभावनाः साध्यसाधनांशयुक्ता उत्पत्ति-प्रयोगवाक्याभ्यामवगताः परस्परानपेक्षा एव कथमितीत्थभावं भेदेनैवापेक्षन्ते। तद्वशाच्च सन्निधिसमाम्नातान्यङ्गानि प्रत्येकमेव तासु विनियुज्यन्ते, विनियोगानुसारेण चानुष्ठानं। तस्मादेकैकं स्वाङ्गयुक्तं कर्त्तव्यमिति, प्रत्येकं साङ्गं कृत्वा, अपरमपि तथैव कर्त्तव्यमिति प्राप्ते--

ब्रूमः—सत्यं प्रत्येकमङ्गानां विनियोगस्तथापि तु।
विधानवदनुष्ठानं सकृदेवोपकारकम् ॥ १० ॥

यथैव हि षट्सु भावनासु त्र्यंशविशिष्टासु विधित्सितासु साध्यसाधनांशप्रतिपादनेन प्रकृतासु प्रक्रान्तासु तृतीयमंशं कथंभावं भेदेनैवापेक्षमाणासु अपि सकृदाम्नाता एवाङ्गविधयः षण्णामपि प्रत्येकमङ्गानि समर्पयन्ति। सत्यपि च कस्यचित्प्रधानोत्पत्तिविधिसंनिधौ प्रकरणवशेन सन्निधिर्बाध्यते, तथैव संहतानाम्प्रधानानां फलसाधनत्वात्कर्तृदेशकालैक्याच्च युगपत्सर्वेष्वनुष्ठातुं प्रारब्धेषु सकृत्कृतमेवाङ्गं सर्वचिकीर्षया कृतत्वात्सन्तमपि केन चित्सन्निधिं बाधित्वा, अनुष्ठानक्रियाप्रारम्भाख्यप्रकरणवशेन सर्वार्थं भवतीति,न पुनः क्रियायां प्रयोजनमस्ति। किं च 'पौर्णमास्यां पौर्णमास्या यजेते'ति युगपदनुष्ठानं त्रयाणामवगतं पृथक् पृथक् स्वाङ्गेषु अनुष्ठीयमानेषु बाध्येत। तस्मादेकदेशकालकर्त्तृकाणां तन्त्रमङ्गानीति सिद्धम्।

इत्यष्टममाघाराद्यंगानां तन्त्रेणानुष्ठानाधिकरणम्।



कृष्णग्रीवयोः प्रथमतृतीययोर्भेदेन प्रदानाधिकरणम् ॥ ९ ॥

व्याख्यातं तुल्यानां यौगपद्यमगृह्यमाणविशेषाणाम् ॥ ६८ ॥ भेदस्तु कालभेदाच्चोदनाव्यवायात् स्याद्विशिष्टानां विधिः प्रधानकालत्वात् ॥ ६९ ॥ तथा चान्यार्थदर्शनम् ॥ ७० ॥ विधिरिति चेन्न वर्तमानापदेशात् ॥ ७१ ॥

'आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुम्, आग्नेयं कृष्णग्रीवं पुरोधायां स्पर्द्धमानः 'तै. सं. २-१-२ इति श्रुतं। तत्राग्नेययोरनुष्ठानं तन्त्रं,

पृथग्वेति संशये, तन्त्रमिति ब्रूमः। भवति हि तन्त्रेणानुष्ठानं, देवतैक्यात्। न च पाठक्रमात् क्रमेणानुष्ठानम्, अवश्यंभाविनि हि क्रमे पाठान्नियमः। सम्भवति चेह सकृदनुष्ठानमिति, न क्रमापेक्षा। तस्मात्तन्त्रं।

नैवं। यद्यप्याग्नेययोस्तन्त्रता सम्भाव्येत, तथापि सौम्येन तावदवश्यंभावी क्रमः। तत्र पाठवशादेकस्याग्नेयस्य सौम्यात्पूर्वमनुष्ठानं, उत्तरस्य-ततः पश्चात्। सहानुष्ठानेऽवश्यंभाव्यन्यतरस्य सौम्येन यः क्रमः, स बाध्येत। तस्मात्पृथगेवानुष्ठानम्।

इति नवमं कृष्णग्रीवयोः प्रथम-तृतीययोर्भेदेन प्रदानाधिकरणम्।

इति महामहोपाध्याय श्रीपार्थसारथिमिश्रकृतयां शास्त्रदीपिकाया-मेकादशस्य प्रथमः पादः ॥ १ ॥



# अथ एकादशे द्वितीयः पादः।

आग्नेयादीनां प्रधानानां तन्त्राधिकरणम् ॥ १ ॥

एकदेशकालकर्तृत्वं मुख्यानामेकशब्दोपदेशात् १ ॥ अविधिश्चेत्कर्मणामनभिसम्बन्धः प्रतीयेत; तल्लक्षणार्थाभिसंयोगाद्विधित्वाच्चेतरेषां प्रतिप्रधानं भावः स्यात् ॥ २ ॥ अङ्गेषु च तदभावः प्रधानं प्रतिनिर्देशात् ॥ ३ ॥ यदि तु कर्मणो विधिसम्बन्धः स्यादैकशब्द्यात् प्रधानार्थाभिसंयोगात् ॥ ४ ॥ तथा चान्यार्थदर्शनम् ॥ ५ ॥ श्रुतिश्चैषां प्रधानवत्कर्मश्रुतेः परार्थत्वात्कर्मणोऽश्रुतित्वाच्च ॥ ६ ॥ अङ्गानि तु विधानत्वात्प्रधानेनोपदिश्येरंस्तस्मात्स्यादेकदेशत्वम् ॥७॥ द्रव्यदेवतं-तथेति चेत् ॥ ८ ॥ न चोदनाविधिशेषत्वान्नियमार्थो विशेषः ॥ ९ ॥ तेषु समवेतानां समवायात्तन्त्रमङ्गानि भेदस्तु तद्भेदात्कर्मभेदः प्रयोगे-स्यात्तेषां प्रधानशब्दत्वात्तथाचान्यार्थदर्शनम् ॥ १० ॥ इष्टि-राजसूय-

चातुर्मास्येष्वैककर्म्यात् अङ्गानां तन्त्रभावः स्यात् ॥ ११ ॥

दर्शपूर्णमासयोर्देशः–'समे दर्शपूर्णमासाभ्यां यजेते'ति, कालः–'पौर्णमास्यां पौर्णमास्यां यजेत, अमावास्यायाममावास्यया यजेते'ति, कर्त्तारः-'दर्शपूर्णमासयोश्चत्वारः ऋत्विजः' इति। किमेते देश-काल-कर्त्तारस्तन्त्रम्? उत भेदेनेति। किं यस्मिन्नेव समे यैरेव कर्त्तृभिर्यस्यामेव पौर्णमास्याम्-आग्नेयः, तस्मिन्नेव समे तैरेव कर्त्तृभिस्तस्यामेव पौर्णमास्यां तैरेव कर्तृभि-रग्नीषोमीयः? उत समान्तरे पौर्णमास्यन्तरे कर्त्रन्तरैरिति। तदर्थमिदं-विचार्यते–किमुत्पत्तिवाक्यै'र्यदाग्नेयोऽष्टाकपालः' इत्यादिभिर्देशादिविधीनां-सम्बन्धः? उत फलवाक्येन 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'ति।

तत्र—कर्मरूपेण सम्बन्धो देशादीनां फलस्य च।
उत्पत्तिविधिनैवातः सर्वेषामेकवाक्यता॥ ११ ॥

त्रयाणामपि ह्यंशानां भावनयैव सम्बन्धः, न परस्परम्। अतो देशा-दिविधीनां, फलवाक्यस्य च न मिथः सम्बन्धः। किन्तु फलवाक्यं देशादि-वाक्यानि च सर्वाणि भावनोत्पत्तिवाक्येन सम्बध्यन्ते। उत्पत्तिवाक्येषु-चाग्नेयादयोऽन्योन्यनिरपेक्षा एवावगता इति, तथाभूतैः सम्बध्यमानाः-देशादयो निरपेक्षाणामेव भवन्ति–इति। निरपेक्षोत्पन्ना अपि देशादिविधिषु पौर्णमास्यादिशब्दै तन्त्रोक्ताः सहैवावगता इति, साहित्येनैव फलसम्बन्ध-वद्देशादिसम्बन्धः कस्मान्न भवतीति चेत? न। विषम उपन्यासः। फलं प्रति गुणभूतानां युक्ता तंत्राभिधानावगतसाहित्यविवक्षा, देशादींस्तु प्रति कर्मणां प्राधान्यादविवक्षितं साहित्यं। तस्माद्यथा 'य इष्टया पशुना, सोमेन वा यजेत, सोऽमावास्यायां, पौर्णमास्यां वे'त्यस्मिन्वाक्ये तन्त्राभिहिताभिर-पीष्टिभिः प्रत्येकमेव कालः सम्बध्यते इति, नैकस्यामेव पौर्णमास्यां सर्वाः-क्रियन्ते।

तथाऽग्नेयादिभिः प्रत्येकमेव कालादीनां सम्बन्धादेकस्यां पौर्णमा-स्यामाग्नेयं कृत्वा, अपरस्यामग्नीषोमीय इत्येवं षट्सु पर्वसु षड् यागाः-कर्त्तव्याः। न चैवं फलवाक्यावगतसाहित्यबाधः, तत्र ह्येतावदधिगतम्-एकमेव फलं सर्वैः साध्यते, न प्रत्येकं फलस्य पृथक् निष्पत्तिरिति। न तस्य कालभेदाद्बाधः। यथा पौर्णमासीत्रिके अमावास्यात्रिके च द्वयोः पर्वणोः निष्कृष्यमाणेऽपि, न फलं प्रति साहित्यबाधः, तथा षण्णामपि निष्कर्षे द्रष्टव्यम्।

भाष्ये वर्णितस्याऽन्तराचिन्तान्तरस्य पूर्वपक्षोपक्षेपः।

यदा चैवमुत्पत्तिवाक्यशेषत्वं कालादीनां, तदोत्पत्तिवाक्ये प्रधान-मात्राणां निरङ्गानां विधानात्तन्मात्राणामेवामी कालादयः नाङ्गानां प्रधान-

देशकालकर्तृकत्वं । तानि तु कामं कालान्तरादिष्वपि कर्त्तव्यानीति प्राप्ते—

ब्रूमः—भावनोत्पत्तिवेलायां देशादिविधयो यदि ।
तत एवं भवेत्ते तु फलवद्भावनाश्रयाः ॥ १२ ॥

यद्यपि भावनयैवाङ्गानां सम्बन्धः, न परस्परं, तथाऽपि नोत्पत्तिवेलायामङ्गसम्बन्धः । सा हि प्रथमं भाव्यमपेक्षते, तल्लाभश्च फलवाक्ये, तेन फलवाक्यावरुद्धानामुत्पत्तिवाक्यानामङ्गसम्बन्धः । फलवाक्ये च फलं प्रति विवक्षितसाहित्यानां विनियोगात्फलार्थिनां युगपत्सर्वेषु कर्त्तव्यतावगतिः । यस्यां हि बुद्धावाग्नेयः कर्त्तव्यतयोपस्थितः, तस्यामेवाग्नीषोमीयादयोऽपि, प्रयोगविध्येकवाक्यत्वात् । तेन सर्वेषु कर्त्तव्यतयाऽवगतेषु, चिकीर्षितेषु च पौर्णमासीकालो विहित इति, यैवैका पौर्णमास्युपात्ता, सैवागृह्यमाणविशेषत्वात्सर्वार्थी भवति । तथा—देशः, कर्त्तारश्च । तस्मात्तन्त्रम् ।

सौर्यादीनां पुनःपुनः पृथक्-पथक् स्वफले विनियुक्तानां पृथगेव कर्त्तव्यतावगमः, नानाविधिविधेयत्वात । तेन तैरन्योन्यनिरपेक्षैरेव 'य, इष्ट्या पशुने'त्यादिकालः सम्बध्यत इति, नास्ति तन्त्रता ।

यदि पुनः कश्चिच्चित्राफलं,सौर्यफलं च युगपदिच्छन् कर्मद्वयमपि सह चिकीर्षति, किमसौ तन्त्रेणैकस्मिन्नेव काले द्वयमपि प्रयुञ्जीत? नेति ब्रूमः । यदा हि विधिवेलायां साहित्यं नावगतं, तदाऽनुष्ठानदशायामपि न लब्धुं शक्यते । तस्मादेकेन विधिना यावन्त्यङ्गप्रधानानि विधीयन्ते, तावद्भिर्यावान्कालो व्याप्यते, तावत्यविक्षिप्तः समस्ताङ्गप्रधानप्रयोगः कर्त्तव्यः इत्यवगमात् , सहप्रयोगे च तद्विरोधात् । एकेन तु विधिना फले सहचोदितानामाग्नेयादीनामेकोपक्रमोपसंहारत्वात्तादृशैः सम्बध्यमाना देशादयोऽगृह्यमाणविशेषतया विधिवेलायामेव सर्वसम्बन्धितयाऽवगतास्तन्त्रं भवन्तीति, विशेषः ।

यदा चैवं प्रयोगवाक्यशेषत्वं कालादीनां, तदाऽङ्गानामपि तत्कालत्वं सिध्यति । तथा हि—साध्यसाधनांशयुक्ताऽवगता भावना कथमितीत्थम्भावमपेक्षते, भावनागतश्च रूपविशेष इत्थंभावः । प्रज्ञातरूपा च भावना कालादीनपेक्षते, तेन प्रकारापेक्षायां भावनायान्तत्प्रकारत्वेन प्रयाजादिषु अवगतेषु सामस्त्यरूपेण भावनाख्ये व्यापारे प्रयोगापरपर्यायेऽवगते तच्छेषत्वेन कालादयो विधीयन्त इति, अङ्गानामपि त एव देशादयो भवन्ति ।

द्रव्यदेवतं तु पुनर्न समस्तप्रयोगसम्बन्धित्वेन विधीयते, अनपेक्षितत्वात, अयोग्यत्वाच्च । न ह्यग्न्यन्वाधानबर्हिस्तरणाद्यनुरक्तस्य प्रयोगस्य

द्रव्यदेवतापेक्षा। नापि तन्निष्पत्तौ द्रव्यदेवतापेक्षा। नापि तन्निष्पत्तौ द्रव्यदेवतं समर्थं, किं तु फलभावनावयवयागरूपनिष्पादनेन द्रव्यदेवतमपेक्षितत्वाद्योग्यत्वाच्च सम्बध्यते। तस्मान्न प्रधानसम्बन्धि द्रव्यदेवतमङ्गानां भवति। कालादयस्त्वाग्नेयादिकरणिकया भावनया समग्ररूपया सम्बध्यमानास्तदन्तर्गतानामङ्गानामपि भवन्तीति विशेषः।

इति प्रथमं आग्नेयादीनां प्रधानानां तन्त्राधिकरणम्।

---

**दर्शपूर्णमासेष्टिप्रभृतिषु संघभेदेन अङ्गानां भेदेनानुष्ठानाधिकरणम्॥ २॥**

**कालभेदान्नेति चेत्॥ १२॥ नैकदेशत्वात्पशुवत्॥ १३॥ अपि वा कर्मपृथक्त्वात्तेषां तन्त्रविधानात्साङ्गानामुपदेशः स्यात्॥ १४॥ तथा-चान्यार्थदर्शनम्॥ १५॥ तथा तदवयवेषु स्यात्॥ १६॥ पशौ तु चोदनैकत्वात्तन्त्रस्य विप्रकर्षः स्यात्॥ १७॥**

दर्शपौर्णमासयोर्विभज्य पर्वद्वये प्रयुज्यमानयोरङ्गानि तन्त्रम्? उत प्रतित्रिकमावर्तेरन्निति संदेहे, तन्त्रमित्याह। कस्मात्? एक कर्मत्वात्, षण्णामप्येकोपक्रमावसानत्वात्। तेन यदेव किंचिदङ्गमनुष्ठितं, तदेव षट्सु चिकीर्षितेषु क्रियमाणमगृह्यमाणविशेषत्वात्तन्त्रं भवति। वचनात्तु एकोऽपि प्रयोगो विप्रकृष्यते। न तावताऽङ्गानामावृत्तिः पशुवत्। यथा प्रशप्रयोगे 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यन्दिने सवने, अङ्गैस्तृतीयसवने' मै. सं.३-९-५इति विप्रकृष्यमाणेऽपि नाङ्गानामावृत्तिः, तथेहापीति प्राप्ते—

ब्रूमः—त्रिकद्वयस्य साङ्गस्य चोदना कालयोर्द्वयोः।
तेनाङ्गानामिहावृत्तिर्वपादीनां पशौ पुनः॥ १३॥

यद्यप्येकफलत्वादेकप्रयोगत्वं षण्णां प्राप्तं, तथाऽपि वाचनिकेन कालभेदेन प्रयोगभेदो भवति। 'पौर्णमास्यां पौर्णमास्या यजेते'त्यनेन हि यः पौर्णमासीकरणकः फलार्थो व्यापारः प्रत्ययवाच्यः, तदङ्गत्वेन पौर्णमास्यामिति पौर्णमासीकालो विधीयते। न पौर्णमासी यागमात्रे। तेनाङ्गानामपि यागकरणकफलक्रियान्तर्गतानां तत्कालता विहिता भवति। तथा-ऽमावास्यायामपि साङ्गैवाऽमावास्या विधीयत इति, द्वयोः कालयोरङ्गानामावृत्तिः।

पशौ पुनर्वपाप्रचारादिमात्रस्य भिन्नकालस्य चोदना, न पशुयागस्य। न च प्रचारार्थान्यङ्गानि विहितानि। तेन तत्र नावर्तन्ते। अत्र पुनः प्रधानकालभेदेनाङ्गानामावृत्तिः, एवं चातुर्मास्येषु, राजसूये च द्रष्टव्यम्।

इति द्वितीयं दर्शादौ संघभेदेनांगानां भेदेनानुष्ठानाधिकरणं।

---

अध्वरकल्पायां त्रिषु संघेष्वङ्गानां भेदेनानुष्ठानाधिकरणम्॥ ३॥

तथा स्यादध्वरकल्पेष्टौ विशेषस्यैककालत्वात्॥ १८॥ इष्टिरितिचैकवच्छ्रुतिः॥ १९॥ अपि वा कर्मपृथक्त्वात्तेषां च तन्त्रविधानात् साङ्गानामुपदेशः स्यात्॥ २०॥ प्रथमस्य वा कालवचनम्॥ २१॥ फलैकत्वादिष्टिशब्दो यथान्यत्र॥ २२॥

अस्त्यध्वरकल्पा नामेष्टिः 'आग्नावैष्णवमष्टाकपालं निर्वपेत्पूर्वाह्णे सरस्वतीमाज्यस्य यजेत, बार्हस्पत्यश्चरुः। आग्नावैष्णवमेकादशकपालं निर्वपेत्, मध्यन्दिने सरस्वतीमाज्यस्य यजेत, बार्हस्पत्यश्चरुः। आग्नावैष्णवं द्वादशकपालं निर्वपेदपराह्णे, सरस्वतीमाज्यस्य यजेत, बार्हस्पत्यश्चरुरि 'मै० सं० २-१-७ति। तत्र श्रूयते 'पुरा वाचः प्रवदितोर्निर्वपेदि' तै० सं०२-२-२९ति। तदर्थमिदं विचार्यते 'पुरावाचः प्रवदितोनिर्वपेदि'ति किं सर्वनिर्वापस्यापकर्षः? उत प्रातःकालीनस्यैवेति। प्रकरणाविशेषात्सर्वनिर्वापस्यापकर्षः। ततश्च 'तदादि वाऽभिसम्बन्धादि' ५-१-२४ ति न्यायान्निर्वापान्तस्याग्न्यन्वाधानादेरङ्गकाण्डस्यापकर्षः, तच्चाङ्गकाण्डं वचनादन्यकालमेव प्रधानानाम् उपकारकमिति, अगृह्यमाणविशेषत्वात्तन्त्रम्। अतश्च नवापि यागास्तन्त्रेणोपक्रान्ता भवन्ति। यथोपक्रमं च समापनमिति, उत्तरेषामप्यङ्गानां तन्त्रत्वं।

स्यादेवं यदि निर्वापः सर्वेषामपकृष्यते।
प्रातः कालिकमात्रस्य तद्विशेषोऽत्र चोद्यते॥ १४॥

प्रातः कालविशेषोऽयं 'पुरा वाचः' इति विधीयते। तेन यस्य सामान्यतःप्राप्तिः, तस्यैवायं विधीयते, नान्यकालस्याऽप्रधानकालत्वं चैवमङ्गानांचोदकप्राप्तं न बाधितं भवति। तस्मान्माध्यन्दिनापराह्णकालानां यागानामङ्गकाण्डं नापकृष्यत इति, न सर्वेषां सहोपक्रमः। तस्मात्प्रातर्माध्यन्दिनापराह्णवर्तिनां प्रधानानामङ्गान्यपि तत्र तत्राऽऽवर्त्तनीयानीति तन्त्रभेदः।

इति तृतीयमध्वरकल्पायां संघेष्वगानां भेदेनानुष्ठानाधिकरणम्।

---

प्राजापत्यवसाहोमानां तन्त्रेणानुष्ठानाधिकरणम् ॥ ४ ॥

वसाहोमस्तन्त्रमेकदेवतेषु स्यात् प्रदानस्यैककालत्वात् ॥ २३ ॥

अग्नीषोमीये पशौ 'याज्यार्द्धर्चान्ते वसाहोमं जुहोती'ति श्रुतो वसाहोमश्चोदकपरम्परया प्राजापत्येषु पशुषु प्राप्तस्तन्त्रम्, आवापो वेति संदेहे, सहश्रपणात् वसाया एकत्वादेकदेवतत्वाच्च याज्यार्द्धर्चान्तस्य चैकत्वात् तंत्रं सकृत्कर्त्तव्य इति स्पष्टमेव शिष्यहितार्थमेवमुक्तम् ।

इति चतुर्थं वसाहोमानां तन्त्रेणानुष्ठानम् ।

---

ऐकादीशनगतस्यवसाहोमस्यभेदेनानुष्ठानाधिकरणम् ॥ ५ ॥

कालभेदात्त्वावृत्तिर्देवता भेदे ॥ २४ ॥

भिन्नदेवतेष्वपि पशुषु सहश्रपणश्रवणेन वसाया एकत्वाद्याज्यार्धर्चान्तभेदेऽपि यस्य कस्य चित् याज्यार्धर्चान्ते सकृदेव वसाहोमः स्यात् ।

नैवं । सर्वे हि पशवः स्वयाज्यार्द्धर्चान्ते स्वस्या वसाया होमेन प्रतिपत्तिमपेक्षन्ते । भवति च वसा द्रव्यं, तेन सर्वेषु याज्यार्द्धर्चान्तेष भेदेन वसाहोमः सर्वपशुवसाप्रतिपत्तये कार्यः ।

इति पञ्चमं वसाहोमस्य भेदेनानुष्ठानम् ।

---

यूपेकादशिन्यां तन्त्रेण यूपाहुत्यनुष्ठानाधिकरणम् ॥ ६ ॥

अन्ते यूपाहुतिस्तद्वत् ॥ २५ ॥ इतरप्रतिषेधो वा; अनुवादमात्रमन्तिकस्य ॥ २६ ॥ अशास्त्रत्वाच्च देशानाम् ॥ २७ ॥

अग्नीषोमीये पशौ यूपस्यान्तिके 'अग्निं मथित्वा यूपाहुतिं जुहोती'तियूपाहुतिर्यूपैकादशिन्यां भेदेन कर्त्तव्या, तन्त्रेण वेति संदेहे, तदन्तिकदेशानांभिन्नत्वात वसाहोमवदावृत्तिः। नैवं । आपेक्षिके ह्यन्तिकदेशे मन्थनं सम्भवति, तेन यं देशं प्राप्तो यूपसमीपं प्राप्तोऽस्मीति मन्यते, यत्र यूपो दृष्टिपथमापद्यते, तत्र मन्थनं, होमश्च । स च सर्वेषामेकदेशः सम्भवतीति, अगृह्यमाणविशेषत्वात्तन्त्रम् ।

इति षष्ठं यूपैकादशिन्यां तन्त्रेण यूपाहुत्यनुष्ठानाधिकरणम् ।

साङ्गस्यावभृथस्यापस्वनुष्ठानाधिकरणम् ॥ ७ ॥

अवभृथे प्रधानेऽग्निविकारः स्यान्न हि तद्धेतुरग्निसंयोगः ॥२८॥ द्रव्यदेवतावत् ॥ २९ ॥ साङ्गो वा प्रयोगवचनैकत्वात् ॥ ३० ॥ लिङ्गदर्शनाच्च ॥ ३१ ॥ शब्दविभागाच्च देवतानपनयः ॥ ३२ ॥

'अप्स्ववभृथेन चरन्ती'ति किं प्रधानमात्रमप्सु कर्त्तव्यम्? उताङ्गान्यपीति संशये, 'मुख्यार्थो वाङ्गस्याचोदितत्वादि' मी. द. ३-८-३५ तिन्यायेन वैकृतविशेषाणां प्रकृतावेव श्रुतानां केवलप्रधानार्थत्वात् उपांशुत्ववदापोऽपि प्रधानस्यैव, अङ्गानान्त्वाहवनीय एव क्रियेति प्राप्ते—

ब्रूमः—'ता उपांशु कर्त्तव्याः' इति प्रधानक्रियायां विहितमुपांशुत्वंयुक्तं यदङ्गेषु न भवति। देशस्त्ववभृथकरणिकायां क्रियायां श्रूयमाणस्तदन्तर्गतानामपि भवति। तस्मादङ्गप्रधानामेकदेशत्वम्।

इति सप्तमं सांगस्यावभृथस्याप्स्वनुष्ठानाधिकरणम्।

—:०:—

उत्तरदक्षिणविहारयोर्भेदेनाङ्गानामनुष्ठानाधिकरणम् ॥ ८ ॥

दक्षिणाग्नौ वरुणप्रघासेषु देशभेदात्सर्वं विक्रियते ॥ ३३ ॥ अचोदनेति चेत् ॥ ३४ ॥ स्यात्पौर्णमासीवत् ॥ ३५ ॥ प्रयोगचोदनेति चेत् ॥ ३६ ॥ तथेह ॥ ३७ ॥ आसादनमिति चेत् ॥ ३८ ॥ नोत्तरेणैकवाक्यत्वात् ॥ ३९ ॥ अवाच्यत्वात् ॥ ४० ॥ आम्नायवचनं तद्वत् ॥ ४१ ॥

वरुणप्रघासेषु विहारद्वयं। द्वयोरप्याहवनीयो विभज्य स्थापितः। तत्र श्रूयते, 'अष्टावध्वर्युरुत्तरे विहारे हवींष्यासादयति, मारुतीमेव प्रतिप्रस्थाता दक्षिणस्मिन्नि' ति। तत्र विचार्यते-किं नवानामपि हविषां तन्त्रम् अङ्गानि, उताग्नेयादीनामष्टानां मारुत्याश्चामिक्षाया भेदेनाङ्गानि कर्त्तव्यानीति। तत्र 'प्रावृषि वरुणप्रघासैर्यजेते'ति प्रयोगवचनैक्यात्तन्त्रत्वं। न च देशभेदाद्भेदः। आसादनमात्रं हि दक्षिणे विहारे मारुत्या विधीयते, न होमः। तस्मात्प्रधानदेशाभेदात् तन्त्रमङ्गानि—

नैवं। न ह्यत्रासादनमपूर्वं विधीयते, किन्तु नवानामपि हविषां चोदकप्राप्तमासादनं, होमश्च विहारद्वयेऽप्यव्यवस्थया प्राप्त उभयत्राहवनीयस्य-

स्थापितत्वादासादनं नियंस्यते, वाक्यद्वयेन यथाप्राप्तस्य च नियमः, प्राप्तिश्च होमार्थतयेति, तादृशस्यैव दक्षिणे विहारे विधानाद्धोमोऽपि दक्षिणस्मिन्नेव-विहारे मारुत्याः। तस्मात्प्रधानदेशभेदाद्गृह्यमाणविशेषाण्यङ्गानि न तन्त्रं भवन्ति।

सत्यं न तन्त्रमङ्गानि देशभेदात् तथापि तु।
न पृथक् स्यादनुष्ठानं प्रसङ्गात्कार्यसिद्धितः॥ १५॥

ननु कर्तृदेशभेदे कथं प्रसङ्गः? वक्ष्यत्यस्योत्तरं 'विकाराच्च न भेदस्यात्-अर्थस्याविकृतत्वादि' मी० द० १२-१-४ ति। तदिहाप्यर्थो विकृतः। तथा हि सर्वाणि तावदङ्गानि प्रधानानि चाऽध्वर्युकर्तृकाणि प्रतिप्रस्थातृ-कर्तृकाणि चोत्तरवैहारिकाणि दक्षिणवैहारिकाणि च यजमानात्मन्येव स्वापूर्वाण्यादधति। ततश्चोत्तरवैहारिकप्रधानोद्देशेनोत्तरस्मिन्विहारेऽध्व-र्युणा कृतैरङ्गैर्यजमानात्मनि स्वापूर्वेष्वाहितेषु तदेकार्थसमवायलब्धसामर्थ्यो-द्बोधं मारुतीयागोत्पत्त्यपूर्वं दक्षिणवैहारिकमपि प्रतिप्रस्थातृकर्तृकमपि स्वकार्यं जनयतीति कृतमस्य स्वाङ्गैः पृथगनुष्ठितैः।

अत्रोच्यते—तन्त्रेऽन्यस्य समारब्धे यत्रान्यस्य विधिः श्रुतः।
तत्र प्रसङ्गो न त्वत्र युगपत्सर्वचोदनात्॥ १६॥

यत्र हि प्रधाने चोद्यमानेऽन्यान्यङ्गानि प्रक्रान्तापरिसमाप्तान्या-लोच्यन्ते, तत्र लाघवात्प्रयोगविधिरेव गुणकालाद्यन्यथाभावं कार्यपरतयाऽ-नादृत्य अन्यदीयमेव तन्त्रमुपजीव्य न स्वीयं तन्त्रं प्रयुङ्क्ते। इह पुनर्नवानामपि यागानां युगपच्चोदनाद्युगपदुपक्रमोऽवसानञ्च। तेन सर्वेऽपि तेऽन्योन्यान-पेक्षाः स्वाङ्गान्यात्मसमानदेशकालकर्तृकाणि प्रयुञ्जते। तेन मारुत्याः स्वाङ्गेषु दक्षिणे विहारे प्रतिप्रस्थात्रा कर्त्तव्यानीति गम्यमानेषु, कथं तद-नादरेणान्योपजीवनं, तदुपजीवने हि यदस्य स्वाङ्गैः समानदेशकर्तृकत्वं चोदनावगतं, तल्लोपे वैगुण्यादामिक्षायागो न[1] फलसाधनं। तस्मादुभ-यत्राङ्गानामावृत्तिः।

इति अष्टमं वरुणप्रघासेषु दक्षिणविहारे अंगानां पृथगनुष्ठानाधिकरणम्।

---

१. न फलायालं—इति—पा.।

उत्तरदक्षिणविहारयोः कर्त्रभेदाधिकरणम् ॥ ९ ॥

**कर्तृभेदस्तथेति चेत् ॥ ४२ ॥ न समवायात् ॥ ४३ ॥ लिङ्ग-दर्शनाच्च ॥४४॥ वेदसंयोगादिति चेत् ॥४५॥ न देशमात्रत्वात् ॥४६॥**

कर्तृष्विदानीं तन्त्रावापौ चिन्त्येते । तत्राध्वर्यु-प्रतिप्रस्थातारौ वचनात् विहारद्वये व्यवस्थितौ । ब्रह्मा, होताऽऽग्नीध्रश्च किं विहारयोर्भेदेन, उत तन्त्र-मिति । तत्र देशभेदेन प्रयोगयोर्भिन्नत्वात्प्रयोगाङ्गभूतानां कर्तॄणामपि भेदः-स्यात् । नैवम् । असत्यपि भेदे तैरेवोभयत्रापि कार्यसिद्धेः । दर्शिता च कार्य-सिद्धिर्भाष्ये । वचनाच्च 'चातुर्मास्यानां पञ्चर्त्विजः' इति । विहारद्वयाभिप्रायं हीदं पञ्चर्त्विग्वचनं । न ह्येकैकस्मिन्विहारे पञ्च पञ्च सन्ति । वचनादेव विहारद्वयेऽध्वर्युप्रतिप्रस्थात्रोर्विहारद्वये व्यवस्थितत्वात् । तस्मात्तन्त्रं ब्रह्मादयः ।

इति नवमं वरुणप्रघासेषु होत्रादीनां तन्त्रत्वाधिकरणम् ।



उत्तरदक्षिणविहारयोः आपराग्निकहोमानां भेदेनानुष्ठानाधिकरणम् ॥१०॥

**एकाग्नित्वादपरेषु तन्त्रं स्यात् ॥४७॥ नाना वा कर्तृभेदात् ॥४८॥**

ये पुनरापराग्निका होमाः पत्नीसंयाजादयः, तेषु तंत्रं, आवापो वेति सन्देहे, पौर्वाग्निकवद्देशभेदाभावात्तन्त्रत्वं स्यात् । असत्यपि देशभेदे कर्तृ-भेदात् भेदः । प्रतिप्रस्थाकर्तृका हि मारुत्या उपकुर्वन्ति, अध्वर्यकर्तृकास्त्वि-तरेषां । तस्माद्भेदः ।

इति दशमं पत्नीसंयाजादीनां भेदेनानुष्ठानाधिकरणम् ।



वाजपेये ब्रह्मसामन्यालम्भस्य कर्म्मशेषप्रतिषेधार्थताधिकरणम् ॥ ११ ॥

**पर्यग्नि कृतानामुत्सर्गे प्राजापत्यानां कर्मोत्सर्गः; श्रुतिसामान्या-दारण्यवत्तस्माद्ब्रह्मसाम्नि चोदनापृथक्त्वं स्यात् ॥ ४९ ॥ संस्कार-प्रतिषेधो वा वाक्यैकत्वे क्रतुसामान्यात् ॥ ५० ॥ वपानां चानभिघार-णस्य दर्शनात् ॥ ५१ ॥**

वाजपेये प्राजापत्यान् पशून् प्रकृत्य श्रूयते 'तान् पर्यग्निकृतानुत्सृ-जन्ति, ब्रह्मसामन्यालभते' इति । किमुत्सृजेदिति कर्मशेषप्रतिषेधः, आलभते-

इति कर्मान्तरविधिः, उतोत्सृजतीत्यनुवादः, आलभत इत्युत्कर्षविधिः। तत्र 'तान्पर्यग्निकृतानारण्यानुत्सृजती'तिवत् तदन्ताङ्गरीतिविधानात्, तयैव प्राजापत्यानां नैराकाङ्क्ष्यान्न चोदकेनाङ्गान्तरग्रहणम्। अतः पर्यग्निकरणान्ताः प्राजापत्याः। 'ब्रह्मसाम्न्यालभत इति 'आज्येन शेषमि'तिवत्कर्मान्तरमिति मन्वानस्योत्तरं—

नान्यकर्मविधिर्युक्तोऽनेकादृष्टप्रकल्पनात्।
वाक्यभेदप्रसङ्गाच्च तस्मादुत्कर्षचोदना ॥ १७ ॥

पर्यग्निकरणानन्तरं प्राप्तस्यालम्भस्य ब्रह्मसामकाले उत्कर्षमात्रं विधीयते। तद्विधौ च प्राप्तः पर्यग्निकरणान्तो व्यापारोपरम इति, तदनुवादमात्रमुत्सृजतिः। एवमत्यन्तलाघवलाभान्न कर्मान्तरवाक्यभेदाभ्युपगमो-माध्यन्दिने सवने ब्रह्मसामाख्यस्तोत्रकाले युक्तः। तस्मात्पर्यग्निकरणान्तमङ्गकाण्डं सकृदेव कर्त्तव्यम्। न माध्यन्दिने पुनरावर्त्तनीयं। पशवश्च नान्ये उपादातव्याः।

इत्येकादशं ब्रह्मसामकाले प्राजापत्यालम्भोत्कर्षाधिकरणम्।



अहीने उक्ष्णामुत्सर्गकर्म्मशेषप्रतिषेधार्थताधिकरणम् ॥ ११ ॥

पञ्चशारदीयास्तथेति चेत् ॥५२॥ न चोदनैकवाक्यत्वात् ॥५३॥ संस्काराणां च दर्शनात् ॥ ५४ ॥

अस्ति 'पञ्चशारदीयो नामाऽहीनः पञ्चाहः। तत्र श्रूयते 'वैशाख्याममावास्यायां सप्तदशमारुतीस्त्रिवत्सा उपाकरोति, सप्तदश प्रश्नीनुक्ष्णः, तान् पर्यग्निकृतान्प्रोक्षितानितरा आलभन्ते, प्रेतरानुत्सृजन्ति। ततः सवत्सरे राजीवा आनयन्ति, तांश्चैवोक्ष्णः, तान्पर्यग्निकृतानि, 'तां आ २१-१४ त्यादि पूर्ववत्। एवं तृतीये, चतुर्थे च संवत्सरे स्त्रीपशुयागानां सामस्त्येनानुष्ठानम्, उक्ष्णां च पर्यग्निकृतानामुत्सर्गमुक्त्वा, तत्र श्रूयते–'पञ्चमे वर्षे दीक्षित एतानुक्ष्णस्त्रींस्त्रीनन्वहमालभते, पञ्चोत्तमे ऽहनी' ति। तत्रोक्षसु संशयः–किं य एव प्रथमवर्षे पर्यग्निकृता उक्षाण उत्स्रष्टव्याः, तेषामेव द्वितीयादिसंवत्सरेषु पर्यग्निकरणम्, पञ्चमे वर्षे तेषामेव पञ्चसु सुत्यासु त्रीस्त्रीनित्येवमालम्भः प्राजापत्यानामिव ? उत प्रथमे वर्षे उपक्रान्तानां-

१. अस्य विधिस्तैत्तिरीयब्राह्मणे २-७-१०-११ द्रष्टव्यः।

पर्यग्निकरणान्ताङ्गरीतिविधानेन तत्रैव समाप्तिरारण्यवत्, द्वितीयादिष्वन्ये-अन्ये उक्षाणः। पञ्चमे वर्षे सुत्यासु अन्येषामुक्षणामालम्भ इति। तत्र 'त्रींस्त्रीनि'त्यनेन ब्रह्मसामालम्भवाक्यवत्तेषामेवालम्भोत्कर्षमात्रविधौ लाघवम्। वचनात्पर्यग्निकृतानाममि तेषां पुनः पुनः पर्यग्निकरणं क्रियते। उत्सर्गवचनानि चालम्भोत्कर्षादेव प्राप्तस्योत्सर्गस्यानुवाद इति प्राप्ते—

ब्रूमः—स्यादेवं यदि त्रींस्त्रीनित्यनेनालम्भोत्कर्षः शक्यो विधातुं, न त्वेवमस्ति। गुणवाक्यत्वे सति 'त्रींस्त्रींनिति च' अन्वहमिति चानेकार्थविधाने वाक्यभेदापत्तेः। तथा 'पञ्च इति, उत्तमेऽहनीति चार्थभेदो दर्शयितव्यः। तस्मादिदं तावत्संख्याकालविशिष्टापूर्वकर्मविधानम्। एवञ्चाविहिते सत्यालम्भोत्कर्षे प्राजापत्यन्यायासम्भवात्, तदन्ताङ्गरीतिविधानेनारण्यन्यायेन प्रथमवर्षोपक्रान्तानामुक्षणां त्रिवत्सानामिव तत्रैव समाप्तिः। द्वितीयादिष्वपि वत्सरेषु अन्य एव स्त्रीपशुयागाश्च। एवं प्रतिसम्वत्सरं देवतानुषङ्गेण चतुस्त्रिंशत्कर्माणि। पञ्चमे चान्येषामेवोक्षणामालम्भः।

इति द्वादशं पञ्चशारदीयाधिकरणम्।



अभिषेचनीयदशपेययोर्भेदेन प्रयोगाधिकरणम् ॥ १३ ॥

**दशपेये क्रयप्रतिकर्षात्प्रतिकर्षस्ततः प्राचां; सत्समानं तन्त्रं स्यात् ॥ ५५ ॥ समानवचनं तद्वत् ॥ ५६ ॥ अप्रतिकर्षो वाऽर्थहेतुत्वात्सहत्वं विधीयते ॥ ५७ ॥ पूर्वस्मिंश्चावभृथस्य दर्शनात् ॥ ५८ ॥ दीक्षाणां चोत्तरस्य ॥ ५९ ॥ समानः कालसामान्यात् ॥ ६० ॥**

राजसूये ऽभिषेचनीयो नाम सोमयागः। ततः संसृपां हवींषि। ततः-पुनर्दशपेयः सोमयागः। ताविमावभिषेचनीयदशपेयौ समानतन्त्रौ, भिन्नतन्त्रौ वेति संशये, 'सह सोमं क्रीणात्येभिषचनीयस्य दशयेयस्य चे'ति वचनादभिषेचनीयसोमक्रयकाले दशपेयक्रयः प्रतिकृष्यते। स च प्रतिकृष्यमाणः प्राचोऽपि पदार्थान्प्रतिकर्षति 'तदन्तमपकर्षे स्यादि' ५-१,२४ ति न्यायात्। तस्मात्सहोपक्रमितव्यावभिषचानीय-दशपेयौ, यथोपक्रमं समापनमिति समानतन्त्रौ।

मैवम। उपसंत्रादमात्रमिह क्रीणातिनोच्यते, न त्वङ्गभूतः क्रयः। नन्वसौ क्रीणातेर्न मुख्यो वाच्यः। परकीयस्य मूल्यं हि दत्वा स्वीकरणं क्रयः।

न चोपसंवादमात्रस्यैवंरूपत्वमस्ति। यद्यप्येवं, तथाऽपि गौण्या वृत्या तस्यैवेदं साहित्यमुच्यते, वचनान्तरानुगुण्यात्। दशपेये हि श्रूयते 'सद्यो दीक्षयन्ति, सद्यः सोमं क्रीणन्ती तै. सं. १—८—१८ ति। तथाऽभिषेचनीयेऽवभृथदर्शनमत्यन्तानुपपन्नमेकतन्त्रत्वे स्यात्। तस्मादङ्गभूतक्रयापकर्षाभावान्न तदन्तापकर्ष इति, न सहोपक्रमत्वं। कालभेदात्त भिन्नोपक्रमावसानौ भिन्नतन्त्रावेवैतौ।

इति त्रयोदशं दशपेयाभिषेचनीययोर्भिन्नतन्त्रत्वाधिकरणम्।



### वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति इत्यस्य कर्म्मान्तरोपदेशताधिकरणम्॥ १४॥

**निष्कासस्यावभृथे तदेकदेशत्वात् पशुवत्प्रदानविप्रकर्षः स्यात्।६१।**

**अपनयो वा प्रसिद्धेनाभिसंयोगात्॥ ६२॥**

वरुणप्रघासेषु 'वारुण्यामिक्षा, मारुत्यामिक्षे'ति श्रुतं। तत्र पुनः श्रूयते- 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ती'ति। तत्र संशयः-किं प्रधानस्यामिक्षायागस्यायं प्रचारविप्रकर्षः पशोरिव वपाहृदयादिभिः प्रातःसवन-तृतीयसवनयोः, उत निष्कासस्येयं प्रतिपत्तिः, अथामिक्षानिष्कासद्रव्यकमवभृथधर्मकं कर्मान्तरं विधीयत इति। तत्र कृत्स्नस्यामिक्षाद्रव्यस्य प्रकृतयागशेषत्वात्, तदेकदेशो तस्या एव देवतायै वरुणाय दीयमानो न कर्मान्तरं युक्तम्। अवभृथशब्दस्तु देवतासामान्यादगौणोऽनुवादः। अवभृथोऽपि हि वारुणः। न चानुवादे गौणत्वं दोषः। सिद्धान्ते तु तद्धर्मककर्मविधौ विधावेव गौणत्वं स्यात्। तच्चायुक्तं। तस्मात्तस्यैवायमभ्यास इति, न स्विष्टकृदादेः पुनः करणं।

नैवम्। अवभृथशब्दानर्थक्यात। न चार्थवत्त्वे सम्भवति, आनर्थक्यं युक्तं। तस्मादवभृथधर्मककर्मान्तरविधानं तु प्रयाजशेषाभिघारणवदामिक्षाशषस्य प्रतिपत्त्यर्थं। सत्यं कर्मान्तरं। न तु प्रतिपत्तिः, अवभृथशब्दविरोधात्। अवभृथे हि द्रव्यं गुणतः, कर्म प्रधानतः, इह तु विपर्ययात्तद्भावानुपपत्तिः, तेन यस्यैव अवभृथशब्दस्य प्रसादात्कर्मान्तरमाश्रितं।

तेनैव प्रतिपत्त्यर्थतानिराकरणेनार्थकर्मता सिध्यति। वचनाच्चान्यदीयद्रव्यस्यैकदेशोऽन्यत्र विनियुज्यमानो न दुष्यति।

इति चतुर्दशं वारुणीनिष्कासावभृथस्यार्थकर्मताधिकरणम्।

---

प्रायणीयनिष्कासे उदयनीयनिर्वापस्यार्थकर्मताधिकरणम् ॥ १५ ॥

उद्यनीये च तद्वत् ॥ ६४ ॥ प्रतिपत्तिर्वाऽकर्मसंयोगात् ॥६५॥

अर्थकर्म वा शेषत्वाच्छ्रयणवत्तदर्थेन विधानात् ॥ ५ ॥

ज्योतिष्टोमे प्रायणीयश्चरुः, उदयनीयश्च। तत्र श्रूयते 'प्रायणीयस्य निष्कास उदयनीयमनुनिर्वपती' तै. सं. ६-१-६-५ ति। तत्र संशयः-किं प्रायणीयनिष्कासद्रव्यकम् उदयनीयधर्मकं कर्मान्तरं विधीयते ? किं वा प्रायणीयनिष्कासस्योदनीयनिर्वापसंयोगः प्रतिपत्तिः, उत प्रायणीयनिष्कासे निर्वाप उदयनीयस्य संस्कार इति। पूर्ववत्तद्धर्मककर्मविधिः, मुख्यस्यैव तूदयनीयस्येह प्रकृतत्वान्न प्रकरणान्तरन्यायेन तद्धर्मककर्मविधिः, तस्मात्प्रायणीयनिष्कासस्य कृतार्थस्येयं प्रतिपत्तिरुदयनीयनिर्वापसंयोगः।

नैतदेवं – निष्कासस्य हि सप्तम्या गुणभावोऽवगम्यते।
द्वितीयया प्रधानत्वमितरस्य स्फुटं श्रुतम् ॥ १७ ॥

उदयनीयहविर्हि निरुप्यमाणं भाव्युपयोगित्वात्सुतरां संस्कारार्हं। न च निष्कासस्य प्रयाजशेषवदुदयनीयसंयोगात्किञ्चिददृष्टमस्ति। तस्माच्छब्दानुगुण्यात् उदयनीयहविःसंस्कारार्थः प्रायणीयनिष्कासनिर्वापः।

इति पञ्चदशं प्रायणीयनिष्कासे उदनीयनिर्वापस्यार्थकर्मताधिकरणम्।

इति महामहोपाध्याय श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायामेकादशस्य द्वितीयः पादः।

---

# अथ एकादशे तृतीयः पादः

वेद्याद्यङ्गानां प्रधानकालान्यकालकर्तव्यताधिकरणम् ॥ १ ॥

अङ्गानां मुख्यकालत्वाद्वचनादन्यकालत्वम् ॥ १ ॥

प्रधानसमदेशत्वं, प्रधानसमानकालत्वं चाङ्गानामुक्तं। यत्र त्वाहत्याऽङ्गस्य भिन्नदेशकालत्वं वचनेनैवोक्तं। तत्र तथा भवतीति सुहृद्भूत्वोक्तवान्। नात्र निराकार्यमस्ति।

इति प्रथमं वेद्याद्यंगानां प्रधानकालान्यकालकर्तव्यताधिकरणम्।

---

आधानस्य तन्त्रेणानुष्ठानाधिकरणम् ॥ २ ॥

द्रव्यस्य चाकर्मकालनिष्पत्तेः प्रयोगः सर्वार्थः स्यात्स्वकालत्वात् ॥ २ ॥

'वसन्ते ब्राह्मणोऽग्नीनादधीते' तै० ब्रा० १-१-२-६ त्यनारभ्याधीतमपि आधानमग्निहोत्रादीनामङ्गमिति कृत्वा, चिन्त्यते-किमङ्गं सदाधानं प्रतिकर्म प्रयोगभेदेन कर्तव्यम्? उत सर्वकर्मणां, सर्वप्रयोगाणां च तन्त्रेणेति?

तत्र—प्रयाजादिवदङ्गत्वादावृत्तिः स्यात्प्रतिक्रियम्।
आनन्तर्याद्विशेषश्च गृह्यतेऽतो न तन्त्रता ॥ १८ ॥
स्वकालत्वात्तु तन्त्रत्वं विशेषाग्रहणाद्भवेत्।
आनन्तर्याद्विशेषश्चेन्नाधानसमये ह्यसौ ॥ १९ ॥

न हीदं कर्मणः प्रारम्भे, मध्ये वा प्रयुज्यते, येन तदपवर्गे प्रयुज्येत। वाचनिकोह्यस्य वसन्तादिः स्वकालः, तेन तत्रैव स्थितं सर्वेषामुपकरोत्यगृह्यमाणविशेषत्वादिति तन्त्रं। यदाऽऽधाने कृतेऽनन्तरं किञ्चित्कर्माऽऽपतति, तत्तदर्थमित्यानन्तर्येण विशेषो गृह्यत इति चेत्? नायमाधानसमयेऽस्तिविशेषः, तदा ह्येवमभिसन्धायासावाधत्ते-यदेव किञ्चिन्निमित्तवशात्, कामनावशाद्वा कर्त्तव्यं कर्मोपस्थास्यते, तदर्थमाधास्येऽग्नीनिति, न तु कंचिदेव कर्मविशेषमभिसन्धायाऽऽधत्ते। एवमनभिसंहितकर्मविशेषेण सर्वोद्देशेनाधानेकृते यद्यपि किञ्चित्कारणवशात्प्रथमं कर्माऽऽपतति, तथाऽपि न तादर्थ्यमेव भवति, प्रथमावस्थायामेव सर्वार्थत्वावधारणात्। तस्मात्तन्त्रम्।

इति द्वितीयमाधानस्य तन्त्रताधिकरणम्।

---

अग्नीषोमीयादिषु यूपस्य तन्त्रेणानुष्ठानाधिकरणम् ॥ ३ ॥

यूपश्चाकर्मकालत्वात् ॥ ३ ॥ एकयूपं च दर्शयति ॥ ४ ॥

ज्योतिष्टोमेऽग्नीषोमीये पशावुपदिष्टो यूपः सवनीयानुबन्ध्ययोस्त्वतिदिष्टः। स किं त्रयाणामपि पशूनां तन्त्रम्? उत प्रतिपशु भिन्न इति? तदर्थमिदं विचार्यते 'दीक्षासु यूपं छिनत्ती'ति किमग्नीषोमीययूपस्यापकर्षः, उत सर्वयूपानामिति।

तत्र—यथैवाध्वरकल्पायामाद्यस्यैवापकर्षणम्।
निर्वापस्य तथा यूपोऽप्याद्य एवापकृष्यते ॥ २० ॥
अग्नीषोमीयसंस्थायामतोऽसावपवृज्यते।
भेदेन सवनीयादौ स्वकाले यूपसंग्रहः ॥ २१ ॥
नैतदस्त्यविशेषेण सर्वयूपापकर्षणात्।
न चेहाध्वरकल्पावद्युक्तमाद्यापकर्षणम् ॥ २२ ॥
प्रधानकालबाधोऽत्र तथैवाप्राप्तचोदना।
आद्यापकर्षणेऽप्यस्ति तस्मात्सर्वापकर्षणम् ॥ २३ ॥

अध्वरकल्पायां हि प्रथमनिर्वापापकर्षे सति, प्रधानकालाबाधः, नियमविधानं च लभ्यत इति, तस्यैवापकर्षः समाश्रितः। अत्र त्वग्नीषोमीययूपापकर्षणेऽप्यस्ति प्रधानकालबाधः, अप्राप्तविधिश्च। तस्मादविशेषात्सर्वयूपापकर्षे सत्यकर्मकालत्वादगृह्यमाणविशेषो यूपः सर्वेषां तन्त्रम्।

इति तृतीयमग्नीषोमीयादियूपस्य तन्त्रेणानुष्ठानाधिकरणम्।

---

यूपसंस्काराणां तन्त्रेणानुष्ठानाधिकरणम् ॥ ४ ॥

संस्कारास्त्वावर्तेरन्नर्थकालत्वात् ॥ ५ ॥ तत्कालास्तु; यूपकर्मत्वात्तस्य धर्मविधानात्सर्वार्थानां च वचनादन्यकालत्वम् ॥ ६ ॥ सकृन्मानं च दर्शयति ॥ ७ ॥

यूपस्य तन्त्रत्वे तत्संस्काराणां तक्षण-प्रोक्षणादीनां तन्त्रत्वम्, आवृत्तिर्वेति संशये, छेदनमात्रस्यापकर्षविधानात्प्रोक्षणादीनां चाग्नीषोमीयकालानां तदपवर्गे, अपवर्गात् सवनीयादौ पुनः प्रयोग इति प्राप्ते—

ब्रूमः—तेषामप्यपकर्षः। 'दीक्षासु यूपं छिनत्ती'ति नायमर्थः यूपं सन्तं छिनत्तीति, यूपस्य प्रागसिद्धत्वात्, किं तर्हि-छेदनेन यूपं कुर्यादिति। न च छेदनमात्रेणासौ कर्तुं शक्यते, तक्षणादीनामपि यूपेऽपेक्षितत्वात्। तस्माच्छेदनग्रहणमुपलक्षणं-छेदनादिभिर्यूपं कुर्यादिति। तस्मात्तेषामप्यपकर्षात्तन्त्रत्वम्। अस्तु छेदनमात्रापकर्षः, तावतैव च यूपसिद्धिः, तथाऽपि यूपस्तावत्सर्वेषामर्थेनैक एवोपात्तः, तद्द्वारा च संस्काराः, ते यद्यप्यग्नीषोमीयकालेऽनुष्ठीयन्ते, तथाऽपि यूपद्वारत्वात् तस्य च साधारणत्वात् तेषामपि साधारण्यम्।

इति चतुर्थं यूपसंस्काराणां तन्त्रेणानुष्ठानाधिकरणम्।

स्वरोः साधारण्याधिकरणम् ॥ ५ ॥

स्वरुस्तन्त्रापवर्गः स्यादस्वकादस्वकालत्वात् ॥ ८ ॥ साधारणो वाऽनुनिष्पत्तिस्तस्य साधारणत्वात् ॥९॥ सोमान्ते च प्रतिपत्तिदर्शनात् ॥१०॥ तत्कालो वा प्रस्तरवत् ॥११॥ न वोत्पत्तिवाक्यत्वात्प्रदेशात् प्रस्तरे तथा ॥ १२ ॥

'यूपस्य स्वरुं करोती'ति स्वरुः किमेकयूपानां पशूनां तन्त्रम्? उत प्रतिपशु भिद्यत इति सन्देहे, अञ्जनकालेऽस्योपादानात्तदपवर्गे चापवर्गादञ्जनान्तरेऽन्यशकलोपादानं। 'यः प्रथमः शकलः, स स्वरुरि'ति चैकस्मिन् प्रहरणे, यः प्रथम इति शास्त्रार्थः। तेनैकस्मिन्नपि यूपे प्रहरणबहुत्वात् सम्भवन्ति बहवः प्रथमशकलाः।

मैवं। प्रहरणस्यानुपात्तत्वात्, तेन शकलमात्रापेक्षं प्राथम्यमित्येकस्मिन्यूपे एक एव प्रथमः शकल इति, तन्त्रत्वं। यूपच्छेदनकाल एव चास्य व्यामोहनिवृत्त्यर्थम्, नाशापहारपरिहारार्थं च उपादानं कर्त्तव्यमिति, अगृह्यमाणविशेषत्वादपि तन्त्रम्।

इति पञ्चमं स्वरोस्तन्त्रेणानुष्ठानाधिकरणम्।

द्वादशाहे कृष्णविषाणाप्रासनस्यान्त्याह एव कर्तव्यताधिकरणम् ॥ ६ ॥

अहर्गणे विषाणाप्रासनं धर्मविप्रतिषेधादन्त्ये प्रथमे वाहनि विकल्पः स्यात् ॥ १३ ॥ पाणेस्त्वश्रुतिभूतत्वाद्विषाणानियमः स्यात्प्रातःसवनमध्यत्वाच्छिष्टे चाभिप्रवृत्तत्वात् ॥ १४ ॥

ज्योतिष्टोमे श्रूयते 'कृष्णविषाणया कण्डूयते' इति, तथा 'नीतासु दक्षिणासु 'चात्वाले कृष्णविषाणां प्रास्यती' तै. सं. ६-१-३-८ ति। द्विरात्रादिषु अहर्गणेषु चिन्त्यते—किं प्रथमे एवाहनि कृष्णविषाणाप्रासनम्? उतान्त्य एवेति। विकल्पः स्यात्। प्रकृतौ हि प्रासनोत्तरकालानां पदार्थानां पाणिकण्डूयनं धर्मः। पूर्वकालानां तु विषाणाकण्डूयनं, तद्यदि प्रथमेऽहनि प्रास्येत, तत उत्तरेष्वहस्सु ये दक्षिणानयनात्प्रग्भाविनः पदार्थाः, तेषां विषाणाकण्डूयनं धर्मो बाध्येत। न हि प्रास्तायाः पुनरुपादानं सम्भवति। त्यागात्मकं हि प्रासनं प्रकृतौ विहितं। न च पुनरुपादित्समानस्य त्यागबुद्धिर्भवति। तस्माद्बाध्यत एव विषाणाकण्डूयनम्।

अथ पुनरन्त्येऽहनि प्रास्येत, ततः पूर्वेष्वहस्सु ये दक्षिणानयनात्परस्तात्पदार्थाः, तेषां पाणिकण्डूयनं बाध्येत। न ह्यप्रास्तायां तस्यां पाणिकण्डूयनं सम्भवति, अदृष्टार्थत्वापातात्, प्रक्रान्तनियमत्यागे शिष्टाचरविरोधाच्च। अतः पक्षद्वयेऽपि अवश्यंभावी केषांचिद्धर्मबाध इति विकल्पः। स्यादेवं यद्यन्त्येऽहनि प्रासने धर्मबाधः स्यात्, न त्वेतदस्ति। पाणिकण्डूयनस्यार्थकृतत्वेन अशास्त्रीयत्वात्, तस्मादन्त्येऽहनि प्रासनम।

इति षष्ठमहर्गणे कृष्णविषाणाप्रासनस्यान्त्याहनियमाधिकरणम्।

---

राजसूये ऽन्त्य एव हविष्कृतकाले वाग्विसर्गाधिकरणम् ॥ ७ ॥

वाग्विसर्गो हविष्कृता बीजभेदे तथा स्यात् । १५ ॥

दर्शपूर्णमासयोः श्रुतं 'प्रणीताः प्रणेष्यन्वाचं यच्छति, तां सह हविष्कृता वाचं विसृजती'ति। हविष्कृतेति च कालोपलक्षणं। हविष्कृदाह्वानकाले इत्यर्थः। तत्र नानाबीजेषु चिन्त्यते—कृष्णाजिनास्तरणादीनां फलीकरणपर्यन्तानामनुसमय इत्युक्तं। तत्र—किं प्रथमस्य, अन्त्यस्य वा बीजस्य हविष्कृता-

वाग्विसर्गः ? किं वान्त्यस्यैवेति ? तत्र प्रथमं विसर्गे सत्युत्तरेषां बीजानां ये-हविष्कृत्कालात्प्राञ्चः पदार्था हविरावपनादयः, तेषां धर्मो बाध्येत। अन्तिमे-तु विसर्गे पूर्वबीजानां ये हविष्कृतः प्रत्यञ्चः परे वपनादयः, तेषां धर्मो, वाग्विसर्गो वा बाध्येत। न ह्यत्र पूर्ववत् वाग्विसर्गस्याशास्त्रीयत्वं, 'विसृजती'ति वचनात्। तस्मादवश्यभाविनि धर्मबाधे विकल्पः—

नैवं—न ह्यत्र विसर्गो विधीयते, वाग्यमविधेस्त्वयमवधिरुच्यते, तदेकवाक्यत्वात्। विसर्गविधौ हि वाक्यभेदः, अदृष्टकल्पना च स्यात्। प्राप्तश्च विसर्गो न विधातव्यः। तस्माद्विसर्गस्यानङ्गत्वादविसृष्टायामपि, न कस्यचिद्धर्मबाध इत्यन्त्य एव विसर्गः।

इति सप्तमं नानाबीजेषु वाग्विसर्गस्य चरमकालनियमाधिकरणम्।



अग्नीषोमीये पौरोडाशिककाल एव वाग्विसर्गाधिकरणम्॥ ८॥

पशौ च पुरोडाशे समानतन्त्रं भवेत्॥ १६॥

पशावग्नीषोमीये पशुपुरोडाशः। तत्र तावदस्ति हविष्कृदाह्वानं, पशावप्यस्तीति कृत्वा चिन्त्यते—किं प्रथमे पशुकाले वाग्विसर्गः ? पुरोडाशकाले वेति। प्रासङ्गिकत्वात्पशुपुरोडाशस्य पाशुकेनैव वाग्यमेन कार्यसिद्धेर्न-पृथग्वाग्यमेन कार्यं। तस्मात्पशुकाले वाग्विसर्ग इति मन्वानस्य—

उत्तरं। न वाग्यमोऽयमाराद्रुपकारकः, कर्तृसंस्कारस्त्वसौ। अतोऽविसृष्टवाचा क्रियमाणः पौरोडाशिका विगुणा भवेयुः। तस्मात्पुरोडाशकाले विसर्गः।

इत्यष्टममग्नीषोमीये पौरोडाशिककाल एव वाग्विसर्गाधिकरणम्।



अग्निचयने ऽग्निविमोकस्य प्रधानापवर्गकालताधिकरणम्॥ ९॥

अग्नियोगः सोमकाले तदर्थत्वात् संस्कृतकर्मणः परेषु साङ्गस्य, तस्मात्सर्वापवर्गे विमोकः स्यात्॥ १७॥ प्रधानापवर्गे वा तदर्थ-

त्वात् ॥ १८ ॥ अवभृथे च तद्वत्प्रधानार्थस्य प्रतिषेधोऽपवृक्तार्थत्वात् ॥ १९ ॥ अहर्गणे च प्रत्यहं स्यात्तदर्थत्वात् ॥ २० ॥

अग्नौ श्रूयते 'अग्निं युनज्मि शवसा घृतेनेति जुहोति' अग्निमेव तद्युनक्ति, पञ्चभिर्युनक्ति पाङ्क्तो यज्ञ, मै.सं.२-१२-९ इत्यग्नियोगः तथा 'इमं स्तनमूर्जस्वन्तं धयपामित्याज्यस्य पूर्णां स्रुचं जुहोति, एष वा अग्नेर्विमोकः' तै. सं. ४-७-१३ इति सोऽयमग्नेर्विमोकः किं प्रधानमात्रापवर्गे स्यात्, उत साङ्गप्रधानापवर्गे इति। यदि प्रधानमात्रार्थो योग तदपवर्गे विमोकः। साङ्गप्रधानार्थत्वे तु योगस्य, सर्वान्ते विमोकः।

भाष्यमतं।

तत्राग्नेः सर्वार्थत्वात्तत्संस्कारो योगः सर्वार्थः। तस्मात्सर्वापवर्गे विमोक इति पूर्वपक्षं कृत्वा, 'पाङ्क्तो यज्ञः' इति वाक्यशेषेण यज्ञार्थता योगस्य। अतः प्रधानापवर्गेऽपवर्ग इति भाष्यकारेण सिद्धान्तितम्।

एवम्—सौमिकमपि वरणं 'यदवृता वषट्कुर्युः, भ्रातृव्यमेव यज्ञस्याशीर्गच्छेदि'ति यज्ञसंयोगादग्नियोगतुल्यन्यायं केवलप्रधानार्थं भवति। तत्रावभृथे सौमिकेन वरणेन प्रत्याम्नातं होतृवरणं प्राप्नोति। तत्र 'न होतारं वृणीते' इति प्रतिषेधोऽवक्लृप्तो भवति। इतरथा सौमिकस्य वरणस्य साङ्गप्रधानार्थत्वात्, अदवभृथे पृथग्वरणप्राप्त्यभावात्तन्निषेधो न स्यादिति च लिङ्गदर्शनमुक्तं। तथा 'अहरहर्युनक्ति, अहरहर्विमुञ्चती' ति प्रत्यहं योग-विमोकदर्शनं द्वादशाहे। इतरथा साङ्गप्रधानार्थत्वे आद्यन्तयोरेव योगविमोकदर्शनं स्यादिति। ननु प्रधानार्थत्वेऽपि वरणस्याप्राप्तिरपूर्वत्वात्, अवभृथस्य नैष्टिकवरणप्राप्तिः।

तत्र प्रभाकरोक्तसमाधानस्य निरासः।

तत्र कश्चिदाह—अपूर्वताया एवायमर्थवादो होतृवरणाभावे लाघवं स्यादिति। स चापूर्वत्वपक्षे वरणाप्राप्तौ सत्यामवकल्पते, नान्यथेति। वयं तु ब्रूमः—यद्यप्यपूर्वोऽवभृथः, तथाऽप्याज्यभागयोस्तत्र सद्भावाद्धोतुश्चाङ्गप्रधानार्थत्वात्तद्वरणमप्यङ्गप्रधानार्थं, न हि दार्शिकं वरणं केवलप्रधानार्थं, यज्ञसंयोगभावात्। अतो ऽसत्यप्यतिदेशे होतृवरणस्याज्यभागार्थतयाऽस्त्येवावभृथे प्राप्तिरिति युक्तः प्रतिषेध इति।

### वार्तिकमतेन पूर्वोत्तरपक्षौ ।

तदिदं भाष्यकारीयमधिकरणव्याख्यानमनुपपन्नमिति मत्वा वार्त्तिककारेण विपर्ययेण पूर्वोत्तरपक्षौ वर्णितौ । वाक्यशेषादवभृथलिङ्गाच्च केवलप्रधानार्थो योग इति पूर्वः पक्षः । सिद्धान्तस्तु—अग्नेः सर्वार्थत्वात्तद्योगोऽपि सर्वार्थः । न च वाक्यशेषवशाद्विशेषः, योगोत्पत्तिविधौ वाक्यशेषाभावात् । तत्र तावत्सर्वार्थत्वङ्गम्यते, पञ्चसंख्यागुणविधौ वाक्यशेषः श्रुतः । न चासावुत्पत्तिवाक्यावगतं सर्वार्थत्वमलं निवर्तयितुम् । किं च यज्ञशब्दो यागमात्रं ब्रवीति, न प्रधानयागमात्रम् । अतो न तद्वशात्केवलप्रधानार्थत्वम्, अवभृथे च होतृवरणप्रतिषेधोऽङ्गप्रधानार्थत्वेऽपि सौमिकस्य वरणस्य घटत एव । सौमिकं वरणमानत्यर्थं । प्राकृतन्तु होतृवरणं प्रवृत्तेहोतरि क्रियमाणमदृष्टार्थम् । अतस्तत् सर्वासु सोमेष्टिषु कार्यमिति द्वादशे वक्ष्यति । तस्माद्युक्तः प्रतिषेधः । द्वादशाहे च प्रत्यहं योगविमोकदर्शनमस्मिन्नेव पक्षे घटते, विधानार्थं ह्येतद्वचनं, नानुवादमात्रम्, आनर्थक्यात् । न सर्वादौ, सर्वान्ते च सकृद्योगविमोकयोर्न्यायतः प्राप्तयोर्वचनेनाहरहर्योग-विमोकौ विधीयेते । तस्मात्सर्वार्थो योगः, सर्वापवर्गे विमोकः । [1]सूत्राणि तु तन्त्ररत्ने एवास्माभिर्व्याख्यातानीति, नेह व्याख्यायन्ते ।

इति नवममग्निचयनेऽग्निविमोकस्य मतभेदेन व्यवस्थाधिकरणम् ।



### उपसत्कालीनस्य सुब्रह्मण्याह्वानस्य भेदेनानुष्ठानाधिकरणम् ॥ १० ॥

### सुब्रह्मण्या तु तन्त्रं दीक्षावदन्यकालत्वात् ॥ २१ ॥

ज्योतिष्टोमे ऽस्त्युपसत्कालीनं सुब्रह्मण्याह्वानं, तदहर्गणेषु भिद्यते, न वेति संशये प्रधानभेदाद् भेदः, अकर्मकालत्वात्तु तन्त्रं, न हीदं प्रधानकालं,

१ वार्तिकमते सिद्धान्तोपक्रममिदमधिकरणम् । तत्र प्रथमसूत्रे सर्वार्थत्वासिद्धान्तेनोपक्रमः । द्वितीयसूत्रं केवलप्रधानार्थत्वपूर्वपक्षप्रतिपादनार्थम् । तृतीयसूत्रं पूर्वपक्षे लिंगप्रदर्शनार्थं । चतुर्थसूत्रं तुशब्दार्थकेन नशब्देन व्यावर्त्यं पक्षं ब्रूते । केवलप्रधानार्थत्वे न्यायादेव प्रत्यहं प्राप्तेः 'अहरहर्युनक्ति, अहरहर्विमुञ्चती'ति न वक्तव्यं स्यात् । उक्तञ्चैतत् । तस्मात् सांगप्रधानार्थमेव तत् इत्येवं तत्रैव सिद्धान्तप्रतिपादनार्थमित्येवं तन्त्ररत्ने-व्याख्यातानीत्यर्थो बोध्यः ।

उपसत्कालन्तु सकृदेवानुष्ठितमेव सर्वेषामुपकरोतीति तन्त्रम् ।

इति दशममुपसत्कालीनसुब्रह्मण्याह्वानस्य भेदेनानुष्ठानाधिकरणम् ।

सुत्याकालीनसुब्रह्मण्याह्वानस्यभेदेनानुष्ठानाधिकरणम् ॥ ११ ॥

तत्कालात्त्वावर्तेत प्रयोगतो विशेषसंयोगाधात् ॥ २२ ॥ अप्रयोगाङ्गमिति चेत् ॥ २३ ॥ स्यात्प्रयोगनिर्देशात्कर्तृभेदवत् ॥ २४ ॥ तद्भूतस्थानादग्निवदिति चेत्तदपवर्गस्तदर्थत्वात् ॥ २५ ॥ अग्निवदिति चेत् ॥ २६ ॥ न प्रयोगसाधारण्यात् ॥ २७ ॥ लिङ्गदर्शनाच्च ॥ २८ ॥ तद्धि तथेति चेत् ॥ २९ । नाशिष्टत्वादितरन्यायत्वात् ॥ ३० ॥ त्रिष्वेकत्वादिति चेत् ॥ ३१ ॥ न कृत्स्नस्य पुनः प्रयोगात् प्रधानवत् ॥ ३२ ॥

सुत्याकालमाह्वानं तन्त्रम्, आवापो वेति संशये प्रथमसुत्याकाल एव कृतं सर्वसुत्यानामुपकारकं सत्यप्येकस्य सन्निधिविशेषे यूपाहुतिवदिति प्राप्ते—

उच्यते—कर्मकालं ह्येतद् यस्य कर्मणः काले कृतं, तदर्थमिति विशेषग्रहणात् तदपवर्गे तत्कृतस्य देवतासंस्कारस्यापवर्गादहरन्तरे पुनः कर्त्तव्यम् । तस्मान्न तन्त्रम् ।

इत्येकादशं सुत्याकालीनसुब्रह्मण्याह्वनस्या भेदेनानुष्ठानाधिकरणम् ।

देशपात्रर्त्विजामन्यप्रयोगे पूर्वदेशाद्यादानस्य ऐच्छिकत्वाधिकरणम् ॥ १२ ॥

लौकिकेषु यथाकामी संस्कारानर्थलोपात् ॥ ३३ ॥

समादिदेशानाम्, ऋत्विजां, स्रुवादीनाञ्च पात्राणां किं प्रयोगेऽन्येषामुपादानम् ? उत तेषामन्येषां वेत्यनियम इति संदेहे निरिष्टिकोपादाने-

शिष्टाचारविरोधादन्येषामेवोपादानं । नात्र शिष्टाचारविरोधः । एतेषु शिष्टा न पुनरुपादानं वर्जयन्ति, तस्मादनियम इति, अवसितमृत्विक्षु, देशे च पात्रेषु तु चिन्त्यते । पात्रेषु-किं देशादिवदनियमः? उत तेषामेव आन्ताद्धारणमिति । नियामकस्याभावादनियमः ? न हि पूर्वप्रयोगे कृतः संस्कारः कश्चित् परेषु उपजीवनीयोऽस्ति यल्लोपभयात्पात्रान्तराणि नोपाददीमहि । नन्वाहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चे'ति परिधानीये कर्मणि पात्राणां प्रतिपत्ति विहिता । तत्परित्यागे लुप्येत।अतस्तेषामेव धारणं । नेयं पात्राणां प्रतिपत्तिः, यंजमानशरीरसंस्कारार्थे दाहे पात्राणां तृतीयया गुणभावावगमात् । तेन परित्यज्यापि पूर्वोपात्तानि पात्राण्यभिनवैः परिदह्यमाने नास्ति किं चिद्वैगुण्यं । तस्मादनियमः । सिद्धान्त्येकदेशी त्वाह–यद्यपि गुणभावः पात्राणां, तथाऽपि धारणं, परित्यागे हि सति मरणस्यानियतत्वात्कदाचित्पूर्वप्रयोगोपयुक्तेषु, परित्यक्तेषु उत्तरप्रयोगकालेऽनागते यजमानः प्रमीयेत तत्र यज्ञपात्राभावाद्विगुणो दाहः स्यात् । तस्मादवश्यं यावदुत्तरकालं तेषामेव धारणं, धारितेषु च तेषु तैरेव तत्प्रयोगस्यापि सिद्धेर्नान्योपादानम्, एवमतः परमपीत्यान्तम् तद्धारणम् ।

इति द्वादशं पूर्वदेशाद्यादानस्या ऐच्छिकताधिकरणम् ।



पात्राणाम् आकर्म्मसमाप्तिधारणाधिकरणम् ॥ १३ ॥

यज्ञायुधानि धार्येरन्प्रतिपत्तिविधानादृजीषवत् ॥ ३४ ॥ यजमानसंस्कारो वा तदर्थः श्रूयते तत्र यथाकामी तदर्थत्वात् ॥ ३५ ॥ मुख्यधारणं वा मरणस्यानियतत्वात् ॥ ३६ ॥ यो वा यजनीयेऽहनि म्रियेत सोऽधिकृतः स्यादुपवेषवत् ॥ ३७ ॥ न शास्त्रलक्षणत्वात् ॥ ३८ ॥ उत्पत्तिर्वा प्रयोजकत्वादाशिरवत् ॥ ३९ ॥ शब्दासामञ्जस्यमिति चेत् ॥ ४० ॥ तयाऽऽशिरे ॥ ४१ ॥ शास्त्रात्तु विप्रयोगस्तत्रैकद्रव्यचिकीर्षा प्रकृतावथेहापूर्वार्थवद्भूतोपदेशः । ४२ ॥ प्रकृत्यर्थत्वात्पौर्णमास्याः क्रियेरन् ॥ ४३ ॥ अग्न्याधेये त्वाऽविप्रतिषेधात्तानि धारयेन्मरणस्यानिमित्तत्वात् ॥ ४४ ॥ प्रतिपत्तिर्वा यथाऽन्येषाम् ॥ ४५ ॥

एवं स्थिते चिन्तान्तरं प्रक्रम्यते—किं दर्शपूर्णमासप्रभृति धारणम् ? उत पवमानहविः प्रभृतीति । दर्शपूर्णमासयोः सर्वप्रकृतित्वात्तत्रैव पात्राणामुपदेशात् ततः प्रभृति धारणं मन्वानस्योत्तरं पवमानहविः प्रभृति धारणम्, अधारितेषु प्रागेव दर्शपूर्णमासाभ्यां यदि यजमानः प्रमीयेत, तदा तस्याहिताग्नेः सतो देहसंस्कारो यज्ञपात्राभावाल्लुप्येत, तस्मात्पवमानहवींष्यारभ्य धारणं ।

स्थितादुत्तरं । गुणभावेऽपि पात्राणां धारणमित्येकदेशिमतं, परमार्थतस्तु प्रतिपत्तिरत्र पात्राणां, यद्यपि दाहे गुणभावस्तृतीययाऽवगम्यते, तथाऽपि 'दक्षिणे हस्ते जुहूमासादयती'ति द्वितीयानिर्देशादासादनं प्रतिपत्तिः, तेन यद्यप्यभिनवैरपि दाहस्यावैगुण्यं, तथाऽऽप्यासादनरूपा प्रतिपत्तिर्मा लोपीत्याद्यानामेव धारणं, तस्मात्सर्वकर्मणां सर्वप्रयोगाणाञ्च तन्त्रं पात्राणि ।

इति त्रयोदशं पात्राण आकर्म्मसमाप्ति धारणाधिकरणम् ।



सर्वसोमानामुपरिष्टात् प्राजापत्यप्रचाराधिकरणम् ॥ १४ ॥

उपरिष्टात्सोमानां प्राजापत्यैश्चरन्तीति सर्वेषामविशेषादवाच्यो हि प्रकृतिकालः ॥ ४६ ॥ अङ्गविपर्यासो विना वचनादिति चेत् ॥ ४७ ॥ उत्कर्षः संयोगात्कालमात्रमितरत्र ॥ ४८ ॥ प्रकृतिकालासत्तेः शस्त्रवतामिति चेत् ॥ ४९ ॥ न श्रुतिप्रतिषेधात् । ५० ॥ विकारस्थान इति चेत् ॥ ५१ ॥ न चोदनापृथक्त्वात् ॥ ५२ ॥

वाजपेये श्रूयते 'सप्तदश प्राजापत्यान् पशूनालभते' इति । तान् प्रकृत्य श्रूयते 'उपरिष्टात्सोमानां प्राजापत्यैश्चरन्ती'ति तत्र । विचार्यते—किमार्भवकाले प्रचरितव्यम् ? उत शस्त्रवतां सोमानामुपरिष्टात्? उत विकारस्थाने? अथ सर्वसोमानामुपरिष्टादिति, तत्र चोदकानुग्रहादार्भवकाले प्रचार इति ब्रूमः-प्रकृतावार्भवकाले प्रचारो दृष्टः, प्रकृतिवदिहापि कर्त्तव्यः ।आर्भवकालश्च केषाञ्चित्सोमानामुपरिष्टाद्भवतीति, नास्ति वचनविरोध इति पूर्वः पक्षः, मैवं । तथा सति चोदकेनैव तत्कालस्य सिद्धत्वाद्वचनमनर्थकं स्यात् । तस्माच्छस्त्रवतां सोमानामुपरिष्टात । तथा सति प्रकृतिकालप्रत्यासत्तिर्लभ्यत इति-द्वितीयः । न प्रधानप्रत्यासत्तिमात्रेण चोदकानुग्रहो भवति । तस्माद्विकारस्थाने-

प्रचारो ऽग्निष्टोमप्रचारादूर्ध्वं, तत्खल्वागन्तुकानामुक्थ्यादीनां विकाराणां स्थानं। प्राजापत्यप्रचारश्चागन्तुकविकारः, तस्मात्तत्र स्यादिति तृतीयः पक्षः। सोमविकाराणामेतत्स्थानं, न पशुविकाराणां, प्राजापत्यप्रचारश्च पशुविकारः, तस्मान्न तत्स्थानत्वं। सामान्यतोदृष्टं चैवंजातीयकेषु न प्रमाणं, तस्माद्वचनस्याविशेषप्रवृत्तेः सर्वसोमानामुपरिष्टादिति सिद्धान्तः। आर्भवकालप्रचारे क्रतुपशूनां, प्राजापत्यानां चैककालः प्रचार इति 'मनोतायै हविषोऽवदीयमानस्यानुब्रूही'ति मनोतासूक्तानुवचनं तन्त्रं, सिद्धान्ते तु कालभेदादावापः इति सङ्गतिः॥

इति चतुर्दशं सर्वसोमानामुपरिष्टात् प्राजापत्यप्रचाराधिकरणम्।

---

## सवनीये पुरोडाशे देवतोत्कर्षाधिकरणम्॥ १५॥

उत्कर्षे सूक्तवाकस्य न सोमदेवतानामुत्कर्षः पश्चनङ्गत्वाद्यथा निष्कर्षेऽनन्वयः॥ ५३॥ वाक्यसंयोगाद्वोत्कर्षः समानतन्त्रत्वादर्थलोपादनन्वयः।॥ ५४॥

सवनीयपशौ प्राकृतस्य सूक्तवाकस्य विकृतस्य पाठः, स चानुयाजोत्कर्षादाग्निमारुतादूर्ध्वमुत्कृष्यते। तत्र सवनीयपुरोडाशदेवताः कीर्त्यन्ते- 'भृज्जन्निन्द्राय हरिवते' धाना इत्यादिपाशुकं च तन्त्रं पुरोडाशे प्रसज्यत इति वक्ष्यते। तत्र संशयः-किमुत्कृष्यमाणे सूक्तवाके पुरोडाशदेवतानामुत्कर्षो नेति। तत्र 'प्रासङ्गिकं च नोत्कर्षेदि' ५-१-२५ ति न्यायेन दाक्षिणाग्निकहोमयोरिव हरिवदादिपदानामनुत्कर्षप्राप्तौ—

उच्यते तन्त्रपदापेक्षित्वादेषामुत्कर्षः, न हि 'भृज्जन्निन्द्राय धानाः' इत्येतावन्मात्रं प्रयोगार्हम्, 'अग्निमद्यहोतारमवृणीतायं सुन्वन्यजमानः' तै. ब्रा. ३-६-१५ इति तन्त्रपदमपेक्ष्यैषामर्थप्राप्तिः तच्च तन्त्रपदं पाशुकमुत्कृष्यते, अतस्तदपेक्षाणां पुरोडाशदेवतापदानामप्युत्कर्षः, तैश्चोत्कृष्टैरपि सवनीयदेवता एव प्रकाश्यन्ते इति, न लिङ्गविरोधः। पूर्वं प्राजापत्यप्रचारस्योत्कर्षेऽभिहिते, प्रसङ्गात्सवनीयदेवतानामुत्कर्षः प्रतिपाद्यत इति सम्बन्धः।

इति पञ्चदशं सवनीये पुरोडाशे देवतोत्कर्षाधिकरणम्।

इति श्रीमत्पार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायामेकादशस्य तृतीयः पादः॥

---

## अथ एकादशे चतुर्थः पादः

राजसूये आग्नावैष्णवादिकेऽङ्गानां भेदेनानुष्ठानाधिकरणम् ॥ १ ॥

चोदनैकत्वाद्राजसूयेऽनुक्तदेशकालानां समवायात्तन्त्रमङ्गानि ॥१॥ प्रतिदक्षिणं वा कर्तृसम्बन्धादिष्टिवदङ्गभूतत्वात्समुदायो हि; तन्निर्वृत्त्या तदेकत्वादेकशब्दोपदेशः स्यात् ॥ २ ॥ तथा चान्यार्थदर्शनम् ॥ ३॥

राजसूये यान्यनुक्तदेशकालानि दक्षिणाभेदवन्ति कर्माणि यथा'आग्नवैष्णवमेकादशकपालं निर्वपति वामनो दक्षिणा। सोमापौष्णं चरुं निर्वपति श्यामो दक्षिणे'ति। किमेवंजातीयकेषु तन्त्रमङ्गानि? उत प्रतिदक्षिणं- तन्त्रभेद इति?

तत्र—देशकालफलाभेदादङ्गानां तन्त्रता भवेत्।
कर्तृभेदोऽपि नैवास्ति दक्षिणामात्रभेदतः ॥ २४ ॥

शक्यते हि तेभ्य एव कर्तृभ्योऽन्या दक्षिणादातुं, तस्मादैकतन्त्र्यम्।

उच्यते दक्षिणाभेदात्कर्तृत्वमपि भिद्यते।
तदानतानां कर्तृत्वादानतेश्च पृथक्त्वतः ॥ २५ ॥

दक्षिणभेदादानतिभेदः, तद्भेदात्तत्कृतस्य रूपस्य भेदः। वामनानतैर्हि पूर्वं कर्म कर्त्तव्यं, श्यामानतैरुत्तरं, तन्त्रत्वे तु उभाभ्यामानता उभयं कुर्युः, तत्र दक्षिणाव्यवस्था गम्यमाना बाध्येत। तस्मात्प्रतिदक्षिणं तन्त्रभेदः।

इति राजसूये आग्नावैष्णवादिकेऽङ्गानां भेदेनानुष्ठानाधिकरणम्।

---

राजसूये कर्तुस्तन्त्रताधिकरणम् ॥ २ ॥

अनियमः स्यादिति चेत् ॥ ४ ॥ नोपदिष्टत्वात् ॥ ५ ॥ प्रयोजनैत्वात् ॥६॥ विशेषार्था पुनः श्रुतिः ॥७॥

दक्षिणाभेदात्कर्तृरूपं भिद्यते इत्युक्तम्, इदानीं कर्तृत्वाधिष्ठानभूताश्चिन्त्यन्ते- किं ये पूर्वं प्रवृत्तास्त एवान्तात्कुर्युः? उत ते वा, अन्ये वेति? तदर्थमिदं विचार्यते-किं सर्वकर्मणामृत्विग्वरणं तन्त्रम्, उत भेदेनेति?

तत्र दक्षिणाभेदात्प्रयोगाणां भेदात्तदङ्गभूतस्य वरणस्यापि भेदः। यस्मिन्कर्मणि ये वरणभरणाभ्यामुपात्ताः, ते तदपवर्गेऽपवृक्ता लौकिका भवन्ति। तत्र पुनर्वरणसंस्कार आधातव्यः कर्मान्तरार्थं तदाधाने चाविशेषात्ते वा, अन्ये वेति प्राप्ते-ब्रूमः—सर्वस्य राजसूयस्यैकफलत्वाद्युगपत्सर्वचिकीर्षा, चिकीर्षितार्थं च सहायवरणं, तस्मादगृह्यमाणविशेषत्वात्सर्वकर्मणां राजसूयावयवभूतानां तन्त्रं वरणमिति उपक्रमवृता एवान्तात्कर्तारः। ननु सत्यप्येकफलत्वे देशकालकर्तृभेदादिष्टि-पशु-सोमानां भिन्ना एव प्रयोगाः, 'बार्हस्पत्यं चरुं निर्वपति ब्रह्मणो गृहे' तै. सं. १-८-९ ऐन्द्रमेकादशकपालं राजन्यस्य गृहे 'इत्यादिदेशभेदः, षडेव पूर्वेद्युर्निरुप्याणि, षडुत्तरेद्युरि'ति कालभेदः, दक्षिणाभेदाच्च कर्तृभेदः। तदेवं भिन्नेषु प्रयोगेषु यस्मिन्कर्मणि प्रयुयुक्षिते वरणमनुष्ठितं, तदर्थमेवैतदिति-विशेषग्रहणान्नास्ति तन्त्रत्वं। न हि पवित्रारम्भसमयेऽनेकेष्टिव्यवहितस्याभिषेचनीयस्य प्रयोग उपस्थितो येन तदेव तस्यापि वरणं स्यात्। न ह्यकर्मकालं यूपच्छेदनवत् प्रकृतावृत्विग्वरणं येन सर्वकर्मार्थं स्यात्। कर्मकालत्वे तु तद्भेदात् पौर्णमास्यमावास्ययोरिव सत्यप्येकफलत्वे भेदेनैव वरणमृत्विजश्च। तस्मादनियमो ज्यायान्। भाष्यकारमते च सौमिकवरणस्य यज्ञसंयोगेन केवलप्रधानार्थत्वादग्नियोगविमोकवत् विस्पष्टमेव भेदेन प्रत्यहं वरणमित्यनाशङ्कनीयमेव तन्त्रत्वं। सत्यमेवमङ्गभूतस्य वरणस्य भेदः। यत्तु लौकिकं वरणं; तस्य तन्त्रत्वमस्माभिरुच्यते। यजमानो हि लौकिकप्रार्थनमृत्विजां कुर्वन् सर्वराजसूयोद्देशेन कुर्यात् लाघवादविघ्नसमाप्तये च, अन्यथा ह्येककर्मार्थे प्रार्थिताः कदाचित्तत्समाप्तौ ते न याजयेयुः, अन्ये च न लभ्येरन्, तत्र कर्मविघ्नो भवेत्। निरन्तरप्रयोगाणि च राजसूयकानि कर्माणि दर्शपूर्णमासवदौदासीन्यं मध्ये न लभन्त इति त एवान्तादविघ्नसमाप्त्यर्थमवश्यं स्थापनीया इत्येतावानभिप्रायः।

इति द्वितीयं राजसूये कर्तुस्तन्त्रताधिकरणम्।

---

अवेष्टावङ्गानां भेदाधिकरणम्॥ ॥

**अवेष्टौ चैकतन्त्र्यं स्यात्लिङ्गदर्शनात्॥ ८॥ वचनात्कामसंयोगेन ॥ ९॥ क्रत्वार्थायामिति चेन्न वर्णसंयोगेन॥ १०॥**

राजसूयेऽवेष्टिर्नामेष्टिः 'आग्नेयमष्टाकपालं निर्वपति हिरण्यं दक्षिणा' तै. सं. १-८-,९ त्यादि पञ्चहविष्का। सा चेयं 'मीश्वरो वा एषः-

दिशोऽनून्मदितोर्यद्दिशोऽनुव्यवस्थापयन्ति, दिशामवेष्टयो भवन्ति, दिक्ष्वेव प्रतितिष्ठन्त्यनुन्मादाये-'तै. ब्रा. १-८-३७ इत्येवं दिग्व्यवस्थापने निमित्तोन्मादपरिहारतया श्रूयमाणा राजसूयान्तर्गतेति तावदविवादं। राजसूये हि 'दिशो व्यवस्थापयन्ती'ति दिग्व्यवस्थापनं विहितम्। अतो नैवं भ्रमितव्यम् 'एतयान्नाद्यकामं याजयेदि'ति प्रत्यक्षया विशेषश्रुत्याऽन्नाद्यसंयोगान्न प्रकरणापेक्षिण्या सामान्यरूपया च स्वाराज्यकामगतयजतिचोदनयेयं गृह्यत इति, तस्या एव बहिःप्रयोगोऽपि श्रूयते—'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वा, तमभिघारयेदि'ति ततश्चै 'तयाऽन्नाद्यकामं याजयेदि'ति बहिःप्रयोगस्य फलोपेक्षत्वात्तेन सम्बध्यते, क्रतुमध्यप्रयोगस्य तु स्वाराज्यं फलमिति, उभयोः फलयोर्भिन्नविषयत्वेनाविरोधः। तदेवं स्थिते क्रतुमध्यस्थायामवेष्टौ चिन्त्यते-पञ्चापि हवींषि समानतन्त्राणि, न वेति। तत्र सत्यपि दक्षिणाभेदे बार्हस्पत्यं 'मध्ये निधाये'ति मध्ये निधानविध्यनुपपत्त्या समानतन्त्रत्वम्। ननु ब्राह्मणादिसंयुक्ते बहिः प्रयोगे मध्येनिधानं, न क्रतुमध्यप्रयोगे। सत्यं, तथाऽप्यन्तः प्रयोगेऽप्यैकतन्त्र्यं, यथोत्पन्नाया एव हि दक्षिणाभेदयुक्तायाः क्रतुमध्य इव बहिरपि प्रयोगः, तत्र यदि दक्षिणाभेदान्नानातन्त्रत्वं स्यात्, बहिः प्रयोगेऽपि स्यात्, तन्त्रमध्ये विधानमत्यन्तानुपपन्नं स्यात्, तदनुरोधेन समानतन्त्रत्वमङ्गीकृत्य दक्षिणाभेदः कथंचिदेकस्मिन्नपि प्रयोगे तत्तत्प्रधानोद्देशेन दानात् समर्थः तथा क्रतुमध्येऽपि स्यात्। अवेष्टिरिति चैकनिर्देशः समानतन्त्रतां गमयति। तस्मात्समानतन्त्रत्वम्।

नैवम्। उत्पद्यमानान्येतानि दक्षिणाभेदसंयुक्तान्युत्पद्यन्ते। राजसूयार्थत्वेनचैषामुत्पत्तिः, 'ईश्वरो वा एष दिशोनून्मदितोरि'त्युपक्रम्य विधानात्। दक्षिणाभेदादुत्पत्तिसमय एवैतानि नानातन्त्राणि क्रतुमध्ये प्रयोक्तव्यानीति निर्णीतं। पश्चात्तु ब्राह्मणादीनां बहिःप्रयोज्यानीतिविधीयमानानि मध्ये निधानविधानान्यथानुपपत्त्या 'एतयाऽन्नाद्यकाममि'ति च प्रयोगवचनैक्यात्समानतन्त्राणि गम्यमानानि दक्षिणाभेदमुज्झित्वा समानतन्त्राणि भवन्ति, क्रतुमध्ये तु दक्षिणाभेदान्नानातन्त्राणीति, नावश्यकमैकरूप्यम्।

इति तृतीयमवेष्टाङ्गानां भेदाधिकरणम्।

पवमानेष्टिहविषां भेदेनानुष्ठानाधिकरणम् ॥ ४ ॥

पवनमानहविःष्वैकतन्त्र्यं प्रयोगवचनैकत्वात् ॥ १२ ॥ लिङ्गदर्शनाच्च ॥ १३ ॥ वचनात्तु तन्त्रभेदः स्यात् ॥ १४ ॥ सहत्वे नित्यानुवादः स्यात् ॥ १५ ॥

सन्त्याधाने पवमानहवींषि 'अग्नये पवमानाय, अग्नये पावकाय, अग्नये शुचये' इति। तान्यधिकृत्य श्रूयते 'अह्नो निरुप्याणि, सर्वाणि सह निरुप्याणी'ति। तथा 'यः कामयेतोत्तरोत्तरं वसीयान् श्रेयान् स्यामिति' तस्याग्नये-पवमानाय निरुप्य, पावकशुचिभ्यामुत्तरे हविषी समानबर्हिषि निर्वपेदि'ति। तदिह काम्ये प्रयोगे चिन्त्यते किं सर्वाणि समानतन्त्राणि? उत प्रथम, उत्तरं च द्वयं नानातन्त्रमिति? तत्राह्नो निरुप्याणि 'सह निरुप्याणी'ति वचनात्समानतन्त्रत्वं। न च 'यः कामयेते'त्यनेन वचनेन प्रयोगभेदः। नह्येकं वाक्यं प्राप्तानां पवमानहविषां फलार्थतां प्रयोगभेदं च शक्नोति विधातुमिति भ्रान्तः काम्येऽपि समानतन्त्रतामाह।

सिद्धान्तस्तु—न हविषां काम्ये विधिः, तदाश्रितस्तु प्रयोगभेद एव दध्यादिवत्कामाय विधीयते, तस्माद्वसीयस्त्वं कामयमानः प्रथमं पृथङ् निरुप्य, पश्चादुत्तरे समानतन्त्रे कुर्यात्।

इति चतुर्थं पवमानेष्टिहविषां भेदेनानुष्ठानाधिकरणम्।



द्वादशाहे सुप्त्यादीनां प्रत्येकं द्वादशाहताधिकरणम् ॥ ५ ॥

द्वादशाहे तत्प्रकृतित्वादेकैकमहरपवृज्येत कर्मपृथक्त्वात् ॥ १६ ॥ अह्नां वा श्रुतिभूतत्वात्तत्र साङ्गं क्रियेत यथा माध्यन्दिने ॥ १७ ॥ अपि वा फलकर्तृसम्बन्धात् सह प्रयोगः स्यादाग्नेयाग्नीषोमीयवत् ॥ १८ ॥ साङ्गकालश्रुतित्वाद्वा स्वस्थानां विकारः स्यात् ॥ १९ ॥ तदपेक्षं च द्वादशत्वम् ॥ २० ॥ दीक्षोपसदां च संख्या पृथक् प्रत्य-

त्वसंयोगात् ॥ २१ ॥ तथा चान्यार्थदर्शनम् ॥ २२ ॥ चोदनापृथक्त्वे त्वैकतन्त्र्यं समवेतानां कालसंयोगात् ॥ २३ ॥

द्वादशाहे 'द्वादश दीक्षाः, द्वादशोपसदः' इति श्रूयते । तत्र विचार्यते—किमेकैकमहः पृथक् द्वादशदीक्षोपसद्युक्तं कृत्वा द्वादश पञ्चविंशतिरात्राः कर्त्तव्याः ? उतैकैकमहः सद्य एव दीक्षोपसद्युक्तं निर्वर्त्य द्वादशस्वहस्सु द्वादश साद्यस्काः कर्त्तव्याः ? अथ वा द्वादशस्वेवाहस्सु चतुरहे दीक्षाः, चतुरहे चोपसदः, चतुरहे सुत्याः सम्पाद्याः, आहोस्विद्दीक्षोपसत्सुत्यानां स्वस्थाने विवृद्धिः, ततो द्वादशसु अहःसु दीक्षा, द्वादशसूपसदः, द्वादश सुत्या इत्येवं षट्त्रिंशताऽहोभिः समाप्तिरिति । तत्रैकैकस्य यागस्य ज्योतिष्टोमप्रकृतित्वात्तद्वशेनैकैकं सदीक्षोपसत्कं कर्तव्यं, द्वादशसंख्या च दीक्षागतोपसद्गता च प्रत्येकमेवाङ्गं । तस्माद् द्वादश पञ्चविंशतिरात्राः द्वादशाहशब्दस्य नामत्वादिति प्रथमपक्षः ।

सत्यमेकैकं सदीक्षोपसत्कं कर्त्तव्यं, न तु द्वादशाहशब्दो नामधेयं, गुणविधिस्त्वसौ, तेन द्वादशस्वेवाहःसु द्वादशानामपि यागानां सदीक्षोपसत्कानां निर्वर्तनात् द्वादश साद्यस्का इति द्वितीय पक्षः । गृह्णीम एतत् द्वादशाहशब्दो गुणविधिरिति, न त्वकैकं पृथक्साङ्गं कर्त्तव्यम् । एकेन विधिना एकस्मिन् फले विनियुक्तानां सहकर्त्तव्यत्वावगमात् तन्त्रभङ्गान्यसुत्याकालानि, तेन तन्त्रेण सर्वेषां दीक्षोपसदः कार्याः । द्वादशाहशब्दस्य गुणविधित्वात् द्वादशस्वेवाहस्सुसर्वं सम्पादनीयं । तेन चतुरहे दीक्षाः, चतुरहे चोपसदः, चतुरहे च सुत्या इति तृतीयः पक्षः । युक्तमेव तन्त्रं दीक्षोपसदामिति, न तु द्वादशाहशब्दो गुणविधिः । नामधेयत्वं तु यजिसामानाधिकरण्यात्, द्वादश दीक्षा इति विधानात्, द्वादशसु अहस्सु दीक्षाः, तथोपसदस्तन्त्रेण कृत्वा, ततो द्वादशस्वहस्सु सुत्याः कार्याः । द्वादशाह इति च नामधेयं प्रधानकालनिमित्तमित्यविरुद्धं । तस्मात् षट्त्रिंशताऽहोभिः समाप्तिः ।

इति पञ्चमं द्वादशाहे दीक्षोपसत्सुत्यानां प्रत्येकं द्वादशाहताधिकरणम् ।



प्रधानैरपृथक्कालानामङ्गानां भेदेनानुष्ठानाधिकरणम् ॥ ६ ॥

भेदस्तु तद्भेदात्कर्मभेदः, प्रयोगे स्याचेषां प्रधानशब्दत्वात् ।२४।

**तथा चान्यार्थदर्शनम् ॥ २५ ॥ श्वःसुत्यावचनं तद्वत् ॥ २६ ॥ पश्वतिरेकश्च ॥ २७ ॥**

यानि सुत्याकालान्यङ्गानि । यथा—सवनीयः पशुः, सवनीयाः पुरोडाशाः । तानि-किं द्वादशानां यागानां तन्त्रम् ? उताऽऽवाप इति संशये, प्रयोगैक्यात्तन्त्रत्वे प्राप्ते—

प्रधानकालत्वादेषां यस्य काले यदनुष्ठितं, तत् तदर्थमिति विशेषग्रहणात्तदपवर्गे तस्यापवर्गादन्यस्मिन्नहनि प्रधानान्तरार्थं पुनः करणेन भवितव्यम् ।

इति षष्ठं प्रधानैरपृथक्कालानामंगानां भेदेनानुष्ठानाधिकरणम् ।



उपसत्काले सुब्रह्मण्याह्वानस्याविकारेण कर्तव्यताधिकरणम् ॥ ७ ॥

**सुत्याविवृद्धौ सुब्रह्मण्यायां सर्वेषामुपलक्षणं प्रकृत्यन्वयादाव्राहनवत् ॥ २८ ॥ अपि वेन्द्राभिधानत्वात्साकृत्स्यादुपलक्षणं कालस्य लक्षणार्थत्वाद् विभागाच्च ॥ २९ ॥**

प्रकृतावुपसत्कालं सुब्रह्मण्याह्वानं श्रूयते 'इत्यहः सुत्यामागच्छ मघवन्निति ब्रूयादि'ति । इतिकरणेन च संख्योच्यते । चतुरहे, त्र्यहे सुत्यामागच्छमघवन्निति ब्रूयादित्यर्थः । तदिदमकर्मकालत्वात् द्वादशाहे तन्त्रमित्युक्तं । तस्मिंस्तन्त्रेण क्रियमाणे किं सर्वेषामह्नां पृथक् पृथक् उपलक्षणं, त्रयोदशाहे चतुर्दशाहे आगच्छेति । एवमहःशब्दस्यैकधाशब्दस्यैवाभ्यासात्मक ऊहो भवति ? उताविकारेण प्रयोग इति । ननु सिद्धान्तेऽप्यस्त्येव विकारः प्रकृतौ चतुरहे सुत्यामित्युक्तम् । इह तूपसदन्हां द्वादशसंख्यया विवृद्धत्वात् त्रयोदशाह इति वक्तव्यं । सत्यं, तथापि नास्त्यूहः सिद्धान्ते । पूर्वपक्षे त्वहःशब्दस्याभ्यासात्मक ऊहो भवति । सिद्धान्ते तु तस्य तन्त्रत्वादविशेषादविकारः । तत्र प्रकृतौ सौत्यस्याह्न उपलक्षितत्वात् इहापि सर्वाणि तान्युपलक्षणीयानि, न चाहःशब्देनागृह्यमाणविशेषत्वत्सर्वोपलक्षणं सिध्यतीति वाच्यं । संख्याशब्देन विशेषग्रहणात् त्रयोदशाह आगच्छेत्युक्ते प्रथमस्यैवाह्न, उपलक्षणं, न द्वितीयादेः । तस्मादावृत्तिः, 'सुत्यामागच्छ मघवन्नि'त्येवं सुत्या-

सम्बन्धिदेवतासंस्कारमात्रं विवक्षितं। संख्याशब्दः, ग्रहःशब्दश्चार्थसिद्धत्वादविवक्षितनिर्देशमात्रम्। अतः सकृदेव वक्तव्यं तन्त्रम्।

इति सप्तमं सुत्याकाले सुब्रह्मण्याह्वानस्य अविकारेण कर्तव्यताधिकरणं।



वाजपेये प्राजापत्येषु शूलादीनां तन्त्रताधिकरणम्॥ ८॥

पशुगणे कुम्भी-शूल-वपाश्रपणीनां प्रभुत्वात्तन्त्रभावः स्यात्॥३०॥

एकदेवत्येषु प्राजापत्यपशुषु कुम्भीं, हृदयशूलं, वपाश्रपणी च तन्त्रं, विभवादित्युत्तरविवक्षया प्राप्यते।

इत्यष्टमं वाजपेये प्राजापत्येषु शूलादीनां तन्त्राधिकरणं।

---

भिन्नदेवताकेष्वपि शूलादीनां तन्त्रताधिकरणम्॥ ९॥

भेदस्तु सन्देहाद्देवतान्तरे स्यात्॥ ३१। अर्थाद्वा लिङ्गकर्म स्यात्॥३२॥ 'अयाज्यत्वाद्वसानां भेदः स्यात्स्वयाज्याप्रदानत्वात्।३३। अपि वा प्रतिपत्तित्वात्तन्त्रं स्यात् स्वत्वस्याश्रुतिभूतत्वात्॥ ३४॥ सकृदिति चेत्॥ ३५॥ न कालभेदात्॥ ३६॥

ये तु भिन्नदेवत्या एकजातीयाः पशवः, तेषु किं कुम्भ्यादीनां भेदः? उतात्रापि तन्त्रमिति सन्देहे, सहश्रपितेषु कस्यै देवतायै किमवदेयमिति-अविज्ञानात्कदाचिदन्यस्यै उपाकृतात् पशोरन्यस्यै देवतायै अवदीयेतापि। तस्माद्भेदः। चिह्नकरणेनापि तु शक्यते कर्त्तुं विवेकः। तस्मात्साहित्यलिप्सया तन्त्रत्वम्। ननु वसानां चिह्नकरणासम्भवात्सर्वासां स्वे स्वे याज्यार्द्धर्चान्ते होमसिद्ध्यर्थं भेदेनैव कुम्भी स्यात्। मैवम्। एकीभूतानामपि वसानां स्वे स्वे याज्यार्द्धर्चान्ते हूयमानानां न किंचिद्वैगुण्यम्। तस्मात्तन्त्रम्।

इति नवमं भिन्नदेवतासु शूलादीनां तन्त्रताधिकरणम्।



---

१. 'अयाज्यात्वाद्वसानामि'त्यादिकस्य नवमाधिकरणेऽन्तर्भावः।

भिन्नजातिषु कुम्भ्यादीनां भेदेनानुष्ठानाधिकरणम् ॥ १० ॥

जात्यन्तरेषु भेदः पक्तिवैषम्यात् ॥ ३७ ॥ वृद्धिदर्शनाच्च ॥ ३८ ॥

नानाजातीयेष्वैकादशिनादिषु 'आग्नेयः कृष्णग्रीवः, सारस्वती मेषी-त्यादिष्वपि पूर्ववत्तन्त्रत्वं। न। पक्तिवैषम्यात्। केचिद्धि पशवः शीघ्रं सिद्ध्यन्ति, केचिच्चिरेण। तत्र सहश्रपणे केषांचिदशृतत्वं, विलयो वा-स्यात्। तस्मात्तन्त्रभेदः।

इति दशमं भिन्नजातिषु कुम्भ्यादीनां भेदेनानुष्ठानाधिकरणम्।

---

अश्वप्रतिग्रहेष्टौ प्रतिपुरोडाशं कपालचतुष्ट्वभेदाधिकरणम् ॥ ११ ॥

कपालानि च कुम्भीवत्तुल्यसङ्ख्यानाम् ॥ ३९ ॥ प्रतिप्रधानं वा प्रकृतिवत् ॥ ४० ॥ सर्वेषां चाभिप्रथनं स्यात् ॥ ४१ ॥

'यावतोऽश्वान्प्रतिगृह्णीयात्तावतो वारुणांश्चतुष्कपालान्निर्वपेदि' ति श्रुतं। तत्र यदा बहुष्वश्वेषु प्रतिगृहीतेषु बहवः पुरोडाशाः प्रयुज्यन्ते, तदा किं तन्त्रेण चत्वारि कपालानि स्युः? उत प्रतिपुरोडाशं चत्वारी-ति सन्देहे, दीर्घेषु चतुर्ष्वेव कपालेषु सर्वपुरोडाशानां श्रपणसम्भवात्तन्त्रत्व-प्राप्तौ—

उच्यते—कपालावयवस्य कपालशब्दवाच्यत्वाभावात्, तन्त्रत्वे च सर्वेषां कपालावयवेषु श्रपणान्नैकोऽपि चतुष्कपालः स्यात्। यावत्कपालं चाभिप्रथनं प्रकृततः प्राप्तं। तच्च तन्त्रत्वे सति न सम्पादयितुं शक्यं। तस्मात् प्रतिपुरोडाशं कपालभेदः।

इत्येकादशमश्वप्रतिग्रहेष्टौ प्रतिपुरोडाशं कपालभेदाधिकरणम्।

---

व्रीह्यवहननादौ प्रतिप्रहारं मन्त्रस्यानावृत्त्यधिकरणम् ॥ १२ ॥

एकद्रव्ये संस्काराणां व्याख्यातमेककर्मत्वम् ॥ ४२ ॥

दर्शपूर्णमासयोरवघातमन्त्रः 'अवरक्षो दिवः सपत्नं वध्यासमिति-अवहन्ती'ति। स किं प्रतिप्रहारम्भेदेन प्रयोक्तव्यः? उत सकृदेव सर्वदा-

विति विचारे प्राप्ते, प्रत्येकं प्रहाराणामवधातशब्दवाच्यत्वादवघाताङ्ग-त्वाच्च मन्त्रस्य प्रधानावृत्तेरावृत्तिः।

मैवं। न ह्यत्र प्रधानावृत्तिः, अवघातकरणिका हि तण्डुलभावना 'व्रीहीनवहन्ती'त्यत्र विधीयते। तच्छेषश्चायं मन्त्रविधिः, तेन तण्डुलभावनाम्प्रति करणीभवतो ऽवघातस्य मन्त्रोऽङ्गं। न च तद्रूपस्यावृत्तिः। न हि प्रतिप्रहारं-भेदेन तण्डुलाः क्रियन्ते। साभ्यासेन हि ते निष्पद्यन्ते। न च तादृशस्यावृत्तिः। तस्मात्सकृदेव मन्त्रः।

इति द्वादशमवहननादौ प्रतिप्रहारं मन्त्रस्यानावृत्त्यधिकरणम्।

---

नानाबीजेष्टौ प्रतिप्रहारं मन्त्रावृत्त्यधिकरणम्॥ १३॥

द्रव्यान्तरे कृतार्थत्वात्तस्य पुनः प्रयोगान्मन्त्रस्य च तद्गुणत्वात् पुनः प्रयोगः स्यात्तदर्थेन विधानात्॥ ४३॥

नानाबीजेषु 'अग्नये गृहपतयेऽष्टाकपालं निर्वपति कृष्णानां व्रीहीणां, सोमाय वनस्पतये श्यामाकं चरुमि'त्यादिषु किं सर्वेषामवघातमन्त्रस्तन्त्रं? उत प्रतिबीजमावर्त्तत इति संशये, सर्वावघातचिकीर्षायां प्रयुक्तस्य मन्त्रस्यागृह्यमाणविशेषत्वात्तन्त्रत्वं, सत्यं। यदि न गृह्येत विशेषः, सन्निपातित्वादवघातस्य समन्त्रस्यातिदेशाद्यस्मिन्नेव बीजे मन्त्रः प्रयुक्तः, तस्यैव मन्त्रकृतः संस्कारः, नान्यस्येति विशेषग्रहणाद्बीजान्तरे पुनः प्रयोक्तव्यः।

इति त्रयोदशं नानाबीजेष्टौ मन्त्रावृत्त्यधिकरणम्।

---

दर्शपूर्णमासादौ प्रतिनिर्वापादि मन्त्रावृत्त्यधिकरणम्॥ १४॥

निर्वपणलवनस्तरणाज्यग्रहणेषु च एकद्रव्यवत्प्रयोजनैकत्वात्॥ ४४॥ द्रव्यान्तरवद्वा स्याचत्संस्कारात्॥ ४५॥

दर्शपूर्णमासयोश्चतुरो मुष्टीन् निर्वपति, 'अयुग्मायुंगान् मुष्टीन् लुनोति, तै. ब्रा. ३-२-१२ त्रिधातु पञ्चधातु वा वेदिं स्तृणाति, चतुर्जुह्वां गृ ्णाती'ति

१—युग्माः-समसंख्याकाः, अयुग्माः—विषमसंख्याकाः।

श्रूयते। तत्र मन्त्रः 'देवस्य त्वा सवितुः प्रसवे, तै. सं. १-१-४ बर्हिर्देवसदनं दामि, ऊर्णाम्रदसं त्वास्तृणामि, तै. सं. १-११-१ शुक्रं त्वा शुक्रायामि' तै. सं १-१०-३ ति। किमेते सकृत्प्रयोक्तव्याः? उत प्रतिमुष्टि, प्रतिधातु, प्रत्याज्यं भेदेनेति सन्देहे, ससंख्यानामेककर्मत्वादवघातमन्त्रवत मन्त्राणां सकृत्प्रयोगप्राप्तौ—

उच्यते—युक्तमवघाते, तत्र हि त एव व्रीहयः पुनः पुनरवहन्यन्ते, तेन सकृत्प्रयुक्तेनैव मन्त्रेण सर्वव्रीहीणां समन्त्रकावघातलाभान्न पुनः प्रयोगस्य कारणमस्ति, निर्वापादिषु पुनरन्ये ऽन्ये व्रीहयः, दर्भाः, आज्यञ्च प्रतिमुष्टि-प्रतिस्तरणं प्रतिग्रहणं च निरुप्यन्ते लूयन्ते, स्तीर्यन्ते, च ततश्च यत्रैव मन्त्रः प्रयुक्तः, तत्रैव तत्कृतसंस्कारलाभात्सर्वेषां तल्लाभाय मुष्टयादिषु भेदेन मन्त्राः।

इति चतुर्दशं प्रतिनिर्वापादि मन्त्रावृत्त्यधिकरणम्।

---

वेदिप्रोक्षणे प्रत्यावृत्ति मन्त्रानावृत्त्यधिकरणम् ॥ १५ ॥

वेदिप्रोक्षणे मन्त्राभ्यासः कर्मणः पुनः प्रयोगात् ॥ ४६ ॥ एकस्य वा गुणविधिर्द्रव्यैकत्वात्, तस्मात्सकृत्प्रयोगः स्यात् ॥ ४७ ॥

दर्शपूर्णमासयोः श्रूयते 'वेदिरसि बर्हिषे त्वे' तै १-१-११ तै सं. १-८ ति त्रिर्वेदिं प्रोक्षती'ति। तत्र किं प्रत्यभ्यासं मन्त्रावृत्तिः? उत सकृदेवादौ मन्त्र इति संशये, प्रोक्षणार्थत्वान्मन्त्रस्य, प्रोक्षणस्य च सङ्ख्यया भिन्नत्वात्प्रतिप्रधानञ्च गुणानामावृत्ते प्रत्यभ्यासमावृत्तिः। किं चानेन मन्त्रेण 'त्रिः प्रोक्षती'ति वचनाद्विस्पष्टं मन्त्रावृत्तिर्गम्यते।

उच्यते—नैवं सम्बन्धः—अनेन मन्त्रेण त्रिरिति, किन्तु मन्त्रस्य करणत्वात् क्रियया सम्बन्धो—अनेन प्रोक्षतीति, त्रिरभ्यासोऽपि क्रियाया एवाङ्गं। तेन मन्त्रवदावृत्तिमच्च कर्त्तव्यं, न चात्र क्रियाभेदः, किं त्वेकैव क्रिया आवृत्तिधर्मिका, क्रियावृत्तौ हि सुज्विधीयते, न क्रियाभेदे, तस्मात्सकृदेव मन्त्रः।

इति पञ्चदशं वेदिप्रोक्षणे मन्त्रानावृत्त्यधिकरणम्।

---

कण्डूयनमन्त्रस्य सकृत् प्रयोगाधिकरणम् ॥ १६ ॥

**कण्डूयने प्रत्यङ्गं कर्मभेदात् स्यात् ॥ ४८ ॥ अपि वा चोदनैककालमैककर्म्यं स्यात् ॥ ४९ ॥**

ज्योतिष्टोमे श्रूयते 'कृष्णविषाणया कण्डूयते' तै. सं. ६ १-३-२४ इति। तत्र मन्त्रः 'कृष्यै त्वा सुसस्यायै' तै सं. १-२-२ इति। तत्र यदाऽनेकेषु पाण्याद्यङ्गेषु युगपत्कण्डूरुत्पद्यते। तदा किं प्रत्यङ्गं मन्त्रावृत्तिः, उत सकृदिति सन्देहे, कण्डूयनकर्मणः, तदपनेयस्य दुःखस्य, दुःखापनयनसंस्कार्याणामङ्गानां च भिन्नत्वात्प्रत्यङ्गमावृत्तिः,तन्त्रत्वे हि यस्मिन्नेवत्वङ्गे मन्त्रः प्रयुक्तः, तदर्थः स इति विशेषग्रहणादङ्गान्तराणां मन्त्रकृतसंस्कारहानिः स्यात। सत्यं। दुःखानि भिन्नानि, नतु दुःखापनयनं स्वरूपेण चिकीर्षितं, नाप्यङ्गसंस्कारः, येन तद्भेदाद्भेदः स्यात्। किं त्वात्मानं कण्डूदुःखविक्षिप्तचित्तमपनीतकण्डूदुःखं कर्त्तुं कण्डूयनं क्रियते। तेन यावता दुःखेनानपनीतेनात्मनि दुःखं भवति, तावत्सर्वमपनेतुमभिसन्धाय कण्डूयनमुपक्रममाणेन प्रयुक्तो मन्त्रोऽगृह्यमाणविशेषत्वात्तन्त्रं भवति।

इति षोडशं कण्डूयनमन्त्रस्यानावृत्त्यधिकरणम्।

---

ज्योतिष्टोमे स्वप्नादिषु मन्त्रानावृत्त्यधिकरणम् ॥ १७ ॥

**स्वप्ननदीतरणाभिवर्षणामेध्यप्रतिमन्त्रणेषु चैवम् ॥ ५० ॥**

ज्योतिष्टोमे स्वप्नार्थो मन्त्रः 'त्वमग्ने व्रतपा असी' तै. सं. १-२-१४ति। तथा नदीतरणमन्त्रो 'देवीरापो अपां नपादि'ति तै. सं: १-२-३, तथा अभिवृष्टस्य उन्दतीर्बलं धत्त 'तै. सं. ३-१-१२ इति। तथा अमेध्यप्रतिमन्त्रणमन्त्रः 'अबद्धं मनो दरिद्रञ्चक्षुरि'ति। तत्र संशयः–यदा दीक्षितः पुनः पुनः प्रतिबुध्य स्वपिति, अनेकस्रोतसं नदीं बा तरति, सन्तानेन चाभिवृष्यते, युगपच्चानेकानि अमेध्यानि पश्यति, तदा किं मन्त्राणामावृत्तिः, उत सकृत्प्रयोग इति। विशेषग्रहणादावृत्तिप्राप्तौ—

उच्यते—सर्वां रात्रिं निद्रामभिसन्धाय मन्त्रं प्रयुङ्क्ते, तथा नदीं, वृष्टिं च, नावान्तरनिद्रां, नाप्येकं स्रोतः, तथा वर्षधारां। तस्मात्सकृत्प्रयोगः, अमेध्येषु तु कालभेदाभावाद्विस्पष्टमगृह्यमाणविशेषत्वम्।

इति सप्तदशं ज्योतिष्टोमं मन्त्रानावृत्त्याधिकरणम्।

---

दीक्षितस्य प्रयाणे मन्त्रानावृत्त्यधिकरणम् ॥ १८ ॥

प्रयाणे त्वार्थनिर्वृत्तेः ॥ ५१ ॥

दीक्षितस्य प्रस्थानार्थो मन्त्रः 'भद्रादभिश्रेयः प्रेहि' तै. सं: १-२-३ इति। स किं पुनः पुनः विश्रम्य प्रतिष्ठमानेन प्रयोक्तव्यः, उत सकृदेवेति संशये, विशेषग्रहणादावृत्तिं मन्वानस्य—

उत्तरम्। आसमीहितप्राप्तेरेकं प्रयाणमिति, तदर्थस्य मन्त्रस्य सकृत्प्रयोगः।

इत्यष्टादशं दीक्षितस्य प्रयाणे मन्त्रानावृत्त्याधिकरणम्।

---

उपरवमन्त्रस्यावृत्त्यधिकरणम् ॥ १९ ॥

उपरवमन्त्रस्तन्त्रं स्याल्लोकवत् बहुवचनात् ॥ ५२ ॥ न सन्निपातित्वादसन्निपातिकर्मणां; विशेषग्रहणे कालैकत्वात्सकृत् वचनम् ॥५४॥

ज्योतिष्टोमे सन्त्युपरवाश्चत्वारः। तेषां खननार्थो मन्त्रः 'रक्षोहणो वलगहनो वैष्णवान्खनामी तै.सं.१-३-२'ति। स किं चतुर्णामपि तन्त्रम्? उत प्रत्युपरवं भिद्यत इति संशये, 'वैष्णवानि'ति बहुवचनान्तत्वात्सकृदेव प्रयुज्यमानो मन्त्रः सर्वानभिधत्त इति, न पुनः प्रयोक्तव्यः, प्रत्येकं हि प्रयोगे बहुवचनमसमर्थं, तस्मात्तन्त्रं।

नैवं। खननक्रियास्तावत् खेयभेदेन भिन्नाः क्रमेणोपक्रम्यन्ते, न युगपत्। मन्त्रश्च सन्निपाती, तेन यस्य खननस्योपक्रमो मन्त्रान्तेन सन्निपतितः, तदर्थ एव मन्त्रो नान्येषामुपरवाणामलमुपक्रतुम्। अतः प्रातिपदिकमात्रं, कारकमात्रं च विवक्षितं। बहुवचनं त्वेकस्मिन्नेव पूजार्थं प्रयुक्तमिति वेदितव्यम्।

इत्येकोनविंशमुपरवमन्त्रस्यानावृत्त्यधिकरणम्।

---

हविष्कृदादिमन्त्राणामावृत्त्यधिकरणम् ॥ २० ॥

हविष्कृदध्रिगुपुरोऽनुवाक्यामनोतस्यावृत्तिः कालभेदात्स्यात् ॥५४॥ अध्रिगोश्च विपर्यासात् ॥ ५५ ॥ करिष्यद्वचनात् ॥ ५६ ॥

ज्योतिष्टोमे अनुसवनं सवनीयाः पुरोडाशाः। तेषु चोदकप्राप्तं हविष्कृदाह्वानं तन्त्रं? उत प्रतिसवनं भेदेन? तथा—वाजपेये प्राजापत्यान्, ऋतूपशूनश्च

सहोपक्रम्य, यदा प्राजापत्यान् पर्यग्निकृत्वोत्सृज्य ब्रह्मसाम्न्यालभेत, तदा किं क्रतुपश्वालम्भकाले कृतमध्रिगुवचनं प्राजापत्यानामपि तन्त्रं? उत प्राजापत्यार्थत्वेन ब्रह्मसामकाले पुनरध्रिगुर्वक्तव्यः? तथा 'आग्नेयं कृष्णग्रीवमालभेत, सौम्यं बभ्रुं, आग्नेयं कृष्णग्रीवमि'ति कृष्णग्रीवयोर्भेदेन प्रदाने क्रियमाणे, अवदाने च किमनुवाक्यायाः; मनोतामन्त्रस्य च तन्त्रत्वम् उतावृत्तिरिति विचारे, सर्वत्रासन्निपातित्वात्प्रयोगवचनानुग्रहाय तन्त्रत्वं। न ह्येतेषां करणवत्सन्निपातित्वं, अनुवाक्याऽपि हि याज्याव्यवधानादसन्निपातिन्येव, तस्या अगृह्यमाणविशेषत्वात् तन्त्रत्वभ्रान्तिः कस्य चित्स्यात्। तद्व्यावृत्त्यर्थमिदं सूत्रं—हविष्कृदादीनामावृत्तिः, कालभेदेन विशेषग्रहणात्। न च प्रयाजवदत्र कालान्तरे कृतः संस्कारः कालान्तरेऽवतिष्ठते, येनावृत्तिः स्यात्। प्रकाशनार्थत्वादेषां, यद्यप्येतानि करणवन्न सन्निपातीनि, तथाऽपि प्रकाशनार्थत्वात्, प्रकाशनस्य च कालान्तरे प्रध्वंसात्, तस्मादावर्त्तेरन्।

उक्तवक्ष्यमाणयोरर्थयोः श्रोतृबुद्धिसमाधानाय संग्रहः।

तन्त्रावापनिमित्तः प्रयोगपरिमाणनिश्चयो वृत्तः।
प्रासङ्गिकैः प्रयोगे परिमाणमतः प्रवक्ष्यामः॥ २७॥

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायामेकादशाध्यायस्य चतुर्थः पादः

समाप्तश्चैकादशोऽध्यायः॥

# अथ द्वादशोऽध्यायः

## प्रथमः पादः

अग्नीषोमीयप्रयाजादिभिः पुरोडाशस्योपकाराधिकरणम्॥ १॥

तन्त्रिसमवाये चोदनातः समानानामेकतन्त्रत्वमतुल्येषु तु भेदः स्यात् विधिक्रमतादर्थ्यात्तादर्थ्यं श्रुतिकालनिर्देशात्॥ १ ॥ गुणकालविकाराच्च तन्त्रभेदः स्यात्॥ २ ॥ तन्त्रमध्ये विधानाद्वा मुख्य-

**तन्त्रेण सिद्धिः स्यात्तन्त्रार्थस्याविशिष्टत्वात् ॥ ३ ॥ विकाराच्च भेदः स्यादर्थस्याविकृतत्वात् ॥ ४ ॥ एकेषां चाशक्यत्वात् ॥ ५ ॥ एकाग्निवच्च दर्शनम् ॥ ६ ॥**

सकृदनुष्ठितमप्यङ्गं बहूनां प्रधानानामेकदेशकालकर्तृकाणां शक्नोत्युपकर्तुमित्येतत्तन्त्रलक्षणोक्तमुपजीव्य, किमगृह्यमाणविशेषत्वादेवं भवति ? उतास्मा इदमनुष्ठानं, नास्मा इत्येवं गृह्यमाणेऽपि विशेषे अन्यार्थेऽप्यनुष्ठितमप्यङ्गमन्यस्यापि देशाद्यभेदे शक्नोत्युपकर्तुं न तादर्थ्येन पुनरनुष्ठातव्यमिति चिन्त्यत इति, तन्त्र-प्रसङ्गयोर्हेतुहेतुमत्ता। अग्नीषोमीये पशावैष्टिको विध्यन्तः प्रवर्त्तते। तत्र पशुपुरोडाशः 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशं निर्वपती'ति। तत्राप्यैष्टिको विध्यन्तः। तत्र चिन्त्यते-किं पश्वर्थानुष्ठितान्यङ्गानि पुरोडाशस्य नोपकुर्वन्ति, तेन तदर्थं पृथगनुष्ठातव्यानि ? उत तैरेवोपकारसिद्धेर्न पृथक् पुरोडाशार्थेनाङ्गानामनुष्ठानमिति।

तत्र—अङ्गानि पशुकालानि पश्वर्थानीत्यसंशयम्।
अनागते पुरोडाशकाले नहि तदर्थता ॥ १ ॥
अन्यार्थानुष्ठितं चाङ्गं न ह्यन्यस्योपकारकम्।
तदर्थेन कृतं तस्य तथा प्रकृतिदर्शनात् ॥ २ ॥

प्रकृतौ हि यदुद्देशेनाङ्गमनुष्ठितं तस्यैवोपकारकं दृष्टम्, इहापि नान्यार्थमनुष्ठितमन्यस्योपकरोति।

किञ्च—विधीयमानं कालादौ कर्म साङ्गं विधीयते।
स्वकालेऽतः पुरोडाशः कार्यः सर्वाङ्गसंयुतः ॥ ३ ॥

वपाप्रचारकालेऽप्युपदिष्टातिदिष्टसर्वाङ्गयुक्ते पुरोडाशे कर्त्तव्यतया विज्ञायमाने को नाम शास्त्रातिक्रमेण प्रधानमात्रमनुष्ठातुं क्षमः, वैगुण्यं च प्रसङ्गसमाश्रयणे स्यात्। प्रयाजानन्तर्यं ह्याज्यभागाङ्गं, तदानन्तर्यं च प्रधानाङ्गं, प्रकृतिवदतिदेशात्,। तदिह पाशुकेषु प्रयाजेषु प्रसज्यमानेषु तदानन्तर्यगुणहानाद्विगुणावाज्यभागौ न स्वकार्यं साधयेताम्। अथ तु वैकल्पिकत्वात्पशावेवाज्यभागावनुष्ठितौ, ततस्तयोरपि प्रसज्यमानयोः पुरोडाशस्य तदानन्तर्यगुणलोपान्न स्वकार्यसाधनत्वं स्यात्। तस्मान्न पाशुकानामङ्गानां पुरोडाशे प्रसङ्ग इति, तस्य स्वाङ्गानि पृथक्कर्त्तव्यान्येव।

गुणकालकृतं चापि वैगुण्यं भाष्य ईरितम्।
तेनापि न प्रसङ्गोऽस्तीत्येवं प्राप्तेऽभिधीयते ॥ ४ ॥

वितते पाशुके तन्त्रे समाप्तिमगते सति ।
मध्ये पतन् पुरोडाशस्तत्तन्त्रमुपजीवति ॥ ५ ॥
चोदकेन पुरोडाशे यो विध्यन्तः समर्पितः ।
ऐष्टिकः स पशावेव विततो दृश्यते यदा ॥ ६ ॥
तदा तेनैव संतुष्टः पुरोडाशविधिः स्वयम् ।
प्राकृतानां पदार्थानां न करोत्युपसंग्रहम् ॥ ७ ॥

पुरोडाशप्रयोगवचनो हि पशुतन्त्रे वितते तदीयेषु प्रयाजानुयाजाद्यङ्गेषु कृतकरिष्यमाणेषु तत्कार्येषु चोपकारेष्वारब्धारिप्सितरूपेण मनसि विपरिवर्त्तमानेषु तन्मध्ये पुरोडाशभावनां चोदकसमर्पितप्रयाजाद्यङ्गजन्योपकारयुक्तां विदधल्लाघवात्पश्वर्थैरेवोपकारैस्तद्युक्तामुपजीव्य, यान्यङ्गानि पशुतो न लभ्यन्ते, तद्युक्तामेव विदधाति, यद्विशिष्टं च प्रधानं विधीयते, तेषामेव प्रधानकालत्वं, क्रमश्चाङ्गं भवति । तेन प्रधानमात्रानुष्ठानेऽपि नास्ति शास्त्रातिक्रमः । नापि क्रमलोपाद्वैगुण्यं, । तद्धि कार्य्यस्य प्रयाजादिजन्यस्य कृतत्वात्तन्मात्रस्य च पुरोडाशभावनयोपजीवनाद्भाष्य एव परिहृतम् ।

नन्वेवं पौर्णमास्यर्थकृताङ्गकृतानामुपकाराणामाफलापूर्वनिर्वृत्तेरवस्थानादमावास्यायां न भूयः प्रयाजादीनि कर्त्तव्यानि स्युः, तत्र 'त्रयोदशामावास्यास्यामि 'शत.ब्रा.१'ति वषट्काराहुतीनामाहवनीयगतानां संख्यादर्शनं नोपपद्यते । तदिदं वारुणप्राघासिकयोर्दक्षिणोत्तरविहारयोर्मिथःप्रसङ्गनिराकरणेन निराकृतं चोद्यं । "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावास्यया यजेते"ति द्वे वाक्ये परस्परमनपेक्षमाणे द्वयोः कालयोस्त्रिकस्य त्रिकस्य कृत्स्नाङ्गयुक्तस्य प्रयोगद्वयं विदधाते इति कः प्रसङ्गः प्रसङ्गस्य ? प्रसङ्गे हि यथाचोदिताननुष्ठानात् क्रमादिलोपेन वैगुण्यान्नामावास्या स्वकार्यसाधनाय पर्याप्नुयात्, इह त्वन्यस्य तन्त्रे विहिते प्रवृत्तानपवृक्ते च मध्ये पुरोडाशो विधीयमानः प्रसङ्गमुपजीवतीति वैषम्यम् ।

यत्तु प्रकृतावनन्योद्देशेनानुष्ठितान्यङ्गान्युपकारकाणि दृष्टानि, इहापि पुरोडाशे तथैव कर्त्तव्यानीत्युक्तं । तदयुक्तं । न हि प्रकृतावुद्देशोऽङ्गम्, अविहितत्वात् । प्रयाजादिस्वरूपमात्रं त्वङ्गं, आर्थिकस्तु तत्रोद्देश । न चार्थिकं चोदकः प्रतिदिशति । तस्मादस्ति प्रसङ्गः । अन्यार्थानुष्ठिताङ्गस्यान्येनोपजीवनं प्रसङ्गः ॥

इति प्रथममग्नीषोमीये प्रयाजादिभिः पुरोडाशस्योपकारसिद्ध्यधिकरणम्



## पुरोडाशे आज्यभागयोः कर्तव्यताधिकरणम् ॥ २ ॥

### जैमिनेः परतन्त्रवापत्तेः स्वतन्त्रप्रतिषेधः स्यात् ॥ ७ ॥

स्थितं पाशुकैरङ्गैः कार्यसिद्धेर्न पुरोडाशस्य पृथगङ्गानि कर्त्तव्यानीति। यत्पुनराज्यभागावघातादिकमङ्गं पशौ न विद्यते, तदपि पुरोडाशे न कर्त्तव्यं, कर्तव्यं वेति संशयः। तदर्थमिदं विचार्यते–प्रसङ्गमुपजीवता पुरोडाशेन प्रयोगवचनमबाधित्वा चोदको बाध्यते ? उत चोदकस्याबाधः, प्रयोगवचनस्तु बाध्यत इति।

तत्र प्रयोगवचनः प्रत्यक्षत्वान्न बाध्यते।
चोदकस्त्वनुमेयत्वाद्दुर्बलो बाधमर्हति ॥ ७ ॥

लिङ्प्रत्ययो हि प्रयोगवचनः प्रत्यक्षो न शक्यते बाधितुं, प्रकृतिवच्छब्दस्त्वानुमानिकोऽयं बाध्यते। तेन पाशुकेन चोदकेन प्रापितान्यङ्गकार्याणि पौरोडाशिकः प्रयोगवचनः संगृह्य तद्विशिष्टं प्रयोगं विधत्ते, तैरेव च पुरोडाशस्य निराकाङ्क्षत्वाच्चोदको लुप्यते। तेन पशौ विद्यमानानामेव पुरोडाशेन संग्रहादाज्यभागादेरकरणमिति प्राप्ते—

ब्रूमः—चोदकेनाङ्गकार्याणां पुरोडाशान्वये सति।
प्रयोगवचनः पश्चात्तद्विशिष्टं विधास्यति ॥ ८ ॥

यत्खलु भावनासंबन्धितया श्रुत्यादिभिः, अतिदेशेन वा समर्पितं, तद्विशिष्टां भावनां प्रयोगवचनो विदधाति, न तु स्वयमङ्गानि भावनया संबध्नाति, विधिमात्रव्यापारात्। न च पाशुकेन चोदकेन पुरोडाशान्वयोऽङ्गानां, कार्याणां वा सिध्यति। तेनावश्यं पौरोडाशिकश्चोदकोऽङ्गीकर्त्तव्यः, तेन तु प्राकृतेष्वङ्गेषु कार्यमुखेन भावनाऽन्वयितया समर्पितेषु, तद्विशिष्टां भावनां विदधत् प्रयोगवचनो यानि पश्वर्थतयैव प्रक्रान्तानुष्ठानानि, तैस्तथाविधैरेव तद्वत्तामुपजीव्य, अङ्गान्तरयुक्तां विदधाति। तेन प्रयोगवचनैकदेशो यः प्रयाजादिविषयः, स बाध्यते, अङ्गान्तरेषु तु सोऽपि न बाध्यत इति, सिद्धमाज्यभागादेरनुष्ठानम्।

### प्राभाकरमतस्यानुवाद–तन्निरासौ

कश्चित्तु प्रयाजादिष्वपि प्रयोजकत्वं विधेर्न बाध्यते, सत्येव तु प्रयोजकत्वे कार्यस्यान्यार्थैरेव सिद्धेर्नानुष्ठानम्। एवं चाप्रयोजकाद्विशेषो भवति, इतरथा प्रसङ्गाप्रयोजकयोरविशेषः स्यादित्याह।

तदिदमसारम्। यदि शास्त्रेण पुरोडाशार्थतया वपाप्रचारादूर्ध्वकाले प्रयाजादीनि कर्त्तव्यानीति बोध्यते, कस्तदा तदतिक्रमेणान्यार्थान्यङ्गान्युपजीवितुं क्षमः।

यदप्युच्यते प्रयोजनमनुष्ठाने हेतुः, न चेह पृथगनुष्ठाने प्रयोजनमस्ति, अन्यार्थैरेव कार्यसिद्धेरिति। तदपि यत्किञ्चिदेतत्। यदि शास्त्रात् पुरोडाशार्थतयाऽवगतं पृथगनुष्ठानं, तदा तद्बलादेव फलं कल्प्यतां पृथगनुष्ठितैरेव पुरोडाशस्योपकारः सिध्यति, न पश्वर्थैरिति।

यत्तु प्रयोजकत्वलोपे सत्यप्रयोजकादविशेषापत्तिरिति। तदपि बुद्धिमान्द्यम्। अप्रयोजके प्रयुक्तिसामर्थ्यमेव नास्ति, प्रसङ्गी तु प्रयुक्तिसमर्थ एव सन्नन्यार्थानामुपजीवनं लाघवात्करोतीति विशेषः, यदि च सत्यपि प्रयोजकत्वे कार्याभावादननुष्ठानं, ततो वरुणप्रघासेषूत्तरवैहारिकैरेवाङ्गैर्मारुत्याः कार्यसिद्धेस्सत्यपि देशभेदे कर्तृभेदे च 'विकाराच्च न भेदः स्यादर्थस्याविकृतत्वादि' १२·१·५ति न्यायेन पृथगङ्गानि न क्रियेरन्।

किं च वपाप्रचारानन्तरकाले पुरोडाशो यदि सकलप्राकृताङ्गयुक्त एव एव कर्त्तव्यतया चोद्यते, ततस्तस्मिन्नेव काले सर्वाङ्गेषु प्राकृतेन क्रमेण कार्यतयाऽवगम्यमानेषु यद्यपि कथं चित्प्राकृतानां प्रयाजाद्यङ्गानां कार्याणि निष्पन्नान्यनपवृक्तानि संनिहितानीति कृत्वा, तानि न क्रियेरन्, तथाऽपि यानि तस्यामेव वेलायां पश्वर्थेनाप्यननुष्ठितानि अनूयाजादीनि, तानि क्रमवशात्पौरोडाशिकेडोपाह्वानानन्तरमुपस्थितानि कर्त्तव्यतया च पुरोडाशप्रयोगवचनाद्बोध्यमानानि किमिति न क्रियन्ते। न हि तदनुष्ठानं निष्प्रयोजनं, तत्कार्यस्येदानीमनिष्पन्नत्वात्। अनिष्पन्नस्य प्रतीक्षणे कारणाभावात्। अस्मत्पक्षे पुनः पशुप्रयोगवचनसंनिधापितान्यङ्गान्युपजीवन्पुरोडाशविधिर्यादृशानि तेन पूर्वापरकालवर्तीनि सन्निधापितानि, तादृशान्येव लाघवतृष्णयोपजीव्य, अधिकानामेव प्रयोगं विधत्त इति, युक्तं साङ्ख्यानामपि प्रसङ्गेनोपजीवनेनानुष्ठानं। लाघवमेव हि प्रसङ्गे कारणम्।

आह च—'अन्यार्थानुष्ठितैः शेषैरुपकारे अल्पकल्पना।
प्रसङ्गे, तदभावे च स्याद् भूयिष्ठप्रकल्पना' ॥ तं-वा-पृ. ६४८इति।

तस्मात्प्रयोगवचनैकदेशो लुप्यत एव। अधिकाङ्गविषयस्त्वंशो न लुप्यत इति, सिद्धमाज्यभागादेरनुष्ठानम्।

इति द्वितीयं पुरोडाशे आज्यभागयोः कर्तव्यताधिकरणम्।

---

सोमे दार्शिकवेदेरकरणाधिकरणम् ॥ ३ ॥

नानार्थत्वात्सोमे दर्शपूर्णमासप्रकृतीनां वेदिकर्म स्यात् ॥ ८ ॥

अकर्म वा कृतदृषा स्यात् ॥ ९ ॥

ज्योतिष्टोमे यानि महावेद्यां कृतायां दर्शपूर्णमासप्रकृतीनि कर्माणि प्रवर्त्तन्ते । तेषु महावेदेर्भेदेन प्राकृती वेदिः कर्त्तव्या, नेति सन्देहे, यद्यप्यङ्गप्रधानार्था महावेदिः, तथाऽपि प्रचारार्थत्वान्न हविरासादनार्थायाः प्राकृत्याः कार्यं साधयतीति, तदर्थं प्राकृती कर्त्तव्या ।

नैवं । प्रचारार्थाऽपि प्रसङ्गाद्धविरासादनमपि शक्नोति साधयितुं । न हि तस्यां क्रियमाणं हविरासादनं विगुणं भवति, वेद्यां हि हविरासादनं प्रकृतौ श्रुतं, न स्वार्थायामेवेति । तस्मात्प्रचारार्थैव प्रसङ्गादासादनेनोपजीव्यते ।

इति तृतीयं सोमे दार्शिकवेद्यकरणाधिकरणम् ।



सोमे दार्शिकैः स्रुवादिभिः पात्रैः सावनपश्वादिहोमाधिकरणम् ॥ ४ ॥

पात्रेषु च प्रसंगः स्याद्धोमार्थत्वात् ॥ १० ॥ न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसङ्गः स्यात् ॥ ११ ॥

सोमाङ्गेष्वैष्टिकेषु कर्मसु किं सोमार्थान्येव पात्राणि प्रसज्येरन्, उत जुह्वादीनि पात्राणि पृथक्प्रयोक्तव्यानीति संशये, सौमिकैरेव होमार्थैरैष्टिकानामपि होमादिकार्यसिद्धेः प्रसङ्गं मन्यते ।

जुह्वादिकार्याणि होमादीनि अन्यैः क्रियमाणानि विगुणी भवेयुः । न चात्रान्यैरेव होमादयः कृता येन पृषदाज्यानुयाजवन्न पुनः क्रियेरन् । तेन कर्त्तव्याः सन्तो होमादयः साद्गुण्यस्य सम्भवे किमिति विगुणाः क्रियन्ते, तस्मान्न पात्रप्रसङ्गः ।

इति चतुर्थं सौम्यचर्वादिहोमस्यैष्टिकपात्रैरनुष्ठानाधिकरणम् ।



शामित्रे पशुपुरोडाशश्रपणाभावाधिकरणम् ॥ ५ ॥

**शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात् १२ ॥**

अग्नीषोमीये पशौ शामित्रोऽग्निः श्रपणार्थं श्रुतः। पशुतन्त्रोपजीवी-पुरोडाश इति स्थितम्। अतः सोऽपि तत्रैव श्रपयितव्य इति मन्यते।

न पशुश्रवणेन पुरोडाशः श्रपितो भवति, तेन पृथक् श्रपयितव्यः, पुरोडाशश्चोदकप्राप्ते गार्हपत्ये श्रपयितव्यः, अवैगुण्यात्।

इति पञ्चमं शामित्रे पशुरोडाशश्रपणाभावाधिकरणम्।

---

कौण्डपायिनामयनेऽग्निहोत्रद्रव्यस्य प्राजहिते श्रपणाधिकरणम् ॥ ६ ॥

**श्रपणं चाऽग्निहोत्रस्य शालामुखीये न स्यात्प्राजहितस्य[1] विद्यमानत्वात् ॥ १३ ॥**

कौण्डपायिनामयनेऽग्निहोत्रे किं प्राजहिते मुख्ये गार्हपत्ये श्रपणम्? उत शालामुखीय इति सन्देहे, चोदकप्राप्ते शालामुखीये स्यात्। ज्योतिष्टोमे हि शालामुखीय एव 'अत ऊर्ध्वं गार्हपत्यो भवती'ति शालामुखीयो गार्हपत्यकार्ये विहितश्चोदकपरम्परया कुण्डपायिनामयनं प्राप्तः। तस्मात्तत्र श्रपणं। सत्यं। चोदकादेवम्, अग्निहोत्रनामधेयात्तु नैयमिकाग्निहोत्रवन्मुख्य एव गार्हपत्ये श्रपणं प्रापितं, तच्च चोदकात् बलीय इत्युक्तम्।

कृत्वा चिन्तयेति प्राभाकरमतानुवाद—निरासौ

केचित्तु कृत्वाचिन्तामाहुरसत्यपि नामधेये 'गार्हपत्ये हवींषि श्रपयती'-त्यनारभ्यवादस्य सर्वार्थत्वादुपदेशतः प्राप्तः प्राजहितश्चोदकप्राप्तं शालामुखीयं बाधत इति।

तत्तु नैवम्। अनारभ्यवादस्य हविःश्रपणद्वारकत्वात्कौण्डपायिनामयने च हविःश्रपणस्याश्रुतत्वात्प्रकृतितः प्राप्यमाणस्य सहैव प्राजहितेन प्राप्तेर्द्विरुक्तत्वान्नोपदेशसम्भवः। तस्मान्नाम्नैव प्राजहितस्य प्राप्तिः। ननु सिद्धं प्राबल्यं सप्तमे? सत्यम्। इदन्तु प्रसङ्गनिराकरणार्थं सूत्रं। शालामुखीयस्ता-

१—प्राजहितशब्दः पूर्वाचार्यसंज्ञया पुराणगार्हपत्यस्य वाचकः—इति।

वदस्मिस्तन्त्रे चोदकेन सर्वगार्हपत्यकार्याय प्रवृत्तः स एव प्रसङ्गादग्निहोत्रश्रपणमपि साधयिष्यति, विनाऽपि तादर्थ्येनेति शङ्का। सेयं निराक्रियतेऽन्यार्थस्य नामप्राप्तेन प्राजहितेन बाधितत्वादिति, पूर्ववत् साद्गुण्यसम्भवे वैगुण्यानाश्रयणादित्यस्यैव न्यायस्य प्रपञ्चोऽयम्।

इति षष्ठं कौण्डपायिनामयनेऽग्निहोत्रद्रव्यस्य प्राजहिते-
श्रपणाधिकरणम्।

---

हविर्द्धानयोः शकटयोरन्येन शकटेन औषधद्रव्यकाणां
पुरोडाशानां निर्वापाधिकरणम्॥ ७॥

हविर्धाने निर्वपणार्थं साधयेतां प्रयुक्तत्वात् प्रधानवैगुण्ये प्रसङ्गः स्यात्॥ १५॥ अनसां च दर्शनात्॥ १६॥

ज्योतिष्टोमे हविर्द्धानसमाख्ययोः सोमधारणार्थयोरनसोः प्रवर्त्तने कृते, यानि सवनीयपुरोडाशादीनि, तेषां किं तयोरन्यतरत्र निर्वपणम्? उत अनोऽन्तरमुपादेयमिति संशये, 'अनसोऽधिनिर्वपती'त्यस्य प्रकृतितः प्राप्तस्य सोमधारणार्थाभ्यामपि प्रसङ्गतः सिद्धेर्न निर्वापार्थेनानोऽन्तरमुपादेयं।

सत्यमेतावत्सम्भवति। देशस्तु निर्वापस्य 'अपरेण गार्हपत्यं निर्वपती'ति प्रकृतितः प्राप्तयोर्हविर्द्धानयोर्न सम्पद्यते, तयोर्मन्त्रवन्नियमवच्च महावेद्यामवस्थापितयोः प्राग्वंशनयनासम्भवात्, तस्मादनोऽन्तरमुपादेयम्, अवैगुण्यात्।

इति सप्तमं हविर्धानान्यशकटेनौषधद्रव्यकपुरोडाशनिर्वापाधिकरणं।

---

प्रायणीयादिषु दीक्षाजागरणस्याभावाधिकरणम्॥ ८॥

तद्युक्तं च कालभेदात्॥ १७॥

दीक्षाकालं जागरणमाम्नातं। दीक्षोत्तरकालेषु प्रायणीयादिषु कर्मसु किं चोदकप्राप्तं दार्शपौर्णमासिकं जागरणं कर्त्तव्यं, नेति संशये, सोमार्थेन-दीक्षाकालीनेन जागरणेन प्रसङ्गात्कार्यसिद्धेर्न पृथक्तेषु जागरणं कर्त्तव्यं। यदि तावदप्रमादार्थं जागरणं यज्ञसाधनरक्षणार्थं, ततो न दीक्षाकालीनेषु रक्षितेषु तदुत्तरकालानि रक्षितानि संभवन्तीति, तदर्थं पुनर्जागरितव्यम्।

अथादृष्टार्थं जागरणं, तथाऽपि सौम्मिकेन जागरणेनैवैष्टिकजागरणजन्यादृष्ट-सिद्धौ प्रमाणाभावात् तदर्थं कर्त्तव्यमेव प्राकृतं जागरणम् ।

इति अष्टमं प्रायणीयादिषु जागरणभावाधिकरणं ।

विहारभेदेन मन्त्रभेदाधिकरणम् ॥ ६ ॥

मन्त्राश्च सन्निपातित्वात् ॥ १८ ॥

वरुणप्रघासेषु दक्षिणोत्तरविहारयोर्निर्वापादिमन्त्राः किं तन्त्रेणाध्वर्यूणा, प्रतिप्रस्थात्रा वाऽन्यतरेण वक्तव्याः ? उतोभाभ्यामपि भेदेनेति संशये-अन्यतरेणाप्युच्यमानाः शक्नुवन्ति उभयोः स्मृतिं कर्त्तुमिति मन्यते ।

निर्वपामीत्यादेरात्माभिवादित्वान्न तन्त्रता सम्भवतीत्युभयोः पृथक् पृथक् प्रयोगः सकृदसकृदनुष्ठानप्रसङ्गात्तन्त्रावापचिन्तापीयमत्र कृता ।

इति नवमं विहारभेदेन मन्त्रभेदाधिकरणम् ।

दीक्षणीयादिषु अग्न्यन्वाधानस्याभावाधिकरणम् ॥ १० ॥

धारणार्थत्वात्सोमेऽग्न्यन्वाधानं न विद्यते ॥ १९ ।

सोमाङ्गेष्वैष्टिकेषु कर्मसु चोदकप्राप्तमग्न्यन्वाधानं कार्यं, नेति संशये, चोदकानुग्रहात्कर्त्तव्यमिति प्राप्ते—

ब्रूमः, धारणार्थं तु तत् । सोमार्थेन विहृतस्य धारितस्याग्नेस्तेनैव धारणेन प्रसङ्गसिद्धकार्यत्वात, न पुनर्धारणं कार्यम् ॥ ननु चाक्रतुसमप्तेः पुनः पुनः प्रयत्नेन धारयितव्य एवाग्निः । सत्यम्, तथाऽपि नान्वाधानं कार्यं, तद्धि विहृतस्याग्नेराद्यो यः समिन्धनव्यापारो धारणार्थः, तद्रूपं, न हि तत् प्रकृतौ पुनः पुनः कृतं । तस्मादत्रापि धार्यमाणस्य धारणायाग्न्यन्वाधानं-न कर्त्तव्यम् ॥

इति दशमं दीक्षणीयादिषु अग्न्यन्वाधानस्याभावाधिकरणम् ।

दीक्षणीयादिषु व्रतोपायनाभावाधिकरणम् ॥ ११ ॥

तथा व्रतमुपेतत्वात् ॥ २० ॥ विप्रतिषेधाच्च ॥ २१ ॥
सत्यवदिति चेत् ॥ २२ ॥ न संयोगपृथक्त्वात् ॥ २३ ॥

तत्रैव प्राकृतं व्रतोपायनं कर्तव्यं, नेति संशये, कर्त्तव्यमिति प्राप्ते-सोमार्थेऽपि तेनैव व्रतेन सत्यवदनब्रह्मचर्यादिसङ्कल्परूपेणासमाप्तेरविनष्टेन प्रसङ्गात्सिद्धेर्न पुनरुपायनं कर्त्तव्यम् ॥

इत्येकादशं दीक्षणीयादिषु व्रतोपायनाभावाधिकरणं ।

---

ऐष्टिकेषु अग्न्यन्वाधानाननुष्ठानाधिकरणम् ॥ १२ ॥

ग्रहार्थं च पूर्वमिष्टेस्तदर्थत्वात् ॥ २४ ॥ शेषवदिति चेत् ॥ २५ ॥ न वैश्वदेवो हि ॥ २६ ॥ स्याद् व्यापदेशात् ॥ २७ ॥ न गुणार्थत्वात् ॥ २८ ॥

यदुक्तं धारणार्थत्वात्सोमेऽन्यदग्न्यन्वाधानं न विद्यत इति, तदाक्षिप्यते । यदि तत्केवलधारणार्थं स्यात्, ततो न विद्येत, तत्तु दर्शपूर्णमासयोः-देवतापरिग्रहार्थमपि श्रुतं 'ममाऽग्ने वर्च इति पूर्वमग्निं गृह्णाति, देवता एव-तत्पूर्वेद्युर्गृहीत्वा श्वो भूते यजते' इति । ततः प्रायणीयादिष्वपि तत् देवता-परिग्रहार्थं कर्त्तव्यमग्न्यन्वाधानं । नैवं । न ह्यग्निधारणे दृष्टप्रयोजने सति, अदृष्टदेवतापरिग्रहार्थत्वमर्थवादमात्रोपयुक्ताद्वाक्यशेषात्कल्पयितुं शक्यम् ।
अभ्युपेत्य ब्रूमः । यद्यपि देवतापरिग्रहार्थः, तथाऽपि प्रायणीयादिष्व-कर्त्तव्यं । दीक्षणीयाया अपि वाक्यशेषे देवतापरिग्रहार्थता श्रूयते "आग्नावैष्णवमेकादशकपालं निर्वपेद् दीक्षिष्यमाणोऽग्निरवमो देवतानां विष्णुः परमः देवता[1] एवोभयतः परिगृह्य दीक्षते':, तै.सं.५-५-४-इति। यद्यपि 'दीक्षाः-सोमस्ये'ति वचनात्प्रधानार्था दीक्षणीया प्रधानदेवता एव परिगृह्णाति, तथाऽपि वैश्वदेवग्रहे सर्वदेवतासमवायात्तत्परिग्रहं कुर्वति दीक्षणीयाप्रसङ्गा-दङ्गकर्मदेवता अपि गृह्णाति । न हि विश्वदेवशब्दः कस्यचिद्देवतागणस्य वाचकः, प्रसिद्धावयवार्थस्य समुदायस्य शक्त्यन्तरकल्पनायां प्रमाणाभावात् । तस्मात्सर्वदेवतावचनत्वात्तत्परिग्रहे च सर्वान्तर्गतानामङ्गदेवतानामपि-

१. 'देवता यज्ञञ्च, तदुभयतः परिगृह्ये'ति मै० सं० पाठः ।

प्रसङ्गतः परिग्रहादकर्त्तव्यमग्न्यन्वाधानम्। यद्वा तत्राऽभ्युपगमपक्षे दीक्षणीयायां कर्त्तव्यमेवान्वाधानं। ततः परन्तु न कर्त्तव्यम्।

इति द्वादशं दीक्षणीयादिष्वग्न्यन्वाधानाननुष्ठानाधिकरणम्।



ऐष्टिकेषु पत्नीसन्नहनाननुष्ठानाधिकरणम् ॥ १३ ॥

सन्नहनञ्च वृत्तत्वात् ॥ २९ ॥

दार्शपौर्णमासिकं पत्नीसन्नहनं प्रायणीयादिषु चोदकप्राप्तं कर्त्तव्यं। नैवं। वासोधारणार्थं तद्, दृष्टार्थत्वात्। दीक्षाकालेन च सोमार्थेन सन्नहनेन वाससोधारितत्वादकर्त्तव्यम्,। अथाऽपि न वासोधारणार्थं, तथापि सन्नह्यैव कर्माणि कार्याणीत्येतदर्थं सन्नहनं, नादृष्टार्थम्। अन्यार्थेनापि सन्नहनेन सन्नद्धैवेति न पृथक् सन्नहनम् ॥

इति त्रयोदशं पत्नीसन्नहनाननुष्ठानाधिकरणम्।



ऐष्टिकेषु आरण्यभोजनाभावाधिकरणम् ॥ १४ ॥

अन्यविधानादारण्यभोजनं न स्यादुभयं हि वृत्त्यर्थम् ॥३०॥

आरण्याशनमपि प्रायणीयादिषु चोदकप्राप्तमपि वृत्त्यर्थत्वात्सौमिकेनैव पयोव्रतादिना वृत्तिसिद्धेरकर्त्तव्यम् ॥

इति चतुर्दशमैष्टिकेष्वारण्यभोजनाभावाधिकरणम्।



ऐष्टिकेषु शेषभक्षानुष्ठानाधिकरणम् ॥ १५ ॥

शेषभक्षास्तथेति चेन्नान्यार्थत्वात् ॥ ३१ ॥

एवं तर्हि शेषभक्षा अपि ये यजमानकर्त्तृका इडाभक्षणादयः, तेऽपि वृत्त्यर्थत्वात्सौमिकेन व्रतेन निवर्त्तेन्। सत्यं। यदि वृत्त्यर्थाः, ते तु शेषभक्षप्रति-

पत्त्यर्थाः 'यजमानपञ्चमा इडां भक्षयन्ती'ति शेषस्य द्वितीयानिर्देशात्। तदिदं षष्ठ एव प्रसाधितं। तस्य त्विदं प्रयोजनकथनं प्रसङ्गात्मकत्वादिहोक्तम्।

इति पञ्चदशमैष्टिकेषु शेषभक्षानुष्ठानाधिकरणम्॥

ऐष्टिकेषु अन्वाहार्यदानाभावाधिकरणम्॥ १६॥

भृतत्वान्नपरिक्रमः॥ ३२॥

दीक्षणीयादिषु चोदकप्राप्ताऽन्वाहार्यदक्षिणा दातव्या, नेति संशये, 'दक्षिणाः सोमस्ये'ति वचनात् द्वादशशतदक्षिणा केवलप्रधानार्थेत्युक्तम्। अतोऽङ्गेषु स्वार्थदक्षिणा दातव्यैव।

प्रसङ्गसिद्धकार्यत्वात्तु न दातव्या, प्रधानार्थं ह्यानतिरुपक्रमप्रभृत्या-समाप्तेः प्रवृत्ता, अनपवृक्ता चावस्थितेति, तामेवोपजीवन्तो दीक्षणीयादिविध-यश्चोदकप्राप्तामपि स्वार्थामानतिं न प्रयुञ्जते। किं च पृथग्दक्षिणायां-सत्यामानतिभेदादङ्गप्रधानानामश्रुतः कर्तृभेद आपद्यते। किं च यैः प्रधानं कर्त्तव्यं, तैरेवावश्यमङ्गान्यपि कर्त्तव्यानि, नाकुर्वद्भिरङ्गानि प्रधानं कर्त्तुं-शक्यमिति निश्चिते शास्त्रार्थे, प्रधानार्थत्वेनाङ्गानां बलादङ्गान्यपि कर्त्तव्यानि-भवन्तीति, प्रसङ्गसिद्धानुष्ठानत्वान्नाङ्गेषु दक्षिणा।

इति षोडशं दीक्षणीयादिष्वन्वाहार्यदानाभावाधिकरणम्।

ऐष्टिकेषु शेषभक्षस्य संस्कारार्थतया कर्तव्यत्वाधिकरणम्॥ १७॥

शेषभक्षास्तथेति चेत्॥ ३३॥ न कर्मसंयोगात्॥ ३४॥

पूर्वं यजमानभक्षस्य वृत्त्यर्थत्वात् व्रतेन निवृत्तिराशङ्किता। सम्प्रति-ऋत्विग्भक्षाणां परिक्रियार्थतया प्रधानदक्षिणया निवृत्तिराशङ्क्यते। निरा-करणं च तद्वदेव। शेषप्रतिपत्त्यर्था भक्षाः, नानत्यर्था इति। दशम एव चानत्य-र्थत्वं १०-२-२९ भक्षाणां निराकृतं। तस्येदं प्रयोजनं प्रसङ्गात्मकत्वेनेहोक्तम्।

इति सप्तदशमैष्टिकेषु शेषभक्षस्य संस्कारार्थतया कर्तव्यत्वाधिकरणम्।

ऐष्टिकेषु होतुर्वरणसद्भावाधिकरणम् ॥ १८ ॥

प्रवृत्तवरणात्प्रतितन्त्रं वरणं होतुः क्रियेत ॥ ३५ ॥ ब्रह्मापीति-चेत् ॥ ३६ ॥ न प्राङ्नियमात्तदर्थं हि ॥ ३७ ॥ निर्दिष्टस्येति चेत् ॥ ३८ ॥ नाश्रुतत्वात् ॥ ३९ ॥ होतुस्तथेति चेत् ॥ ४० ॥ न कर्मसंयोगात् ॥ ४१ ॥

दर्शपूर्णमासयोः होतृवरणमाम्नानम् 'अग्निर्देवो दैव्यो होते' आ. प. श्रौ. सू. २-१६-५ ति । तत्किमानत्यर्थत्वात्सौमिकेनैव वरणेन 'अग्निर्होता स मे होते'-त्यादिना प्रसङ्गादानतिसिद्धेर्दीक्षणीयादिषु न कर्त्तव्यं ? उतादृष्टार्थत्वात्क-र्त्तव्यमिति संशये ? वरणस्यानत्यर्थत्वान्निवृत्तिं मन्यते । ननु प्रवृत्ते कर्मणि क्रियमाणमृतुयाज्यावरणवददृष्टार्थं ।

नैवं । ऋतुयाज्यावरणमादावेवानत्यर्थे कृते वरणे पश्चात्क्रियमाणम-दृष्टार्थं स्यात् । होतुस्तु न प्रागस्ति वरणम् । अतः प्रवृत्तेऽपि कर्मणि-दृष्टार्थमेव ब्रह्मवरणवत्, तदपि हि पूर्वेद्युरमावास्यायां वेदिकरणेऽनुम-तिदाने प्रवृत्ते ब्रह्मण्यपरेद्युः प्रणीताप्रणयनकाले क्रियते । अथ च दृष्टार्थ-मेव, अन्यथा तदपि दीक्षणीयादिषु कर्त्तव्यं स्यात् । तस्माद्धोतृवरणमपि न कर्त्तव्यमिति प्राप्ते—

ब्रूमः—प्रवृत्तस्य वरणं न कथंचित् दृष्टार्थं भवति । दक्षिणादानं-हि भविष्यदवस्थमपि भवत्यानतिनिमित्तं, लोके तथा दर्शनात् । न तु वरणेन भाविना भवत्यानमनं । तस्माददृष्टार्थं, ब्रह्मवरणं त्वप्रवृत्ते ब्रह्मणि क्रियते, पौर्णमास्यां तावदप्रवृत्त एव क्रियत इत्यविवादम् । अमावास्यायामपि पूर्वे-द्युरपकृष्यमाणा वेदिः स्वाङ्गभूतप्रसवसिद्धये ब्रह्मणो वरणमप्यपकर्षति, लिङ्गाद्धि वरणस्यानतिरेव प्रयोजनं गम्यते । प्रयोजनवशेन च पाठक्रमं-बाधित्वा युक्तमेव वरणस्य पूर्वेद्यु रनुष्ठानं । तस्मादप्रवृत्तविषयत्वात् ब्रह्म-वरणं दृष्टार्थं । न चैवं होतृवरणस्यापकर्षः सम्भवति, 'अवृतः सामिधेनीर-न्वाहे'ति वचनात् । तस्माददृष्टार्थं होतृवरणं प्रतिकर्म कर्त्तव्यम् ।

इत्यष्टादशमिष्टिषु होतृवरणसद्भावाधिकरणम् ।

आतिथ्यायां बर्हिषः प्रतिकर्म्म प्रोक्षणाद्यभावाधिकरणम् ॥ १९ ॥

यज्ञोत्पत्त्युपदेशे निष्ठितकर्मप्रयोगभेदात्प्रतितन्त्रं क्रियेत ॥ ४२ ॥

न वा कृतत्वात्तदुपदेशो हि ॥ ४३ ॥

'यदातिथ्यायां बर्हिः, तदुपसदां, तदग्नीषोमीयस्ये'ति बर्हिःसाधारण्यविधिरित्युक्तमेव। त्रयाणामर्थेनोपात्ते बर्हिषि संस्काराः प्रोक्षणादयो विचार्यन्ते, किन्ते प्रतिकर्माऽऽवर्तनीयाः, उतातिथ्याकालकृता एवोपसत्सु, अग्नीषोमीये च प्रसज्यन्त इति सन्देहे, मध्यपाताभावान्न प्रसङ्गः, नापि तन्त्रम्। आतिथ्याकालत्वेन विशेषग्रहणादिति प्राप्ते—

ब्रूमः—सत्यं न तन्त्रता, प्रसङ्गस्तु भवति। तन्त्रमध्यपाताभावेऽपि बर्हिर्द्वारा ये संस्काराः, ते यदर्थं बर्हिरुपात्तं, तदर्था विज्ञायमाना बर्हिषःसाधारणत्वात् तेऽपि सकृदेव कर्त्तव्या इत्यवगते सति, नान्तरीयकमातिथ्याकालेऽनुष्ठानम्, उपसदादेस्तदानीमप्राप्तत्वात्। न चैतावता आतिथ्यापवर्गे, अपवृज्यन्ते, बर्हिषो ऽनपवृक्तत्वात्। तदर्थत्वाच्च तेषां, तस्मान्न भेदेन कर्त्तव्याः।

इत्येकोविंशमातिथ्यायां बर्हिषः प्रतिकर्म प्रोक्षणाभावाधिकरणम्।

---

आतिथ्यायां स्तरणमन्त्रस्यावृत्त्यधिकरणम् ॥ २० ॥

देशपृथक्त्वान्मन्त्रोऽभ्यावर्तते ॥ ४४ ॥

तदेव बर्हिर्यदातिथ्यार्थं प्राग्वंशे स्तीर्णं, तत आनीय, अपरेणोत्तरवेदिमग्नीषोमीयार्थत्वेनास्तीर्यते, । तदा किं 'ऊर्णाम्रदसं त्वा स्तृणामी' तै०सं० १-१-११ ति स्तरणमन्त्रः पूर्वं कृत एव प्रसज्यते, उतावर्त्तनीय इति विचारे, पूर्ववद्बर्हिःसाधारण्यात्प्रसङ्गे प्राप्ते—

उच्यते-स्यादेवं यदि बर्हिरर्थं स्तरणं स्यात्, तत्तु 'बर्हिषा वेदिं स्तृणाती'ति द्वितीयानिर्दिष्टत्वात्प्रयोजनवत्त्वाच्च वेदिदेशसंस्कारार्थं, भिन्नौ चेह प्राग्वंशोत्तरवेदिसमीपदेशौ, तेन तदर्थं स्तरणं, तदङ्गं च मन्त्रोऽप्यावर्त्तते। असत्यामावृत्तौ वेदिवैगुण्यादग्नीषोमीयहविषामासादनं विगुणं स्यात्।

भवतु वा बर्हिरर्थं स्तरणं, बर्हिष्प्रवस्तीर्णे हवींषि साक्षादासाद्यन्त इति। तथाऽपि तदावृत्तेस्तदङ्गमन्त्रावृत्तिः, अन्यथा ह्यमन्त्रास्तीर्णे बर्हिषि हवींष्यासाद्येरन्।

इति विंशमातिथ्यायां स्तरणमन्त्रस्य आवृत्त्यधिकरणम्।

बर्हिषो देशान्तरनयने सन्नहन-हरणमन्त्रयोरप्रयोगाधिकरणम् ॥ २१॥

सन्नहनहरणे तदेति चेत् ॥ ४५ ॥ नान्यार्थत्वात् ॥ ४६ ॥

तदेव बर्हिः प्राग्वंशे स्तीर्णं पुनः सन्नह्योत्तरवेदिसमीपे स्तीर्यते। प्रकृतौ संनहनमन्त्रः 'पूषा ते ग्रन्थिं ग्रथ्नात्वि'ति, तथा हरणमन्त्रः 'बृहस्पतेर्मूर्ध्ना हरामी'ति। तौ किमस्मिन्सन्नहने हरणे च प्रयोक्तव्यौ, नेति संदेहे, सन्नहन-हरणयोरावृत्तेर्मन्त्रयोरप्यावृत्तिः पूर्ववत्।

मैवं। प्रकृतौ मन्त्रौ विहारदेशं प्रापितस्य बर्हिषो वेदिदेशप्रापणार्थमेतत्। अतोऽन्यकार्यत्वात्कार्यप्रयुक्तत्वाच्च मन्त्रयोर्नात्र प्रयोगः। यथा-प्रकृतावेव गार्हपत्यादाहवनीये आनीयमाने बर्हिषि मन्त्रो न प्रयुज्यते तद्वत्।

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां
द्वादशाध्यायस्य प्रथमः पादः

# अथ द्वादशाध्याये द्वितीयः पादः

विहाराग्नेर्वैदिककर्ममात्रार्थताधिकरणम् ॥ १ ॥

विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात् ॥ १ ॥ मांसपाकप्रतिषेधश्च तद्वत् ॥ २ ॥ निर्देशाद्वा वैदिकानां स्यात् ॥ ३ ॥ सतिचोपासनस्य दर्शनात् ॥ ४ ॥ अभावदर्शनाच्च ॥ ५ ॥ मांसपाकोविहितप्रतिषेधः स्याद्वाऽऽहुतिसंयोगात् ॥ ६ ॥ वाक्यशेषो वा दक्षिणेस्मिन्नारभ्य विधानस्य ॥ ७ ॥

किं गार्हपत्योऽग्निः लौकिकानां पार्वण-स्थलीपाक-तापन-पचन-प्रकाशादीनां,चरु पुरोडाश-होम हविःश्रपणादीनां च वैदिकानां सर्वेषामग्निकार्याणामङ्गम् ? उत वैदिकानामेवेति संशये, सामर्थ्यात्मकाल्लिङ्गात् मांसपाकप्रतिषेधदर्शनाच्च सर्वार्थताप्राप्तौ—

उच्यते—'गार्हपत्ये हवींषि श्रपयति, दक्षिणाग्नावन्वाहार्यं पचति, यदाहवनीये जुहोती"ति प्रत्यक्षवचननिर्दिष्टैरेव प्रयोजनैर्निराकाङ्क्षाणां न लिङ्गेन सर्वार्थता शक्या कल्पयितुं। मांसपाकप्रतिषेधस्तु वैदिकवपाश्रपण एवोपपन्नः। स्थालीपाकादयस्त्वौपासने विहिता न सामान्यविहितान् गार्हपत्यादीन् गृह्णन्ति। तस्माद् वैदिकानामेव विहारोऽङ्गं। पूर्वं बर्हिःसंस्काराणां साधारण्यासाधारण्ये विचारिते, तत्प्रसङ्गादग्नीनां लौकिकालौकिकसाधारण्यं विचारितमिति सम्बन्धः।

इति प्रथमं विहाराग्नेर्वैदिककर्ममात्रार्थताधिकरणम्।



सवनीयपशौ पशुपुरोडाशस्य कर्तव्यताधिकरणम् ॥ २ ॥

**सवनीये छिद्रापिधानार्थत्वात् पशुपुरोडाशो; न स्यादन्येषामेवमर्थत्वात् ॥८॥ क्रिया वा देवतार्थत्वात् ॥९॥ लिङ्गदर्शनाच्च ॥१०॥**

सवनीये पशावग्नीषोमीयात्पशोश्चोदकप्राप्तः पशुपुरोडाशः कर्त्तव्यः, नेति संशये, न कर्त्तव्यः। स हि प्रकृतौ छिद्रापिधानार्थः "सुषिरो वा एतर्हि पशुः, यर्हि वपामुत्खिदति, यद्व्रीहिमयः पुरोडाशो निरुप्यते अपिहित्यै, [अच्छिद्रतायै'] मै.सं. इति। सवनीयपशौ च सवनीयैरेव विधानात् छिद्रापिधानं कृतं। तत्रापि हि श्रूयते "अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्ते अपिहित्यै, [अच्छिद्रतायै'] इति। तस्मात्तैरेव कृतकार्यः पुरोडाशो निवर्तते। ननु 'पुरोडाशेन माध्यन्दिने सवने' इति लिङ्गात्कर्तव्यः ? एवं तर्हि विकल्पोऽस्तु। नैवं। अर्थवादमात्रं छिद्रापिधानवचनं, प्रत्यक्षविरोधात्, देवतासंस्कारार्थस्त्वसौ। तस्मात्कर्त्तव्य एव। लिङ्गं च 'पुरोडाशेन माध्यन्दिने' इति न पाक्षिकं कल्पयितुं शक्यम्।

इति द्वितीयं सवनीयपशौ पशुपुरोडाशस्य कर्तव्यत्वाधिकरणं।



सवनीयपुरोडाशे हविष्कृदाह्वानस्याभावाधिकरणम् ॥ ३ ॥

**हविष्कृत्सवनीयेषु न स्यात्; प्रकृतौ यदि सर्वार्था पशुं प्रत्याहूता सा कुर्याद्विद्यमानत्वात् ॥ ११ ॥**

प्रकृतौ पात्रप्रोक्षणानन्तरमवघातकालः। तस्मिन् काले 'हविष्कृदेहीति' 'त्रिरवघ्नन्नाह्वयती'ति हविष्कृदाह्वानं। तदाज्यौषधसान्नाय्यानां सर्वेषामङ्गमिति कृत्वा चिन्त्यते। तदा हि सान्नाय्यविकारे पशावपि पात्रप्रोक्षणानन्तरमस्ति हविष्कृदाह्वानम्। अतश्च सवनीयपश्वर्थेन तदीयपात्रप्रोक्षणानन्तरमाहूता हविष्कृत् तन्मध्यपातिनां सवनीयपुरोडाशानां प्रसङ्गसिद्धेर्न पृथगाह्वातव्येति सिद्धमेवोत्तरविवक्षया प्राप्यते।

इति तृतीयं सवनीयपुरोडाशे हविष्कृदाह्वानस्याभावाधिकरणम्।

---

तृतीयसवने हविष्कृदाह्वानस्यापुनरावृत्त्यधिकरणम् ॥ ४ ॥

**पशौ तु संस्कृते विधानात्तार्तीयसवनिकेषु स्यात्सौम्याश्विनयोश्चापवृक्तार्थत्वात् ॥ १२ ॥ योगाद्वा यज्ञाय तद्विमोके विसर्गः स्यात् ॥ १३ ॥**

सन्ति तृतीयसवने सवनीयाः पुरोडाशाः, सौम्यश्चरुः, आश्विनश्च द्विकपालः—इति। ते च सवनीये पशौ पक्वे क्रियन्ते। तेषु किं हविष्कृदाह्वातव्या ? उत पाशुक्येव च प्रसज्यत इति संशये, हविष्कृत्समाख्यया हविष्करणमेव तस्याः कार्यम्। अतः पक्वे पशौ तदर्था हविष्कृत्कृतकार्यत्वादपवृक्तेति, ततः परेषु पुनराह्वातव्येति प्राप्ते—

ब्रूमः—साहाय्यकरणं तदाह्वानकार्यं,सामर्थ्यात्, न केवलं हविष्करणमेव, मुख्यत्वात् हविष्करणे समाख्यायते। तेनाहूता सती प्रागुत्थानविधानान्नोत्थातुमर्हति, प्रकृतौ च पत्नीसंयाजेभ्यः पश्चात्पत्न्युत्थानं विहितमिति, सवनीये पशावापत्नीसंयाजेभ्यः सन्निहितेति, तत्कालवर्तिनां तार्तीयसवनिकानां न भेदेनाह्वातव्येति।

इति चतुर्थं तृतीयसवने हविष्कृदाह्वानस्यापुनरावृत्त्यधिकरणम्।

---

निशियज्ञेऽमावास्यातन्त्रप्रयोगाधिकरणम् ॥ ५ ॥

निशि यज्ञे प्राकृतस्याप्रवृत्तिः स्यात्प्रत्यक्षशिष्टत्वात् ॥ १४ ॥ कालवाक्यभेदाच्च तन्त्रभेदः स्यात् ॥ १५ ॥ वेद्युद्धननव्रतं विप्रतिषेधात्तदेव स्यात् ॥ १६ ॥ तन्त्रमध्ये विधानाद्वा तत्तन्त्रा सवनीयवत् ॥ १७ ॥ वैगुण्यादिध्माबर्हिर्न साधयेदग्न्याधानं च यदि देवतार्थम् ॥ १८ ॥

काम्यास्विष्टिषु श्रूयते 'अग्नये रक्षोघ्ने पुरोडाशमष्टाकपालं निर्वपेद्यो रक्षोभ्यो बिभियादि' तै. २-२-३ ति । तत्रापरं वचनम् 'अमावास्यायां निशि यजेते'ति । तस्मिन्निशि यज्ञे चिन्त्यते—किं पृथक् तन्त्रं कर्तव्यम् ? उत दार्शिकमेव तन्त्रं प्रसज्यत इति । तत्रामावास्यायां निशीति सामानाधिकरण्यात्कालवचनोऽमावास्याशब्दः, न कर्मवचनः । काले चानपेक्षः प्रवर्तते । कर्मणि तु कालापेक्षा वृत्तिः, ततोऽपि कालवचनः । तेन वाक्यात्तावन्नामावास्याकर्मणामुपस्थानं, नाऽपि प्रकरणात्, तदभावात् । अतो नालोच्य दर्शं विधीयमाना निशीष्टिस्तत्तन्त्रोपजीवनासम्भवात् स्वाङ्गयुक्तैव निशि कर्त्तव्यतया विधीयत इति, नास्ति प्रसङ्ग इति प्राप्ते—

ब्रूमः—यद्यपि वाक्यात्प्रकरणेन वा नोपस्थानं, तथाऽपि यस्मिन्काले विधीयते, स तावन्नियमेन प्रवृत्तामावास्यातन्त्र एव । तेन तत्र विधीयमानेष्टिस्तत्तन्त्रमध्यविहिता भवति । अवश्यं चार्थस्वभावावगतमप्यमावास्यातन्त्रमालोच्यैव निशीष्टिर्विधातव्या । अन्यथाऽग्निप्रणयन–व्रतोपायनादिकमपि विदध्यात् । तच्चाशक्यं, प्रणीतानामग्नीनां पुनःप्रणयनासम्भवात् । उपेतस्य च व्रतस्यानुत्सृष्टस्य पुनरुपेतुमशक्यत्वात् । तस्मादालोच्यैव दर्शतन्त्रं विधीयमानेष्टिर्यत्तत उपजीवितुमशक्यमिध्माबर्हिःसामिधेन्यादि, तन्मात्रं स्वयं प्रयुङ्क्ते । अन्यत्तु दार्शिकमेवोपजीवतीति, । विकृत्यन्तराणि तु सौर्यादीनि पौर्णमास्यमावास्ययोर्विधीयमानान्यपि न प्रवृत्ततन्त्रायां प्रकृतौ विधीयन्ते । प्रागेव प्रकृत्यारम्भात्तदनुष्ठानसम्भवात् । इयन्तु निशायां विधीयमाना तत्तन्त्रमध्यपातिनी प्रसङ्गमुपजीवतीति, वैषम्यम् ।

इति पञ्चमं निशियज्ञेऽमावास्यातन्त्रप्रयोगाधिकरणम् ।

विकृतिष्वप्यारम्भणीयानुष्ठानाधिकरणम् ॥ ६ ॥

आरम्भणीया विकृतौ न स्यात् प्रकृतिकालमध्यत्वात्कृता, पुनस्तदर्थेन ॥ १८ ॥ अ. सकृद्वाऽऽरम्भासंयोगात् ॥ १९ ॥ स्याद्वा कालस्याशेषभूतत्वात् ॥ २० ॥ प्रारम्भविभागाच्च ॥ २१ ॥

सौर्यादिषु आरम्भणीया स्यात्, न वेति सन्देहे, न स्यादिति ब्रूमः। प्रकृतौ हि सकृदेवेयं कर्त्तव्या, न प्रतिप्रयोगमावर्त्तनीयेत्युक्तं नवमे ९-१-१०। यदि च सकृत्कृतया ऽनया संस्कृतः पुरुषो यावज्जीवं संस्कृतो भवति, ततो ऽस्याः सकृत्करणं युक्तम्। अपवृक्ते तु तत्संस्कारे पुनः पुनस्तत्सिद्ध्यर्थमनुष्ठातव्या स्यात। तेन प्रकृत्यर्थं कृत एव संस्कारो ऽनपवृक्तः प्रसङ्गेन विकृतीनामुपकरोतीति, न तास्वारम्भणीया कर्त्तव्या।

उच्यते—न संस्कारावस्थानात्प्रकृतावनावृत्तिः, किं त्वारम्भैक्यात्। आद्या हि कर्त्तुः प्रवृत्तिरारम्भः। स चैकस्य क्रतोरेक एव। अतस्तदपवर्गेऽपवृज्यत एव तदर्थः संस्कारः, कार्यविरोधित्वात्। धर्मस्य पुनः पुनः प्रयोगे हि प्रयोगाः एव भिद्यन्ते, न क्रत्वारम्भः। क्रत्वारम्भाङ्गं चान्वारम्भणीया, दर्शपूर्णमासशब्दस्य क्रतुवचनत्वात्। तस्मान्न पुनः पुनः प्रयोगे चारम्भणीया। विकृतिषु त्वारम्भभेदाच्चोदकप्राप्ताऽऽरम्भणीया कर्त्तव्यैवाऽऽरम्भवेलायाम्।

इति षष्ठं विकृतिष्वारम्भणीयानुष्ठानाधिकरणम्।

प्रधानानां धर्मविरोधे बहूनां धर्मानुष्ठानाधिकरणम् ॥ ७ ॥

विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वम् ॥ २२ ॥

पञ्चदशरात्रेऽग्निष्टुत्प्रथममहः, तत्रैकाहाग्निष्टुद्धर्मा नामधेयेन प्राप्यन्ते। तेनाग्नेयी तत्र सुब्रह्मण्या, ततो ज्योतिर्गौरायुरिति ज्योतिरादीनि त्रीणि अहानि। तत्र ज्योतिरादिनामधेयैरेकाहज्योतिरादिधर्मप्राप्तिः। तेन तेष्वैन्द्री सुब्रह्मण्या, [अनन्तराणि त्रीणि ज्योतिरादीनि तत्र ज्योतिरादीनामेकाहेभ्यो नाम्नैन्द्री] परिशिष्टान्येकादशाहानि द्वादशाहिकानि। तेष्वप्यैन्द्र्येव। तदिह चोदकप्राप्तैन्द्रीधर्मकाणामेकादशानामह्नामप्राप्ताग्नेयीधर्मकस्य चाग्निष्टुतो विरोधे चिन्त्यते। यद्वा नाम्नामेव ज्योतिरादीनामग्निष्टु-

तश्च मिथश्चिन्ता। तत्रोपसत्कालसुब्रह्मण्यायां तन्त्रभूतायां किमनियमः? उताग्नेयी ग्राह्या? अथवैन्द्रीति। तत्रानियमे, मुख्यत्वाद्वाऽग्निष्टुद्धर्मानुग्रहे प्राप्ते, भूयसां साधर्म्याय ऐन्द्रीति सिद्धान्तितम्।

भाष्यमते दूषणम्।

न त्विह सुब्रह्मण्योदाहरणं युक्तं, यत्रान्यार्थेनान्यस्योपकारसिद्धिः, तत्र प्रसङ्गः, न चाग्नेय्या सुब्रह्मण्यया इन्द्रः संस्कृतो भवति, ऐन्द्र्या वाऽग्निः। अत एव न तन्त्रता। तेनोभावपि भेदेनाह्वातव्यावित्यनुदाहरणं।

वार्तिकमतं

काम्यास्विष्टिषु श्रूयते 'अग्नये दात्रे पुरोडाशमष्टाकपालं, निर्वपेत्-इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालमि'तै.सं.२-३-२ति, दधि-मधु-घृतमापो धानास्तत्संसृष्टं प्राजापत्यं पशुकामः 'मै. सं. इति। तदिमानि सप्त हवींषि-आग्नेयं, ऐन्द्रम; प्राजापत्यानि पञ्चेति। तत्राग्नेयं प्राजापत्याश्च-धाना आग्नेयविकारत्वादुभयथाऽप्यविरुद्धाः। यस्त्वैन्द्रपुरोडाशः, यच्च प्राजापत्यं दधि, तयोरैन्द्राग्नसान्नाय्यविकारत्वादमावास्याधर्मापेक्षा, मधुघृतापां तु उपांशुयाजविकारत्वात्पौर्णमासिकधर्मापेक्षा। मधूदकयोराज्यविकारत्वमष्ठमे ८-१-१ सिद्धं, घृतस्य त्वसन्दिग्धमेव। तदेतेषु सप्तसु यागेषु सह प्रक्रान्तेषु पौर्णमासीविकाराणां वार्त्रघ्नावाज्यभागमन्त्रौ प्राप्तौ, दर्शविकारयोस्तु द्वयोर्वृधन्वन्तौ। न चान्यतराभ्यां कृतावाज्यभागौ पुनर्मन्त्रार्थमावर्त्तनीयौ। तदिह किममावास्यामन्त्राभ्यामाज्यभागौ कर्त्तव्यौ, ताभ्यामेव च प्रसङ्गसिद्धकार्यत्वात्पौर्णमासिकौ मन्त्रौ निवर्तेते, अथ वा विपर्ययः-इति संदेहे, अनियमः। मुख्यत्वाद्वा ऐन्द्रदध्नोस्तद्धर्मानुग्रहे प्राप्ते—

ब्रूमः—भूयसां मध्वादीनां धर्मौ वार्त्रघ्नावनुग्रहीतव्यौ। यद्यपि मुख्यधर्मः प्रथममवगम्यते, तथाऽपि पश्चाद्भूयोऽनुग्रहमालोच्य बाध्यते। सोऽयं प्राप्तबाधः। तस्मात्पौर्णमासिकौ धर्मावनुग्रहीतव्यौ।

इति सप्तमं प्रधानानां धर्मविरोधे बहूनां धर्मानुष्ठानाधिकरणम्।

---

तुल्यसङ्ख्याकानां धर्म्मविरोधे प्रथमस्यैव धर्म्मानुष्ठानाधिकरणम् ॥ ८ ॥

मुख्यं वा पूर्वचोदनाल्लोकवत् ॥२३॥ तथा चान्यार्थदर्शनम् ॥२४॥

यत्र समसंख्यानां धर्मविप्रतिषेधः। तत्र कस्य स्वधर्मलाभः, कस्य वाऽन्यधर्मोपजीवनमिति चिन्तायां, अनियमप्राप्तौ मुख्यस्य स्वाधर्म्यमित्याह।

तस्य हि धर्मोऽसंजातविरोधावस्थायां निर्विघ्नमवगम्यते। जघन्यस्य तु तद्विरुद्धत्वान्न धर्मः संग्रहीतुं शक्यते। न चात्रावगतस्य त्यागे, अनवगतसंग्रहे च किञ्चित्कारणं भूयस्त्वं, प्रधानधर्मत्वं वाऽस्ति। तस्मादत्र मुख्यस्य स्वाधर्म्यमिति।

भाष्योक्तमधिकरणान्तरं।

किमिहोदाहरणम्? अध्वरकल्पायां श्रूयते 'आग्नावैष्णवं द्वादशकपालं निर्वपेदपराह्णे, सरस्वतीमाज्यस्य यजेते'ति। तत्राग्नावैष्णवस्यौषधद्रव्यकत्व-द्विदेवत्यत्व-द्वादशकपालत्वैरैन्द्राग्नविकारत्वाद्दार्शिकं तन्त्रम्। आज्यस्य तूपांशुयाजविकारत्वात्पौर्णमासधर्मापेक्षा। तत्र पूर्ववदाज्यभागमन्त्रयोर्विरोधे मुख्यधर्मत्वात् वृधन्वन्तौ ग्रहीतव्यौ। ऐकाधिकरण्यं त्वेकीयमतत्वेनोपन्यासादन्याय्यत्वाच्च परमतमेव[२]। न ह्यल्पवैगुण्ये सम्भवति, भूयोवैगुण्यं प्रयोगवचनः क्षमते। अवगतमपि हि कारणान्तरवशाद्बाध्यत एव। यथोपरिताधिकरणे मुख्यमपि दीक्षणीयाधर्मत्वं बाधित्वा प्रधानधर्मत्वबलेन सुत्याकाल एवानुग्रहीष्यते; तथा भूयस्त्वेनापि। तस्माद द्वे एवाधिकरणे।

इत्यष्टमं तुल्यसंख्याकानां विरोधे प्रथमस्यैव धर्मानुष्ठानाधिकरणम्।

---

अङ्गगुणविरोधे प्रधानगुणस्यैव प्राबल्याधिकरणम्॥ ६॥

## अङ्गगुणविरोधे च तादर्थ्यात्॥ २५॥

दीक्षणीयायाः सोमस्य च 'य इष्ट्या, पशुना, सोमेने'त्यादिना वचनेन पूर्वकालत्वे प्राप्ते सति एकाहदीक्षापक्षे द्वयोः कालासम्भवात्कस्य कालोऽनुग्राह्य इति विचारे, अनियमे, मुख्यत्वाद्वा दीक्षणीयाधर्मानुग्रहे प्राप्ते—

प्रधानधर्मत्वात्सुत्याकालानुग्रहः, सर्वाणि ह्यङ्गानि, तदङ्गानि च प्रधानसाद्गुण्याय क्रियन्ते। न च साक्षात्साद्गुण्यसम्भवे परम्परामाश्रयति।

१. 'ऐकाधिकरण्यन्त्वेके मन्यन्ते' पृ २२४८ इति। भाष्ये इति शेषः।

२. 'विप्रतिषिद्धधर्माणां, मुख्यं वा' इति सूत्रयोरैकाधिकरण्यं वृत्तिकाराभिमतं निरस्तमिति भाष्याभिप्रायः।

तस्मात्प्रधानकालानुग्रहोऽयं । प्राप्तबाधचिन्ताऽपीयं विप्रतिषिद्धधर्मसमवायप्रसङ्गादिह कृता ।

इति नवमं गुणविरोधे प्रधानगुणस्य प्राबल्याधिकरणं ।

परिधौ परिधियूपोभयधर्म्मानुष्ठानाधिकरणम् ॥ १० ॥

परिधिर्द्व्यर्थत्वादुभयधर्मा स्यात् ॥ २६ ॥

'परिधौ पशुं नियुञ्जीते'ति परिधानं, यूपकार्यं च कुर्वन् परिधिः परिधिधर्मान् संमार्जनादीन्, यूपधर्मांश्च परिव्याणादींल्लभेतेति प्राप्तिसूत्रमेतत् ।

इति दशमं परिधौ परिधि-यूपोभयधर्मानुष्ठानाधिकरणम् ।

परिधौ विरोधियूपधर्म्माननुष्ठानाधिकरणम् ॥ ११ ॥

यौप्यस्तु विरोधे स्यान्मुख्यानन्तर्यात् ॥ २७ ॥ इतरो वा तस्य तत्र विधानात् ॥ २८ ॥ उभयोश्चाङ्गसंयोगः ॥ २९ ॥

विरुद्धेषु धर्मेषु किं यूपधर्माः कर्त्तव्याः, परिधिधर्मा वेति संशये, यूपस्य हविषा पशुना साक्षात्सम्बन्धात्प्रधानप्रत्यासत्तिः, परिधेस्तु हविराधाराग्निसंस्कारार्थत्वाद्विप्रकर्षः, तेन यूपधर्मानुग्रहः, पूर्ववत् प्रधानप्रत्यासत्तेरिति प्राप्ते—

ब्रूमः—परिधेः सतो नियोजने विधानादपरित्यक्तस्वधर्मे परिधौ नियुञ्जीतेति नियोजनमात्रं ह्यत्र वाचनिकं । तत्प्रयुक्तास्तु तक्षणादिधर्माश्चोदकेन प्राप्नुवन्तः परिधित्वानुपमर्द्देन भवितुमर्हन्ति । सत्यामपि च प्रत्यासत्तावङ्गधर्मत्वमुभयोरविशिष्टं । तस्माद्विरोधे परिधिधर्माः कर्त्तव्याः ।

इत्येकादशं परिधौ विरोधियूपधर्माननुष्ठानाधिकरणम् ।

सवनीयपशुपुरोडाशयोः पशोरेव तन्त्रित्वेन
पाशुकतन्त्रस्यैवादानाधिकरणम् ।। १२ ।।

**पशुसवनीयेषु विकल्पः स्याद्वैकृतश्चेदुभयोरश्रुतिभूतत्वात् ।।३०।।**
**पाशुकं वा तस्य वैशेषिकाम्नानात्तदनर्थकं विकल्पे स्यात् ।। ३१ ।।**
**पशोच्च विप्रकर्षस्तन्त्रमध्ये विधानात् ।। ३२ ।।**

सवनीयः पशुः प्रातः सवने प्रारभ्यते, तृतीयसवने समाप्यते–वपया प्रातः सवने चरन्ति, पुरोडाशेन माध्यन्दिने, सवने अङ्गैस्तृतीयसवने २-३-५ मै. सं. इति । सवनीयाः पुरोडाशाः प्रतिसवनं विहिताः 'अनुसवनं सवनीयाः पुरोडाशा निरुप्यन्ते' इति । माध्यन्दिनीयानां, तार्तीयसवनिकानां च पुरोडाशानां तन्त्रमध्यपातादसन्दिग्धं प्रसङ्गित्वं । प्रातःसवनिकानां, पशोश्च मिथश्चिन्ता- किं पुरोडाशास्तन्त्रिणः, पशुः प्रसङ्गी, अथवा तन्त्री । ते प्रसङ्गिनः । पशुरेव तन्त्री, विपरीतं वेति । यस्य पूर्वमुपक्रमः,यस्य वा पश्चात् समाप्तिः, स तन्त्री, इतरस्तु प्रसङ्गी । तत्रेह कस्य पूर्वमुपक्रम इति विशेषो नावगम्यते । ननु समाप्तावस्ति विशेषः, पशोस्तृतीयसवने समाप्तेः, स एव तन्त्री स्यात् । प्रातःसवनिकाः पुरोडाशा हि प्रातःसवने समाप्यन्ते । अतस्ते प्रसङ्गिनः । नैवम् । तेऽपि तृतीयसवने समाप्यन्ते, 'आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ती'ति पौरोडाशिकानूयाजोत्कर्षविधिरस्त्विवति मन्यते । तस्मादविशेषः ।

उच्यते–पशुरेव तन्त्री । तत्र 'अग्निमद्य होतारमवृणीतायं यजमानः' तै. ब्रा. ३–६–१५ इत्यादिसूक्तवाक्प्रैषो मैत्रावरुणकर्तृकोऽग्नीषोमीयात्पशोश्चोदकेन प्राप्तः, पुनः 'अग्निमद्य होतारमवृणीतायं सुतासुती यजमानः' इत्यादिरूपेण विकृतः प्रत्यक्षेण सवनीयपशौ पठ्यते । सोऽयमनर्थकः पुरोडाशानां तन्त्रित्वे स्यात् । न हि तेषामयमङ्गम्, नापि मैत्रावरुणस्तेषामस्ति, येनायमुच्येत । विकल्पे तु नित्यवद्वचनानर्थक्यं, तस्मादनेन पशुवैशेषिकाङ्गाम्नानेन पशुरेव तन्त्रीति निश्चीयते।

किं च–'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ती'त्ययमपि पाशुकानामेवानुयाजानामुत्कर्षः, तेषां'ह्यङ्गैस्तृतीयसवने' इत्यङ्गप्रचारोत्कर्षादेव तृतीयसवनसम्बन्धे प्राप्ते प्रदेशविशेषमात्रं सुखेन विधीयते । 'पुरोडाशानां त्वनुसवनं निरुप्यन्ते' इति वचनात्प्रातस्सवनसमाप्त्यवगमात्तद्विरोधेनाऽयुक्तं तदीयानूयाजोत्कर्षविधानं । तस्माद्दीक्षाकालत्वात्पशोस्तन्त्रिता, तन्मध्यपातात्तु पुरोडाशाः प्रसङ्गिनः ।

इति द्वादशं सवनीय-पुरोडाशयोः पशोरेव तन्त्रिताधिकरणम् ।

समानतन्त्रयोः प्रकृतिविकृत्योर्विकृतितन्त्रानुष्ठानाधिकरणम् ॥ १३ ॥

अपूर्वं च प्रकृतौ, समानतन्त्राचेदनित्यत्वानर्थकं हि स्यात् ॥ ३२ ॥

प्रकृतिर्यावज्जीवं पर्वणि पर्वणि प्रयुज्यते, विकृतयोऽपि कामेन, निमित्तेन वा पर्वण्येवापतन्ति, तत्र प्रकृतिविकृत्योस्तन्त्रेण प्रयोगं कृत्वा-चिन्त्यते—विरुद्धेषु धर्मेषु रक्षोघ्नीसामिधेनीत्यादिषु कस्य धर्मः प्रयुज्यते, कस्य प्रसङ्गित्वमिति संशये, प्रकृतेः पूर्वं प्रवृत्तत्वात्सैव तन्त्रिणीति प्राप्ते—

ब्रूमः—यद्यपि तावत्पूर्वं प्रवृत्ता प्रकृतिः स्यात्, तथाऽपि वैकृतमेवा-नुष्ठेयम्। इतरथा सर्वदैव प्राकृतानां प्रयोगाद्वैकृता विशेषविधयोऽनर्थकाः-भवेयुः। न च पूर्वं प्रवृत्ता प्रकृतिः। न ह्ययमेको यावज्जीविकः प्रयोगः। पर्वणि पर्वणि भिन्नाः प्रयोगाः प्रक्रम्यन्ते, अपवृज्यन्ते च। तस्मात्कामेन, निमित्तेन-चापतन्ती विकृतिरेवौत्सर्गिकीं नित्यचिकीर्षां बाधित्वा निविशत इति, वैकृतमेव तन्त्रं प्रकृतौ प्रसज्यते—इति।

इति चतुर्दशं प्रकृतिविकृत्योर्विकृतितन्त्रानुष्ठानाधिकरणम्।

---

आग्रयणे प्रसूनबर्हिषामेव ग्रहणाधिकरणम् ॥ १४ ॥

अधिकश्च गुणः साधारणेऽविरोधात्कांस्यभोजिवदमुख्येऽपि ॥ ३४ ॥

आग्रयणेष्ट्यामैन्द्राग्न-वैश्वदेव-द्यावापृथिव्यानि हवींषि। तत्र द्यावा-पृथिव्यस्य वैश्वदेविकद्यावापृथिव्यविकारत्वात्प्रसूनं बर्हिः प्राप्तम्, ऐन्द्राग्ना-देस्तु प्रसूनमप्रसूनं वा बर्हिर्मात्रं। तत्र समानतन्त्रेषु किं प्रसूनमप्रसूनं वोपा-देयम्? उत प्रसूनमेवेति संशये, मुख्यत्वाद्भूयस्त्वाच्चानियम एव युक्तः। नैवं। न ह्यनियमो नाम किञ्चिदङ्गं, यदनुगृह्येत। बर्हिर्मात्रं त्वङ्गं, तच्च प्रसूनोपादानेऽप्यविरुद्धमिति, न कस्यचिद्वैगुण्यम्। अनियमे तु द्यावापृथि-व्यस्य वैगुण्यं स्यात्। न चावैगुण्यसम्भवे तद्युक्तं। तस्मात्प्रसूनमेव स्यात्।

इति चतुर्दशमाग्रयणे प्रसूनबर्हिषामेव ग्रहणाधिकरणम्।

द्यावापृथिव्यादीनां सर्वेषामेव तन्त्रित्वाधिकरणम् ॥ १५ ॥

तत्प्रवृत्त्या तु तन्त्रस्य नियमः स्याद्यथा पाशुकं सूक्तवाकेन ॥३५॥ न वाऽविरोधात् ॥ ३६ ॥ अशास्त्रलक्षणाच्च ॥ ३७ ॥

एवं तद्दर्शनेनैव द्यावापृथिव्यतन्त्रलिङ्गभूतेन बर्हिषां सर्वमेवेदं द्यावापृथिवीयं तन्त्रम्। ऐन्द्राग्नादेस्तु तदेव तन्त्रं प्रसज्यते। अतो विरुद्धेष्वपि धर्मेषु द्यावापृथिवीय एव स्यात्।

मैवं। न ह्येतदैकान्तिकं द्यावापृथिवीयतन्त्रलिङ्गं, साधारणमिदमविरोधात्संगृहीतं, न त्वनेन द्यावापृथिव्यं तन्त्रं नियन्तुं शक्यं। तस्मात्सर्वे तन्त्रिण इति, विरुद्धेषु धर्मेषु ऐन्द्राग्नादिधर्मः कर्त्तव्यो मुख्य-भूयस्त्वाभ्याम्।

इति पञ्चदशं द्यावापृथिव्यादीनां तन्त्रित्वाधिकरणम्।

---

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां द्वादशाध्यायस्य द्वितीयः पादः।

## अथ द्वादशाध्याये तृतीयः पादः

अष्टरात्रे वत्सत्वगहतवाससोः समुच्चयाधिकरणम् ॥ १ ॥

विश्वजिति वत्सत्वङ्नामधेयादितरथा तन्त्रभूयस्त्वादहतं स्यात् ॥ १ ॥ अविरोधौ वा उपरिवासो हि वत्सत्वक् ॥ २ ॥

अष्टरात्रे विश्वजित्प्रथममहः, ततोऽभिप्लवः षडहः, ततो ऽभिजित्। तत्र विश्वजिति नामधेयेनैकाहिकविश्वजिद्धर्मः 'अवभृथादुदेत्य वत्सत्वचं परिधत्ते' इति वत्सत्वक्प्राप्तिः, इतरेषु तु ज्योतिष्टोमादहतं वासः। तत्र द्वयोः परिधानार्थत्वात् महाव्रते ताप्यादिवच्च 'वासांसि विस्रंसयति' इत्यादिवासोबहुत्वादर्शनादसति समुच्चये भूयोधर्मत्वादहतानुग्रहः। ऐकाधिकरण्यवादिमते तु [1]सूत्रान्यथाकरणं भाष्यकारेण दर्शितं,

---

१. सूत्रान्यथाकरणमिति—उभयप्राप्तौ यदि विश्वजितो मुख्यत्वं न स्यात्, तदा भूयोधर्मत्वात् अहतं स्यात्। न त्वेवं, विश्वजितो मुख्यत्वसत्त्वात्। तस्मात् वत्सत्वगेवेत्येव वृत्तिकारमतानुसारेण सूत्रस्य व्याख्यानं भाष्यकारेणैव प्रदर्शितमित्यर्थः।

सिद्धान्तस्तु—सत्यं, न दृष्टं वासोबहुत्वं, तथाऽपि कौपीनाच्छादने वत्सत्वचोऽयोग्यत्वादुपरिवासःकार्येऽसौ विधीयते, तत्रापि परिदधातीति प्रयोगात्कम्बलं परिधत्त इतिवत् । अहतन्तु कौपीनाच्छादने योग्यं तत्रैव विधीयत इति द्वयोरपि भिन्नकार्यत्वात्समुच्चयः ।

इति प्रथममष्टरात्रे वत्सत्वगहतवाससोस्समुच्चयाधिकरणम् ।

---

अनुनिर्वाप्यपुरोडाशानां पुरोडाशस्यैव तन्त्रित्वाधिकरणम् ॥ २ ॥

अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यात् ॥ ३ । आगन्तुकत्वाद्वा स्वधर्मा स्याच्छ्रुतिविशेषादितरस्य च मुख्यत्वात् । ४ । स्वस्थानत्वाच्च ॥ ५ ॥ स्विष्टकृच्छ्रवणान्नेति चेत् । ६ ॥ विकारः पवमानवत् ॥ ७ ॥ अविकारो वा प्रकृतिवच्चोदनां प्रति भावाच्च ॥ ८ ॥

अग्नीषोमीयस्य पशुपुरोडाशं देवसुवां [अष्टौ] हवींष्यनुनिर्वपती'त्यत्रानुनिर्वाप्याणां स्वाधर्म्यं, पुरोडाशस्य प्रसङ्गित्वं, विपरीतं वेति संशये भूयस्त्वादनुनिर्वाप्याणामिति प्राप्ते—

उच्यते—न हि तेषां सहचोदना, नापि सहोपक्रमः, किं तु पशुपुरोडाशतन्त्रे प्रक्रान्ते, अनुनिर्वाप्याणां तन्त्रमध्ये विधानाद्विस्पष्टं प्रसङ्गित्वं, इतरस्य च तन्त्रित्वं, तन्त्रिधर्मश्च प्रसङ्गिभिरुपजीवनीय इति, पशुपुरोडाशस्य स्वाधर्म्यम् ।

अत्र प्राभकरमतस्योपन्यास—निरासौ ।

ये तु सर्वेष्वपि तन्त्रिषु विप्रतिषिद्धविषये मुख्यस्यैव स्वाधर्म्यं, न भूयसामित्यैकाधिकरण्यमाश्रित्य वदन्ति, तेषां प्रसङ्गिभ्योऽनुनिर्वाप्येभ्यो मुख्यबलीयस्त्वं विस्पष्टमित्यधिकरणमिदमनर्थकं स्यात् । ऐकाधिकरण्यमेव विस्पष्टीकर्त्तुमिदमधिकरणमिति तु लज्जाशून्यानां वैयात्यभाषितम् । किं च विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् साधर्म्यं, मुख्यं वा स्वधर्मेति सामान्येनोक्त्वा, अनुनिर्वाप्येष्विति विशेषमुपादाय तद्विषये भूयोभ्योऽपि मुख्यबलीयस्त्वमित्यभिधानात् । तत्र भूयसामेव स्वधर्मत्वं ।

मुख्यस्वाधर्म्यन्तु समसंख्याविषयमित्यधिकरणभेद एव स्पष्टीभवति, नैकाधिकरण्यमित्यास्तां तावत् ॥

इति द्वितीयं पुरोडाशस्यैव तन्त्रित्वाधिकरणम् ।

भिन्नोपकारकाणां गुणानां समुच्चयाधिकरणम् ॥ ३ ॥

एककर्मणि शिष्टत्वाद्गुणानां सर्वकर्म स्यात् ॥ ३ ॥

दर्शपूर्णमासयोराघारौ प्रकृत्य श्रूयते 'ऊर्ध्वमाघारयति, ऋजुमाघारयति, संततमाघारयती'त्यादि । तत्रोदूर्ध्वत्वादीनां विकल्प-समुच्चयचिन्तायामेकार्थत्वाद्विकल्पप्राप्तौ, सर्वेषां सहसंभवात्समुच्चयः ॥

इति तृतीयमूर्ध्वत्वादीनां समुच्चयाधिकरणम् ।

प्रयोजनैक्ये गुणानां विकल्पाधिकरणम् ॥ ४ ॥

एकार्थास्तु विकल्पेरन् समुच्चये ह्यावृत्तिः स्यात्प्रधानस्य ॥१०॥ अभ्यस्येतार्थवत्त्वादिति चेत् ॥ ११ ॥ नाश्रुतित्वात् ॥ १२ ॥ सतिचाभ्यासशास्त्रत्वात् ॥ १३ ॥ विकल्पवच्च दर्शयति ॥ १४ ॥ कालान्तरेऽर्थवत्त्वं स्यात् ॥ १५ ॥

'व्रीहिभिर्यजेत, यवैर्यजेते'त्यादिष्वपि सर्वाङ्गोपसंहारिप्रयोगवचनानुग्रहाय,भ्रष्टदोषनिदानविकल्पपरिहाराय च समुच्चयः स्यात् । संम्भवति च ज्योतिष्टोमवदभ्यासमाश्रित्य समुच्चयसंपादनं, मिश्रैर्वा इज्यतामिति प्राप्ते—

ब्रूमः,—एकार्थानामेकस्मिन्नुपकारेऽन्योन्यानपेक्षया विनियुक्तानां- विकल्पः स्यात् । ज्योतिष्टोमो हि द्रव्यदेवतासंयोगानामदृष्टार्थानामपर्यायविधानात्प्रकरणेन युगपद्ग्रहणात्सर्वसम्पादनाय युक्तं यदभ्यस्यते । व्रीहि-यवौ तु द्वाभ्यां वाक्याभ्यामन्योन्यनिरपेक्षौ यागद्रव्यपुरोडाशप्रकृतितया विधीयमानौ तद्द्वारेण प्रयोगवचनो गृह्णन् पर्यायेणैव गृह्णाति, न युगपत् । यद्बलात्प्रधानाभ्यासः स्यात् ज्योतिष्टोमवत् । मिश्रत्वमपि निरपेक्षविधानादयुक्तमेव । समुच्चित्य यजताऽपि वाक्यद्वयमपि बाधितं स्यात् । द्वाभ्या-

मपि वाक्याभ्यां द्वयोरपि निरपेक्षयोः प्रकृतित्वेन विधानात् तद्बलेन द्रव्यान्तरनिवृत्तिप्रतीतेः। तस्माद्विकल्पः। ततो व्रीहिप्रयोगे तैरेव कार्यसिद्धेर्यवानामनुपादानं। यथा पाशुकैरङ्गैः कार्यसिद्धेः पौरोडाशिकानाम्। ननु चान्यार्थेनान्यस्य कार्यसिद्धिः प्रसङ्गः ?

"साधारणं भवेत्तन्त्रं परार्थे त्वप्रयोजकः।
एवमेव प्रसङ्गः स्याद्विद्यमाने स्वके विधौ ॥'[1]

इति वचनात्। अत्र तु द्वयोरप्याग्नेयार्थत्वान्नास्ति प्रसङ्गरूपं। सत्यमेतावान्विशेषः, तथाऽप्यन्येन कार्यसिद्धेरन्यनिवृत्तिरिति, एतावता सामान्येनात्र सङ्गतिः।

इति चतुर्थं प्रयोजनैक्ये गुणानां विकल्पाधिकरणम्।

---

वैगुण्यसमाधानार्थानां प्रायश्चित्तानां विकल्पाधिकरणम् ॥ ५ ॥

प्रायश्चित्तेषु चैकार्थ्यान्निष्पन्नेनाभिसंयोगस्तस्मात्सर्वस्य निर्घातः ।१६।

यानि प्रायश्चित्तानि कर्मवैगुण्ये निमित्ते विधीयन्ते। यथा 'यद्दक्तो यज्ञ आर्तिमियात्, भूः स्वाहेति गार्हपत्ये जुहुयात्, योऽमावास्यां, पौर्णमासीं वाऽतिपातयेत्, अग्नये पथिकृते पुरोडाशमष्टाकपालं निर्वपेत्, अमावास्यां पौर्णमासीं वातिपातयेद्वैश्वानरं द्वादशकपालं निर्वपेदि'त्यादीनि वैगुण्यसमाधित्सायां विधानात् समाधानार्थानि। यान्येकस्मिन्वैगुण्ये विधीयन्ते-पथिकृद्वैश्वानरादीनि। तेषां विकल्पसमुच्चयचिन्तायामदृष्टार्थत्वात्समुच्चयप्राप्तावेकैकेन वाक्येन वैगुण्यसमाधानाय निरपेक्षविधानाद्विकल्पः।

इति पञ्चमं वैगुण्यसमाधानार्थानां प्रायश्चित्तानां विकल्पाधिकरणं।

---

१. साधारणमिति— अस्यायमाशयः। तथाहि— यदंगमनुष्ठीयमानमगृह्यमाणविशेषत्वात् अनेकशेषिसाधारणं भवति, तत्र तन्त्रम्। यथाग्नेयदिषु प्रयाजादेः। यत्त्वनुष्ठीयमानं परार्थत्वेन गृह्यमाणविशेषत्वेऽपि परस्योपकारकं भवति, तत्र परार्थोपजीवी अप्रयोजकः। यथा वाजिन-तुषोपवापादिकं दध्यानयन-कपालादेः।

यत्र तु स्वविधेः प्रयोजकत्वशक्तिसद्भावेऽपि परार्थोपजीवनं, तत्र प्रसंग इति-श्लोकस्यार्थः। एवञ्च 'परार्थे त्वप्रयोजकः' इत्यत्र स्वविधेः प्रयोजकशक्त्यभावे इत्यर्थाल्लभ्यत इति बोध्यम्। तावन्मात्रस्यपि प्रयोगपरिमाणकल्पकत्वेनैतावता समुच्चयचिन्तायाः प्रसंगापवादकत्वमिति।

नैमित्तिकप्रायश्चित्तानां समुच्चयाधिकरणम् ॥ ६ ॥

समुच्चयस्त्वदोषनिर्घातार्थेषु ॥ १७ ॥

यानि पुनर्न दोषनिर्घातार्थानि निमित्ते कर्माङ्गानि 'भिन्ने जुहोती'-त्यादीनि । तेषां प्रयाजादीनामिवापर्यायविधानात्समुच्चय इति, प्रत्युदाहरणमात्रमेतत् ।

इति षष्टं नैमित्तिकप्रायश्चित्तानां समुच्चयाधिकरणम् ।

---

कर्मकाले ऽनध्याये मन्त्राणां प्रयोगाधिकरणम् ॥ ७ ॥

मन्त्राणां कर्मसंयोगात्स्वधर्मेण प्रयोगः स्याद्धर्मस्य तन्निमित्तत्वात् ॥ १८ ॥ विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात्कर्मार्थत्वात् प्रयोगस्य ॥ १९ ॥

'पर्वणि नाध्येतव्यमि'त्यादयो ये मन्त्राणामध्ययनकाले स्वधर्माः, ते कर्मकालेऽपि स्युर्न वेति संशये, मन्त्रप्रयोगार्थत्वात्कर्मकालेऽपि प्रयोगात्तत्रापि स्युः ।

नैवं । प्रकरणादेते धर्माः स्वाध्यायविधिविहितस्य ग्रहणार्थस्याध्ययनस्याविघ्नसमाप्त्युपकारेणाङ्गभूताः । कः प्रसङ्गो यत्कर्मणि धर्मादरः । पूर्वपक्षे विधीयमानानां धर्माणां मन्त्रप्रयोगार्थत्वेन कर्मकालेऽपि प्राप्तेस्तद्विधयः स्वाध्यायसमयवर्त्तिन एव प्रसङ्गात्कर्मकालेऽप्युपकुर्वन्ति । सिद्धान्ते तु नेत्येवंविधप्रसङ्गाप्रसङ्गविचारात्सङ्गतिः ।

इति कर्मकालेऽनध्याये मन्त्राणां प्रयोगाधिकरणम् ।

---

कर्मणि प्रवचनस्वरेणैव मन्त्रोच्चारणाधिकरणम् ॥ ८ ॥

भाषास्वरोपदेशेषु ऐरवत्प्रवचनप्रतिषेधः स्यात् ॥ २० ॥ मन्त्रोपदेशो वा न भाषिकस्य प्रायापत्तेर्भाषिकश्रुतिः ॥ २१ ॥ विकारः कारणाग्रहणे ॥ २२ ॥

ये मन्त्राः समाम्नाये स्वरान्तरेण समाम्नाताः, ब्राह्मणे च मन्त्राः स्वरान्तरेणोपात्ताः, ते मन्त्राः किं समाम्नायसिद्धेन स्वरेण प्रयोक्तव्याः? उत ब्राह्मणस्वरेणेति संशये, वाचनिकत्वाद्ब्राह्मणस्वरस्य तेनैव प्रयोगः।

नैवं। ये तावल्लिङ्गविनियुक्ता मन्त्रास्तेषां ब्राह्मणस्य गुणार्थवादपरिसंख्यार्थत्वान्न मन्त्रस्वरूपे, तत्स्वरे वा व्यापारः। येऽपि वचनविनियोज्याः, तेष्वपि मन्त्रविनियोगपरं वचनं न तत्स्वरविनियोगे व्याप्रियते। स्वरान्तरोपादानं तु ब्राह्मणे प्रवृत्तस्य स्वरस्याविच्छेदार्थं। तस्मादात्मीयेनैव स्वरेण कर्मण्यपि प्रयोगः।

इत्यष्टमं कर्मणि प्रवचनस्वरस्यैव मन्त्रोच्चारणाधिकरणम्।

---

ब्राह्मणोत्पन्नमन्त्राणां भाषिकस्वरेणैवोच्चारणाधिकरणम् ॥ ९ ॥

तन्न्यायत्वाददृष्टोऽप्येवम् ॥२३॥ तदुत्पत्तेर्वा प्रवचनलक्षणत्वात् ॥२५॥

ये पुनर्मन्त्रसमाम्नाये नाधीता ब्राह्मणोत्पन्ना मन्त्राः, तेष्वपि ब्राह्मणस्य मन्त्रस्वरूपविनियोगपरत्वान्न स्वरपरत्वम्। अतो न ब्राह्मणस्वरेण प्रयोक्तव्याः।

नैवम्। असत्यपि स्वरविनियोगे, मन्त्रस्य विनियुक्तस्य यथा विज्ञातरूपस्य प्रयोगात्तस्य च ब्राह्मणस्वरातिरेकेण स्वरान्तरानवगमात्तेनैव स्वरेण प्रयोगः।

इति नवमं ब्राह्मणोत्पन्नानां मन्त्राणां भाषिकस्वरेणोच्चारणाधिकरणम्।

---

करणमंत्राणां पाठानन्तरमेव पदार्थानुष्ठानाधिकरणम् ॥ १० ॥

मन्त्राणां करणार्थत्वान्मन्त्रान्तेन कर्मादिसन्निपातः स्यात्सर्वस्य वचनार्थत्वात् ॥ २५ ॥

करणमन्त्रेषु किं मन्त्रमध्ये, मन्त्रान्ते, ततोऽपि वा कियन्तंचित्कालं स्थित्वा समवेताभिधायिपदानन्तरं वा कर्मप्रयोगः, किं वा सर्वमन्त्रान्तेऽनन्तरमेवेति संशये, अनियमः, समवेताभिधायिनो वा स्मरणस्य सञ्जातत्वादनन्तरमेवेति प्राप्ते—

ब्रूमः—सकलस्य मन्त्रस्य विनियुक्तत्वात्सकलेन सम्पादितं स्मरणं कर्माङ्गम्, अतः सकलमन्त्रसमाप्तौ तज्जनितं स्मरणं यावदेव न प्रभ्रष्टं, तावदेव प्रयोगः कर्त्तव्यः, तेन मन्त्रान्तस्य कर्मादेः सन्निपातः।

इति दशमं करणमन्त्राणां पाठानन्तरमेव पदार्थानुष्ठानाधिकरणम्।

---

वसोर्धारायां मन्त्रान्ते कर्मसन्निपाताधिकरणम् ॥ ११ ॥

**सन्ततवचनाद्धारायामादिसंयोगः ॥२६॥ कर्मसन्तानो वा नानाकर्मत्वादितरस्याशक्यत्वात् ॥ २७ ॥**

'सन्ततां वसोर्द्धारां जुहोती' तै. सं. ५-४-८ त्यत्र सन्ततवचनात्, तस्य च साहित्यवाचित्वात्साहित्यस्य चानेकापेक्षत्वात्कर्मणश्चैकत्वात्कर्ममन्त्रयोः साहित्यमिदमुच्यते। अतो मन्त्रादेः कर्मादेश्च सन्निपातः।

स्यादेवं, यद्येकं कर्म स्यात्, भिन्नानि त्वत्र 'द्वादशैतानि जुहोती'ति-संख्यया कर्माणि। तेषामविच्छेदः सन्ततशब्देनोच्यते, जुहोतीति तेषामुपात्तत्वात्। न मन्त्रकर्मणोः साहित्यं, मन्त्रस्यानुपात्तत्वात्। अविच्छेदेऽपि सन्ततशब्दो वर्त्तते, न केवलं साहित्ये, अतोऽत्रापि पूर्व एव न्यायः।

इत्येकादशं वसोर्धारायां मन्त्रान्ते कर्मसन्निपाताधिकरणम्।

---

अधारेऽपि मन्त्रान्ते कर्मसन्निपाताधिकरणम् ॥ १२ ॥

**आघारे च दीर्घधारत्वात् ॥ २८ ॥**

आघारं प्रकृत्य श्रूयते 'सन्ततमाघारयती'ति। तत्र कर्मैकत्वात्तत् सन्तानासम्भवे मन्त्रसाहित्यमेव विधीयत इति, आदिसंयोगः।

नेत्याह। न कर्मणः क्षणिकस्य दीर्घेण मन्त्रेण 'ऊर्द्धोऽध्वरः' इत्यादिनासाहित्यसम्भवः। अतो दीर्घधारस्याघार्यमाणद्रव्यस्य सातत्यमुच्यते। तेनात्रापि मन्त्रान्तकर्माद्योरेव सन्निपातः।

इति द्वादशमाधारेऽपि मन्त्रान्ते कर्मसन्निपाताधिकरणम्।

---

'पूषा वाम्' इत्याद्येककार्यार्थमन्त्राणां विकल्पाधिकरणम् ॥ १२ ॥

मन्त्राणां सन्निपातित्वादेकार्थानां विकल्पः स्यात् ॥ २९ ॥

करणमन्त्राणामेकार्थानां 'भगो वां विभजत्वि' त्यादीनां व्रीहियवन्यायेन विकल्प इति प्राप्तिसूत्रमेतदपवादार्थम् ।

इति त्रयोदशमेककार्यमन्त्राणां विकल्पाधिकरणं ।

---

'तां चतुर्भिरभ्रिमादत्ते' इत्यासंख्यायुक्तवचनविहित-
मन्त्राणां समुच्चयाधिकरणम् ॥ १४ ॥

संख्याविहितेषु समुच्चयोऽसन्निपातित्वात् ॥ ३० ॥

ये तु संख्यायुक्ता मन्त्रा 'तां चतुर्भिरभ्रिमादत्ते' इत्येवमादयः, तेषामपि पूर्ववत् विकल्पः। संख्यावशात्तु समुच्चयः। चतुःसंख्या हि कर्माङ्गभूता नासति समुच्चये संपद्यते। तत्र पूर्वप्रयुक्तानां मन्त्राणां संस्कारद्वारेण करणत्वं, चरमस्य तु साक्षादिति संख्यावचनसामर्थ्यादध्यवसीयते। तस्मात्समुच्चयः।

इति चतुर्दशं संख्यायुक्तवचनविहितमन्त्राणां समुच्चयाधिकरणम् ।

---

ब्राह्मणविहितानाम् 'उरु प्रथस्व'—इत्यादिमन्त्राणां
विकल्पाधिकरणम् कृत्वाचिन्तेयम् ॥ १५ ॥

ब्राह्मणविहितेषु च संख्यावत् सर्वेषामुपदिष्टत्वात् ॥३१॥ याज्यावषट्कारयोश्च समुच्चयदर्शनं तद्वत् ॥ ३२ ॥ विकल्पो वा समुच्चयस्याश्रुतित्वात् ॥ ३३ ॥ गुणार्थत्वादुपदेशस्य ॥ ३४ ॥ वषट्कारे नानार्थत्वात्समुच्चयः ॥ ३५ ॥

ये ब्राह्मणविहिता मन्त्राः[उरु प्रथा]'उरु प्रथस्वेति पुरोडाशं प्रथयति, यज्ञपतिमेव तत्प्रजया पशुभिश्च प्रथयति 'उरु ते यज्ञपतिः प्रथतामितिपुरोडाशं प्रथयती'ति च। तेषामपि सर्वेषामुपदिष्टत्वाद्विकल्पे च पाक्षिकबाधप्रसङ्गात्समुच्चयेऽपि संख्याविहितवत्सर्वेषां करणत्वोपपत्तेः समुच्चय इति वचनविनियोगाङ्गीकारेण भाष्यकारेण पूर्वपक्षितं ।

वार्त्तिककारस्तु लिङ्गविनियोगेनैव मन्त्राणां विनियोगसिद्धेः, समुच्चयार्थमेव वचनं मन्यते, तस्मादपि समुच्चय इति ।

नैवं। लिङ्गेनैषां निरपेक्षसाधनत्वावगमात्। अतो न समुच्चयः। संख्यावशेन हि पूर्वत्र समुच्चयाश्रयणम्। न चैवमिहास्ति। ब्राह्मणविनियोगस्तु येषां लिङ्गविनियोगो नास्ति, तेषां मन्त्रस्वरूपविनियोगार्थः। येषां त्वस्ति-लिङ्गं, तत्रार्थवादाद्यर्थमिति, न तेनापि समुच्चयः।

इति पञ्चदशं ब्राह्मणविहितमन्त्राणां विकल्पाधिकरणम्



हौत्राणां मन्त्राणां समुच्चयाधिकरणम् ॥ १६ ॥

हौत्रास्तु विकल्पेरन्नेकार्थत्वात् ॥ ३६ ॥ समुच्चयो वा क्रियमाणानुवादित्वात् । ३७ ॥ समुच्चयं च दर्शयति ॥ ३८ ॥

'उच्छ्रयस्व वनस्पते' तै.ब्रा. ३·६-१० इत्यादयो ये क्रियमाणानुवादिनो-हौत्रमन्त्राः, तेषामपि करणवदेकार्थत्वाद्विकल्पप्राप्तौ—

उच्यते—करणानि हि कर्मानुष्ठाने करणभूतां स्मृतिं पूर्वक्षणवर्त्तिनीं कुर्वन्ति, न चैकेन तत्सिद्धावितरेण कार्यमस्तीति, युक्तस्तत्र विकल्पः। क्रियमाणानुवादिनस्त्वध्वर्युणा क्रियमाणस्य कर्मणः स्मृत्यविच्छेदार्थाः। अविच्छेदश्चान्तादपेक्षित इति, सर्वेषां समुच्चयः।

इति षोडशं हौत्रमन्त्राणां समुच्चयाधिकरणम्।

इति श्रीपार्थसारथिमिश्रविरचितायां शास्त्रदीपिकायां-
द्वादशाध्यायस्य तृतीयः पादः ॥ ३ ॥



# अथ द्वादशाध्याये चतुर्थः पादः

जपस्तुत्याशीरभिधानानां समुच्चयाधिकरणम् ॥ १ ॥

जपाश्चाकर्मसंयुक्ताः स्तुत्याशीरभिधानाश्च याजमानेषु समुच्चयः स्यादाशीः पृथक्त्वात् ॥ १ ॥ समुच्चयं च दर्शयति ॥ २ ॥

यत्र सन्तमप्यर्थप्रत्ययमविवक्षित्वोच्चारणमात्रमदृष्टाय क्रियते'वैष्णवीमनूच्य वाग्यन्तव्ये'त्यादौ, स जपः। गुणकीर्त्तनं—स्तुतिः 'अग्निर्मूर्द्धे'ति। आशासनम् आशीः 'आयुर्मे देही'ति। गुणविशिष्टगुणिप्रकाशनमदृष्टार्थमभिधानं, तेषु ब्राह्मणविहितवद्विकल्पप्राप्तावदृष्टार्थत्वात्समुच्चयः।

---

ऐन्द्राबार्हस्पत्ये द्विविधयाज्यानुवाक्ययोर्विकल्पाधिकरणम्।
[याज्यानुवाक्ययोः समुच्चयाधिकरणम्]॥ २ ॥

याज्यानुवाक्यासु तु विकल्पः स्याद्देवतोपलक्षणार्थत्वात् ॥ ३ ॥ लिङ्गदर्शनाच्च ॥ ४ ॥

ऐन्द्राबार्हस्पत्ये कर्मणि द्वे याज्यानुवाक्यायुगले समाम्नाते 'इदं वामास्ये हविः, अयं वां परिषिच्यते' इत्येकं युगलम्। 'अस्मे इन्द्राबृहस्पती', बृहस्पतिर्नः परिपात्वि' 'तै० सं० ३-३-११ त्यपरं, तत्र समुच्चयविकल्पसंशये, यथा याज्यापुरोनुवाक्ययोः सत्यपि देवतोपलक्षणार्थत्वेनैकार्थत्वे, मिथस्समुच्चयः, तथा युगलयोरपि स्यादविशेषादिति प्राप्ते—

उच्यते—विकल्पः, एकार्थत्वादिति। याज्या-पुरोऽनुवाक्ययोस्तु पुरोऽनुवाक्यासमाख्यावशात न्यायप्राप्तविकल्पबाधेन समुच्चय इति विशेषः।

इति द्वितीयमैन्द्राबार्हस्पत्ये द्विविधयाज्यानुवाक्ययोर्विकल्पाधिकरणं।

---

सोमक्रयसाधनानामजादीनां समुच्चयाधिकरणम् ॥ ३ ॥

क्रयणेषु तु विकल्पः स्यादेकार्थत्वात् ॥ ५ ॥ समुच्चयो वा-

## प्रयोगे द्रव्यसमवायात् ॥ ६ ॥ समुच्चयञ्च दर्शयति ॥ ७ ॥

'एकहायन्या क्रीणाति, अजया क्रीणाति, वाससा क्रीणाति' इति-दश क्रयद्रव्याणि । तेषां विकल्पः, समुच्चयो वेति चिन्त्यते ।

तत्र व्रीहि-यवन्यायेनैकार्थत्वाद्विकल्पः । कथं पुनरेकार्थत्वं ? भिन्ना एव हि-प्रतिवाक्यं क्रयाः, न ह्येकेन वाक्येन विहितं क्रयमनूद्य वाक्यान्तरैर्द्रव्यान्तर-विधानं सम्भवति, उत्पत्तिशिष्टद्रव्यावरोधात् । तस्मात्सर्वाणि क्रयविधानानि, विध्यन्तराच्च क्रयभेदः । तस्मान्नानाक्रयसाधनत्वाद् द्रव्याणां नास्त्यैकार्थ्यम् ।

सत्यं, साक्षान्नास्ति, क्रयद्वारेण त्वस्त्येव । सर्वे हि क्रयास्सोमप्राप्त्यर्थ-त्वादेकार्थाः । तद्द्वारेण द्रव्याण्यप्येकार्थानि, तदनेन प्रकारेण क्रयाणामेवात्र-विकल्प-समुच्चयौ चिन्त्येते, व्रीहि-यववच्च विकल्पप्राप्तौ—

उच्यते—विक्रेतुरानतिरत्र प्रयोजनं । तच्च बहुभिः सुकरम् । अतः-कार्यप्रधानत्वात्पदार्थानां सौकर्यमालोच्य समुच्चयाश्रयणं न्याय्यं । व्रीहिय-वादीनान्तु नैवं किंचित्कारणमस्ति । येन पृथक् श्रुतानामपि सापेक्षत्वं-कल्प्येत । अत्र तु कार्याविशेषात्सापेक्षत्वकल्पनमिति वैषम्यम् ।

इति तृतीयं सोमक्रयसाधनानामजादीनां समुच्चयाधिकरणम् ।



### उपयजनादिप्रतिपत्तिकर्मणां समुच्चयाधिकरणम् ॥ ४ ॥

## संस्कारे च तत्प्रधानत्वात् ॥ ८ ॥

अग्नीषोमीये पशौ 'गुदेनोपयजती'ति श्रुतं । पशुगणेऽनेकगुदसन्निपाते-गुदानां विकल्पः, समुच्चयो वेति चिन्ता । यद्यर्थकर्म, ततो विकल्पः, । अथ प्रतिपत्तिः,ततस्समुच्चयः । तत्र सत्यपि तृतीयासंयोगे प्रयाजशेषवत्, 'उत्पत्तौ येन संयुक्तमि' ४-२-१९ त्येवं सिद्धस्य प्रतिपत्तित्वस्य प्रयोजनकथनमेतत् ॥

इति चतुर्थमुपयजनादिप्रतिपत्तिकर्मणां समुच्चयाधिकरणं



### आधाने विविधसंख्याकानां दक्षिणानां विकल्पाधिकरणम् ॥ ५ ॥

## संख्यासु तु विकल्पः स्याच्छ्रुतिविप्रतिषेधात् ॥ ९ ॥

अग्न्याधेयाङ्गानां 'एका देया, षड् देयः'इत्यादीनां दक्षिणानामान-

त्यर्थत्वात् क्रयवत् समुच्चयः। संख्याश्रुतिविरोधात्तु विकल्पः। समुच्चये-संख्यान्तरोपजननाच्छ्रुतसंख्याहानिप्रसङ्गात ॥

इति चतुर्थमाधाने दक्षिणानां विकल्पाधिकरणम्।



पशुगणेषु जाघनीनां विकल्पाधिकरणम् ॥ ५ ॥

द्रव्यविकारं तु पूर्ववदर्थकर्म स्यात् तथा विकल्पे नियमः प्रधानत्वात् ॥ १० ॥ प्रव्यक्तेऽपि समुच्चयो; द्रव्यस्य कर्मनिष्पत्ते, प्रतिपशु कर्मभेदादेवं सति यथत्प्रकृति ॥ ११ ॥ कपालेऽपि तथेति चेत् ॥१२॥ न कर्मणः परार्थत्वात् ॥ १३ । प्रतिपत्तिस्तु शेषत्वात् ॥ १४ ॥ श्रुतेऽपि पूर्ववत्त्वात्स्यात् । १५ ॥ विकल्पे त्वर्थकर्म नियमप्रधानत्वात्। शेषे च कर्मकार्यसमवायात्तस्मात्तेनार्थकर्म स्यात् ॥ १६ ॥

दर्शपूर्णमासयोः पत्नीसंयाजेषु आज्येन सह विकल्प्यमाना जाघनी विहिता, 'जाघन्या पत्नीः संयाजयन्ती'ति। सा चोदकेनाग्नीषोमीये पशौ प्राप्ता। अत्रापि पुनः श्रूयते 'जाघन्या पत्नीः संयाजयन्ती 'आप-श्रौ.३-८-१०ति। ततोऽपि पशुगणे चोदकेन प्राप्नोति। तत्र बह्वीनां जाघनी ां समुच्चयः, विकल्पो वेति-सन्देहः। यदि प्रतिपत्तिः, ततस्समुच्चयः, अथाऽर्थकर्म, ततो विकल्पः,। तत्र यद्यपि दर्शपूर्णमासयोर्जाघनी गुणभूता पत्नीसंयाजानां, तथाऽप्यग्नीषोमीये हृदयाद्यर्थालब्धपशुनिष्पन्नाया जाघन्याः प्रतिपत्त्यपेक्षायां प्रतिपत्तित्वेन पत्नी-संयाजविधानम्, एवमर्थं पुनर्वचनं। ततश्च दृष्टार्थत्वात्पशुगणे समुच्चयः। नैवम्। 'आज्येन सह विकल्पमानायाश्चोदकप्राप्तायाः पुनर्वचनं नियमार्थं, यथाप्राप्तायाश्च नियमः, प्राप्तिश्च गुणभावेनेति, तादृश्येव नियम्यते, अतः-पशुगणे विकल्पः ॥

इति पशुगणेषु जाघनीनां विकल्पाधिकरणं



काम्येन नित्याग्नेर्विकाराधिकरणम् ।। ६ ।।

उखायां काम्यनित्यसमुच्चयः, नियोगे कामदर्शनात् ।। १७ ।। असति चासंस्कृतेषु कर्म स्यात् ।। १८ ।। तस्य च देवतार्थत्वात् ।।१६।। विकारो वा तदुक्तहेतुः ।। २० ।। वचनादसंस्कृतेषु कर्म स्यात् ।। २१ ।। संसर्गे चापि दोषः स्यात् ।। २२ ।। वचनादिति चेत् ।। २३ ।। तथेतरस्मिन् ।। २४ ।। उत्सर्गे अपि परिग्रहः कर्मणः कृतत्वात् ।। २५ ।।

अग्नावुख्यं प्रकृत्य श्रूयते 'वृक्षाग्रात् ज्वलतो ब्रह्मवर्चसकामस्याहृत्याऽवदध्यात्, भ्राष्ट्रादन्नाद्यकामस्ये'ति । तत्र किं नित्यस्योख्यस्य, काम्यस्य च वार्क्षादेः समुच्चयः, अथवा नित्यो निवर्त्यः इति सन्देहे? अवधानमात्रं कामाय श्रूयते, न होमः । तस्मात्फलाय काम्यमवधाय, होमाय पुर्नित्योऽग्निः, उख्योऽग्निर्वा ऽवधातव्य इति समुच्चयः ।

स्यादेतदेवं, यद्यवधानं विधीयते, प्राप्तमेव तु होमार्थमग्न्यवधानमाश्रित्याग्न्यन्तरमात्रं विधीयते, । तस्मात्तेन काम्येन नित्यस्य निवृत्तिः । विकल्प-समुच्चयविचारे समाप्ते, समुच्चयः एवास्ति, नास्तीति चिन्त्यते-इति सङ्गतिः ।।

इति सप्तमं काम्येन नित्याग्नेर्विकाराधिकरणम् ।

---

वैकारिकाग्नेराहवनीयत्वाभावाधिकरणम् ।। ८ ।।

स आहवनीयः स्यादाहुतिसंयोगात् ।। २६ ।। अन्यो वोद्धृत्या अहरणात् ।। २७ ।।

सोऽयं काम्योऽग्निराहवनीयशब्दवाच्यः स्यात्, आहूयतेऽस्मिन्निति । तस्मादाहवनीयधर्मा गतश्रीधारणादयोऽत्र कर्त्तव्याः ।

नैवम् । आधानजन्मनः संस्कारविशेषस्य वाचकोऽयमाहवनीयशब्दो-नासति तस्मिन्संस्कारे वर्त्तितुमर्हति, । तस्मान्नाऽत्राऽऽहवनीयधर्माः ।।

इत्यष्टमं वैकारिकाग्नेराहवनीयत्वाभावाधिकरणम् ।

---

वैकारिकाग्नेराधानिकसंस्काराभावाधिकरणम् ॥ ९ ॥

तस्मिन्संस्कारकर्म शिष्टत्वात् ॥ २८ ॥ स्थानाद्वा परिलुप्येरन् ॥२९॥

एवं तर्हि संस्कारात् तत्राधानादिकाः कर्त्तव्या होमार्थत्वात्संस्काराणां, अस्य चाग्नेर्होमसाधनत्वात् । सत्यं । होमसाधनोऽयमग्निः, तथाऽप्यसंस्कृतः-एवायं संस्कृतस्थानापन्न इति, नात्र संस्काराः कर्त्तव्याः । न हि वृक्षादाहृतस्यारणिमन्थनादिजन्यः संस्कारः शक्यते आधातुं । तस्मान्नात्र संस्कारः ॥

इति नवमं वैकारिकाग्नेराधानिकसंस्काराभावाधिकरणम् ।

---

नित्यस्योख्याग्नेरधारणाधिकरणम् ॥ १० ॥

नित्यधारणे विकल्पो न ह्यकस्मात्प्रतिषेधः स्यात् ॥ ३० ॥

नित्यधारणाद्वा प्रतिषेधो गतश्रियः ॥ ३१ ॥

काम्याग्निप्रसङ्गं समाप्य, पुनर्नित्यमेवोख्याग्निमुपक्रम्य चिन्तयति-किं उख्यस्य नित्यधारणं, न वेति विकल्पः? उताधारणमेवेति । तत्र-'न प्रतिसमिन्धीते'ति धारणप्रतिषेधोऽसत्यां प्राप्तावनुपपद्यमानः प्रापकं विधिमनुमापयति । तेन चानुमितेन विधिना प्रापितं, प्रतिषेधेन च प्रतिषिद्धं-धारणं विकल्पमर्हतीति प्राप्ते-

अभिधीयते—सामान्येनाहवनीयधारणं गतश्रियो विहितम् । उख्यश्चायमाहवनीयस्थानापन्नः आहवनीय एव हि संतापेनोख्यः सञ्जातः, तस्य धारणं सामान्यवचनप्राप्तं गतश्रियो धारणं उख्यविषयेऽनेन प्रतिषिध्यत इति, नानेनाऽश्रुतविध्यनुमानं सम्भवति । तस्मादधार्य एवायमुख्यः ॥

इति दशममुख्यस्य नित्यस्याग्नेरधार्यत्वाधिकरणम् ।

---

सत्राहीनयोः शुक्रस्पर्शादीनामेकयजमानकर्तृकत्वाधिकरणम् ॥११॥

परार्थान्येको यजमानगणे ॥ ३२ ॥

सत्राहीनयोरनेकयजमानसमवाये यानि परार्थान्ययजमानसंस्कारा-

र्थानि शुक्रान्वारम्भणौऽदुम्बरीसंमानादीनि, तान्येकेनैव कर्त्तव्यानि, न सर्वैः, प्रयोजनाभावादिति प्राप्तिसूत्रमेतत्।

इत्येकादशं सत्राहीनयोश्शुक्रस्पर्शादीनामेककर्तृकत्वाधिकरणम्।



अहीने शुक्रस्पर्शादौ यस्य कस्यचिद् यजमानस्य कर्त्तृत्वाधिकरणम् ॥१२॥

अनियमोऽविशेषात् ॥ ३३ ॥

स चोक्तो यः कश्चित्स्यात्, अतो येन केनचिदेकेन कृतमन्वारम्भणादिकमितरे प्रसङ्गादुपजीवन्तीतीदमपि प्राप्तिसूत्रमेव असत्रेष्वपवादं वक्तुम्।

इति द्वादशमहीने यस्य कस्यचिद्यजमानस्यकर्तृत्वाधिकरणम्।



सत्रे शुक्रस्पर्शादौ गृहपतेरेव कर्तृत्वाधिकरणम् ॥ १३ ॥

मुख्यो वाऽविप्रतिषेधात् ॥ ३४ ॥

सत्रेषु गृहपतिरेव परार्थानि कुर्यात्, नानियमः। कस्मात्? इतरेषामार्त्विज्यविरोधात्।

इति त्रयोदशं सत्रे गृहपतेरेव कर्तृत्वाधिकरणम्।



सत्रेऽञ्जनादिसंस्काराणां सर्वगामित्वाधिकरणम् ॥ १४ ॥

सत्रे गृहपतिरसंयोगाद्धौत्रवत् ॥३५॥ आम्नायवचनाच्च ॥३६॥ सर्वे वा तदर्थत्वात् ॥ ३७ ॥ गृहपतिरिति च समाख्यासामान्यात् ॥ ३८ ॥

यानि पुनर्यजमानसंस्कारार्थानि कर्माण्यञ्जनाभ्याञ्जनादीनि, तान्यपि सत्रे गृहपतिरेव कुर्यात्, उत सर्व इति संशये, गृहपतिरेवेत्याह, गृहपतिसमाख्यानात्। अत्र हि गृहशब्देन कर्मोच्यते, तस्य पतिर्गृहपतिः, सर्वेषां च यजमानानां स्वामित्वाद्गृहपतिशब्दार्हत्वे सति विशेषेण कस्यचिदेषा-

समाख्या फलभूयस्त्वनिमित्ता। फलभूयस्त्वं च संस्काराधिक्यात्। अतस्तस्यैव संस्काराः, नान्येषाम्।

अत्राभिधीयते-फलिसंस्काराः सर्वेषामेव कर्त्तव्याः, तदभावे फलमेव न स्यात्, गृहपतिसमाख्या त्वार्विज्याभावात्, इतरे ह्यार्त्विज्यं कुर्वाणाः कर्मकरा इव भवन्ति,। अयं तु केवलयाजमानकरणात्स्वामिवाचिना गृहपतिशब्देनोच्यते। भवतु फलभूयस्त्वं, तत्तु वचनात् 'स हि भूयिष्ठामृद्धिमृध्नोती'ति, न संस्काराधिक्यात्। अतः सर्वे याजमानं कुर्युः।

इति चतुर्दशं सत्रे संस्काराणां सर्वगामित्वाधिकरणम्।

---

याजमानार्त्विज्ययोरार्त्विज्यस्यैव बलवत्त्वाधिकरणम् ॥ १५ ॥

विप्रतिषेधे परम् ॥ ३९ ॥ हौत्रे परार्थत्वात् ॥ ४० ॥ वचनं परम् ॥ ४१ ॥

यत्रार्त्विज्य-याजमानयोर्विप्रतिषेधः, तत्रार्त्विज्यमेव कुर्युः, प्रधानत्वात्। कर्त्तारो हि कर्मणां गुणभूताः, कर्तृणामपि गुणभूताः संस्काराः। प्रत्यक्षविधानाच्च, 'ये यजमानास्त ऋत्विज' इति। अनेन ह्यार्त्विज्यं यजमानानां, विहितं, याजमानं तु चोदकप्राप्तमिति, आर्त्विज्यं बलीयः॥

इति पञ्चदशं याजमानार्त्विज्ययोरार्त्विज्यस्यं बलत्त्वाधिकरणं।

---

ब्राह्मणस्यैवार्त्विज्येऽधिकाराधिकरणम् ॥ १६ ॥

प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् ॥ ४२ ॥ स्मृतेर्वा स्याद् ब्राह्मणानाम् ॥ ४३ ॥ फलचमसविधानाच्चेतरेषाम् ॥४४॥ सान्नाय्येऽप्येवं प्रतिषेधः सोमपीथहेतुत्वात् ॥ ४५ ॥ चतुर्धाकरणे च निर्देशात् ॥ ४६ । अन्वाहार्ये च दर्शनात् ॥ ४७ ॥

'विप्रतिषेधे परमि'ति सूत्रे याजमानादार्त्विज्यं बलीय इति स्थितं। तत्प्रसङ्गादार्त्विज्ये कर्त्तारश्चिन्त्यन्ते-दर्शपूर्णमास-ज्योतिष्टोमादिषु किं त्रिभिरपि द्विजातिभिरार्त्विज्यं कारयितव्यम्? उत ब्राह्मणैरेवेति।

तत्र—त्रयोऽप्यार्त्विज्यमर्हन्ति विद्वत्त्वात् स्मरणं पुनः।
पुरुषार्थमतः कर्मवैगुण्यं नास्ति किञ्चन ॥ १० ॥

याजनाध्यापनप्रतिग्रहा ब्राह्मणस्यैव वृत्त्युपाया इति नियमः पुरुषार्थतया स्मर्यते, न क्रत्वर्थतया। तेन क्षत्रियवैश्यौ आर्त्विज्यं कुर्वन्तौ नियमातिक्रमात्कामं स्वधर्मात्प्रच्यवेयातां, न तु क्रतोः काचित् गुणहानिः। तस्मात् त्रिभिरप्यार्त्विज्यं कारयितव्यमिति प्राप्ते—

ब्रूमः—द्विजोत्तमानामार्त्विज्यं न तु क्षत्रिय-वैश्ययोः।
ब्राह्मणार्त्विज्यनियमः क्रत्वर्थेनापि हि स्मृतः ॥ ११ ॥

'यज्ञं व्याख्यास्यामः, आप. परि. १-१ इत्युपक्रम्य 'ब्राह्मणानामार्त्विज्यमि'ति स्मरन्तो यज्ञसूत्रकाराः[1] क्रत्वर्थेन स्मरन्तीति स्पष्टमेव।

तथा भगवद्रामायणेऽपि—

'क्षत्रियो याजको यस्य चाण्डालस्य विशेषतः।
कथं सदसि भोक्तारो हविस्तस्य सुरर्षयः॥' वा. रा. १-५९-१२ इति।

सुराः-देवताः, ऋषयश्च ऋत्विग्भूता इति, देवताहविर्भागनिराकरणात् क्रतुवैगुण्यमेव दर्शितम्।

'राजयाजकयाज्यस्य विनश्यति यथा हविरि'ति—

अब्राह्मणार्त्विज्ये हविर्नाशश्च स्मृतः। लिङ्गानि च दर्शितानि[2] 'ब्राह्मणानामिदं हविरि'त्येवमादीनि। तस्माद् ब्राह्मणानामेवार्त्विज्यमितिसिद्धम्।

उक्तस्याध्यायार्थस्य, शास्त्रार्थस्य च संग्रहश्लोकः।

मध्ये तन्त्रं यस्य येषां विधानं तेषु प्रोक्तो मुख्यतन्त्रप्रसङ्गः।
जिज्ञास्यो यो धर्म उक्तश्चतुर्द्धा स प्रज्ञातो लक्षणैर्द्वादशान्तैः ॥ १२ ॥

इति महामहोपाध्याय श्रीपार्थसारथिमिश्रविरचितायां
शास्त्रदीपिकायां द्वादशाध्यायस्य चतुर्थः पादः।

—:०:—

द्वादशाध्यायः समाप्तः।

—:०:—

शास्त्रदीपिकाग्रन्थश्च समाप्तः।

---

१—आपस्तम्ब-कात्यायनादयः। २—भाष्ये इति शेषः।

भाष्ये लिंगानि दर्शितानि। तानि च यथा—'ब्राह्मणानामिदं हविरि'त्यादीनि। अस्यायमर्थः—दर्शपूर्णमासयोः पुरोडाशचतुर्धाकरणेऽध्वर्युणा कृते, याजमाने प्रतिदिशं भागव्यूहने यजमानपठनीयः 'ब्राह्मणानामिदं हविस्सौम्यानां, निर्भक्तो ब्राह्मणः, नेहाब्राह्मणस्यास्ती'ति अयं मन्त्रश्चतुर्धाकरणानन्तरं निर्देशार्थः। तत्र चतुर्धाकरणस्य भक्षणार्थत्वात् ब्राह्मणानामित्यनेन ऋत्विजामेव निर्देशेन ब्राह्मणानामेवार्त्विज्ये इदं लिंगं। अब्राह्मणानां भक्षणाभावप्रतीतेः। 'सोमपीथिनामि'ति विशेषणाच्च न क्षत्रियवैश्ययोरार्त्विज्यम्। तस्य सोमभक्षनिषेधेन तत्स्थाने फलचमसविधानात्, सोमपीथित्वाभावेनैवार्थवादोक्तेन सान्नाय्येऽपि तयोः भक्षप्रतिषेधः 'न राजन्यः, वैश्यो वा सान्नाय्यं पिबेत्, असोमपीथीह्येष' इति।

तथा 'एते वै देवा [ हुतादो ] यत् ब्राह्मणाः इति शाखान्तरीये। तैत्तिरीयशाखायां 'यदन्वाहार्यसाहरति एते वै देवाः प्रत्यचं यदब्राह्मणाः, तानेव तेन प्रीणाति' तै. सं. १-७-१-१ इति वाक्यमप्यत्रानुसन्धेयम्।

तथा माहाभारते राज्ञोयाजकत्वनिमित्तो हविर्नाश उक्तोऽप्यनुसन्धेयः।

अतः क्षत्रियवैश्ययोर्याजकत्वे क्रतुवैगुण्यस्य तत्र तत्र प्रतीतेः, ब्राह्मणपदस्यश्रवणाच्च तस्यैवार्त्विज्यं, नेतरयोरिति सिद्धम्। तत्रादिशब्देन 'निर्भक्तो ब्राह्मणः' 'नेहाब्राह्मणस्यास्ती'ति अब्राह्मणस्य भागप्रतिषेधः। दर्शपूर्णमासयोरन्वाहार्यस्यादनीयेषु ऋत्विक्षु ब्राह्मणशब्दनिर्देशो बोध्यः।

मध्ये तन्त्रमिति—अस्यार्थः—यस्य मध्ये तन्त्रं यदीये येषामन्येषां विधानं, तेषु मुख्यस्य प्रथमप्रवृत्तस्य तन्त्रस्य तस्य, यत्तन्त्रं, तत्प्रसंगोऽस्मिन्नध्याये प्रोक्त इत्यर्थः। द्वादशलक्षण्यात्मकमीमांसाशास्त्रप्रमेयमर्थमुपसंहरति, जिज्ञास्य इति। 'अथातो धर्मजिज्ञासे'ति सूत्रेणादौ स्वरूप-प्रमाण-साधन-फलैश्चतुर्भिः प्रकारैर्यो धर्मोजिज्ञास्यत्वेन प्रतिज्ञातः, स धर्मः प्रथमादिभिर्द्वादशान्तैरध्यायैः प्रज्ञातः। धर्मनिर्णयरूपं फलं सिद्धमित्यर्थः।

अरुणाचलमीनाक्ष्योस्संभूतश्च दृढव्रतः।
स्वदेशादागतः काशीं शास्त्राध्ययनसिद्धये ॥ १ ॥
सकलत्रः कृती भाग्यात् स्थितिमत्र चकार सः।
भाट्टे प्राभाकरे चैव प्रस्थाने शांकरे तथा ॥ २ ॥
शास्त्राचार्यपदं लेभे हिन्दूविश्वकलालये।
शिष्यानध्यापयन्नास्ते साधुवेलाश्रमेऽधुना ॥ ३ ॥
दुरूहोऽपि निबन्धोऽयं यथामपि प्रशोधितः।
यत्प्रसादात् स विश्वेशः प्रसीदतु शिवंकरः ॥ ४ ॥
करण-कलेवर-मनसां शैथिल्यं सहजमसकृदालोच्य।
समशूशुधद्ग्रन्थमिमं सुब्रह्मण्यः परोपकारार्थम् ॥ ५ ॥



# शुद्धिपत्रम्

| पृष्ठसंख्या | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४ | १४ | तच्च शक्नुवत् | तञ्च शक्नुवन् |
| ,, | १७ | तप्रयुक्तेन | तद्युक्तेन |
| ५ | २६ | संभवाच्च | संभवात् |
| ,, | ,, | संभवात् | संभवाच्च |
| ६ | १५ | ऋत्विक् | ऋत्विग्वत् |
| ७ | १९ | वसाना | वसान |
| १० | ६ | ध्वन्यस्य | तच्छन्यस्य |
| ११ | ४ | व्यरोंत्सीत् | न व्यरौंत्सीत् |
| ,, | २२ | वृणीतो | वृणाते |

एतया निषादस्थपतिं याजयेदि मै. सं २–२–४ ति

| | | | |
|---|---|---|---|
| १३ | ४ | वास्तुमध्ये | वास्तुमयं |
| ,, | ५ | निषास्थपति | निषादस्थपति |
| १५ | १ | कत्रश्रय | कर्तृरूपाश्रय |
| ,, | २० | उपात्तता | उपात्ता |
| १४ | ११ | उद्देश्यपरत्वात् | उद्देश्यगतत्वात् |
| ,, | २४ | संहतानां | सहितानां |
| २२ | १ | नैवम् | सैवम् |
| २३ | २० | अमृतत्वेति | संपातायातम् |
| २६ | ३ | भेदोऽपि | अभेदोपि |
| २७ | १६ | अन्यथासिद्धेः | अन्यथाऽसिद्धेः |
| २८ | २२ | एकवचन | एकपद |

| पृष्ठ संख्या | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३१ पृ. टिप्पणी मुद्रितशास्त्रदीपिकादौ न विन्देत, पूतीकानभिषुणुयादित्येकवाक्यनान्तः पाठः। | | | |
| ३२ | ६ | किमयमयमभावे- | किमयमभावे? किन्तर्हीति-पठितव्यम्। |
| ,, | ७ | नियमोह्ययं | नियमोऽयं |
| ,, | १७ | | मुख्ये इत्यस्यानन्तरं संभवतीति पठनीयम् |
| ,, | २३ | कतिपयेष | कतिपयेषु |
| ३५ | १५ | प्रयोगगत | अनुष्ठानगतः |
| ४० | २७ | चान्तं | चार्तं |
| ४२ | १७ | | न, इति पठनीयं |
| ,, | २२ | महेन्द्राय | महेन्द्रस्य |
| ,, | २३ | कर्मण | कर्मणि |
| ४३ | ३ | अमावास्यां | अमावास्यायां |
| ४४ | १० | | कः पुनरिति पठितव्यं |
| ४६ | २२ | पदात्रे | प्रदात्रे |
| ५० | ३ | संयुगोऽस्यां | संयोगस्तस्यां |
| ५१ | ९ | | न विधेय इति पठनीयं |
| ,, | २० | | भाष्यकार इत्यनन्तरं दीक्षा परिमाणे इति पठनीयं |
| ५३ | १८ | | मं. प्र २ इति |
| ५५ | २० | | प्रहरतीति मु. पु. प |
| ५७ | २ | यद्युद्गाता | यदोद्गाता |
| ५९ | २५ | अन्यत्र | अत्र |
| ६४ | २१ | दानं विशेषात् | दानं, अविशेषात् |

| पृष्ठ संख्या | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ६४ | २१ | शक्य, अते | शक्यते च |
| ६९ | ७ | अलब्ध्वात्मिक | अलब्धात्मिका |
| ,, | २५ | ह्यनधकं | ह्यनर्थकं |
| ७० | २ | वष्णि | वृष्णि |
| ७१ | १७ | संवत्स | संवत्सर |
| ७३ | १ | गम्यं नार्थप्राप्तं कर्म | गम्यमानं कर्म |
| ,, | १७ | | ब्रूम इति पठनीयं |
| ७४ | १ | तया | एतया |
| ,, | ६ | प्रयोगात्नक्तं | प्रयोगान् 'नक्तं |
| ,, | २० | आवत्सेदादि | आविशेदिति |
| ७८ | २१ | बधादि | बाधादिति |
| ७९ | १ | विवादः | विचारः |
| ८० | २३ | अनिष्फलस्य | अनिष्पन्नस्य |
| ८१ | १५ | इतरच्छ्येनेन | इतरच्छ्येनेन |
| ,, | १८ | तत् । त्साद्दश्यं | तत्साद्दश्यं |
| ,, | २३ | तत्पूर्वोक्तसद्दशं | न तत्पूर्वोक्तसद्दशं |
| ८३ | १३ | अल्पप्राकृतं | अल्पमप्राकृतं |
| ,, | ,, | वहु | बहु |
| ,, | १५ | वरूणप्रघासिक | वरूणप्राघासिक |
| ८५ | १ | गीत्यभीधानस्य | गीत्यभिधानस्य |
| ८७ | १६ | गुणवि | गुणविधिः |
| ८६ | १६ | तस्मात्सौमिकं | तस्मात् तत्सौमिकं |
| ९० | २ | भाष्यगतेन | भाष्यमतेन |
| ,, | २३ | पंक्तौ प्रकृति तुल्यं विधीयत इति प्रामदापातं | |
| ,, | २७ | तत् ना विधीयमाने | तन्न, नाविधीयमाने |
| ९१ | २९ | प्रणयन्ती | प्रणयतीति |

| पृष्ठ संख्या | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ९२ | ६ | | समर्थितमित्यपि पाठः |
| ९३ | ६ | विधानाजातिः | विधानाज्जातिः |
| ९७ | २३ | तादृग्गणमन्त्र | तादृग्रूपयुक्तमन्त्र |
| ९८ | २५ | संज्ञादिशिष्ट | संज्ञाविविशिष्ट |
| १०१ | १ | दवतेषु | दैवतेषु |
| ,, | १२ | व्वभृथ | व्वलभृथ |
| ,, | २४ | | इष्टिषु इति पठनीयम् |
| १०२ | १० | अतिदेशाः | अतिदेशः |
| १०४ | ४ | धर्मवातरेषु | धर्मवान् उत्तरेषु |
| १०८ | १ | उज्वलसामान्यात् | उज्वलत्वसामान्यात् |
| १०९ | ९ | तत्प्रभवात् | तत्प्रभवत्वात् |
| ११२ | ६ | र्हस्पत्यं | बार्हस्पत्यं |
| ,, | १२ | न्यायापेक्षत्वात् | अन्यापेक्षत्वात् |
| ,, | २० | त्रिवृत्यहानि | त्रिवृन्त्यहानि |
| ,, | २४ | नैवमिह | नैवम् । इह |
| ११४ | १५ | मत्पत्तिः | मुत्पत्तिः |
| ,, | २० | अहर्थवति | अहर्भवति |
| ,, | २१ | कृत्यधिकारात् | प्रकृत्यधिकारात् |
| ,, | २५ | गोत्वच्च | गोत्ववच्च |
| ११५ | १ | लोपैस्यात् | लोपैर्विशिष्टं· |
| ,, | २० | त्रिभि पादैः | त्रिभिः पादैः |
| ११६ | १६ | वस्तुहोमे | वास्तुहोमे |
| ११७ | १२ | परिणेयत्पाद् | परिणेयत्वात् |
| ११८ | १८ | कथमहः | कथमूहः |
| ११९ | २० | अपूर्वर्थता | अपूर्वार्थता |

| पृष्ठ संख्या | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ११६ | २१ | तन्त्ररत्र | तन्त्ररत्ने |
| १२१ | ३ | एकवाक्यतः | एकवाक्यतां |
| त्रयोऽनू | १—याजाः देवमग्निं, २—देवं नराशं ३—देवमग्निस्विष्टकृतं । | | |
| ,, | ७ | स्याकर्षणं | स्यापकर्षणं |
| १२२ | २६ | यद्दर्शपूर्ण | यद्दर्शपूर्णमासौ |
| १२३ | ६ | ऋतुशेषः | ऋतुशेषस्सन् |
| ,, | १२ | उज्झितिमनज्जमं | उज्जितिमनूज्जेषं |
| ,, | १८ | स्यातस्य | स्यात् तस्य |
| १२४ | ७ | शब्दवगन्यत्वात् | शब्दैकगम्यत्वाच्च |
| ,, | २६ | तुराण | पुराण |
| १२५ | २२ | स्तुवादिषु | स्तुत्रादिषु |
| १२७ | २२ | मित्पेतावता | मित्येतावता |
| ,, | २३ | मिद्धा | सिद्धा |
| १२८ | २८ | संबन्धोः | संबन्ध |
| १३१ | १५ | प्रवोवाजीयायाः | प्रयोवाजायाः |
| ,, | १६ | ,, | ,, |
| ,, | १९ | अव्यासंबन्ध | अभ्याससंबन्ध |
| १३३ | १५ | आरमप्स्यमान | आरप्स्यमाण |
| १३५ | ६ | वर्णकं | वर्णकान्तरं |
| १३८ | ६ | मप्यपपत्तेः | मप्युपपत्तेः |
| १४१ | १ | अध्यायानध्याय | अध्यायानध्ययनाः |
| १४४ | ११ | शोडशि | षोडशि |
| ,, | १५ | | इयं टिप्पणी १४३ पृष्ठे-अधस्तात् द्रष्टव्या । |
| १४५ | १४ | इतयोः | इति, तयोः |

| पृष्ठ संख्या | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १४५ | १५ | अन्ययनो | अन्ययोः |
| १४७ | ३ | विकल्पो वा, अथ | विकल्पः। अथवो |
| ,, | ११ | समप्रदेशे | साम्प्रदेशे |
| ,, | १३ | विचारयति | चिन्तयति |
| ,, | १८ | तत्र ऊहः | तत ऊहः |
| ,, | २० | रेकावच्चार्यौ | रेकारावुच्चार्यौ |
| १४९ पृष्ठे ९ पंक्तौ प्रोक्षतीत्यस्यानन्तरमवहन्तीति पठनीयम्। | | | |
| १५० | १७ | यूथो | यूपो |
| ,, | २० | तादर्य | तादर्थ्यं |
| १५१ | १७ | यथाश्रुतीति | यथा श्रुति व्यवस्थेति |
| १५२ | ६ | यच्छरादि | यच्छूरादि |
| ,, | १४ | विवक्षितमति | विवक्षितमिति। |
| ,, | १८ | तत् | ततः |
| १५४ | १२ | अत्प्राकृत | अप्राकृत |
| ,, | २५ | पणालेः | पृणातेः |
| १५५ | १२ | पूर्णमासीदेवत्यौ | पौर्णमासीदेवत्यः |
| | | अमावास्यादेवत्यौ | अमावास्यादेवत्यः |
| १५६ | २४ | पदेनैव | पदेनेव |
| १५९ | १२ | महेन | मूहेन |
| १६० | २३ | अन्याप्यनिगदं | अन्याय्यनिगदम् |
| ,, | २६ | पत्नाके | पत्नीके |
| १६१ | १ | अभिप्रायेण | सर्वाभिप्रायेण |
| १६३ | २० | सकृत्त्वं चैकध्ये | सकृत्त्वन्त्वैकध्ये |
| १६४ | ६ | एकाभिसमकाया | एकाभिसमवायात्स्यान् |
| १६७ | १३ | पदत | पदगत |

| पृष्ठ संख्या | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १६८ | ३ | साकल्प | साकल्य |
| १६९ | २४ | सर्भ | सर्व |
| १७१ | १ | एषवाक्यार्थः | एषोऽत्र वाक्यार्थः |
| १७२ | १७ | कश्यपे वासो | कश्यपेवांसा |
| | | १७४ श्लोकसंख्या ७३ ज्ञेया | |
| १७५ | १६ | देवतासंबन्धो | देवतासंबन्धी, |
| ,, | १८ | चरुण | चरुणा |
| १७६ | १८ | मध्यमातः | मध्यमाः |
| १७७ | ११ | इष्टम् | दृष्टे |
| १७८ | २७ | आज्यसंस्था | आज्यसंस्थाने |
| १७९ | १ | प्रसिद्धां | प्रसिद्धां तेन |
| ,, | २७ | अतुषंगात् । इह | अनुषंगात् इह । |
| १८३ | १७ | इमीदृशमंगशास्त्रं अवघातेन वितुषीकुर्याद्धविरिति | |

ततश्चेति पठनीयम् । वैश्वदेवं द्वादशकपालं निर्वपेदि २-२-५ ति । मै. सं० पाठः, मीमांसाग्रन्थे च चरुमित्येव दृश्यते ।

| पृष्ठ संख्या | पंक्ति | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १८४ | ४ | कथं पुवः | ननु कथं पुनः |
| १८५ | २३ | कर्तं | कर्तुं |
| १९१ | ११ | अपूषे | अपूपे |
| १९६ | १५ | उपहूतानां | उपहृतानां |
| १९८ | १६ | चवन | वचनो |
| २०० | १५ | सिध्येयुः | सिद्ध्येयुः |
| २०२ | १४ | नवं | नैवम् |
| २०४ | १७ | कर्तव्यं | कर्तृत्वं |
| २०५ | २३ | मिति प्रत्युदाहरणमात्रमेतत् इति पठनीयम् । | |
| २०८ | १२ | खदिरादायोः | खदिरादयः |

